॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला

२४१

महाकविभारविविरचितं

# किरातार्जुनीयम्

महोपाध्यायश्रीमल्लिनाथसूरिकृतया 'घण्टापथ'-व्याख्यया

पण्डितश्रीगङ्गाधरशर्मणा पं० श्रीपरमेश्वरदीन-

पाण्डेयेन कृतया 'सुधा'-व्याख्यया

आचार्य शेषराज शर्मा रेग्मीकृतया

हिन्दीव्याख्यया भूमिकया च समलङ्कृतम्

(सम्पूर्णम्)

**चौखम्भा प्रकाशन**

पोस्ट बाक्स नं. ११५०

के. ३७/११६, गोपाल मन्दिर लेन

वाराणसी-२२१००१

प्रकाशक

**चौखम्भा प्रकाशन**

पोस्ट बाक्स नं. ११५०

के. ३७/११६, गोपाल मन्दिर लेन, गोलघर (समीप मैदागिन)

वाराणसी - २२१००१ (भारत)

टेलीफोन : ०५४२-२३३५९२९, ६४५२१७२

E-mail : c_prakashan@yahoo.co.in



**संस्करण : पंचम्, वि० सं० २०७१**

**मूल्य : १२५.००**

---

* **कुमारसंभवं**। कालिदास कृत। 'संजीवनी', 'शिशुहितैषिणी' टीका (का. 14)
* **शिशुपालवधम्**। माघ कृत। वल्लभ देव कृत 'संदेह विषौषधि' तथा मल्लिनाथ कृत 'सर्वकषा' टीका द्वय (का. 69)
* **हरविजयम्**। राजानक रत्नाकर विरचित। राजानक अलक कृत टीका सहित। पं. दुर्गाप्रसाद एवं काशीनाथ पाण्डुरङ्ग परव सम्पादित (का. 223)
* **भट्टिमहाकाव्यम्** भट्टि कृत। 'इन्दुमति' सान्वय-संस्कृत-हिन्दी टीकोपेतम्। पं. चण्डीप्रसादाचार्य कृत। 1-4 सर्ग, 1-6 सर्ग, 5-8 सर्ग, 7-11 सर्ग, (12-22 सर्ग) (का. 261)

---

मुद्रक : चारू प्रिन्टर्स, वाराणसी

THE
KASHI SANSKRIT SERIES
241

# KIRĀTĀRJUNĪYAM

OF

## MAHĀKAVI BHĀRAVI

With

*'Ghaṇṭāpatha' Commentary of M.M. Mallinātha Sūri;*
*'Sudhā' Commentary of Pt. Śrī Gangādhara Śarmā*
*& Pt. Śrī Parameśwaradina Pandeya and*
*Hindi Commentary & Preface of*

**ACHĀRYA ŚEŚARĀJA ŚARMĀ REGMI**

**(Complete)**

**CHAUKHAMBHA PRAKASHAN**
**Post Box No. 1150**
K. 37 / 116, Gopal Mandir Lane
**VARANASI**

*Publisher :*

**CHAUKHAMBHA PRAKASHAN**

**Post Box No. 1150**

K. 37 / 116, Gopal Mandir Lane, Golghar (Near Maidagin)

Varanasi-221001 (India)

Telephone : 0542-2335929, 6452172

E-mail : c_prakashan@yahoo.co.in



Edition : Fifth, 2014

**Price : Rs. 125.00**

---

# भूमिका

शेषराजशर्मा रेग्मीः

## महाकविर्भारविस्तत्काव्यं किरातार्जुनीयं च

संस्कृतभाषायां महाकविर्भारविरतिशयलोकप्रियः। बृहत्त्रय्यां किरातार्जुनीये, शिशुपालवधे नैषधीयचरिते च भारवे रचना गरिष्ठा, परवर्तिकवीनां पथप्रदर्शिका, मनोहरतमा, गाम्भीर्यपरिपूरिता नारिकेलफलसम्मितेति च संस्तूयते। एवमेव परमप्रथितेषु पञ्चस्वपि काव्येषु—रघुवंश-कुमारसंभव-किरातार्जुनीय-शिशुपालवध-नैषधीयचरितेषु महाकविर्भारविः कालिदासकोटौ परिगणितः।

यथा—६३४तमे खृष्टाब्दे उत्कीर्णे ऐहोलशिलालेखे—

"स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः"।

अस्य पद्यांशस्य दर्शनात् खृष्टस्य चतुस्त्रिंशदधिकषट्शततम वर्षपूर्वं तत्सम-स्तावत एव समयात् भारविः कालिदासकोटौ परिगणित आसीदित्यवगम्यते। 'भारवेरर्थगौरवम्' इत्यनुसारं भारविकाव्यमर्थगौरवपरिपूर्णं स्वल्पैरपि शब्दैर्विपुलाऽर्थसंग्राहिकेति प्रतीयते। कालिदासाऽपेक्षया माधुर्यगुण एवैतस्मिन्न्यूना ख्याता, परं रसभाव-ध्वन्यलंकारगुणपरिपूर्णेति विश्रुतिः।

द्यूते पराजितं द्वैतवने भ्रातृभिर्द्रौपद्या च समं स्थितं युधिष्ठिरं दुर्योधनस्य शासनपद्धतेः परिज्ञानाऽर्थं प्रेषितो वर्णिवेषधारी वनेचरो दुर्योधनस्य शासनकुशलतां वर्णयति। श्रुत्वैतद् द्रौपदी युद्धार्थं युधिष्ठिरं प्रेरयति। भीमसेनश्च प्रशंसापूर्वकं तद्वचः समर्थयत। तदाऽन्तरे व्यास आगत्य युद्धे जयलाभार्थमिन्द्रकीले तपश्चरणार्थमर्जुनं सविधि शिक्षामुपदिशति। तस्मिन् पर्वते व्यासो मार्गदर्शनार्थमेकं गुह्यकं चोपस्थापयति। अर्जुन इन्द्रकीलपर्वतं गत्वा तपश्चरति। मूकदानवोऽर्जुनम् हन्तुं शूकरवेषेणागच्छति। किरातपतेः शिवस्याऽर्जुनस्य च युगपद्बाणप्रहारेण निष्प्राणत्वेन स भूमिं पतितः। तच्छरीरात्स्वशरग्रहणार्थं गतस्याऽर्जुनस्य शिवानुचरस्य किरातस्य च विवदेते। अन्ततो गत्वा कार्तिकेयाधिष्ठितया शिवस्य [illegible] सेनया किरातपतेः शिवेन अर्जुनस्य च सह घोरं युद्धं भवति। [illegible]

*Publisher :*
**CHAUKHAMBHA PRAKASHAN**
**Post Box No. 1150**
K. 37 / 116, Gopal Mandir Lane, Golghar (Near Maidagin)
Varanasi-221001 (India)
Telephone : 0542-2335929, 6452172
E-mail : c_prakashan@yahoo.co.in



Edition : Fifth, 2014
**Price : Rs. 125.00**

---

# भूमिका

शेषराजशर्मा रेग्मी:

## महाकविर्भारविस्तत्काव्यं किरातार्जुनीयं च

संस्कृतभाषायां महाकविर्भारविरतिशयलोकप्रियः। बृहत्त्रय्यां किरातार्जुनीये, शिशुपालवधे नैषधीयचरिते च भारवे रचना गरिष्ठा, परवर्तिकवीनां पथिप्रदर्शिका, मनोहरतमा, गाम्भीर्यपरिपूरिता नारिकेलफलसम्मितेति च संस्तूयते। एवमेव परमप्रथितेषु पञ्चस्वपि काव्येषु—रघुवंश-कुमारसंभव-किरातार्जुनीय-शिशुपालवध-नैषधीयचरितेषु महाकविर्भारविः कालिदासकोटौ परिगणितः।

यथा—६३४तमे खृष्टाब्दे उत्कीर्णे ऐहोलशिलालेखे—

"स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः"।

अस्य पद्यार्थस्य दर्शनात् खृष्टस्य चतुस्त्रिंशदधिकषट्शततम वर्षपूर्वं तत्समय-स्तावत एव समयात् भारविः कालिदासकोटौ परिगणित आसीदित्यवगम्यते। 'भारवेरर्थगौरवम्' इत्यनुसारं भारविकाव्यमर्थगौरवपरिपूर्णं स्वल्पैरपि शब्दैर्विपुल-गूढार्थसंग्राहिकेति प्रतीयते। कालिदासापेक्षया माधुर्यगुण एवैतस्मिन्नूना तद्वाणी, परं रसभाव-ध्वन्यलंकारगुणपरिपूर्णेति विश्रुतिः।

द्यूते पराजितं द्वैतवने भ्रातृभिर्द्रौपद्या च समं स्थितं युधिष्ठिरं दुर्योधनस्य शासनपद्धतेः परिज्ञानाय प्रेषितो वर्णिवेषधारी वनेचरो दुर्योधनस्य शासनकुशलतां वर्णयति। श्रुत्वैतद् द्रौपदी युद्धार्थं युधिष्ठिरं प्रेरयति। भीमसेनश्च प्रशंसापूर्वकं तन्मतं समर्थयते। अत्रान्तरे व्यास आगत्य युद्धे जयलाभार्थमिन्द्रकीले तपश्चरणार्थमर्जुनं सविधि विद्यामुपदिशति। तस्मिन् पर्वते व्यासो मार्गदर्शनार्थमेकं गुह्यकं चोपस्थापयति। अर्जुन इन्द्रकीलपर्वतं गत्वा तपश्चरति। मूकदानवोऽर्जुनम् हन्तुं सूकरवेषेणागच्छति। किरातपतेः शिवस्याऽर्जुनस्य च युगपच्छरप्रहारेण निष्प्राणत्वेन स भूमिं पतितः। तच्छरीरात्स्वशरग्रहणार्थं गतस्यार्जुनस्य शिवानुचरस्य किरातस्य विवदेते। तन्मतो गत्वा कार्तिकेयाधिष्ठितया शिवस्य सेनया किरातपतेः शिवेन अर्जुनस्य च समं तुमुलं युद्धं भवति। पराजितसैन्यः

र्जुनस्य धैर्येण दृढतया च प्रसन्नः शिवः प्रत्यक्षीभूय तस्मै धनुर्वेदशिक्षणपूर्वकं पाशुपतास्त्रं च ददाति । इन्द्रादिभ्यो देवेभ्यश्च शस्त्रास्त्रप्राप्त्या कृतार्थोऽर्जुनो भ्रातृसकाशं गच्छति । परिमितमेतद्वृत्तमुपजीव्याऽष्टादशसर्गसंमितं—नीति-सुभाषितादिसमलंकृतं पूर्वकविभिरक्षुण्णे चित्रकाव्ये चाद्भुतनैपुण्यं समाविश्य भारविर्महाकविः चित्ताकर्षकं किराताऽर्जुनीयं महाकाव्यं प्रणिनाय ।

## किरातार्जुनीयस्य नायकरसादिविवरणम् ।

किराताऽर्जुनीयस्य नायको धीरोदात्तोऽर्जुनः । प्रतिनायकश्च किरातपतिः शंकरः । उभावालम्बनविभावौ । दूतमुखोच्चारितानि वाक्यान्युद्दीपनानि । नायक-प्रतिनायकयोः धनुराकर्षणादयोऽनुभावाः । धृत्यादयो व्यभिचारिभावाः । उत्साहः स्थायी भावः । वीररसोऽङ्गी । शृङ्गारादिरसा अङ्गरसाः । रीतिः पाञ्चाली वैदर्भी च । गुणः प्रसादो माधुर्यं च । किरातप्रहितो दूतो निसृष्टार्थः । दिव्यास्त्रलाभः प्रयोजनम् ।

## किरातार्जुनीयस्य कथासारः ।

प्रथमसर्गे—युधिष्ठिरसमीपे द्वैतवने वर्णिवेषधारिणो वनेचरस्य मुखाद् दुर्योधनस्य शासनकौशलं श्रुत्वा युधिष्ठिरं युद्धार्थं उत्तेजयितुं द्रौपद्या ओजोगुणपूर्णमुपालम्भनं च ।

द्वितीयसर्गे—भीमसेनस्य प्रशंसापूर्वकं द्रौपदीवचसः समर्थनम् । युधिष्ठिरस्य सान्त्वनापूर्वकं तयोः प्रबोधनम् । अत्रान्तरे महामुनेर्व्यासस्यागमनम् ।

तृतीयसर्गे—युद्धे जयलाभार्थमिन्द्रकीलशैलेऽर्जुनस्य तपश्चरणार्थं व्यासस्योपदेशः । तस्य शिवाराधनार्थं सविध्यर्जुनं प्रति विद्योपदेशः, मार्गदर्शनार्थमेकस्य गुह्यकस्योपस्थापनं च । गमनकाले द्रौपद्या अर्जुनं प्रत्युपदेशवाक्यानि । यक्षेण सहाऽर्जुनस्येन्द्रकीलमचलं प्रति प्रस्थानं च ।

चतुर्थसर्गे—शरदागमेन क्षेत्रादीनां शोभावर्णनम् । अर्जुनस्य हिमालयदर्शनम् ।

पञ्चमसर्गे—हिमालयस्य वस्तिशोभावर्णनम् ।

षष्ठसर्गे—अर्जुनस्येन्द्रकीलशैल आरोहणवर्णनम् तत्र तपश्चरणं च । तत्पो-

अङ्गायेन्द्रस्य गन्धर्वाणां सान्निध्येऽप्सरसां प्रेषणम् ।

सप्तमसर्गे—गन्धर्वैः सहाऽप्सरसामिन्द्रकीलपर्वते विलासपूर्वकं गमनम् ।

अष्टमसर्गे—गन्धर्वाणामप्सरसां च कुसुमावचयादिललितकेलिवर्णनम् ।

नवमसर्गे—सन्ध्या-चन्द्रोदय-सुरतक्रीडा-प्रभातवर्णनम् ।

दशमसर्गे—अर्जुनस्य प्रलोभनायाऽप्सरसां विलासप्रदर्शनम्, तस्य नैष्फल्यं च ।

एकादशसर्गे—वृद्धविप्रवेषिणेन्द्रेण सहाऽर्जुनस्य संवादः । परीक्षानन्तरमर्जुनस्य तपसि दृढनिष्ठादर्शनेन प्रसन्नेन्द्रस्य स्वरूपदर्शनानन्तरं शिवाराधनायाऽर्जुनं प्रत्युपदेशः ।

द्वादशसर्गे—अर्जुनस्य कठोरतपसा शिवाराधनम् । तापसैः शिवं प्रति तद्वर्णनम् । किरातवेषिणः शिवस्य धृतशूकररूपस्य मूकदानवस्य चार्जुनसमीपे प्रयाणम् ।

त्रयोदशसर्गे—शिवस्याऽर्जुनस्य च युगपच्छरप्रक्षेपेणाऽर्जुनहननार्थमागतस्य मूकदानवस्य वधः । तच्छरीराच्छरग्रहणार्थमुद्यतमर्जुनं प्रति शिवदूतकिरातस्याधिक्षेपवचः ।

चतुर्दशसर्गे—अर्जुनस्य च तत्प्रत्युत्तरप्रदानम् । ततः कार्तिकेयाधिष्ठितया किरातसेनयाऽन्ततः किरातपतिना शिवेन च सममर्जुनस्य भीषणयुद्धवर्णनम् ।

पञ्चदशसर्गे—किराताऽर्जुनयोश्चित्रयुद्धवर्णनम् ।

षोडशसर्गे—किरातपतेः समरकौशलदर्शनेनाऽर्जुनस्य चेतसि नानाविधा वितर्काः । द्वयोरसाधारणभीषणयुद्धवर्णनम् ।

सप्तदशसर्गे—किरातसेनया सममर्जुनस्य युद्धवर्णनम् । शङ्कराऽर्जुनयोस्तुमुलसंग्रामवर्णनम् ।

अष्टादशसर्गे—पराजितस्याऽप्यर्जुनस्य युद्धनिष्ठादर्शनेन प्रीतस्य शिवस्य तं प्रति स्वस्वरूपदर्शनदानम् । एवं च तस्य अर्जुनाय पाशुपतास्त्रप्रदानं धनुर्वेदज्ञानदानं च । तस्मै इन्द्रादिदेवानाञ्च स्वस्वास्त्रप्रदानम् । अन्ततः सफलमनोरथस्याऽर्जुनस्य युधिष्ठिरसमीपे गमनञ्च ।

# महाकवि भारवि और किरातार्जुनीय

संस्कृतसाहित्यमें कवि प्रचुर परिमाणमें देखे गये हैं, परन्तु सहृदय विद्वद्वर्ग-में सम्मान पानेके लिए दो-चार ही कवि समर्थ हुए हैं। कविकृतियोंमें भारविकी कृति किरातार्जुनीय बृहत्त्रयी और पञ्च काव्योंमें भी अत्यन्त महत्त्वपूर्ण स्थान रखता है। बृहत्त्रयीमें तीन महाकाव्य परिगणित हैं, उनमें भारविका किरातार्जुनीय, माघका शिशुपालवध और श्रीहर्षका नैषधीयचरित वर्णित हैं। इसी तरह पञ्च काव्योंमें भी कालिदासके रघुवंश और कुमारसंभव, भारविका किराता-र्जुनीय, माघका शिशुपालवध और श्रीहर्षका नैषधीयचरित महाकाव्य वर्णित हुए हैं। दोनों स्थलोंमें भारविकी कृति और उनके नामका निर्देश विशिष्ट लोक-प्रियता और कालक्रमके अनुरूप है।

महाभारतके वनपर्वमें वर्णित पाण्डवचरितके आधारपर किरातार्जुनीय महाकाव्यका प्रणयन हुआ है। 'उपमा कालिदासस्य, भारवेरर्थगौरवम्।' इस उक्तिके अनुसार उपमामें कालिदास बेजोड़ हैं तो अर्थगौरवमें भारविका अप्रतिम स्थान है। अर्थात् परिमित शब्दोंमें अर्थोंकी गूढताके प्रदर्शनमें भारवि अपनी सानी नहीं रखते हैं। अत एव प्रसिद्ध है—

'भारवेरर्थगौरवम्' और 'नारिकेलफलसम्मितं वचः'

अर्थात् नारियल फलके समान भारविके वचन गूढ हैं, ऐसी लोकप्रसिद्धि है। उनकी रचना एकमात्र किरातार्जुनीयके होनेपर भी 'एकश्चन्द्रस्तमो हन्ति, न च तारागणोऽपि च।' इस उक्तिके अनुसार एकमात्र किरातार्जुनीय महाकाव्य ही उनके यशको चिरस्थायी करनेमें पर्याप्त है।

कालिदासके समान माधुर्य न होनेपर भी उनका महाकाव्य अन्तर्जगत् और बहिर्जगत्के मनोहर वर्णनसे सहृदयोंका हृदयाकर्षण करनेके लिए परिपूर्ण है। किरातार्जुनीयमें रस, भाव, ध्वनि, गुण, शब्दालङ्कार और अर्थालङ्कार प्रचुर परिमाणमें प्रदर्शित हैं। ऐहोल शिलालेखके अनुसार ६३४ ई० से ही भारवि कालिदासके साथ परिगणित हैं। भारविका संस्कृतभाषामें असाधारण अधिकार है। उनकी रचनामें च्युतसंस्कृति कहीं भी नहीं पायी जाती है। नाना प्रकारके छन्दोंके प्रयोगमें भी वे परिनिष्ठित हैं। परवर्ती कवियोंमें उनका अनुकरण किया

गया है, जैसे काव्यके सर्गान्तमें उन्होंने 'श्री' शब्दका प्रयोग किया है। उसी तरह माघकविने अपने शिशुपालवध महाकाव्यमें 'लक्ष्मी' शब्दका प्रदर्शन किया है और श्रीहर्षने अपने नैषधीयचरितमें 'आनन्द' शब्द प्रयुक्त किया है।

इतना ही क्यों, कलापक्षमें भी उन्होंने असामान्य कौशल दिखाया है, अर्थात् चित्रकाव्यके अनेकाऽनेक प्रयोगोंसे अपनी रचना चित्रित की है। जैसे—एकाक्षर-पद, निरोष्ठ्य, पादान्तादियमक, पादादियमक, गोमूत्रिकाबन्ध, एकाक्षर, समुद्रक, प्रतिलोमाऽनुलोमपाद, प्रतिलोमाऽनुलोमाऽर्ध, प्रतिलोमाऽनुलोमसे दो श्लोक, सर्वतोभद्र, अर्धभ्रमिक, निरोष्ठ्य, पादाद्यन्तयमक, द्विचतुर्थयमक, आद्यन्तयमक, द्व्यक्षर, शृङ्खलायमक, गूढचतुर्थपाद, अर्थत्रयवाची ( श्लोक ) और महायमक।

भारविके परवर्ती कवि माघने इनका अनुकरण किया। महाकवि रत्नाकरने भी इसका अनुसरण किया है।

इसी प्रकार जैसे महाकवि कालिदास एक पद्यकी विचित्रतासे 'दीपशिखा' विशेषणवाले हुए हैं, वैसे ही महाकवि भारवि भी—

'उत्फुल्लस्थलनलिनीवनादमुष्मादुद्धूतः सरसिजसंभवः परागः।
वात्याभिर्वियति विवर्तितः समन्तादाधत्ते कनकमयातपत्रलक्ष्मीम् ॥ ५-३९ ॥

इस पद्यकी विचित्रतासे 'आतपत्रभारवि' ऐसी प्रसिद्धिसे मण्डित हुए हैं। शारदातनयने अपने 'भावप्रकाशन' में—

"अनेनाऽयं 'छत्रभारवि' ख्यातिं च गतः।' तादात्म्यं भावरसयोर्भारविः स्पष्टमूचिवान्"। ऐसा निर्देश कर भारविकी प्रशंसा की है। इसी प्रकार भारविके परवर्ती महाकवि माघ भी एक पद्यरचनाकी विचित्रतासे 'घण्टामाघ' ऐसी उक्तिसे अलङ्कृत हुए हैं।

'किरातार्जुनीय' पर १९ टीकाएँ लिखी गयी हैं, पर उन सबमें मल्लिनाथकी घण्टापथटीका श्रेष्ठ है।

## भारविका देश और समय

किरातार्जुनीयके कर्ता प्रौढकवि भारवि उत्तरदेशीय, दाक्षिणात्य या आन्ध्रदेशीय थे इस विषयमें अनेक मत हैं।

सन् ६३४ ई० के ऐहोळस्थानस्थित शिलालेखके 'स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः' इस पद्यार्थके अनुसार सन् ६३४ ई० से पूर्ववर्ती भारवि थे ऐसा ज्ञात होता है।

## भारविकी कुछ प्रशंसा और नीतिविषयक सूक्तियाँ

महाकवि क्षेमेन्द्रने भारविके वंशस्थवृत्तकी अतिशय प्रशंसा की है जैसे—

वृत्तच्छत्रस्य सा काऽपि वंशस्थस्य विचित्रता।
प्रतिभा भारवेर्येन सच्छायेनाऽधिकीकृता॥

कितनी मर्मस्पर्शिनी उक्तियाँ उनकी रचनामें मिलती हैं, जैसे—

'विविधमिन्नबुधसेतुमर्यादाम्'। 'वसन्ति हि प्रेम्णि गुणा न वस्तुनि'।

एकावली अलङ्कारमे अलङ्कृत यह पद्य कितना मनोहर है—

'हितं मनोहारि च दुर्लभं वचः'। ( १-४ )

'शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलङ्क्रिया।
प्रशमाभरणं पराक्रमः, स नयापादितसिद्धिभूषणः'। ( २-३२ )

इसी तरह यह पद्य भी कैसा हृदयस्पर्शी है—

जीर्यन्ती दुर्जया देहे रिपवश्चक्षुरादयः।
जितेषु ननु लोकोऽयं तेषु कृत्स्नस्त्वया जितः॥ ( ११-३२ )

## किरातार्जुनीयका कथासार

द्यूतक्रीडामें पराजित होकर युधिष्ठिरके अपने भाइयों और द्रौपदीके साथ द्वैतवनमें निवासकालमें व्यासके उपदेशसे अर्जुन इन्द्रकील पर्वतपर तपस्या कर आराधनासे प्रसन्न शिवजीसे पाशुपत अस्त्र और इन्द्र आदि देवताओंसे अनेकाऽनेक अस्त्र लाभकर द्वैतवनमें अपने भाइयोंके पास आते हैं। इतनी छोटीसी घटनाका अवलम्बन कर भारविने १८ सर्गोंके किरातार्जुनीय महाकाव्यकी रचना कर अपनी अद्भुत कल्पना-कुशलता दरसाई है। किरातार्जुनीय पदकी व्युत्पत्ति है—किरातश्च अर्जुनश्च किरातार्जुनौ ( द्वन्द्वसमास )। किरातार्जुनौ अधिकृत्य कृतो ग्रन्थः किरातार्जुनीयम्। किरातार्जुन शब्दसे 'शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः' इस सूत्रसे छ ( ईय ) प्रत्ययसे किरातार्जुनीय शब्द

बनता है। अर्थात् किरातपतिके वेषधारी शिवजी और अर्जुनके युद्धको अधिकार कर किये गये ग्रन्थको 'किरातार्जुनीय' कहते हैं।

## किरातार्जुनीयके प्रत्येक सर्गका संक्षिप्त विवरण

**प्रथमसर्ग**—कौरवोंसे द्यूतक्रीडामें पराजित होकर युधिष्ठिर अपने भाइयों और द्रौपदीके साथ द्वैतवनमें निवास करते थे। उस समय दुर्योधनकी शासन-पद्धतिके परिज्ञानके लिए उनसे प्रेषित ब्रह्मचारिवेषधारी वनेचर आकर दुर्योधन-की नीतिकुशलताका सविस्तर वर्णन करता है। उसके जानेके बाद शत्रुके उत्कर्षसे पीडित द्रौपदी युद्ध करनेके लिए अनेक उत्तेजक वाक्योंसे युधिष्ठिरको उपालम्भ करती है।

**द्वितीय सर्ग**—भीमसेन द्रौपदीके वचन सुनकर उनका प्रशंसापूर्वक अनु-मोदन कर युद्धके लिए युधिष्ठिरको प्रेरणा देते हैं। तब युधिष्ठिर नीतिमार्गका अवलम्बन कर शान्तिपूर्ण वचनोंसे उनको समझाते हैं। इसी बीच वेदव्यास वहाँ आते हैं और पाण्डवलोग उनका स्वागत-सत्कार करते हैं।

**तृतीय सर्ग**—व्यासजी अपने आगमनसे कृतार्थ युधिष्ठिरको कहते हैं 'हे राजन्! मेरे लिए कौरव और पाण्डवोंमें समभाव उचित होनेपर भी भरी सभामें कौरवोंके धर्ममार्गसे च्युत होनेपर भी तुम्हारे धैर्य और तितिक्षासे 'भवन्ति भव्येषु हि पक्षपाताः' अर्थात् सभीको सज्जनोंमें पक्षपात होता है। इस न्यायसे मैं तुम्हें उपदेश देता हूँ कि तुम पराक्रमसे ही अपना राज्य प्राप्त करोगे। परन्तु तुम्हारा शत्रु वीर्य, अस्त्र और सैन्योंसे तुमसे जबर्दस्त है, इस कारण तुम्हें जयके लिए उत्कर्ष प्राप्त करना है। कहा भी गया है—'प्रकर्षतन्त्रा हि रणे जयश्रीः' अर्थात् युद्धमें विजयलक्ष्मी उत्कर्षके अधीन है। परन्तु अपने गुरु परशुराम को निष्फल बनानेवाले इच्छामरण भीष्म पितामह, जगत्को दग्ध करनेके लिए तत्पर अग्निके समान तेजस्वी द्रोणाचार्य और क्रोधसे सबके धैर्यको च्युत करनेवाले परशुरामके उपासक कर्ण ये सब शत्रुके पक्षमें हैं। हे धर्मराज! जिस विद्यासे इन्द्रकील पर्वतपर तपस्या कर अर्जुन दुर्लभ अस्त्रप्राप्तिसे विक्रमसंपन्न होकर इन सब विरोधियोंको उन्मूलित कर डालेंगे, मैं उस विद्याको देनेके लिए आया हूँ। ऐसा कहकर व्यासजीने विधिपूर्वक उस विद्याको अर्जुनको प्रदान किया,

और उस पर्वतके मार्गदर्शक एक गुह्यकको वहाँ उपस्थित कर व्यासजी अन्तर्हित हो गये।

प्रस्थानकालमें अश्रुओंका संवरण कर द्रौपदीने अर्जुनको अनेक उपदेश-वाक्य कहा। अनन्तर पुरोहितसे पहनाये गये शर और कवचसे युक्त होकर अर्जुन इन्द्रकील पर्वतकी ओर प्रस्थान करते हैं।

चतुर्थ सर्ग—तब यक्षके साथ इन्द्रकील पर्वतकी ओर जाते हुए अर्जुनने शरत् ऋतुकी शोभासे सम्पन्न पृथिवीको देखा। तब यक्ष भी शरत्की सुषमासे युक्त वनभूमिको देखनेमें तत्पर अर्जुनको शरत्की शोभाका वर्णन करने लगा। अर्जुन भी हिमालय पर्वतका अवलोकन करने लगे।

पञ्चम सर्ग—यक्षके साथ इन्द्रकील पर्वतपर चढ़ते हुए अर्जुन हिमालय पर्वतकी अनेक मनोहर शोभाको देखने लगे। उनको हिमालयदर्शनमें आसक्त देखकर यक्ष भी इन्द्रकील पर्वतका वर्णन करने लगा, अनन्तर यक्ष अर्जुनको आशीर्वाद देकर चला जाता है। कुछ क्षण अर्जुनको उसके वियोगसे खेदका अनुभव हुआ।

षष्ठ सर्ग—अर्जुन इन्द्रकील पर्वतपर आरोहण करते हैं। तब अनेक सुन्दर वृक्षोंसे परिपूरित इन्द्रकील शैलपर निवास कर अर्जुन कठोर तपस्या करने लगे। उनकी तपस्याके प्रभावसे हिंस्रजन्तु भी हिंसा छोड़कर परस्पर वैरत्याग कर विचरण करने लगे। अर्जुनकी तपस्याके प्रभावसे खिन्न होकर वनचरोंने इन्द्रके पास जाकर उसका वर्णन किया। तब इन्द्रने अर्जुनकी तपस्याकी परीक्षाके लिए विघ्नकारक अप्सराओं और गन्धर्वोंको वहाँ भेजा।

सप्तम सर्ग—गन्धर्वोंसे संरक्षित अप्सराएं इन्द्रकी आज्ञाके अनुसार रथ और हाथी आदि यात्राके उपकरणोंके साथ इन्द्रकील पर्वतपर स्थित अर्जुनके पास पहुँच गयीं।

अष्टम सर्ग—अप्सरा और गन्धर्व आदिके अर्जुनका तपोभङ्ग करनेके लिए अनेक प्रकारके आमोद प्रमोदका वर्णन एवम् प्रातःकालका सुहावना वर्णन।

नवम सर्ग—सन्ध्या और चन्द्रोदयका मनोहर वर्णन। गन्धर्वों और अप्सराओंके अनेक आमोद-प्रमोदका वर्णन तथा प्रातःकालका मनोरम वर्णन।

दशम सर्ग--नृत्य, गीत और वाद्य आदि प्रयोगोंसे अविचलित अर्जुनकी तपस्याको भङ्ग करनेके प्रयासके असफल होनेसे वे अप्सराएँ और गन्धर्व इन्द्रके पास लौट गये।

एकादश सर्ग--यह सब वृत्तान्त सुनकर इन्द्र वृद्ध ब्राह्मणका रूप लेकर यात्रासे परिश्रान्त-से होकर अर्जुनके पास पहुँचते हैं और बाण आदि धारण कर तपस्या करनेका कारण पूछते हैं। तब अर्जुनके अपने उद्देश्यको सूचित करनेपर इन्द्र अहिंसा और शान्तिके महत्त्वका प्रतिपादन करते हैं। तब अर्जुन अपने वर्ण और आश्रमके अनुसार अपने कर्तव्यका समर्थन करते हैं। अनन्तर प्रसन्न होकर इन्द्र अपने रूपमें प्रकट होकर अर्जुनको आलिङ्गन कर उन्हें शिवजीकी उपासना करनेका उपदेश देकर अन्तर्हित हो जाते हैं।

द्वादश सर्ग--तब अर्जुन शिवजीकी आराधना करनेके लिए कठोर तपस्या करने लगे। तपस्या करते हुए तेजस्वी अर्जुनको दर्शकलोग शिवजी, इन्द्र और अग्निके समान देखने लगे तथा उनके तप-प्रभावके सहन करनेमें असमर्थ होकर शिवजीकी स्तुति करने लगे। तब शिवजीने प्रत्यक्ष होकर उनको 'ये बदरिकाश्रमवासी नारायण हैं'--ऐसा कहकर अर्जुनका परिचय दिया और फिर कहा कि 'अर्जुनकी तपस्याको देवकार्य समझकर मूक नामका दानव शूकरका रूप लेकर उन्हें मारनेके लिए आयेगा। मैं भी किरातका वेष धारण कर उसे शरप्रहारसे मार डालूँगा। उसी समय अर्जुन भी उसपर शरप्रहार करेंगे। अनन्तर दोनोंके बाणोंसे गिरे हुए उसके शरीरसे बाण लेनेके विषयमें मेरे भृत्यसे अर्जुनका कलह होगा।' ऐसा कहकर उन्हें सान्त्वना देकर शिवजी किरातपतिका वेष लेकर और उनके प्रमथसैन्यगण भी किरातका वेष लेकर अर्जुनसे युद्ध करनेके लिए सन्नद्ध हो गये।

त्रयोदश सर्ग--तब अर्जुन विशाल शरीरवाले शूकरको अपनी ओर आते हुए देखकर अनेक तर्कना करने लगे और उसपर गाण्डीव धनुपर शर लेकर प्रहार करनेके लिए तत्पर हुए। यह देखकर शिवजीने भी उसपर शरप्रहार किया। एक साथ दोनोंके शरप्रहारसे वह शूकर निष्प्राण होकर भूतलपर गिर पड़ा। तब प्रचुर बाणोंके रहते हुए भी अर्जुन उसके शरीरसे बाण लेनेके लिए तत्पर हुए। उसी समय उन्होंने किरातपति शिवजीके भृत्य एक किरातको सामने देखा।

अर्जुनको प्रणाम कर प्रशंसापूर्वक कहा कि 'आपको हमारे स्वामी के बाणको इसतरह लेना उचित नहीं। आप उनसे माँगकर ले लें। निकट ही हैं, उनके साथ मैत्री कर लें। आपको सब कुछ अभीष्ट प्राप्त होगा।'

चतुर्दश सर्ग--अर्जुनने वनेचरका उपदेश सुनकर उसके भाषणकी प्रशंसा कर कहा कि 'तुम्हारे स्वामीका बाण कहीं गुम हो गया होगा, उसे ढूँढो। उसके लिए तुम्हें मुझे उलाहना देना उचित नहीं। खाण्डववनके दाहके समय अग्निदेवने मुझे असंख्य बाण दिये हैं। उसके लिए पर्वतीय किरातके बाणमें मेरी आस्था नहीं है। वर्णाश्रमधर्मके रक्षक मेरी आखेट क्रीडा करनेवाले तुम्हारे स्वामी पर्वतीय किरातके साथ मैत्रीका कुछ भी औचित्य नहीं है।' ऐसा कहनेवाले अर्जुनको वह वनेचर तर्जनकर सेनाके पास स्थित प्रसन्नस्वरूप शिवजीके पास गया। तब विशाल किरातसेनाके साथ जिसके अधिपति कात्तिकेय थे, राजकुमार अर्जुनका भीषण युद्ध होता है।

पञ्चदश सर्ग—कोपाक्रान्त अर्जुनके बाणप्रहारसे सारी किरातसेना भयाविष्ट होकर भागने लगी। तब अर्जुन उनके सेनापति कात्तिकेयसे युद्ध करने लगे। कात्तिकेय अपनी सेनाको साहस और धैर्य देनेके लिए समझाने लगे। तब शिवजी और अर्जुनका तुमुल संग्राम होने लगा। शिवजीके प्रचण्ड बाणोंसे विद्ध होकर भी अर्जुनने अपना धैर्य नहीं छोड़ा। इसे देख सब चकित हुए।

षोडश सर्ग—अर्जुन किरातपतिका असामान्य रणकौशल और अपनी शक्तिहीनता देखकर अनेक तर्क-वितर्क करने लगे। तब उन्होंने शिवसेनापर प्रस्वापनास्त्रका प्रयोग किया। फलस्वरूप शिवसेना मूच्छित हो गई। तब शिवजीके ललाट (लिलार) से पीला तेज उत्पन्न हुआ, जिससे किरातसेना पूर्ववत् युद्धके लिए सन्नद्ध हुई। अनन्तर अर्जुनने नागपाशोंका प्रयोग किया। उनके प्रभावसे आकाशचारी पक्षी इधर-उधर भागने लगे। तब शिवजीने नागपाशोंको हटानेके लिए गरुडास्त्रका प्रक्षेप किया, जिससे नागपाश निरस्त हो गये। तब अर्जुनने आग्नेयास्त्रका प्रहार किया जिससे ज्वालामाली अग्निदेवके प्रकट होनेसे सर्वत्र उष्णताका प्रादुर्भाव हुआ। शिवजीने उसे हटानेके लिए वरुणास्त्रका प्रक्षेप किया जिससे मेघमण्डलसे धारासम्पातमय वृष्टिसे अग्निका प्रचण्ड तेज दूर हो गया। अर्जुनसे किये गये समस्त दिव्यास्त्रोंका प्रयोग

भाग्यहीन पुरुषके कर्मके समान शिवजीने अपने अस्त्रोंसे विफल कर डाला। इस प्रकार अस्त्रप्रयोगोंमें निष्फल होकर भी अर्जुन युद्ध करनेसे विरत नहीं हुए।

सप्तदश सर्ग--'ऐसा युद्ध कभी नहीं हुआ था' ऐसा सोचकर अर्जुन क्रुद्ध होकर, जैसे सर्प विषवमन करता है, उसी तरह आँखोंसे आँसू गिराने लगे, तथाऽपि बाणवृष्टिसे किरातसेनाको पीडित करने लगे। किरातपति शिवजीने उनके समस्त बाणोंको नष्ट कर दिया और उनके मर्मस्थलोंको बाणप्रहारसे अत्यन्त पीडित कर दिया। उन्होंने अर्जुनके समस्त शरोंको समाप्त कर कवचका भी अपहरण कर डाला। कवच और बाणोंसे रहित होकर भी अर्जुन धैर्यपूर्वक किरातपतिके ऊपर शिलावृष्टि करने लगे। शिवजीके द्वारा उसका निवारण करनेपर अर्जुन मल्लयुद्ध करनेके लिए सन्नद्ध हुए।

अष्टादश सर्ग--तब किरातपति और अर्जुनका भीषण बाहुयुद्ध होने लगा। परस्परके आघातसे दोनों रक्ताक्त हो गये। 'किरातपति कौन है और अर्जुन कौन है' यह पहचानना भी कठिन हुआ। उस समय अन्तरिक्षमें उछले हुए शिवजीके चरणोंको अर्जुनने पकड़ लिया। तब भगवान् शिवजीने विस्मित होकर अर्जुनका हृदयसे आलिङ्गन किया और उन्हें अपने स्वरूपका दर्शन दिया। अर्जुनने अष्टमूर्ति शिवजीकी स्तुति की। शिवजीने उनको पाशुपतास्त्र देकर धनुर्वेद पढ़ाया। इन्द्र आदि देवताओंने भी अपने अस्त्रोंको प्रदान कर अर्जुनको प्रोत्साहित किया। अनन्तर शिवजीकी आज्ञासे सफलमनोरथ अर्जुन द्वैतवनमें अपने भाइयों-के पास पहुँच गये।

# महाकवि भारविके विषयमें किंवदन्तियाँ

महाकवि भारविके विषयमें दो किंवदन्तियाँ प्रचलित हैं। उनका ऐतिहासिक महत्व न होने पर भी "न ह्यमूला जनश्रुतिः" इस उक्तिके अनुसार मनोरञ्जनके लिए भी यहाँ दी जाती हैं।

एक किंवदन्ती इस प्रकारकी है—

भारतवर्षकी उत्तरदिशामें अवस्थित हिमालय पर्वत और उसका अंशविशेष इन्द्रकील शैलका किरातार्जुनीयमें विशद वर्णन देखनेसे महाकवि भारवि हिमालयके किसी प्रदेशके निवासी थे कुछ विद्वान् ऐसा अनुमान करते हैं।

अध्ययनके लिए गुरुकुलमें निवास करते हुए भारविको हिमालय पर्वत और इन्द्रकील शैलकी अधित्यका और उपत्यकामें गायोंको चरानेके अवसरपर वहाँके निवासी वनेचरोंको देखनेका अवसर मिला। अनन्तर अर्जुनके इन्द्रकील पर्वतमें तपश्चरण और किरातपतिका रूप लिये हुए शिवजीसे और किरातोंसे युद्धका वर्णन समाविष्ट कर उन्होंने मनोरम दृश्योंके वर्णनसे परिपूर्ण किरातार्जुनीय महाकाव्यकी रचना की।

दूसरी किंवदन्ती पूर्वोक्त किंवदन्तीसे अधिक प्रसिद्ध और प्रचलित है, वह भी दी जाती है। भारवि लगभग अट्ठारह वर्षकी उम्रमें ही व्याकरण, काव्य और कोष आदिका अध्ययन कर कुछ पद्योंकी भी रचना कर सामाजिक बन्धुवर्गका मनोरञ्जन करने लग गये थे।

एकबार भारविके पिताके बन्धुगण उनके पास आकर "आप भाग्यवान् हैं जो कि अल्पवयमें ही आपका पुत्र भारवि प्रतिभाशाली होकर काव्यरचना करने लगा है" ऐसा कहने लगे। तब भारविके पिताने कहा कि 'आप लोगोंको उसकी इस तरह प्रशंसा करना उचित नहीं है। वह क्या जानता है? अभी वह पढ़ रहा है।' इतना ही नहीं, भारविके पिता उनका तेजोवध भी करते थे। तब भारवि अपने पिताको अपनी यशःप्राप्तिमें बाधक समझकर उनपर प्रस्तर प्रहार करनेके लिए तत्पर हुए। एक बार रातको जब भारविके पिता भोजन कर चुके थे और

भारवीकी माता उनको भोजन परोस रही थी उस समय उन दोनोंकी बातचीत भारवि सुनने लगे।

भारविकी माता अपने पतिको कहने लगीं—

'प्राणनाथ ! आप अपने होनहार पुत्रको क्यों बार-बार पराभूत कर रहे हैं ? जबकि सब लोग उसके प्रशंसक हैं।'

तब भारविके पिताने कहा—'प्रिये ! ज्यादा संमान होनेसे उसकी उन्नतिका मार्ग अभिमानके कारण अवरुद्ध होगा। कालान्तरमें भारवि रविके समान हमारे कुलको प्रकाशपूर्ण कर देगा'।

माता और पिताका ऐसा संवाद सुनकर भारविको पश्चात्ताप हुआ और पिताजीके चरणोंपर गिरकर उन्होंने अपने दुर्भावका प्रायश्चित्त पूछा। तब उनके दयालु पिताने कहा कि "वत्स ! छः माह तक श्वशुरके गृहमें निवास करना ही तुम्हारे पापका पर्याप्त प्रायश्चित्त होगा"।

तब भारवि अपनी पत्नीके साथ दूरस्थित श्वशुरके गृहमें पहुँचे। पहले तो उनका खूब सम्मान हुआ, पर बहुत समय तक उनका निवास होनेसे उनका अपमान होने लगा। होते-होते उन्हें मवेशियोंको चराने और उन्हें दाना देनेका काम भी सौंपा गया।

भारवि कर्मफलके भोगके लिए दृढसङ्कल्प होकर प्रतिदिन पद्योंकी रचनाकर उन्हें भूर्जपत्रोंमें अङ्कित करने लगे। एक दिन उन्होंने एक पद्यकी रचनाकी जो इस प्रकार है—

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः" ॥(२-३०)।

अर्थात् कोई कर्म सहसा (बिना विचारे) नहीं करना चाहिए, क्योंकि अविवेक विपत्तिका मुख्य स्थान है। विचारपूर्वक काम करनेवालेको सम्पत्ति गुणोंसे लुब्ध होकर स्वयम् वरण करती है।

भारवि जब इस पद्यको ताड़पत्रपर लिख रहे थे तब उनकी पत्नी मलिनवस्त्र धारण कर अपनी और अपने पतिकी दुर्दशापर आँसू गिराने लगीं। तब भारविने "अभिमानी जनको छः महीनेतक इस प्रकार श्वशुरालयमें रहना नित्य-मरणके समान है" ऐसा सोचकर अपनी पत्नीसे कहा—

'भद्रे ! तुम इस पद्यको किसी धनी व्यापारीके हाथ बेच डालो और उससे वस्त्र आदि आवश्यक पदार्थ खरीद लो'। ऐसा कहकर उस पद्यको उन्हें दे दिया। उनकी पत्नीने उस पद्यको एक धनी व्यापारीको दिखलाया। उसने उसे पढ़कर प्रसन्न होकर उन्हें सौ अशर्फियाँ दे दीं, और अपने घरमें चित्ररूपमें सज्जित कर उसे टांग दिया। प्रसङ्गवश वह व्यापारी व्यापारके लिए दूसरे द्वीपमें चला गया था। कई वर्षोंके बाद व्यापारी रातमें जब घर आया और अपनी पत्नीको एक कुमारके साथ सोई हुई देखा तो उसे व्यभिचारिणी समझकर खड्गसे प्रहार करनेके लिए तत्पर हुआ। संयोगवश भारविके उसी पद्यपर जो कि दीवारमें टांगा गया था, उसकी दृष्टि पड़ी और उसने पत्नी को जगाया। उसने पतिको देखकर प्रसन्न होकर कहा--'यह तुम्हारा पुत्र है''। तब उस व्यापारीको संतोष हुआ।

उधर भारवि छः महीने तक क्लेशपूर्ण प्रायश्चित्त भोगकर सप्तममासके प्रथम दिनमें श्वशुरगृहसे पत्नीके साथ प्रस्थानकर अपने घर आ गये एवम् माता-पिता-की सेवा करते हुए रहने लगे और प्रवासमें आरब्ध किरातार्जुनीयको पूर्ण करके उसके प्रचारसे यश और सम्पत्तिका उपार्जन कर सुखपूर्वक समय व्यतीत करने लगे।

पहलेकी किंवदन्तीकी अपेक्षा इसकी ज्यादा प्रसिद्धि है।

॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला
७४

महाकवि- भारविविरचितं

# किरातार्जुनीयम्

महोपाध्यायश्रीमल्लिनाथसूरिकृतया 'घण्टापथ'-व्याख्यया
पण्डितश्रीगङ्गाधरशर्मकृतया 'सुधा'-व्याख्यया च
समलङ्कृतम् ।

( सर्ग )

चौखम्भा प्रकाशन
पोस्ट बाक्स नं. ११५०
के. ३७/११६, गोपाल मन्दिर लेन
वाराणसी-२२१००१

THE
KASHI SANSKRIT SERIES
74

# KIRĀTĀRJUNĪYAM

OF

MAHĀKAVI BHĀRAVI

*With*
*Gaṇṭāpatha Sanskrit Commentary of Mallinātha Sūri and Sudhā Hindi Commentary of Pt. Gaṅgadhara Śarmā*

Cantos

**CHAUKHAMBHA PRAKASHAN**
Post Box No. 1150
K. 37/116, Gopal Mandir Lane
Varanasi-221001

# संस्कृत-कथासारः

## प्रथमसर्गे

### युधिष्ठरं प्रति वनेचरस्योक्तिः

हे राजन ! चारचक्षुषो राजानो नानुयायिभिर्वञ्चनीयाः, अतो मदुक्तं युक्तमयुक्तं वा त्वया क्षन्तव्यम्, यतो हितकरं प्रियं च वचो दुर्लभम्भवति। अधिपत्याशासकः सुहृद् हितवचनाश्रोताऽधिपश्च निन्द्यौ । यतोऽन्योऽन्यानुरागिष्वेवामात्यनृपेषु सर्वसम्पदस्तिष्ठन्ति । रामचरितं स्वभावतो दुर्ज्ञेयं जन्तवश्चाज्ञानिनो भवन्त्युभयोर्महद्वैषम्यम्, अथापि त्वत्प्रभावादेवास्माकमरिगूढनीतिमार्गज्ञानम् ।

### वनेचरस्य वक्तव्योक्तिः

सिंहासनस्थोऽपि दुर्योधनो भवतः पराजयभीत्या विमलं यशो विस्तारयति। षड्वर्गविजयी नीत्यनुसरणशीलो दुर्योधनो नक्तन्दिवं विभज्य नीत्या पौरुषं करोति। निरभिमानो दुर्योधनो भृत्येषु मित्रभावं, मित्रेषु बन्धुभावं, बन्धुषु च स्वामिभावं लोकान्दर्शयते । समविभक्तधर्मार्थकामसेवकस्य दुर्योधनस्य ते गुणानुरागात्सख्यं प्राप्तवन्त इव परस्परं न बाधन्ते, अपि तु वर्धन्त एव। वशी दुर्योधनो धनलोभात् क्रोधाद्वा न दण्डधारी, किन्तु 'राज्ञो ममायं धर्मः' इति बुद्ध्या गुरुशिक्षया शत्रौ पुत्रे वा दण्डयिता। कीर्तिमता दुर्योधनेन सर्वतो रक्षिता मही भूरि वसूत्पादयति। कीर्त्तिमन्तस्तेजस्विनो मानिनो धनादृता धनुर्भृतो राजानो दुर्योधनस्य प्राणैः प्रियं कर्तुमिच्छन्ति । अशेषितक्रियो दुर्योधनोऽवञ्चकचरद्वाराऽन्यनृपकार्यं वेत्ति । अस्योद्योगस्तु फलैर्ज्ञायते नान्यथा । अक्रुद्धस्यापि दुर्योधनस्यानुशासनं गुणानुरागिणो राजानः शिरसा वहन्ति। यौवराज्ये दुःशासनं नियुज्य दुर्योधनो मखेषु वह्निं प्रीणयति। यथोच्चरितमन्त्रश्रवणादुरगो व्यथते तथा जनोदीरितभवन्नामाकर्णनादयं व्यथते । हे राजन् ! शत्रुप्रतिकारविधाने तत्परो भव, चरोक्तिषु प्रवृत्तिसारैव वेदितव्या।

### युधिष्ठिरं प्रति द्रौपद्युक्तिः

हे स्वामिन् ! विज्ञेषु स्त्रीजनोक्तमनुशासनमनादर इव भवति, अथापि दुष्टा मनोव्यथा वक्तुं मां प्रेरयन्ति । हे स्वामिन् ! स्ववंशजे राजभिरुपार्जिता मही मत्तगजेन मालेव त्वया विनाशिता । हे राजन् ! ये मायिषु मायां न कुर्वन्ति ते पराभवं भजन्ते। तीक्ष्णबाणा अनावृतशरीरान् घ्नन्ति । हे राजन् ! कोऽन्यः कुलाभिमानी राजा निजवधूमिव लक्ष्मीं त्वामन्तरेणापहारयति । हे राजन् ! अग्निः शुष्कं शमीवृक्षमिव निन्दितमार्गस्थं त्वा मन्युः कुतो न ज्वलति । सकलमन्योरापद्विनाशकस्य पुंसः सर्वे च प्राणिनो वश्या भवन्ति, स्नेहिनो निष्कोपात्पुंसो न कस्यचिद्भयं भवति। हे

# किरातार्जुनीयम्

## प्रथम सर्गः

अर्धाङ्गीकृत-दाम्पत्यमपि गाढानुरागि यत् । पितृभ्यां जगतस्तस्मै कस्मैचिन्महसे नमः।। आलम्बे जगदालम्बं हेरम्बचरणाम्बुजम् । शुष्यन्ति यद्रजास्पर्शात्सद्यः प्रत्यूहवार्धयः तद्दिव्यमव्ययं धाम सारस्वतमुपास्महे । यत्प्रकाशात्प्रलीयन्ते मोहान्धतमसच्छटाः।।

वाणीं काणभुजीमजीगणदवाशासीच्च वैयासकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाकलयद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः।।

मल्लिनाथकविः सोऽयं मन्दात्मानुजिवृक्षया ।
तत्किरातार्जुनीयाख्यं काव्यं व्याख्यातुमिच्छति ।।
नारिकेलफलसम्मितं वचो भारवेः सपदि तद्विभज्यते ।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम् ।।

नानानिबन्धविषमैकपदैर्नितान्तं साशङ्कचङ्क्रमणखिन्नधियामशङ्कम् । कर्तुं प्रवेशमिह भारविकाव्यबन्धे घण्टापथं कमपि नूतनमातनिष्ये । इहान्वयमुखेनैव सर्वं व्याख्यायते मया । नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ।।

अथ तत्रभवान् भारविनामा कविः 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयजे'।। इत्याद्यालङ्कारिवचनप्रामाण्यात्काव्यस्यानेकश्रेयःसाधनताम् 'काव्यालापाञ्च वर्जयेत्' इति निषेधन्नाक्षाखस्यासत्काव्यविषयतां च पश्यन्किरातार्जुनीयख्यां महाकाव्यं चिकीर्षुश्चिकीर्षितार्थाविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलसाधनत्वात् 'आशीर्नमस्क्रिया वस्तु निर्देशो वाऽपि तन्मुखम्' इत्याद्याशीर्वादाद्यन्यतमस्त प्रबन्धमुखलक्षणत्वाच्च वनेचरस्य युधिष्ठिरप्राप्तिरूपं वस्तु निर्दिशन्कथामुपक्षिपति—

सहदेव कठिन भूमि में सोते हैं। इन सबों को इस दशा में देखकर भी आपको दु:ख नहीं होता। यह देखकर मुझे अत्यन्त दु:ख हो रहा है।

हे महाराज! आप अब शान्ति को छोड़कर शत्रुओं को नष्ट करने के लिए अपना पुराना तेज धारण कीजिए, क्योंकि शान्ति से मुनियों का कार्य होता है न कि राजाओं का। सब प्रकार से समर्थ होते हुए भी शत्रु विजय के लिए आपका समय की प्रतीक्षा करते रहना उचित नहीं है क्योंकि विजय चाहने वाले राजा लोग समय पड़ने पर किसी न किसी व्याज से सन्धि को भी तोड़ देते हैं।

## द्वितीय सर्ग

### युधिष्ठिर के प्रति भीम की उक्ति

इस प्रकार द्रौपदी की अपने मनोनुकूल बातें सुनकर भीम युधिष्ठिर से बोले हे महाराज ! द्रौपदी ने इस समय जो कहा वह उचित कहा, स्त्री की कही हुई समझ कर आपको इसकी उपेक्षा करना उचित नहीं है। यदि अवधि की प्रतीक्षा करते रहियेगा तो निश्चय समझिये कि दुर्योधन इतने दिन तक राज्यसुख भोगकर आपको अवधि बीतने पर राज्य दे देगा यह असम्भव है। अत: आलस्य छोड़कर पुरुषार्थ कीजिए।

इस भाँति अत्यन्त क्रुद्ध भीमसेन की बातें सुनकर मतवाले हाथी की भाँति उन्हें धीरे-धीरे शान्त करने के लिए महाराज युधिष्ठिर चेष्टा करते हुए बोले—

### भीम के प्रति युधिष्ठिर की उक्ति

हे भीम ! तुमने जो कुछ कहा, वह ठीक है, तथापि मेरा मन विचारपूर्वक कार्य करने को कहता है क्योंकि असमय में क्रोध करना अत्यन्त अनुचित है। यदि इस समय नियम तोड़कर चढ़ाई न की जाय तो जितने राजा हैं वे सब अवधि के बाद हमारी सहायता करेंगे। अहङ्कारी मनुष्य की सेवा में जो लोग रहते हैं वे लोग जब समय पड़ता है तब उसे छोड़ देते हैं, क्योंकि उसके दुर्व्यवहार से मन में सभी अप्रसन्न रहते हैं। अत: जब तक अवधि है तब तक शान्ति के साथ समय बिताना उचित है। इस प्रकार से जब युधिष्ठिर भीम को समझा रहे थे, ठीक उसी समय दैवात् व्यास जी पहुँच गये। उन्हें देखते ही सबने उठकर स्वागत किया तथा आदर से लाकर उच्च आसन पर बैठाया। पश्चात् स्वयं भी आज्ञा पाकर हाथ जोड़कर सम्मुख बैठ गये।

# किरातार्जुनीयम्

## प्रथम सर्गः

अर्धाङ्गीकृत-दाम्पत्यमपि गाढानुरागि यत्। पितृभ्यां जगतस्तस्मै कस्मैचिन्महसे नमः॥ आलम्बे जगदालम्बं हेरम्बचरणाम्बुजम्। शुष्यन्ति यद्रजास्पर्शात्सद्यः प्रत्यूहवार्धयः तद्दिव्यमव्ययं धाम सारस्वतमुपास्महे। यत्प्रकाशात्प्रलीयन्ते मोहान्धतमसच्छटाः॥

वाणीं काणभुजीमजीगणदवाशासीच्च वैयासकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत्।
वाचामाकलयद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः॥

मल्लिनाथकविः सोऽयं मन्दात्मानुजिवृक्षया।
तत्किरातार्जुनीयाख्यं काव्यं व्याख्यातुमिच्छति॥

नारिकेलफलसम्मितं वचो भारवेः सपदि तद्विभज्यते।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम्॥

नानानिबन्धविषमैकपदैर्नितान्तं साशङ्कचङ्क्रमणखिन्नधियामशङ्कम्। कर्तुं प्रवेशमिह भारविकाव्यबन्धे घण्टापथं कमपि नूतनमातनिष्ये। इहान्वयमुखेनैव सर्वं व्याख्यायते मया। नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते॥

अथ तत्रभवान् भारविनामा कविः 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयजे'॥ इत्याद्यालङ्कारिकवचनप्रामाण्यात्काव्य-स्यानेकश्रेयःसाधनताम्' 'काव्यालापांश्च वर्जयेत्' इति निषेधन्नाक्षास्यासत्काव्यविषयतां च पश्यन्किरातार्जुनीयाख्यां महाकाव्यं चिकीर्षुश्चिकीर्षितार्थविघ्नपरिसमाप्तिसम्प्रदाया-विच्छेदलक्षणफलसाधनत्वात् 'आशीर्नमस्क्रिया वस्तु निर्देशो वाऽपि तन्मुखम्' इत्याद्याशीर्वादाद्यन्यतमस्त प्रबन्धमुखलक्षणत्वाच्च वनेचरस्य युधिष्ठिरप्राप्तिरूपं वस्तु निर्दिशन्कथामुपक्षिपति—

**श्रियः कुरुणामधिपस्य पालनीं प्रजासु वृत्तिं यमयुङ्क्त वेदितुम्।**
**स वर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचरः।।१।।**

श्रिय इति। आदितः श्रीशब्दप्रयोगाद्वर्णगाद्वर्णगणादिशुद्धिर्नात्रातीवोपयुज्यते। तदुक्तम्-'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः। ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा' इति। कुरूणां निवासाः कुरवो जनपदाः। 'तस्य निवासः' इत्यण्प्रत्ययः। जनपदे लुप्। तेषामधिपस्य सम्बन्धिनीम्। शेषे षष्ठी। श्रियो राजलक्ष्म्याः 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी। पाल्यतेऽनयेति पालनी ताम्। प्रतिष्ठापिकामित्यर्थः। प्रजारागमूलत्वात्सम्पद इति भावः। 'करणाधिकरयोश्च' इति करणे ल्युट्। 'टिड्ढाणञ्—' इत्यादिना ङीप्। प्रजाषु जनेषु विषये। 'प्रजा स्यात्सन्ततौ जने' इत्यमरः। वृत्तिं व्यवहारं ज्ञातुं यं वनेचरमयुङ्क्त नियुक्तवान्। वर्णः प्रशस्तिरस्यास्तीति वर्णी ब्रह्मचारी। यदुक्तम्— 'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च।। एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनिषिणः। विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्'। एतदष्टविधमैथुनाभावः प्रशस्तिः। 'वर्णाद् ब्रह्मचारिणि' इतीनिप्रत्ययः। तस्य लिङ्गं चिह्नमस्यास्तीति वर्णिलिङ्गी। ब्रह्मचारिवेषवानित्यर्थः। स नियुक्तः वने चरतीति वनेचर किरातः। 'भेदाकिरातशबरपुलिन्दा म्लेच्छजातयाः' इत्यमरः। 'चरेष्ट' इति टप्रत्ययः। 'तत्पुरुषे कृति बहुलम्' इत्युलुक्। विदितं वदनमस्यास्तीति विदितः। 'परवृत्तान्तज्ञानवानित्यर्थः। 'अर्शआदिभ्योऽच्' इत्यच्प्रत्ययः। उभयत्रापि 'पीता गावः' 'भुक्ता ब्राह्मणाः' विभक्ता भ्रातरः' इत्यादिवत्साधुत्वम्। न तु कर्तरि क्तः। सकर्मकेभ्यस्तस्य विधानाभावात्। अत एव भाष्यकारः— अकारो मत्वर्थीयः विभक्तमेषामस्तीति 'विभक्ताः' पीतमेषामस्तीति पीताः' इति सर्वत्र। अथवोत्तरपदलोपोऽत्र द्रष्टव्यः। विभक्तधना विभक्ताः, पीतोदकाः पीता इति। अत्र लोपशब्दार्थमाह कैयटः- 'गम्यार्थस्याप्रबोग एव लोपोऽभिमतः। 'विभक्ता भ्रातरः' इत्यत्र च धनस्य यद्विभक्तत्वं तद्भ्रातृषूपचरितम्। 'पीतोदका गावः' इत्यत्राप्युदकस्य पीतत्वं गोष्वारोप्यते इति। तद्वदत्रापि वृत्तिगतं विदित्वं वेदित्वं वेदितरि वनेचर उपचर्यते। एतेन 'वनाय पीतप्रतिबद्धवत्साम्', पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या 'एवमादयो व्याख्याताः अथवा विदितवान्। अकर्मकादप्यविवक्षिते कर्मणि कर्तरि क्तः। यथा 'आसितः कर्त्ता' इत्यादौ। यथाहुः— 'धातोरर्थान्तरे

वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया'।। इति द्वैतवने द्वैताख्ये तपोवने । यद्वा द्वे इते गते यस्मात्तद् द्वीतम् । तच्च तद्वनञ्च तस्मिन् । शोकमोहादिवर्जित इत्यर्थः। युधि रणे स्थिरं युधिष्ठिरं धर्मराजम् 'हलदन्तात्सप्तम्याः संज्ञायाम इत्यलुक् । 'गवियुधिभ्यां स्थिरः' इति षत्वम् । समाययौ सम्प्राप्तवान् । अत्र 'वने वनेचरः इति द्वयोः स्वरव्यञ्जनसमुदाययोरेकदैवावृत्त्यनुप्रासो नामालङ्कारः। अस्मिन्सर्गे वंशस्थवत्तम् तल्लक्षणम्— 'जतौ तु वंशस्थमुदीरितं जरौ' इति ।।१।।

**या नीलाम्बुदसन्निभा भगवती संसारतापान्वितान्**
**सद्यश्चञ्चलदृष्टिकोणकिरणैरालोक्य गर्जद्गिरा ।**
**कारुण्यामृतधारया विद्धती मोहान्वितान् प्राणिनो**
**भक्तत्राणपरायणा विजयते जाग्रत्प्रभावा शिवा ।।**

**अन्वयः**– कुरूणाम्, अधिपस्य, श्रियः, पालनीं प्रजासु, वृत्तिम्, वेदितुम्, यम्, अयुङ्क्त, सः, वर्णिलिङ्गी, विदितः, वनेचर, द्वैतवने, युधिष्ठिरं, समाययौ ।।१।।

**सुधा**–कुरूणाम्=कुरुसंज्ञकभूनिवासप्रसिद्धदेशानाम् (यथोक्तं शब्दकल्पद्रुमे 'कुरुः धार्त्तराष्ट्रपाण्डवानां पूर्वपुरुषः' यथा- 'योऽजमीढसुतस्त्वन्य ऋक्षः संवरणस्ततः। तपस्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः। परीक्षित् सधनुर्जह्नुनिषधाश्च कुरोः सुताः।।' अत्रसंज्ञकदेशानामिति न युक्तम्, यतः कुरुवर्षन्तु, सिद्धपुरसमीपेवर्त्तते, तंतु भारत-वर्षान्तर्गतं न, प्रत्युत भारतदेशादुत्तरस्यां किन्नरहरिवर्षरम्यक हिरण्मयवर्षेभ्योऽनन्तरं कुरुवर्षमस्तीति सिद्धान्तशिरोमणेर्गोलाध्याये भुवनकोशे भास्कराचार्यैरन्यैश्च भूगोलवर्णनशीलैरवर्णि)। अधिपस्य = स्वामिनः, दुर्योधनस्येति शेषः। श्रियः = राजसम्पदः, सम्बन्धिनीं, पालनीं=सकलनियमसेवनीं, प्रजासु = जनेषु तद्राष्ट्रान्तर्गतेष्विति शेषः। वृत्तिम् = व्यावहारम्, वा वार्त्ताम्, वेदितुम् = विज्ञातुम्, यम = अज्ञातनामानम् वनेचरमिति शेषः। अयुङ्क्त = नियुक्तवान्, सः = मान्यः, वर्णिलिङ्गी = ब्रह्मचारिस्व-रूपधारी, 'नान्यो मां लोकप्रकृतिपरीक्षकं जानातु, अपि तु, साधुरूपमवलोक्य मत्तः किमप्यनाशङ्क्य स्वयथार्थ स्वभावं प्रकाशयतु, इतिधिया कपटब्रह्मचारिवेषधर इत्यर्थः। विदितः = ज्ञाताखिलज्ञातव्य वनेचरः = आरण्यकः, द्वैतवने = एतन्नाम्नि विदिते विपिने, युधिष्ठिरम् = ज्येष्ठपाण्डवमेतन्नामानम् प्रति समाययौ = समागतः।

अस्मिन् सर्गे वंशस्थसंज्ञं वृत्तम् । तल्लक्षणञ्च 'जतौ तु वंशस्थमुदीरितं जरौ ।'

| यथा— | ज | त | ज | र |
|---|---|---|---|---|
| | । ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ |
| | 'श्रियः कु— | रूणाम- | धिपस्य- | पालनीम् । |

समवृत्तत्वाचतुर्ष्वपि पादेषु समानमेव लक्षणं ज्ञेयमिति ॥१॥

समासो व्युत्पत्तिश्च— अधिपातीति अधिपः तस्याधिपस्य । पाल्यतेऽनयेति पालनी ता पालनीम् । वर्णः पशस्तिरस्यास्तीति वर्णी तस्य वर्णिलिङ्गम् तदस्यास्तीति वर्णिलिङ्गी । वने चरतीति वनेचरः युधि स्थिरो युधिष्ठिरः। द्वे इते गते यस्मात्तद् द्वीतं द्वीतमेव द्वैतं तच्च वने द्वैतवनम् तस्मित् द्वैतवने ॥१॥

**व्याकरणम्**– वेदितुम् = विद् + तुमुन् । अयुङ्क्त + युज् = लङ् । समाययौ = सम् + आङ् + या + लिट् ॥१॥

**वाच्यान्तरम्**– दुर्योधनस्य प्रजापालनपद्धतिमवगन्तुं युधिष्ठिरेण योऽयुज्यत, तेन वर्णिलिंगिना वनेचरेण द्वैतवने युधिष्ठिर समायते ॥१॥

कोषः 'लक्ष्मीः षद्मालया पद्मा कमला श्रीर्हरिप्रिया' इत्यमरः। 'कुरुवर्षकुरुश्चन्द्रवंशीयोऽपि नृपः कुरुः'। 'अधिभूर्नायको नेता प्रभुः परिवृडोऽधिपः' इत्यमरः। 'प्रजास्यात्सन्ततौ जने' इत्यमरा । 'वृत्ति प्रवृत्तिराख्याता वृत्तिर्वचनमुच्यते' 'वृत्तिर्वार्ता वृत्तमपि'। 'वनेचरो वनप्रिय इति स्मृतः'॥१॥

**सारार्थः**–यदा कौरवेश्वरेण दुर्योधनेन द्यूतक्रीडया सव्याजं पराजितो युधिष्ठिरो राज्यप्रभृति सर्वस्वं हारयित्वा भीतादिभिरनुजैर्द्रौपथा स्त्रिया चानुगतो द्वादशः वर्षात्मके वनवासे वसन्नास्ते, तदानीं तस्य मनसीत्थं विचार उत्पन्नः। स दुर्जनो दुर्योधनः कथमिव राज्यं करोति नयेनानयेन वेति ज्ञातव्यमित्यतस्तत्रत्यमेकं गूढचरोचिताचातुरं वनेचरं दुर्योधनस्य राज्यशासनपद्धतिज्ञानाय प्रेषितवान् । स च ब्रह्मचारिवेषं सर्वविश्वासयोग्यं धृत्वाऽर्थात् अयमस्मद्रोष्यविषयज्ञानाशया कोऽपि युधिष्ठिरस्य गूढचर' इति यथा कौरवाणां मनसि शंका न भवेत्तथा विधाय तत्र गत्वा सर्वमुदन्तमशेषेणावगम्य युधिष्ठिराय तदादेशकारी निवेदनार्थं द्वैतवने समागतः॥३॥

**भाषाऽर्थः**– जब महाराज युधिष्ठिर अपने चचेरे भाई दुर्योधन के कपट भरे जुआ के खेल से हारकर सपरिवार द्वैतवन में रहकर बारह वर्ष का वनवास व्यतीत

कर रहे थे, उस समय अपने विरोधी दुर्योधन के 'शील' और 'कैसे प्रजाओं को पालता है' यह समझने के लिए जिस ब्रह्मचारी के वेषवाले वनेचर को भेजा था, वह वहाँ जाकर, पूरा हाल समझकर जहाँ कि द्वैतवन में युधिष्ठिर थे, वहाँ आ पहुँचा ॥१॥

सम्प्रति तत्कालोचितत्वमादेशयंस्तस्य तद्गुणसम्पन्नत्वमादर्शयन्नाह—

**कृतप्रणामस्य महीं महीभुजे जितां सपत्नेन निवेदयिष्यतः।**
**न विव्यथे तस्य मनो न हि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः।।२।।**

कृतप्रमाणस्येति। कृतप्रणामस्य तत्कालोचितत्वात्कृतनमस्कारस्य, सपत्नेन रिपुणा दुर्योधनेन 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः। जितां स्वायत्तीकृतां महीं महीभुजे युधिष्ठिराय क्रियाग्रहणात्सम्प्रदानत्वम्। निवेदयिष्यतो ज्ञापयिष्यत 'लृटः सद्वा' इति शतृप्रत्ययः। तस्य वनेचरस्य मनो न विव्यथे। कथमीदृगप्रियं राज्ञे विज्ञापयामीति मनसि न चचालेत्यर्थः। 'व्यथ भयचलनयोः' इति धातोर्लिट्। उक्तमर्थमर्थान्तरन्यासेव समर्थयते— न हीति। हि यस्मात्। हितमिच्छन्तीति हितैषिणः स्वामिहितार्थिनः पुरुषा मृषा मिथ्याभूतं प्रियं प्रवक्तुं नेच्छन्ति अन्यथा कार्यविघातकतया, स्वामिद्रोहिणः स्युरिति भावः। 'अमौढ्यममान्द्यममृषाभाषित्वमभ्यूहकत्वं चेति चारगुणाः' इति नीतिवाक्यामृते ॥२॥

**अन्वयः**—कृतप्रमाणमस्य, सपत्नेन जितां, महीं महीभुज, निवेदयिष्यतः, तस्य मनः, न, विव्यथे। हि, हितैषिण मृषा, प्रियं प्रवक्तुं न, इच्छन्ति ॥२॥

**सुधा**— कृतप्रणामस्य = विहितनमस्कारस्य, कृताभिवादनस्येत्यर्थः। सपत्नेन= शत्रुणा, दुर्योधनेनेत्यर्थः। जितां = व्याजद्यूतेनात्मसात्कृताम्, महीम् = पृथ्वीम्, महीभुजे = भूपतये, युधिष्ठिरायेत्यर्थः। निवेदयिष्यतः = निवेदयितुं विज्ञापयितु मिच्छतः भवतो हस्तान्निजहस्ते राज्यं कृत्वा एवमेव स राज्यं प्रशास्तीति कथयिस्यत इत्यर्थः। तस्य = पूर्वप्रेषितस्य वनेचरस्य, मनः= मानसम्, हृदयमित्यर्थः। न विव्यथे = न व्यथितम्, अहो कथमेवं शत्रुप्रशंसां प्रभवे निवेदयामीत्येवं मनागपि मनो न विचलितं, न वा भयान्वितं जातम्। हिम्यतः, यस्मात्कारणात्, हितैषिणः= प्रभुकल्याणेच्छवः, भृत्याः आज्ञाप्या इति यावत्। मृषा = मिथ्यात्मकम्, कपोलकल्पितमिति भावः। प्रियं = श्रवणसुखदं वचनम्, प्रवक्तुम् = निवेदयितुम्,

न = न भ्रमादपि, इच्छन्ति = अभिलषन्ति, स्वप्नेऽपीति शेषः। मिथ्या तु मिथ्यैव, सत्यं सत्यमेव, तेन मिथ्याप्रियवचननिवेदनेन, यथार्थविपयस्थितिभज्ञात्वा नरपतिः प्रमत्तो भवन् राज्यात्पतति, ताकालिकमप्रियमपि वचनं निशम्य, तत्प्रतीकारतत्परो राजा न जात्वरिविशङ्कतो भवति, अतो गूढचरस्यायं मुख्यो धर्मोऽस्ति, यत्स्वमिनेऽसत्यं प्रियं न निवेदनीयमिति भावः। अत एवोक्तं 'सत्यं ब्रूयात्प्रियं ब्रूयात्' इति । अनेन यथार्थो भृत्यसमुदाचारो वर्णितः। एवम् 'अमौढ्यममान्द्यममृषाभाषित्वमभ्यूहकत्वञ्चेति चारगुणाः' इति नीतिवाक्यामृते कथितम् ॥२॥

**समासः**– कृतः प्रणामो येन सः कृतप्रणामस्तस्य कृतप्रणामस्य । महीं भुनक्तीति महीभुक् तस्मै महीभुजे । हितमिच्छन्तीति हितैषिणः॥२॥

**व्याकरणम्**– विव्यथे = व्यथ + लिट् । इच्छन्ति = इष् + लट् ॥२॥

**वाच्यान्तरम्**– वनेचरस्य मनसा न विव्यथे, हितैषिभिर्मृषा प्रियं न प्रवक्तुं मिष्यते ॥२॥

**कोषः**–'गोत्रा कुः पृथिवी पृथ्वीं चमाऽवनिर्मेदिनी मही' इत्यमरः। 'पार्थिवो भूपतिर्भूपो महीभुक् चमापतिर्नृपः'। 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः। 'चित्तं तु चेतो हृदयं स्वान्तं हन्मानसं मन' इत्यमरः 'मृषा मिथ्या तु वितथे' इत्यमरः॥२॥

**सारार्थः**–स च वनेचरो युधिष्ठिरं प्रणम्य यथादृष्टं प्रभुद्रोहिप्रशंसापरमपि दुर्योधनकृतराज्यशासनविधिं प्रवक्तुमुद्यतः। परन्तु कथमेवं शत्रूत्कर्ष स्वप्रभवे निवेदयामिति मनागपि तस्य मनो न कम्पितम् । यतो हितेच्छौर्भृत्यस्य स्वामिनं प्रति सत्यकथनमेव परो धर्मः। कथमन्यथा भृत्यस्य विश्वासः। तथा शत्रुकृते प्रतीकारः क्रियते स्वामिभिरिति॥२॥

**भाषाऽर्थः**– किया है प्रमाण जिसने और दुर्योधन से वशीकृत राज्य के बारे में कहने की इच्छा है जिसकी, ऐसे उस वनेचर का चित्त जरा भी विचलित नहीं हुआ । इसलिए कि मालिक के कल्याण चाहने वाले नौकर कभी झुठी मीठी बात मालिक से नहीं कह सकते ॥२॥

तथापि प्रियार्हे राशि कटुनिष्ठुरोक्तिर्न युक्तेत्याशङ्क्य स्वाम्यनुज्ञया न दुष्यतीत्याशयेनाह—

**द्विषां विघाताय विधातुमिच्छतो रहस्यनुज्ञामधिगम्य भूभृतः।**
**स सौष्ठवौदार्यविशेषशालिनी विनिश्चितार्थामिति वाचमाददे ।।३।।**

द्विषामिति। रहस्येकान्ते स वनेचरो द्विषां शत्रूणाम्। कर्मणि षष्ठी। विघताय, बिहन्तुमित्यर्थः। 'तमर्थाच्चभाववचनात्' इति चतुर्थी। 'भाववचनाच्च' इति तुमर्थे घञ्प्रत्ययः। अत्र तादर्थ्यमपि न दोषः तथापि प्रयोगवैचित्र्यविशेषस्याप्यलङ्कारत्वादेयं व्याचक्षते। विधातुं व्यापारं कर्तुमिच्छतः। समानकर्तृकेषु तुमुन् द्विषो विहन्तुमुद्युञ्जानस्येत्यर्थः। अतः एव भूभृतो युधिष्ठिरस्यानुज्ञामधिगम्य। सुष्ठुभावः सौष्ठवं शब्दसामर्थ्यम्। सुष्ठुशब्दादव्ययादुद्गात्रादित्वादञ्प्रत्ययः। उदारस्य भाव औदार्यमर्थसम्पत्तिः तयोर्द्वन्द्वः सौष्ठवौदार्ये। अत्रौदार्यशब्दस्याजाद्यन्तत्वेऽपि 'लक्षणहेत्वोः क्रियायाः' इत्यत्राल्पस्वरस्यापि हेतुशब्दस्य पूर्वनिपातमकुर्वता सूत्र कृतैव पूर्वनिपातस्यानित्यत्वज्ञापनान्न पूवनिपातः। उक्तं च काशिकायाम्— अयमेव लक्षणहे- त्वोरिति निर्देशः। 'पूर्वनिपातव्यभिचारचिह्नम्' इति। ते एव विशेषः तयोर्वा विशेषः तेन शालते इति सौष्ठवौदार्यविशेषशालिनी ताम्। ताच्छील्येणिनिः। विनिश्चितार्थां विशेषतः प्रमाणतो निर्णीतार्थामिति वक्ष्यमाणरूपां वाचमाददे स्वीकृतवान्। उवाचेत्यर्थः॥३॥

**अन्वयः**—सः द्विषां, विघाताय, विधातुम्, इच्छतः, भूभृतः, रहसि, अनुज्ञाम् अधिगम्य, सौष्ठवौदार्यविशेषशालिनी, विनिश्चितार्थाम्, इति, वाचम्, आददे॥३॥

**सुधा**—सः = वनेचरः, विवक्षुरिति शेषः। द्विषाम् = शत्रूणाम्, विघाताय=नाशाय, विधातुम् = विधानं, कर्तुम्, येनोपायेन शत्रुसंहरणम् भवेत्तं प्रकर्तुमित्यर्थः। इच्छतः = अभिलषतः भूभृतः=भूपतेः, युधिष्ठिरस्येति शेषः। रहसि = एकान्ते; निर्जने इति यावत्, अनुज्ञाम् = आज्ञाम्, अधिगम्य = प्राप्य, अर्थात् 'भो वनेचर! तत्र गत्वा दुर्योधनस्य राजशासनपद्धति सम्यगवगतां ब्रूहि' इत्येवंरूपामाज्ञां शिरसि धृत्वा, सौष्टवौदार्यविशेषशालिनीम् = शब्दार्थगुणशोभिताम्, विनिश्चितार्थाम् = विशेषरूपेण प्रकटार्थाम्, स्पष्टार्तामिति यावत्, इति = वक्ष्यमाणरूपाम्, वाचम् = वाणीम्, आददे = स्वीकृतवान्, उवाचेत्यर्थः॥३॥

**समासः**—भुवं बिभर्तीति भूभृतः तस्य भूभृतः। सुष्ठु भावः सौष्ठवम्, उदारस्य भाव औदार्यम्, सौष्ठवं चौदार्यञ्च सौष्ठवौदार्ये, तयोः सौष्ठवौदार्ययोविशेषः सौष्ठवौदार्यविशेषः, तेन शालते शोभते या सा सौष्ठवौदार्यविशेषशालिनी, ताम् सौष्ठवौदार्यविशेषशालिनीम्। विशेषेण निश्चितः, निर्णीतोऽर्थो यस्यास्तां विनिश्चितार्थाम्॥३॥

**व्याकरणम्**–विधातुं = वि + धा + तुमुन्। आदेद = आ + दा + लिट्। इच्छतः = इष् + शतृ ॥३॥

**वाच्यान्तरम्**– भूभृतोऽनुज्ञामधिगम्य तेन सौष्ठवौदार्यविशेषशालिनी विनिश्चितार्था इति, वाक् आददे ॥३॥

**कोषः**– 'रिपौ वैरिसपत्नारिद्विषद् द्वेषणदुर्हृदः। द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः' इत्यमरः। विविक्तविजनक्षत्रनिःशलाकास्तया रहः इत्यमरः। 'भूभृद्भूमिधरे नृपे' इत्यमरः॥३॥

**सारार्थः**– कथं दुर्योधनो राज्यं करोति, कथं च पराजितो भविष्यतीत्येतत्सर्ववृत्तान्तज्ञानायाज्ञापितो वनेचरस्तत्र गत्वा सर्वमवगम्य, तत आगत्य युधिष्ठिरं प्रति शब्दार्थचमत्कारलसितं वचनं समुवाच ॥३॥

**भाषाऽर्थः**–शत्रुओं का नाश करने के लिए उपाय करने की इच्छा रखनेवाले महाराज युधिष्ठिर की गुप्त रीति से आज्ञा पाकर वनेचर वहाँ सब कुछ समझकर शब्द और अर्थ के गुणों से पूर्ण वाक्य युधिष्ठिर से बोला ॥३॥

**प्रथमं यावद्प्रियनिवेदकमात्मानं प्रत्यक्षोभं याचते–**

**क्रियासु युक्तैर्नृप ! चारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः।**
**अतोऽर्हसि क्षन्तुमसाधु साधु वा हितं मनोहारि च दुर्लभं वचः॥४॥**

क्रियास्त्विति। हे नृपः। क्रियासु कृत्यवस्तुषु युक्तैर्नियुक्तैरनुजीविभिर्भृत्यैः। चारादिभिरित्यर्थः। चरन्तीति क्षराः। पचाद्यच्। त एव चाराः चरेः पचाद्यजन्तात्प्रज्ञादित्वादण्प्रत्ययः। त एव चक्षुर्येषां ते चारचक्षुषः। 'स्वपरमण्डले कार्याकार्यावलोकने चाराश्चाक्षूंषि क्षितिपतीनाम्' इति नीतिवाक्यामृते। प्रभवो निग्रहानुगहसभर्थाः स्वामिनो न वञ्चनीया न प्रतारणीयाः। सत्यमेव वक्तव्या इत्यर्थः। चारापचारे चक्षुरपचारिवद्राज्ञां पदे पदे निपात इति भावः अतोऽप्रतार्थत्वाद्धेतोः। असाध्वप्रियं साधु प्रियं वा मदुक्तमिति शेषः। क्षन्तुं सोढुमर्हसि। कुतः हितं पथ्यं मनोहारि प्रियं च वचो दुर्लभम्। अतो मद्वचोऽपि क्षन्तव्यमित्यर्थः॥५॥

**अन्वय**– हे नृप !, क्रियासु, युक्तैः, अनुजीविभिः, चारचक्षुषः, प्रभवः, न, वञ्चनीयाः। अतः, असाधु, वा, साधु, क्षन्तुम्, अर्हसि। हितं, मनोहारिच, च, वचः, दुर्लभम् (भवति) ॥४॥

**सुधा**–हे नृप ! नरेश !, युधिष्ठिर !, क्रियासु = कर्तव्यविषयेषु, युक्तैः=नियुक्तैः, संयोजितैरिति शेषः। अनुजीविभिः = अनुचरैः, भृत्यैरित्यर्थः। चारचक्षुषः = गूडचरदृशः, चारनयना इति शेषः। प्रभवः = स्वामिनः न, वञ्चनीयाः = प्रतारणीयाः न हि मिथ्यावाक्यैस्तत्कालश्रवणप्रियैर्वञ्चनीया इत्यर्थः। अत = अस्मात्कारणात् (यदि मन्त्रिवेद्यमानं वचः) असाधु = असम्यक् अप्रियमित्यर्थः। वा साधु = सम्यक् प्रियं श्रवणहारीति यावत् (भवेत् तत् त्वम् सेवकोक्तकोमलोक्तिश्रवण योग्योऽपि, ममाप्रियमपि तत्रत्यं सत्यमुदन्तं निगद्यमानं, तत्) क्षन्तुम् = सोढुम्, अर्हसि = योग्योऽसि । (अहो.सत्यमपि प्रियमेव प्रयोव्यम्, तदा त्वं कथमप्रियं सत्यं वक्तुमुद्यतोऽसीति (चेत्तदाह) हितं = परिणामकल्याणकरम्, (तथा) मनोहारि = सद्यः प्रियम्, वचः = वचनम्, दुर्लभम् = दुष्प्रयोज्यम्, अर्थादुक्तमिथोविरुद्धगुणद्वयवद्वचनप्रयोगे प्रवीणा अपि मनीषिणो विचारणपरायणा भवन्ति, अस्मादृशमाजन्मवनवृत्तीनां कथैव का, नियतमप्रियमेव मद्वचो भविष्यतीति पूर्व मपराधरुमापनं सर्वथा समुचितमिति भृत्यस्योचितः परमः शिष्टाचार इति ॥४॥

**समासः**–चरन्तीति चराः, चरा एव चारा एव चक्षूंषि येषां ते चारच्युषः। मनो हरतीति मनोहारि । दुःखेन लभ्यते यत्तत् दुर्लभम् ॥४॥

**व्याकरणम्**– वञ्चनीयाः = वञ्च + अनीयर् । क्षन्तुम् = क्षम + तुमुन् अर्हसि = अर्ह + लट् ॥४॥

**वाच्यान्तरम्**– क्रियासु युक्ता अनजीवितः चारचक्षुष प्रभून् न वञ्चयेयुः। अतः असाधु वा साधु वचनम् त्वया अर्ह्यतेः। हितेन मनोहारिणा वचसा दुर्लभेन भूयते ॥

**कोषः**–'राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः। चक्रवर्ती सार्वभौमो नृपोऽन्यो मण्डलेश्वरः, इत्यमरः। 'अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः' इत्यमरः। 'सेवकार्थ्यनुजीविनः' इत्यमरः॥४॥

**सारार्थः**–कार्यमात्रे नियुक्तैः सेवकैः सर्वथा प्रभवे सत्यमेव वचो निवेद्यम् । सत्यवचनप्रयोगशीलैरेव भृत्यैः स्वामिनो नयनवन्तो भवन्ति । असत्यभाषणैर्भृत्यैः प्रमादिनो नृपाः अन्धा एव । तथा अन्धः कूपे पतति, तथाऽयथार्थकथनशीलैर्भृत्यैः सेवितो भूतः शत्रुप्रपञ्चकूपे पतति । अतो न कदापि मिथ्यावचनं निवेदनीयंसेवकैः।

तथा चाप्रियमपि सत्यं भृत्यमुखोक्तं श्रोतव्यं स्वामिभिः। विनाऽनृतयोगेन सर्व सर्वथा प्रियं न भवति । केवलं यथार्थस्थितिवर्णनात्मकं स्वाभाविकं वाक्यजालं न हि सर्वथा प्रियं भवतीति । केवलप्रियवचनश्रवणादरो न विधेयो राज्यशासकैः। यदि पुरुषं सत्यं श्रुत्वा भृत्योपरि स्वामी कुप्येत्तदा भयात्सङ्कोचाच्च भृत्यः कथं पुनः सत्यं कथयिष्यति । सत्याभावे कथं नरपतिः स्वापत्तिद्रीकरणार्थं यत्नं करिष्यति । तथा सति राज्यनाश एवं फलम्, तस्मात् भृत्येन सत्यं निवेदनीयम्, स्वामिनाऽपि सादरं सत्यं परुषमपि श्रोतव्यमिति भावः।।४।।

**भाषाऽर्थः**–किसी काम का भार शिर पर लेकर नौकर को चाहिए कि मालिक को न ठगे, इसलिए मै आप को सच बताता हूँ। पर केवल सत्य बात मीठी नहीं होती, सो अगर मेरी बात कड़वी भी हो तो आप कृपा कर उसको क्षमा कर सकते हैं। क्योंकि जो बात भली और मीठी हो, ऐसी बात दुर्लभ हैं, उसमें भी मेरे जैसे भिल्ल-बनैले आदमी के लिए तो बिलकुल असम्भव ही है ।।४।।

**तर्हि तूष्णींभाव एव वरमित्याशङ्क्याह–**

**स किंसखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किंप्रभुः।**
**सदाऽनुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसम्पदः।।५।।**

स इति । सः सखामात्यादिरधिपं स्वामिनः साधु हितं न शास्ति नोपदिशति। 'ब्रुविशासि' इत्यादिना शासेर्दुहादिपाठाद् द्विकर्मकत्वम् । स हितानुपदेष्टा कुत्सितः सखा किंसखा । दुर्मन्त्रीत्यर्थः। 'किमः क्षेपे' इति समासान्तप्रतिषेधः। तथा यः प्रभुर्निग्रहानुग्रहसमर्थः स्वामी हितादाप्तजनाद्धितोपदेष्टुः सकाशात् । 'आख्यातोपयोगे इत्यपादानात्पञ्चमी । संशृणुते न शृणोति हितमिति शेषः। 'समो गम्यृच्छि' इत्यादिना सम्पूर्वाच्छृणोतेरकर्मकादात्मनेपदम्, अकर्मकत्वम् वैवक्षिकम् । स हितमश्रोता प्रभुः किंप्रभु कुत्सितस्वामी पूर्ववत्समासः। सर्वथा सचिवेन वक्तव्यं श्रोतव्यं स्वामिना। एवं च राजमन्त्रिणोरैकमत्यं स्यादित्यर्थः। ऐकमत्यस्य फलमाह— सदेति । हि यस्मान्नृपेषु अमा सह भवा अमात्यास्तेषु । 'अव्ययात्त्यप्' अनुकूलेषु परस्परानुरक्तेषु सत्सु सर्वसम्पदः सदा रतिमनुरागं कुर्वते 'कुर्वन्ति । न जातु जहती त्यर्थः। अतो मया वक्तव्यं त्वया च श्रोतव्यमिति भावः। अत्रैवं राजमन्त्रिणोर्हितानुपदेशतदश्रवणनिन्दा-

द्विषदिति । यद्यतः कारणादियं दशाऽवस्था । 'दशा वर्त्तावस्थायाम्' इति विश्वः। द्विषन्तों निमित्तं यस्या सा । 'द्विषोऽमित्रे' इति शतृपत्ययः। अतो मे मनः समूलं साशयमुन्मूलयतीवोत्पाटयतीव । दैविकी त्वापत्र दुःखायेत्याह-परैरिति ।

परैः शत्रूभिरपर्यासिताऽपर्यावतिता वीर्यसम्पद्येषां तेषां मानिनां पराभवो विदष्युत्सव खेति वैधर्म्येणार्थान्तरन्यासः। मानहानिर्दुःसहा, न त्वापदिति भावः॥४१॥

**अन्वयः**–यत्, इयं, दशा, द्विषन्निमित्ता (तवास्ति), ततः, समूलं, मे मनः, उन्मूलयति, इव । परैः अपर्यासितवीर्यसम्पदां, मानिनां, पराभवः, अपि, उत्सवः, एव (भवति) ॥४१॥

**सुधा**–यत् = यस्मात्कारणात्, इयम् = वर्त्तमाना, वनतासरूपेति शेषः। दशा= अवस्था, द्विषन्निमित्ता = शत्रुहैतुकी, तव युधिष्ठिरस्य वर्त्तते, तत् = तस्मात्, समूलं साश्रयम्, मे = मम, द्रौपद्या इति शेषः। मन = चित्तम्, उन्मूलयति = उत्पाटयति, इव । परैः = शत्रुभिः, अपर्यासितवीर्यसम्पदाम् = अपर्यावर्तितपौरूषसम्पत्तीनाम्, अनवरूद्धवि- क्रमाणामित्यर्थः। मानिनाम्=मनस्विनाम्, पराभवः=पराजय इत्यर्थः। अपि, उत्सवः = उद्भवः, हर्वोदयः एव भवति ॥४१॥

**समासः**–द्विषन्तः निमित्तं यस्याः सा द्विषन्निमित्ता । मूलेन सह वर्त्तते इति समूलम् । न पर्यासिता अपर्यासिता, अपर्यासिता, वीर्यसम्पद् येषां ते अपर्यासित-वीर्यसम्पदस्तेषाम पर्यासितवीर्यसम्पदाम् ॥४१॥

**व्याकरणम्**–उन्मूलयति = उत्+मूल+णिच्+लट् ॥४१॥

**वाच्यान्तरम्**–यद् अनया दशया द्विषन्निमित्तया भूयते, ततः समूलेन मे मनसा उन्मूल्यते इव । परैरपर्यासितवीर्यसम्पदां मानिनां पराभवेणपि उत्सवेन एव भूयते ॥४१॥

**कोषः**–'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः। 'हेतुर्निमित्तकारण-बीजनिदानानि हेतौ स्यः' इति । 'दशा वर्त्तववस्तायाम्' इति विश्वः। 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः। 'पराभवः परिभवः पराजय इतीर्यते'। 'अथ क्षण उद्धर्षो मह उद्भव उत्सवः इत्यमरः॥४१॥

**सारार्थः**–यदीयं वर्त्तमानाऽवस्था देवहेतुकी भवेत्तदा न तथा मनोहानिः। यतो रिपुकृताऽवस्थेयमस्ति, अतो मम मन उन्मूलितमिवालग्रमनुभूयते । न हि एवं दशायां मादृशानां जनानां प्राणा मनांसि तिष्ठन्ति, यन्मम मनो नो स्फुटति, प्राणा न बहिर्भवन्ति, तत्केवलं दुःखभोगहेतवे एवेति ज्ञायते । परन्तु भवन्तो मानिनः सन्ति,अतः शत्रुभिरतुलितविक्रमाणां भवतां दैवात्पराजयोपि हर्षोदय इव भवति ॥

**भषाऽर्थः**–आपकी यह हालत शत्रुओं के कारण है, इसी से मेरा मन उखड़ा हुआ सा जान पड़ता है। शत्रुओं से अपराजित पौरूषसंपत्ति वाले मानी जन के लिये पराभव भी उत्सव ही के समान मालूम पड़ता है ॥४१॥

**विहाय शान्ति नृप धाम तत्पुनः प्रसीद सन्धेहि वधाय विद्विषाम्।**
**व्रजन्ति शत्रूनवधूय निःस्पृहा शमेन सिद्धिं मुनयो न भूभृतः।।४२।।**

विहायेति। हे नृप, शान्तिं विहाय वत्प्रसिद्धं धाम तेजो विद्विषां वधाय पुनः सन्धेह्यङ्गीकुरू प्रसीद। प्रार्थनायां लोट्। ननु शमेन कार्यसिद्धौ किं क्रोधेनेत्याह- व्रजन्तीति। निःस्पृहा मुनयः शमेन क्रोधवर्जनेन सिद्धिं ब्रजन्ति। भूभृतास्तु शत्रूनवधूय निजित्य। कैवल्यकार्य तु शान्तिसाध्यमित्यर्थः॥४२॥

**अन्वयः**–हे नृप, शान्तिं, विहाय, विद्विषां, वधाय; पुनः, पत्, धाम, सन्धेहि, प्रसीद। निःस्पृहाः, मुनयः शत्रून्, अवधूय, शमेन, सिद्धिं व्रजन्ति। (किन्तु) भूभृतः (तथा) न ॥४२॥

**सुधा**–हे नृप = राजन्, युधिष्ठिर ! शान्तिम् = क्षमाम्, सकलापमानदुःख- सहनशीलरूपामित्यर्थः, विहाय = त्यक्त्वा, विद्विषाम् = वैरिणाम्, दूर्योधनादीना- मित्यर्थः वधाय = नाशाय, पुनः = भूयः, तत् = स्वकीयं पौर्विकमित्यर्थ। धाम = तेजः, सन्धेहि = अङ्गीकुरु, प्रसीद। यतो न हि शान्त्याशत्रून् विजित्य सिद्धिं लभते कश्चिदित्याह-निःस्पृहाः = निरीहा, आकामा इति यावत्। मुनयः = संयमिनः, शत्रून = कामादीन्, अवधूय = तिरस्कृत्य, दूरीकृत्य, शमेन =शान्त्या, सिद्धिम् = अभिलाषपूर्तिम्; व्रजन्ति = यान्ति। भूभृतः = राजानः तथा शान्त्या न सिद्धिं व्रजन्तीति ॥४२॥

**समासः**–निर्गता स्पृहा येषां ते निःस्पृहाः। भुवं बिभ्रतीति भूभृतः॥४२॥

**व्याकरणम्**–विहाय = वि+हा+क्त्वा+ल्यप्। सन्धेहि = सम्+धा +लोट्। प्रसीद = प्र+सद्+लोट्। अवधूय = अव+धूञ्+क्त्वा+ल्यप्। व्रजन्ति = व्रज + लट् ॥४२॥

**वाच्यान्तरम्**–हे नृप ! शान्तिं विहाय विद्विषां वधाय पुनः तद् धाम (त्वया) सन्धीयताम्, प्रसद्यताम्, निःस्पृहैर्मुनिभिः शत्रून् अवधूय शमेन सिद्धिर्व्रज्यते। किन्तु भूभृद्भिस्तथा न सिद्धिर्व्रज्यते ॥४२॥

**कोषः**–'शमनन्तु शमः शान्तिः' इत्यमरः। गृह-देह-त्विट्-प्रभावा धामानि' इत्यमरः॥४२॥

**सारार्थः**–यतो हि प्रजापालनं राजसं कर्म, तत्सात्त्विक्या धिया न सम्पद्यते, सात्त्विक्या धिया तु योगसिद्धिः क्रियते योगिभिः। तेन भवता मुनियोग्यां शान्तप्रकृतिं दूरीकृत्य, तत्काले शत्रुशातनाय राजसमुग्रं तेजः सङ्गृह्यताम्, येन स्वहस्वभ्रष्ट-राज्याधिगमः पुनः सम्भवेत्। अन्यथैवं मुनिवृत्या बनवाससुखमन्तरा नान्यत्प्रजाधि-पत्यादि सौभाग्यं लभ्यते ॥४२॥

**भाषाऽर्थः**–हे महाराज ! युधिष्ठिर, आप इस सहनशीलता को छोड़कर (जैसी महाराज लोगों की होती है) शत्रुओं का संहार करने के लिए उस तेज को फिर धारण कीजिए। आप जो समझते हैं कि 'ऐसी ही प्रकृति अच्छी है, इसी से सब होगा' सो कभी नहीं। ऐसी प्रकृति से मुनि लोग अपने काम क्रोध आदि शत्रु को दूर कर योगसिद्धि करते हैं। राजा महाराज तो केवल क्षात्रधर्म (उग्रधर्म) से ही शत्रुओं को परास्त करके सिद्धि पाते हैं ॥४२॥

**पुरःसरा धामवतां यशोधनाः सुदुःसहं प्राप्य निकारमीदृशम् ।**
**भवादृशाश्चेदधिकुर्वते रतिं निराश्रया हन्त हता मनस्विता ॥४३॥**

पुर इति। किं च धामवतां तेजस्विनाम्। परनिकारासहिष्णूनामित्यर्थः। पुरः सरतीति पुरःसरा अग्रेसराः। 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति टप्रत्ययः। यशोधना भवादृशाः सुदुःसहमतिदुःसहमीदृशमुक्तप्रकारं निकारं पराभवं प्राप्य रतिं सन्तोषमधिकुर्वते स्वीकुर्वते चेत्तर्हि। हन्त इति खेदे। मनस्विताऽभिमानता निराश्रया सती हता। तेजस्विजनैकशरणत्वान्मनस्वितायाः इत्यर्थः। अत-पराक्रमितव्यमिति भावः। यद्यप्यत्र प्रसहनस्यासङ्गतेरधिपूर्वात्करोतेः 'अधेः प्रसहने' इत्यात्मनेपदं न भवति। 'प्रसहनं परिभवः' इति काशिका। तथाऽप्यस्याकर्त्रभिप्रायविवक्षायामेव प्रयोजकत्वात्कर्त्रभि-प्राये 'स्वरितञितः-' इत्यात्मनेपदं प्रसिद्धम् ॥४३॥

**अन्वयः**–चेत्, धामवतां, पुरःसराः, यशोधनः, भवादृशाः, (जनाः) सुदुःसहम्, ईदृशं निकारम्, प्राप्य, रतिम् अधिकुर्वते (तदा) हन्त ! मनस्विता, निराश्रया, (सती) हता ॥४३॥

**सुधा**–चेद = यदि, धामवताम् = तेजोवताम्, तेजस्विनामिति भावः। पुरः-सराः = अग्रगण्याः, यशोधनाः = कीर्त्तिवित्ताः, भवादृशाः, युधिष्ठिरोपमा महा-महिमवन्तो राजान इति शेषः। सुदुःसहम् = अतिदुःसहम्, ईदृशम् = एवं विधम् निकारम् = शत्रुकृततिरस्कारमिति भावः। प्राप्य = लब्ध्वा, रतिं = तुष्टिम्, अधिकुर्वते = अङ्गीकुर्वन्ति, तदा = अङ्गीकारे कृते, हन्त ! खेदे, मनस्विता = स्वतन्त्रता,

निराश्रया = निराधारा, सती, हता = मृतेति । मनस्विजनाभावात्कुत्र तिष्ठतु वराकी मनस्विताऽत आश्रयाभावाद्विवङ्गतेति भाव:।।४३।।

**समास:**–पुर: सरन्तीति पुर:सरा । धाम विद्यते येषां ते धामवन्त: तेषां धामवताम् । यशांसि एव धनानि येषां ते यशोधना: । निर्गत आश्रयो यस्या: सा निराश्रया । मनस्विनो भावो मनस्विता ।।४३।।

**व्याकरणम्**–प्राप्य = प्र+आप+क्त्वा+ल्यप् । अधिकुर्वते = अधि + कृ+लट्+झि । पुर:सरा: = पुर:+सृ=ट:। सुदु:सहम् = सु+दुस+सह+णमुल् । हता = हन्+क्त:+टाप् ।।४३।।

**वाच्यान्तरम्**–चेद् धामवतां पुर:सरै: यशोधनै भयादृशै: ईदृशं सुदु:सहं निकारं प्राप्य रति: अधिक्रियते तदा हन्त, मनस्वितया निराश्रियता हतया भूयते ।।४३।।

**कोष:**–'पुर:सर: अग्रगण्या धुरीणाश्च पुरोगमा:' इति कोष:। 'निकारो हि तिरस्कारोऽपमानश्च पराभव:' इति ।।४३।।

**सारार्थ:**–येषां नहि विद्यते तेज:, नहि यशो लब्धुमिच्छा वर्त्तते, ते यद्येवं कर्णे तुलं तैलं च निक्षिप्य 'यद्भवतु, तद्भवतु, यो हि यथा करिष्यति स तादृक् फलं भोक्ष्यति' इत्थं स्वमनसि धृतिं कृत्वा शत्रोरप्यपमानं सम्मानमिव अनुभवन्ति, तेषां तद्युक्तमेव यतस्ते तेजोविहीना:, यशोधना नहि सन्ति भवन्तस्तु तथा न, किन्तु ये जगति तेजस्विनस्तेषामग्रगण्या: यशोधनाश्च सन्ति, तदा कथमेव प्रकृतिप्रतिकूलं विचारं पालयन्ति भवन्त:। एवं चेत्तदा मनस्विता भूमौ त्वाश्रयविहीना सती स्वर्गमेव गमिष्यति ।।४३।।

**भाषाऽर्थ:**–अगर तेजस्वियों के आगे गिनने लायक, यशरूपी धनवाले आप लोगों के ऐसे महापुरूष इस तरह अत्यन्त दु:सह दु:ख पाकर भी चुपचाप बैठे रहेंगे तो हाय ! मनस्विता बेचारी मानो निरवलम्ब होकर खत्म हो गई ।।४३।।

**अथ क्षमामेव निरस्तविक्रमश्चिराय पर्येषि सुखस्य साधनम् ।**
**विहाय लक्ष्मीपतिलक्ष्म कार्मुकं जटाधर: सञ्जुहुधीह पावकम् ।।४४।।**

अथेति । अथ पक्षान्तरे । निरस्तविक्रम: सन् । चिराय चिरकालेनापि क्षमां क्षान्तिमेव । 'क्षितिक्षान्तयो: क्षमा' इत्यमर:। सुखस्य साधनं पर्येष्यगच्छसि तर्हिलक्ष्मी-पतिलक्ष्म राजचिह्नं कार्मुकं विहाय । धरतीति धर: पचाद्यच् । जटानां धरो जटाधर: सन्निह वने । पावकं जुहुधि पावके होमं कुर्वित्यर्थ:। अधिकरणे कर्मत्वोपचार: विरक्तस्य किं धनुषेत्यर्थ:। 'हुझल्भ्यो हेर्धि:।।४४।।

**अन्वयः**–अथ, निरस्तविक्रमः (सन्) चिराय, सुखस्य, साधनं, क्षमाम्, एव, पर्येषि, (तदा) लक्ष्मीपतिलक्ष्म कार्मुकं, विहाय, जटाधरः, सन्, इह पावकं, जुहुधि ॥४४॥

**सुधा**–अथ = यदि, निरस्तविक्रमः = उत्साहहीनः, सन्, त्वम्; चिरायः = चिरकालम्, सुखस्य = आनन्दस्य, साधनम् = सहायकम्, क्षमना = शान्तिम्, एव = निश्चयेन, पर्येषि = अवगच्छसि, जानासीति भावः। तदा, लक्ष्मीपतिलक्ष्म = राजचिह्नम्, कार्मुकम् = धनुः, विहाय = परित्यज्य; जटाधरः=सम्बद्धकेशधारी सन्, इह = वने, पावकम् = अग्निम्, जुहुधि = होमं, कुरू, तव कार्यविरूद्धं देहलक्षणमस्ति । लक्षणन्तु राजार्हम्, कार्यन्तु योगियोग्यम् ॥४४॥

**समासः**–निरस्तः विक्रमो येन सः, निरस्तविक्रमः। लक्ष्म्याःपतिः लक्ष्मीपतिः, लक्ष्मीपतेः लक्ष्म यस्मिन् तत् लक्ष्मीपतिलक्ष्म । जटानां धरो घटाधरः॥४४॥

**व्याकरणम्**–पर्येषि=परि+इण्+लट्+सिप् । विहाय = वि+हा+क्त्वा+ल्यप् । जुहुधि = हु + लोट्-मध्यमपुरुषैकवचने ॥४४॥

**वाच्यान्तरम**–अथ निरस्तविक्रमेण सता त्वया चिराय सुखस्य साधनम् क्षमा एव परीयते तदा लक्ष्मीपतिलक्ष्म कार्मुकं विहाय, जटाधरेण सता त्वया इह पावकः हूयताम् ॥४४॥

**कोषः**–'क्षितिक्षान्तयोः' क्षमा' इत्यमरः। 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' इत्यमरः। 'स्यादानन्दथुरानन्दः' शर्मशात्सुखानि च' इत्यमरः। 'शरासनं कार्मुकं च चापं धनुरपीर्यते' इति । 'आश्रयाशो बृहद्भानु कृशानुः पावकोऽनलः' इत्यमरः॥४४॥

**सरार्थः**–नो चेत् त्वं क्षमाऽवम्बनेनैव स्वाभीष्टसिर्भिविष्यतीति जानासि, तदा क्षमावलम्बनानुचितं क्षात्रतेजोधरोचितमिदं लुलद्धनुस्त्यज । प्रत्युत, क्षमावलम्बनोचितां जटां धृतवा, सर्वं राजचिह्नं विहाय वनेऽग्निहोत्री भाव, नहि शान्तिमता धनुर्ध्रियसे केनापीति ॥४४॥

**भाषाऽर्थः**–अगर आप पराक्रम को दूर कर केवल शान्ति को ही सुख का साधन (सहायक) समझते हैं, तो आप राजचिह्नस्वरूप इस धनुष को दूर कर और जटा बढ़ा करके अग्नि में हवन कीजिये ॥४४॥

अथ समयोल्लङ्घनाद् बिभेषि तदपि न कश्चिदित्याह-

**न समयपरिरक्षणं क्षमं ते निकृतिपरेषु परेषु भूरिधाम्नः।**
**अरिषु हि विजयार्थिनः क्षितीशा विदधति सोपधि सन्धिदूषणानि ।।४५।।**

नेति। परेषु शत्रुषु। निकृतिः परं प्रधानं येषु तेषु तथोक्तेष्वपकारतत्परेषु सत्सु भूरिधाम्नो महौजसः प्रतीकारक्षमस्य ते तव समयस्त्रयोदशसंवत्सरान् वने वत्स्यामीत्येवंरूपा संवित। 'समयाः' शपथाचारकालसिद्धान्तसंविदः' इत्यमरः। तस्य परिरक्षणं प्रतीक्षणं न क्षमं युक्तम्। 'युक्तं क्षमं शक्ते हिते त्रिषु' इत्यमरः। हि यस्माद्विजयार्थिनो विजिगीषवः क्षितीशा अरिषु विषये सोपधि सकपटं यथा तथा। कपटोऽस्त्री व्यजादम्भोपधयश्छद्मकैतवे' इत्यमरः। सन्धिदूषणानि विदधति। केनचिद्व्याजेन दोषमापाद्य सन्धि दूषयन्ति। विघटयन्तीत्यर्थः। शक्तस्य हि विजिगीषोः सर्वथा कार्यसाधनं प्रधानमन्यत्समयरक्षणादिकमशक्तस्येति भावः। अर्थान्तरन्यासोऽलङ्कारः। पुष्पिताग्रा वृत्तम् ॥३५॥

**अन्वयः**–निकृतिपरेषु, परेषु भूरिधात्रः ते समयपरिक्षणं न, क्षमम्। हि विजयार्थिनः, क्षितीशाः, अरिषुः, सोपधि, सन्धिदूषणानि, विदधति ॥४५॥

**सुधा**–निकृतिपरेषु = निराकरणतत्परेषु, अपकारकेष्वित्यर्थः। परेषु = शत्रुषु, भूरिधाम्नः = बहुतेजसः, ते = तव, युधिष्ठिरस्येत्यर्थः। समयपरिरक्षणं = कालप्रतीक्षाकरणम्, त्रयोदशवर्षाणि धने वत्स्यामीत्येवं रूपमित्र्थः। न = नहि, क्षमम् = युक्तम्, नोचितमित्यर्थः। हि = यतः, यस्मात्, विजयार्थिनः= शत्रुपराजयकार्मुकाः, क्षितीशाः मेदिनीपतयः, राजान इत्यर्थः। अरिषु = शत्रुषु, सोपधि = सव्याजम्, छलेन सहितमिति यावत्; सन्धिदूषणानि = मैत्रीच्छिद्राणि, विदधति = कुर्वन्ति, केनापि कपटेन सन्धि भेदयन्तीति भावः॥४५॥

**समासः**–निकृतिः परं येषां ते निकुतिपराः, तेषुः निकुतिपरेषु। भूरि धाम यस्य तख्य भूरिधाम्नः। समयस्य परिरक्षणं समयपरिरक्षणम्। विजयस्यार्थः प्रयोजनं अस्त्येषां ते विजयार्थिनः क्षितेःईशाः क्षितीशाः। सन्धेर्दूषणानि सन्धिधूषणानि, तानि ॥४५॥

**व्याकरणम्**–विदधति=वि+धा+लट्+झि ॥४५॥

**वाच्यान्तरम**–निकृतिपरेषु परेषु भूरिधाम्नः ते तव समयपरिरक्षणेन नहि क्षमेण भूयते। हि विजयार्थिभिः क्षितीशैररिषु सोपधि सन्धिदूषणानि विधीयन्ते ॥४५॥

**कोषः**–'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे।' 'कुसृतिर्निकृतिः शाठ्यम्' इति चामरः। 'युक्तेक्षमं शक्ते हिते त्रिषु' इत्यमरः। 'समयाः शपथाचारकाल सिद्धान्तसंविदः' इत्यमरः। 'पुरूहु पुरु भूयिष्ठं स्फारं भूयश्च भूरि च' इत्यमरः॥४५॥

**सारार्थः**–द्यूतपराजितस्य भवतः त्रयोदशवर्षात्मके काले वने निवासस्तदैवोचितो, यदि स दुर्योधनो न्यायवेत्ता, परन्तु स च महान् कपटपटुः, सततं भवतां छिद्रमन्विष्यन्

हन्तुं यतते। एवम्भूते शत्रौ कालप्रतीक्षाकरणं महदनुचितम्, यदि कोऽपि दुर्बलो वैरिकृतापराधप्रतीकारेक्षमः शत्रुतः शङ्कितो भवेत् तस्योचितमेव, भवन्तस्तु तत्प्रतीकारकरणसमर्थाः सन्ति। ईदृशदशायां कपटिषु वैरिषु कपटमेव विधाय सहसा सन्धिर्भेद्यः। 'शठे शाठ्यं समाचरेत्' ॥४५॥

भाषाऽर्थः—सदा कपट (दगा) करने वाले दुश्मनों से समय की प्रतीक्षा करते रहना ठीक नहीं; क्योंकि जय की इच्छा रखने वाले राजा लोग छल से दुश्मनों की सन्धि तोड़कर सत्यानाश करते हैं। आप तो निश्चिन्त हैं, यह ठीक नहीं है ॥४५॥

उक्तमर्थमाशीर्वादपूर्वकमुपसंहरति—

**विधिसमयनियोगाद्दीप्तिसंहारजिह्मं शिथिलवसुमगाधे मग्नमापत्पयोधौ।**
**रिपुतिमिरमुदस्योदीयमानंदिनादौ दिनकृत मिव लक्ष्मीस्त्वां समभ्येतु भूयः॥**

इति भारविकृतौ महाकाव्ये किरातार्जुनीये प्रथम सर्गः॥१॥

**--**

विधीति। विधिर्दैवम्। 'विधिर्विधाने दैवेच' इत्यमरः। समयः कालस्तयोर्नियोगान्नियमनाद्धेतोः। तयोर्दुरतिक्रमत्वादिति भावः। अगाधे दुस्तरे। आपत्पयोधिरिवेत्युपमितसमासः। दिनकृतमिवेति। वक्ष्यमाणानुसारात्तस्मिन्नापत्पयोधौ मग्नम्। सूर्योऽपि सायं सागरे मज्जति परेद्युरुन्मज्जतीत्यागमः। दीप्तिः प्रताप आतपश्च तस्याः संहारेण जिह्ममप्रसन्नम्। शिथिलवसुं शिथिलधनमन्यत्र शिथिलरश्मिम्। 'वसुर्देवेऽग्नौ रश्मौ न वसु तोये धने मणौ' इति वजयन्ती। 'शिथिलबलम्' इति पाठे तूभयत्रापि शिथिलशक्तिकमित्यर्थः। रिपुस्तिमिरमिवेति रिपुतिमिरमुदस्य निरस्योदीयमानमुद्यन्तम्। 'इङ् गतौ' इति धाता दैंवादिकात्कर्तरिशानच्। त्वां दिनादौ दिनकृतमिव लक्ष्मीर्भूयः समभ्येतु भजतु। 'आशिषि लिङ्लोटौ' इति लाट्। चमत्कारकारितया मङ्गलाचरणरूपतया च सर्गान्त्यश्लोकेषु लक्ष्मीशब्दप्रयोगः। यथाह—

भगवान्भाष्यकारः—मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाण्यायुष्मत्पुरुषकाणि च भवन्त्यध्येतारश्च प्रवक्तारो भवन्ति' इति पूर्णोपमेयम्। मालिनी वृत्तम्। सर्गान्तत्वादवृत्तभेदः। यथाह दण्डी 'सर्गैरनतिविस्तीर्णैः श्रव्यमुक्तैः सुसन्धिभिः। सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जनम्॥' इति।

अथ कविः काव्यवर्णनीयाख्यानपूर्वकं सर्गपरिसमाप्तिं कथयति-इतीत्यादि।

इतिशब्दः परिसमाप्तौ। भारविकृताविति कविनामाकथनम्। महाकाव्य इति महच्छब्देन लक्षणसम्पत्तिः सूचिता। किरातार्जुनीयः इति काव्यवर्णनीययोः कथनम्।

प्रथमः सर्गः समाप्त इति शेषः। एवमुत्तरत्रापि द्रष्टयम्। किरातार्जुनावधिकृत्य कृतोग्रन्थः किरातार्जुनीयम्। 'शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यच्छः' इति द्वन्द्वाच्छ-प्रत्ययः। राधवपाण्डवीयमितिवत्। तथा ह्यर्जुन एवात्र नायकः। किरातास्तु तदुत्कर्षाय प्रतिभटतया वर्णितः। यहाह दण्डी 'वंशवीर्यप्रतापादि वर्णयित्वा रिपोरपि तज्जयान्नय-कोत्कर्षकथनं च धिनोति नः' इति। अथात्र सङ् ग्रहः। 'नेतामध्यमपाण्डवो भगवतो नारायणस्यांशजस्तस्योत्कर्षकृते त्ववर्ण्यततरां दिव्यः किरातः पुनः। श्रृङ्गारादिरसोऽङ्गमत्र विजयी वीरः प्रधानो रसः शैलाद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभः। फलम्' इति ॥४६॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीय काव्य-व्याख्यायां घण्टापथसमाख्यायां प्रथमः सर्गः समाप्तः॥१॥

**अन्वयः**–लक्ष्मी (कर्त्री) विधिसमयनियोगात् दीप्तिसंहारजिह्मम्, शिथिलचसुम्, अगाधे, आपत्पयोधौ, मग्नम्, दिनादौ रिपुतिमिरम्, उदस्य उदीयमानं, दिनकृतम्, इव, त्वाम्, भूयः समभ्येतु ॥४६॥

**सुधा**–लक्ष्मीः = राजलक्ष्मीः, पक्षान्तरे, तेजः श्री विधिसमयनियोगात् = दैवकालानुरोधात् दुर्भाग्यदुःसमयप्रभावादित्यर्थः। वा दैवसमयानतिक्रमणात्, दीप्तिसंहारजिह्मम्=कान्तिहानिखिन्नम् पक्षान्तरे तेजोविनाशशिथिलम्। शिथिलव-सुम्=मन्दतेजसम्। पक्षान्तरे क्षीणधनम्, अगाधे=अतलस्पर्शे, दुस्तरे इत्यर्थः। पक्षान्तरे अपरिमेये, आपत्पयोधौ = विपत्समुद्रे, पक्षान्तरे विपद्रूपकेऽर्णवे, मग्नम् = निमज्जमानम् दिनादौ = प्रभाते, पक्षान्तरे शुभसमयसमागमे, रिपुतिमिरम् = वैरिरूपान्धकारम्, उदस्य = निरस्य, संहृत्येत्यर्थः। उदीयमानम् = उद्यन्तम्, पक्षान्तरे उन्नत्यभिमुख- गमनशीलम् दिनकृतम् = सूर्यम्, इव त्वाम् = भवन्तम् युधिष्ठिरम्, भूयः = पुनः, समभ्येतु = भजतु, गच्छतु इति भावः॥४६॥

**समासः**–विधिश्च समयश्च विधिसमयौ, तयोः विधिसमयोर्नियोगः, विधिसमयनि-योगस्तस्माद्विधिसमयनियोगात्। वा विधेः समयः (सिद्धान्तः) विधिसमयस्तस्य नियोगस्तस्मात्। दीप्तेः संहारो दीप्तिसंहारस्तेन जिह्म इति दीप्तिसंहारजिह्मस्तं दीप्तिसंहारजिह्मम्। शिथिलं वसु यस्य सः शिथिलवसुस्तं शिथिलवसुम्। आपत्

पयोधिरिवेत्यापत्पयोधिः तस्मिन् आपत्पयोधौ । रिपुस्तिमिरमिव इति रिपुतिमिरम् । दिनस्यादिर्दिनादिस्तस्मिन् दिनादौ ॥४६॥

**व्याकरणम्**–मग्नम् = मसज+क्तः । उदस्य = उत+असु+क्त्वा+ल्यप् । उदीयमानम् = उदीयतेः शानच् । समभ्येतु = सम्+अभि+इण्+लोट् ॥४६॥

**वाच्यान्तरम्**–लक्ष्म्या विधिसमयनियोगात् दीप्तिसंहारजिह्मः शिथिलवसुः, अगाधे आपत्पयोधौ मग्नः, रिपुतिमिरमुदस्य दिनादावुदीयमानस्त्वं दिनकृत् इव, समभीयस्व ॥४६॥

**कोषः**–'विधिर्दैवे विधाने च' इत्यमरः। 'वगुर्देवेऽग्नौ रश्मौ च वसु तोये घने मणौ' इति वैजयन्ती । 'अगाधमतलस्पर्शं' इत्यमरः। स्युः प्रभा रुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः।' इत्यमरः। 'अन्धकारोऽस्त्रियां धवान्तं तमिस्रं तिमिरः तमः' इत्यमरः ॥४६॥

**सारार्थः**–यथा सन्धासमये समागते सूर्यो दैवसमयप्रभावेण किरणसंहरणकारणेन खिन्नः समुद्रे निमग्नः, तेजोविहीनो भवति, यथा च प्रभाते उपस्थितेऽन्धकारं संहृत्योदयं प्राप्नोति तथैव द्यूतक्रीडावसाने दुर्दैवकालानुसारेण संहृतसर्वस्वः, कान्तिहीनः अपारविपत्समुद्रेऽधुनाऽवधि निमग्नोऽसि । अतः परं सुदिने प्राप्ते झटिति दुर्योधन-प्रभृतिवैरिगणान् संहृत्य स्वकीयपूर्वजाश्रितां राजलक्ष्मीं लभस्व ॥

**भाषाऽर्थः**–जैसे विधि और समय के प्रभाव से कान्ति को नाश होने के कारण खिन्न और किरणहीन, शाम को विपत्तिरूप महासागर में डूबकर, सुबह फिर अन्धकाररूपी दुश्मन को चौपट कर उदय होते हुए सूर्य को शोभा अपनाती है, वैसे ही पहले जुआ में दैव और काल की प्रेरणा में अपने विचार और तेज के अभाव से दुर्दशा को प्राप्त आपद्रूप महार्णव में डूबे हुये फिर भी अपने दुश्मनों को मारकर अभ्युदय की इच्छा रखने वाले आपको राजलक्ष्मी अपनावे ॥४६॥

**सुधा**–इतिशब्दः सर्गपरिसमाप्तिसूचकः भारविकृतावनेन ग्रन्थकारेण स्वनामेल्लेखनं कृतं[१] महाकाव्यमितिशब्देन इदं प्रारभ्यमानं महद्भविष्यति । किरातार्जुनीय इति-काव्यवर्णनीययोः पात्रयोः प्रधानतया नामपरिचयः। शेषं सुगमम् । किरातार्जुनावधि-

---

(१) सद्वंश क्षत्रियो वापि धीरोदात्तगुणान्वितः।
शृङ्गारवीरशान्तानामेकोऽङ्गीरस इष्यते क्वचिन्निन्दा खलादीनां सतां च गुणवर्णनम् ॥
नातिस्वल्पा नातिदीर्घाःसर्गा अष्टाधिका इह । नानावृत्तमयःक्वापि सर्गःकश्चन दृश्यते ॥

कृत्य कृतो ग्रन्थः किरातार्जुनीयम् । प्रतिसर्गान्तेसर्गान्तःपातिपद्येभ्यो भिन्नपद्यस्य निवेशः काव्यलक्षणसूचकः यथोक्तम् 'एकवृत्तमयैः पद्यैररवसातेऽन्यवृत्तकैः। पद्यमेतन्मालिनीनामकम, यथोक्तं छन्दोमञ्जर्यान् 'ननमयययुतेयं मालिनीभोगिलोकैः।' अनेन लक्षणमुदाहरणञ्चैतदुभयमपि तत्र निगदितम् । तत्र तावद् 'गण' शब्देन वर्णत्रयं गृह्यते, यथा-विमलं कमलं बराकी सिंहनी, जरठो वृषभ इत्यादि ॥ अत्र वर्णत्रये यदि सर्वं गुरवस्तदा 'मगणः' प्रोच्यते, सा यथा, राजानः, देवेशाः गौरीशाः, मान्धाता । तत्र गुरूबाधकम् = ऽ, लघुबाधकम् = । मगणः = ऽऽऽ, यथा कालिन्दी, यत्रादिमो लघुर्मध्यान्त्यौ गुरू, स यगणः = । ऽऽ, इत्यादि, एषां सोदाहरणनामानि प्रदर्श्यन्ते—

| गणनाम | लक्षणं | उदाहरणम् |
|---|---|---|
| मगणः | ऽऽऽ | मान्धाता |
| यगणः | ।ऽऽ | भवानी, हिमानी, सुशीला, सलीला, |
| रगणः | ऽऽऽ | शैलजा, कालिका, तारिणी, जानकी, |
| सगणः | ।।ऽऽ | गिरिजा, दयिता, विधिना, मुनिना |
| तगणः | ऽऽ। | देवेश, गौरिश, |
| जगणः | ।ऽ। | कदापि, गणेश महेश, उमेश, |
| मगणः | ऽ।। | पादप, नारद, यादव, भारत, |
| नगणः | ।।। | नयन, कमल, अमल, परम, |

तत्र पूर्वोक्तलक्षणेन यत्र पद्यपादे नयनमयया गणः, तयाऽष्टभिस्ततः सप्तभिर्वर्णविश्रामस्तन्मालिनीसंज्ञम् ।

यथाऽत्र तल्लक्षणे एव गणान् विरच्य प्रदर्श्यते—

| न | न | म | य | य |
|---|---|---|---|---|
| । । । | । । । | ऽ ऽ ऽ | । ऽ ऽ | । ऽ ऽ |

'न न म य य युतेयं मालिनी भोगिलाकैः' स्वरूपदर्शनेन गणविन्यासः स्फुटः। तथा च 'ननमयययुतेयम्' एतावन्तो वर्णा एकहेलयोच्चार्यन्ते, तदा तदन्ते विश्राम उचित एव । ततः पादान्तं यावदेकहेलयाऽष्टभिः पूर्वं पश्चात्सप्तभिर्विश्राम इति स्फुटमस्ति । एवं सर्वेषा छन्दसां लक्षणं ज्ञातव्यमिति ॥४६॥

*श्रीगङ्गाधरशर्मणा विरचितया सुधाभिधया व्याख्यया विभूषिते*

*किरातार्जुनीयकाव्ये प्रथमः सर्गः समाप्तः।*

# अथ द्वितीयः सर्गः

विहितां प्रियया मनःप्रियामथ निश्चित्य गिरं गरीयसीम् ।
उपपत्तिमदूर्जिताश्रयं नृपमूचे वचनं वृकोदरः ॥ १ ॥

विहितामिति—अथ वृकोदरो भीमः प्रियया द्रौपद्या । प्रियाग्रहणमस्या हितोपदेशतात्पर्यसूचनार्थम् । विहिताम् अभिहितामित्यर्थः । विपूर्वस्य दधातेः क्रियासामान्यवाचिनो योग्यविशेषपर्यवसानात् । मनः प्रियामभिमतार्थयोगान्मनोहराम् । विशेषणद्वयेनापि गिरो ग्राह्यत्वमुक्तम् । गिरं गरीयसीं सारवत्तरां निश्चित्य नृपं धर्मराजमुपपत्तिमद्युक्तिमदूर्जिताश्रयमुदारार्थं वचनमूचे उक्तवान् । कर्तरि लिट् । ब्रुवो वचिरादेशः 'ब्रुविशासु—' इत्यादिना द्विकर्मकत्वम् । 'अकथितं च' इति नृपस्य कर्मत्वम् ॥ १ ॥

अन्वयः—अथ, वृकोदरः, प्रियया, विहिताम्, मनःप्रियाम्, गरीयसीम्, निश्चित्य, नृपम्, उपपत्तिमत्, ऊर्जिताश्रयम्, वचनम्, ऊचे ॥ १ ॥

सुधा—अथ = द्रौपदीवाक्यपूर्त्यनन्तरम्, वृकोदरः = भीमः, द्वितीयपाण्डव इति यावत् । प्रियया = दयितया, द्रौपद्येति भावः । अत्र प्रियेति पदं मनोनुकूलकथनकारित्वं तस्याः सूचयति । अर्थात् द्रौपदीवाक्यं श्रुत्वा भीमोऽतिसन्तुष्ट इति भावः । विहिताम् = उक्ताम्, प्रतिपादिताम् इति यावत् । मनःप्रियाम् = मनोहरम्, गिरम् = वाणीम्, गरीयसीम् = अर्थबहुलाम्, निश्चित्य = स्थिरीकृत्य, नृपम् = युधिष्ठिरम् = उपपत्तिमत् = युक्तियुक्तम्, ऊर्जिताश्रयम् = उदारार्थम्, वीररसान्वितमित्यर्थः । वचनम् = वचः, ऊचे = उक्तवान् । अस्मिन् सर्गे वियोगिनीनाम वृत्तम् । तल्लक्षणञ्च 'विषमे यदि सौ जगः समे समराः स्यात्तु तदा वियोगिनी' इति । कविवरैराधिप्रकटनमेतद्वृत्तेनैव क्रियते—यथा कुमारे रतिविलापः, रघुवंशे-अजविलाप आदि ॥

समासः—मनसः प्रिया मनःप्रिया, तां मनःप्रियाम् ॥ १ ॥

व्याकरणम्—विहिताम् = वि + धा + क्तः । निश्चित्य = निस् + चिञ् + क्त्वा + ल्यप् । ऊचे = लिट् ॥ १ ॥

वाच्यान्तरम्—अथ, वृकोदरेण, प्रियया, विहिताम्, मनःप्रियाम्, गिरम्, गरीयसीम्, निश्चित्य, उपपत्तिमत्, ऊर्जिताश्रयम्, वचनम्, नृपः ऊचे ॥ १ ॥

कोषः—'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती' इत्यमरः । 'व्याहार उक्तिर्लपितं भाषितं वचनं वचः' इत्यमरः ॥ १ ॥

सारार्थः—अथ भीमसेनः स्वसम्मत्यनुकूलं द्रौपदीकथनं निशम्य आतोषितः सन् युक्तसारं वचनं युधिष्ठिरं प्रत्यूचे ॥ १ ॥

भाषाऽर्थः—द्रौपदी की बात अपनी रुचि के अनुकूल सुनकर भीमसेन बड़े भाई ( युधिष्ठिर ) से उचित और वीररस युक्त बातें कहने लगे ।

किं तद्वचनं तदाह—

> यदवोचत वीक्ष्य मानिनी परितः स्नेहमयेन चक्षुषा।
> अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम् ॥ २ ॥

यदिति। मानिनी क्षत्रियकुलाभिमानवती द्रौपदी स्नेहमयेन स्नेहप्रचुरेण। 'तत्प्रकृतवचने मयट्' चक्षुषा ज्ञानचक्षुषा। एतेनाप्तत्वमुक्तम्। परितो वीक्ष्य समन्ततो विविच्य यद्वचनमवोचत ब्रुवो वक्तेर्वा लुङ्। 'वच उम्' इत्युमागमः। वागधिपस्य बृहस्पतेरपि दुर्वचं वक्तुमशक्यम्। शेषे षष्ठीयम्, न कृद्योगलक्षणा। अतो 'न लोक—' इत्यादिना षष्ठीप्रतिषेधो नास्ति। तद्वचनं विस्मयं विदधीत। सर्वस्यापीति शेषः अथवा वागधिपस्यापि विस्मयं विदधीतेति सम्बन्धः। दुर्वचम्। केनापीति शेषः। यतः स्त्रीणामपि शास्त्रमनुरुणद्धि हितं चानुबध्नाति। अतो विस्मयकरं ग्राह्यं चैतद्वचनमिति तात्पर्यार्थः ॥ २ ॥

अन्वयः—मानिनी, स्नेहमयेन, चक्षुषा, परितः वीक्ष्य, यत्, अवोचत, वागधिपस्य, अपि दुर्वचं, तत्, वचनं, विस्मयं विदधीतेति ॥ २ ॥

सुधा—मानिनी = मनस्विनी, निजकुलाभिमानवतीत्यर्थः द्रौपदीति शेषः। स्नेहमयेन = प्रेमपूर्णेन; चक्षुषा = ज्ञाननयनेन, परितः = चतुर्दिक्षु, वीक्ष्य = आलोच्य; यत् = यादृक्, वचनमिति शेषः। अवोचत = उक्तवती, तत् = पूर्वसर्गगदितम्, वागधिपस्य = वागीशस्य, बृहस्पतेरित्यर्थः। अपि, दुर्वचनम् = दुष्प्रयोज्यम्, वक्तुमशक्यमित्यर्थः। अन्यस्य कथैव का, एवम्भूतं, वचनम् = वाक्यं, विस्मयम् = आश्चर्यम्, विदधीत = कुर्यात्। वा तद्वचनं वागधिपस्यापि विस्मयं विदधीत इति योज्यम् ॥ २ ॥

समासः—अधिकृत्य पातीति अधिपः। वाचामधिपो वागधिपस्तस्य वागधिपस्य।

व्याकरणम्—वीक्ष्य = वि + ईक्ष् + क्त्वा + ल्यप्। अवोचत = अ + वच् = लुङ् विदधीत = वि + धा + विधिलिङ् ॥ २ ॥

वाच्यान्तरम्—मानिन्या ( द्रौपद्या ) स्नेहमयेन चक्षुषा वीक्ष्य यदवोचि, तेन दुर्वचेन वचनेन वागधिपस्यापि विस्मयो विधीयेत ॥ २ ॥

कोषः—'समन्ततस्तु परितः सर्वतो विष्वगित्यपि' इत्यमरः। 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी' इत्यमरः। 'विस्मयोऽद्भुतमाश्चर्यं चित्रम्' इत्यमरः ॥ २ ॥

सारार्थः—कुलाभिमानवती द्रौपदी पूर्वापरं सर्वं वृत्तान्तं स्नेहदृष्ट्या समालोच्य बृहस्पतेरपि महदाश्चर्यकरं वचनं युधिष्ठिरं प्रति कथितवतीति ॥ २ ॥

भाषाऽर्थः—अपने वंश की लाज रखने वाली द्रौपदी ने प्रेमपूर्वक सब बातों का विचार करके सबको आश्चर्य में डाल देनेवाली जो बात कही है वह बृहस्पति को भी विस्मित कर देगी या वह बात बृहस्पति भी प्रयोग न कर सकेंगे ॥ २ ॥

विस्मयकरत्वे हेतुमाह—

**विषमोऽपि विगाह्यते नयः कृततीर्थः पयसामिवाशयः ।**
**स तु तत्र विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः ॥ ३ ॥**

विषय इति । विषमोऽपि दुर्बोधोऽपि । अन्यत्र दुष्प्रवेशोऽपि । नयो नीतिशास्त्रम् । पयसामाशयो ह्रद इव । कृततीर्थः कृताभ्यासाद्युपायः सन् । 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु' इति विश्वः । अन्यत्र कृतजलावतारः सन् । 'तीर्थं योनौ जलावतारे च' इति हलायुधः । विगाह्यते गृह्यते प्रविश्यते च । किन्तु तत्र नये जलाशये च स तादृशः पुरुषो विशेषदुर्लभोऽत्यन्तदुर्लभो यः कृत्यं सन्धिविग्रहादिकार्यं स्नानादिकं च तस्य वर्त्म सत्साधु देशकालाद्यविरुद्धं यथा तथा । अन्यत्र गर्तग्राहपाषाणादिरहितम् । तथा यथोपन्यस्यत्युदाहरति । 'उपन्यासस्तु वाङ्मुखम्' । 'उपोद्घात उदाहारः' । यथा केचित्कृततीर्थे पयसि गम्भीरेऽपि प्रवेष्टारः सन्ति तीर्थंकरस्तु विरलः । तद्वन्नीतावपि गूढमपि तत्त्वं वक्तरि सति बोद्धारः सन्ति । वक्ता तु न सुलभः । अत इयमपठितापि साधु वक्तीति युज्यते विस्मय इत्यर्थः ॥ ३ ॥

अन्वयः—विषमः, अपि, नयः, पयसाम्, आशयः इव कृततीर्थः (सन्), विगाह्यते । (किन्तु) तत्र, तु, यः सत् कृत्यवर्त्म, उपन्यस्यति, सः विशेषदुर्लभः अस्ति ॥ ३ ॥

सुधा–विषमः = दुर्ज्ञेयः, जलाशयपक्षे = दुष्प्रवेशः, अपि, नयः = नीतिशास्त्रम्, पयसाम् = जलानाम्, आशयः = ह्रदः, जलाशय इत्यर्थः । इव, कृततीर्थः = कृताभ्यासादिप्रपञ्चः सन् वा पक्षान्तरे—कृतजलावतारः सन्, विगाह्यते = गृह्यते, अन्यत्र, प्रविश्यते । तत्र = नये, वा जलाशये, यः = कश्चित् जनः, कृत्यवर्त्म = कार्यमार्गम्, राजनीतेः कृत्यं सन्धिविग्रहयानादि, पक्षे जलाशयस्य 'कृत्यम् = सुखावगाहनाय सोपानादिविधानम्, उपन्यस्यति = उपदिशति, नीतिपक्षे, विधास्यति जलाशयपक्षे, सः = तादृशः, जनः = लोकः, विशेषदुर्लभः = अत्यन्तदुर्लभः, भवतीति शेषः । अर्थात् यथा सोपानादिप्रवेशसुकरे जलाशये प्रवेष्टारोऽनेके भवन्ति, परन्तु गाधजले सर्वप्रथमं सोपानादिविधाता जनोऽतिदुर्लभस्तथैव नीतिशास्त्रे प्रवक्तरि तज्ज्ञातारो भवितुमर्हन्ति बहवः किन्तु पूर्वं नीतिनिर्माता जनः सहस्रेष्वपि [illegible] कश्चित् । अतो द्रौपद्या यदुक्तं तदभिनयं परिणामसुखं साधु [illegible] [illegible] नहि खोधिया हेयमित्यर्थः ॥ ३ ॥

समासः—कृतं विहितम् तीर्थम् यस्मिन् स कृततीर्थः । विशेषेण दुर्लभः इति विशेषदुर्लभः । कृत्यवर्त्म ॥ ३ ॥

व्याकरणम्—उपन्यस्यति = उप + नि + असु + लट् । विगाह्यते = वि + गाह् + लट् ॥

वाच्यान्तरम्—लोका विषमपि नय कृततीर्थं पयसामाशयमिव विगाहन्ते, तत्र येन सत्कृत्यवर्त्म उपन्यस्यते तेन विशेषदुर्लभेन भूयते ॥ ३ ॥

कोषः—'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु' इति विश्वः । 'तीर्थं तनौ जलावतारे च' इति हलायुधः । 'अभिप्रायश्छन्द आशयः' इत्यमरः । 'अयनं वर्त्म, मार्गाध्वपन्थानः पदवी सृतिः' इत्यमरः ॥ ३ ॥

सारार्थः—यथा प्राकृतो जलाशयः क नीचं क्वोच्चं, क पिच्छिलमस्तीति विचारेण दुरवगाह एव नहि, प्रत्युत दुष्प्रवेशोऽपि भवति, तत्र यदि कश्चित्कलाभिज्ञो जनः सुखप्रवेशाय सोपानादिक्रमनिम्नावतरणं निर्माति, तदा स एव सहस्रेष्वप्येकोऽतिदुर्लभः परन्तु सम्पन्ने सोपानाद्युपाये काणकुब्जान्धा अपि शनैः प्रविशन्त्येव; न दुर्लभा भवन्ति । एवं दुर्दैवदुर्दशाधीनस्य न किमपि संसारक्षेत्रे स्फुरति, इति केनापि उपदेशकेन कथिते नीतिमार्गे पश्चाद्विजोऽस्यै करोत्यपि कमप्युपायं तदा न तस्य तन्माहात्म्यं, किन्तु येनोपदिष्टं तन्नीतिविधानं स एवाति दुर्लभः । अर्थात्केनाप्यपाठिताऽपि द्रौपदी पठितेवापूर्वां नीतिरीतिमुपदिशति, एतन्महदाश्चर्यकरम् ॥

साराऽर्थः—जैसे गहरा और कीचड़ वगैरह से घुसने के लायक में जो जलाशय नहीं है, उसमें अगर कोई सीढ़ी वगैरह उतरने के लिये बना दे, तो उसमें स्नानार्थ घुसने वाले को कुछ भी तकलीफ नहीं होती । ऐसी ही जो नीति समझने के लायक भी नहीं है, अगर वह किसी अध्यापक से पढ़कर याद कर ली गई हो तो समझ सकते हैं लेकिन जलाशय में जैसे सीढ़ी बनानेवाला मिलना मुश्किल है, ऐसे ही कठिन राजनीति समझाने वाले भी कम हैं । लेकिन बिना पढ़ाई गई भी द्रौपदी जो कह गई है, वह बड़ा ही आश्चर्यजनक है ।

अथ प्राह्यत्वे हेतुमाह—

परिणामसुखे गरीयसि व्यथकेऽस्मिन्वचसि क्षतौजसाम् ।
अतिवीर्यवतीव भेषजे बहुरल्पीयसि दृश्यते गुणः ॥ ४ ॥

परिणामेति—परिणामः फलकालः परिपाकावस्था च तत्र सुखे हिते । 'शस्तं चाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च' इति सुखशब्दस्य विशेष्यलिङ्गम् । गरीयसि भूयिष्ठे श्रेष्ठे च । क्षतौजसामुभयत्रापि क्षीणशक्तीनां व्यथके दुःखोपोद्घकत्वाद्भयङ्करे । अन्यत्रादौ संशयादिदुःखजनके । अल्पीयस्यल्पाक्षरेऽल्पमात्रे च । उक्तं च—'स्वल्पा च मात्रा बहुलो गुणश्च' इति । अस्मिन्वचसि द्रौपदीवाक्ये । अतिवीर्यवत्यत्यन्तसामर्थ्यवति भेषज औषध इव । 'भेषजौषधभैषज्यानि' इत्यमरः । बहुरनेको गुणो मानत्राणराज्यलाभादिशरीरव्यथलोपादिश्च दृश्यते । अतो ग्राह्यमस्या वचनमिति भावः ॥ ४ ॥

अन्वयः—परिणामसुखे, गरीयसि, क्षतौजसां, व्यथके, अस्मिन्, वचसि अतिवीर्यवति, अल्पीयसि, भेषजे, इव, बहुः, गुणः, दृश्यते ॥ ४ ॥

इति सम्प्रदानत्वाच्चतुर्थी। रोचतां स्वदताम् विध्यर्थे लोट्। हितवचने
पीच्छां कुर्यादौषधवदिति भावः। तथापि स्त्रैणे वचसि का श्रद्धा तत्राह-नन्विति
गुणानां गृह्या गुणगृह्याः। गुणपक्षपातिन इत्यर्थः। 'पादास्वैरिबाह्यापक्ष्येषु च' इति
ग्रहेः क्यप्। विपश्चितो विद्वांसः। 'विद्वान्विपश्चिद्दोषज्ञ' इत्यमरः। वचने वि
वक्तृविशेषे स्त्रीपुंसादिलक्षणे निःस्पृहा ननु निरास्थाः खलु। 'बालादपि सुभाषि
ग्राह्यम्' इति न्यायादिति भावः ॥ ५ ॥

अन्वयः—रुचिरार्था, इयं, भारती, इष्टगुणाय, भवते, अपि रोचताम्। गु
गृह्या, विपश्चितः, वचने, वक्तृविशेषनिःस्पृहाः, ननु ॥ ५ ॥

सुधा—रुचिरार्था=शोभनाभिप्राया, हिताशयेति भावः। इयम्=द्रौपदु
भारती = वाणी, इष्टगुणाय = गुणैकपक्षपातिने, भवते = युधिष्ठिराय, अपि
रोचताम् = स्वदताम्, अस्मभ्यञ्चतुर्भ्यः सा रोचते एव, भवतेऽपि रुचिक
भवत्विति भावः। कथं स्त्रीवाक्यं स्वीकार्यमित्याह—गुणगृह्याः = गुणग्रहपरायणाः,
विपश्चितः = विद्वांसः, वचने = वाक्ये, वक्तृविशेषनिःस्पृहाः = वाग्मिसुखे निरीहाः,
ननु = खलु, भवन्ति। वृद्धा विद्वांस एव मामुपदिशन्तु, नान्ये तत्रापि स्त्रीबाल
र्वचनं नहि ग्राह्यमिति गुणैकपक्षपातिनां पक्षो न ह्यस्ति, किन्तु 'बालादपि सुभाषि
ताम्' इत्येव पक्षः। अतो भवद्भिरवश्यमेव तद्वाक्यमादरणीयमिति भावः ॥ ५ ॥

समासः—इष्टाः गुणाः यस्य स इष्टगुणस्तस्मै इष्टगुणाय। रुचिरः अर्थः यस्या
सा रुचिरार्था। वक्तृणां विशेषः वक्तृविशेषस्तस्मिन्, वक्तृविशेषे निःस्पृहा ये
वक्तृविशेषनिःस्पृहाः। गुणानां गृह्या गुणगृह्याः ॥ ५ ॥

व्याकरणम्—रोचताम् = रुच् + लोट् ॥ ५ ॥

वाच्यान्तरम्—रुचिरार्थया अनया भारत्या इष्टगुणाय भवतेऽपि रुच्यताम्।
गुणगृह्यैर्विपश्चिद्भिर्वचने वक्तृविशेषनिःस्पृहैर्भूयते ॥ ५ ॥

कोषः—'निकामेष्टं यथेप्सितम्' इति। 'सुन्दरं रुचिरं चारु सुषमं साधु
शोभनम्' इत्यमरः। 'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती' इत्यमरः।
'विद्वान् विपश्चिद्दोषज्ञः' इत्यमरः ॥ ५ ॥

सारार्थः—अधुना द्रुपदपुत्र्या यदुक्तं तदस्माकं चतुर्णां भ्रातॄणां मते अती
समयोचितं रमणीयं ग्रहणीयञ्च। अथ भवानपि तत् स्वीकरोतु। अङ्गीकाराकरणे
न कोऽपि हेतुः, केवलं स्त्रीत्वाद् दूरदर्शितया चेन्नेत्युच्यते तदपि न, यदा गुणै
पक्षपातिनां जनानां गुणविशेषे एवाग्रह आदरः। नहि वक्तृजने. अर्थात् स्त्री वा
पुमान् वा बालकोऽपि उपदिशतु, यद्वाक्ये गुणो लभ्यते तदेव ग्राह्यम्, चेत्तत्स्त्रीबा
योरपि भवेत्तदा तदपि, वृद्धस्यैव वचस्येन्निःसारं तदा तदप्युपेक्षणीयमित्येवं लो
नीतिर्यथा 'युक्तियुक्तमुपादेयं वचनं बालकादपि अन्यत्तृणमिव त्याज्यमप्यु

पद्मयोनिना' । तथा च भवतोऽग्रेऽहमपि बाल एवास्मि अतो मयाऽपि यदुच्यते, तदङ्गीकर्त्तव्यमित्याशयः ॥ ५ ॥

भाषाऽर्थः—सुन्दर भाव से भरी वह बात, गुणों के पक्षपाती आपको अच्छी लगे। क्योंकि सिर्फ गुणों ही के ऊपर ध्यान देने वाले विद्वान् लोग बोलने वालों के अच्छे होने का आग्रह नहीं रखते। कोई भी बोले, पर बात अच्छी होनी चाहिये ॥ ५ ॥

सम्प्रति स्वयमुपालभते—

चतसृष्वपि ते विवेकिनी नृप विद्यासु निरूढिमागता ।
कथमेत्य मतिर्विपर्ययं करिणी पङ्कमिवावसीदति ॥ ६ ॥

चतसृष्विति । हे नृप, चतसृष्वपि विद्यास्वान्वीक्षिक्यादिषु । 'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती विद्याश्चतस्र एवैतु लोकसंस्थितिहेतवः' इति कामन्दकः । निरूढिमागता प्रसिद्धिं गता अत एव विवेकिनी सदसद्विवेकवती । यथाह मनु—'आन्वीक्षिक्यां तु विज्ञानं धर्माधर्मौ त्रयीस्थितौ । अर्थानर्थौ तु वार्तायां दण्डनीत्यां नयानयौ ॥' इति । मतिः कथं करिणी पङ्कमिव विपर्ययं वैपरीत्यमविवेकरूपमेत्यावसीदति नश्यति । युक्तमिति भावः ॥ ६ ॥

अन्वयः—हे नृप ! चतसृष्वपि, विद्यासु, निरूढिम्, आगता, विवेकिनी, ते, मतिः, विपर्ययम्, एत्य, करिणी, पङ्कम्, इव कथम् अवसीदति ॥ ६ ॥

सुधा—नृप ! = हे राजन् ! चतसृषु = आन्वीक्षिक्यादिषु, 'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती । विद्याश्चतस्र एवैताः स्युर्लोकसंस्थितिहेतवः' इति नीतिः । अपि, विद्यासु = उपर्युक्तासु । निरूढिम् = प्रसिद्धिम्, आगता = प्राप्ता, विवेकिनी = सदसद्विचारशीला, ते = तव, युधिष्ठिरस्य, मतिः = बुद्धिः, विपर्ययम् = वैपरीत्यम्, एत्य = प्राप्य करिणी = हस्तिनी, पङ्कम् = आर्द्रमृदम्, एत्य, इव, कथम् = किमिव, अवसीदति = नश्यति, यथा चतुरचरणवती स्थूलकायापि हस्तिनी दैवात्पङ्के संलग्ना भूत्वा विनश्यति, तथैव ते मतिरपि सत्यामपि चतुर्विद्यासु शत्रुकृतप्रपञ्चे निमग्नाऽस्ति, तत्कथमिति न ज्ञायते । यथा पङ्कसंलग्ना हस्तिनी हस्ती एवोद्धर्त्तुं शक्नोति, तथैव भवदीया मतिः मोहापन्ना, स्वात्मन एव मतिमत्त्वं कर्तुं शक्नुयात् इति भावः । वा हस्तिनीव स्थूला मतिस्तेऽस्ति चेति नाकृपोक्तिः । अत्र भीमकृतयुधिष्ठिराक्षेपवचनावलोकनात् भाति ॥ ६ ॥

व्याकरणम्—विवेकिनी = विवेक + इन् + ङीप् । निरूढिम् = नि + रुह् + क्तिन् । एत्य = इण् + क्त्वा । ल्यप् + तुक् ॥ ६ ॥

वाच्यान्तरम्—हे नृप ! चतसृषु अपि, विद्यासु निरूढिम्, आगतया, विवेकिन्या ते मत्या विपर्ययम्, एत्य, करिण्या [illegible], इव कथम्, [illegible] ॥ ६ ॥

कोषः—'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती । विद्याश्चैताश्चतस्रस्तु लोकसंस्थितिहेतव' इति कामन्दकी नीतिः 'करिणी हस्तिनी प्रोक्ता धेनुका च दशाऽथवा' इति । 'स्याद् व्यत्यासः विपर्यासो व्यत्ययश्च विपर्यये' इत्यमरः ॥ ६ ॥

सारार्थः—यथा चतुश्चरणेषु स्थिराऽपि स्वप्राणानिष्टशङ्किताऽपि हस्तिनी पङ्के निमग्ना सादति तथैव चतसृषु विद्यासु प्रवर्तिनी गता ते मतिररिविहितकष्टप्रपञ्चे निमग्नाऽस्ति । तत्कथमिति न बुद्ध्यते, केवलं दुर्दैवमेव कारणमिति ॥ ६ ॥

भावार्थः—हे महाराज ! चार विद्याओं में प्रसिद्ध और अच्छे बुरे को समझती हुई भी तुम्हारी बुद्धि क्यों उलटी होकर नष्ट होती जा रही है ? जैसे चार पाँव वाली हथिनी कीचड़ में पड़ कर दुःखी हो ॥ ६ ॥

किं नीरक्षमिदानीं नेत्थमुपालभ्येनेमहीत्यत्र—

विधुरं किमतः परं परैरवगीतां गमिते दशामिमाम् ।
अवसीदति यत्सुरैरपि त्वयि सम्भावितवृत्ति पौरुषम् ॥ ७ ॥

विधुरमिति । त्वयि परैः शत्रुभिरिमामीदृशीमवगीतां गर्हिताम् । 'अवगीतं तु निर्वादे मुहुर्दृष्टे च गर्हिते' इति विश्वः । दशां गमिते प्रापिते सति । सुरैरपि सम्भावितवृत्ति बहुकृतप्रसारम् । अथवा निश्चितसद्भावम् । पौरुषं पुरुषकारः । युवादित्वादणप्रत्ययः । अवसीदति नश्यतीति यत् । अतः परम् अतोऽन्यदधिकं किं विधुरं किं कष्टम्, न किञ्चिदित्यर्थः । 'विधुरं प्रत्यवाये स्यात्कष्टविश्लेषयोरपि' इति वैजयन्ती । अस्तीति शेषः । 'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति' इति भाष्यकारः । भवन्तीति लटः पूर्वाचार्याणां संज्ञा । यदा पुरुषाधिकारस्य दुर्दशा सा च शत्रुकृता । तदुपरि महत्कष्टं तव त्वदुपेक्षयेत्युपालभ्यत इत्यर्थः ॥ ७ ॥

अन्वयः—परैः, अवगीताम्, इमां, दशाम्, गमिते, त्वयि, सुरैः, अपि, सम्भावितवृत्तिः पौरुषम्; यत्, अवसीदति; अतः परं, किं विधुरम् ॥ ७ ॥

सुधा—परैः = शत्रुभिः, दुर्योधनादिभिरित्यर्थः । अवगीताम् = निन्दिताम्, इमाम् = ईदृशीम्, वर्तमानामित्यर्थः । दशाम् = अवस्थाम्, गमिते = प्राप्ते, त्वयि = भवति युधिष्ठिरे, सुरैः = अमरैः, देवैरित्यर्थः । अपि, सम्भावितवृत्ति = बहुकृतप्रसारम्, वर्णितकार्यम् इति वा, पौरुषम् = उद्योगः, यत् = यस्मात् कारणात्, अवसीदति = नश्यति, अतः = अस्मात्, परम् = अधिकम्, किम्, विधुरम् = कष्टम्, न किमपीत्यर्थः । यदि कश्चिदकिञ्चनः जनः पूर्वं वैरिदुर्दशां प्राप्तः भवेत्तदोचितमेव परन्तु भवतः पौरुषं देवैरपि प्रशंसनीयं, तादृशो भवान्तोऽनाथा इव अवसीदन्ति इति नानुभवयोग्यो विषयः ॥ ७ ॥

समासः—सम्भाविता वृत्तिर्यस्य, तत् सम्भावितवृत्तिः ॥ ७ ॥
व्याकरणम्—अवसीदति = अव + सद् + लट् ॥ ७ ॥

वाच्यान्तरम्—परैः, अवगीताम्, इमां दशां गमिते त्वयि, सुरैरपि सम्मानित-वृत्तिना पौरुषेण यत् अवसद्यते, अतः परं केन विधुरेण ( भूयते ) ॥ ७ ॥

कोषः—'अवगीतः ख्यातगर्हणः' इत्यमरः। 'अवगीतं तु निर्वादे मुहुर्दृष्टे च गर्हिते' इति विश्वः। 'दशाऽवस्थाऽनेकविधा' इत्यमरः। 'अमरा निर्जरा देवास्त्रिदशा विबुधाः सुरा' इत्यमरः। 'पुम्भावे तत्क्रियायां च पौरुषम्' इत्यमरः ॥ ७ ॥

सारार्थः—यस्य नाम शक्तिर्नास्ति, तादृशश्चेद्वैरिभिः पीड्यते तर्हि तद् दुःखमेव, यतस्तत्प्रतीकारकरणसामर्थ्यं चाशक्ते जने न भवति। परन्तु भवान् पराक्रमाधिक्यं जनचर्चावसरे देवैरपि गीयते, 'यत्पाण्डवैः सह योद्धुं वयमपि न शक्नुमः' एवम्भूतोऽपि यच्छत्रुभिः पीड्यते भवान्, तस्मादतोऽधिकं न हि दृश्यते भवतः कष्टम् ॥ ७ ॥

भाषार्थः—शत्रुओं द्वारा ऐसी गिरी हालत में पड़ा हुआ, देवताओं से भी प्रशंसित आपका जब पुरुषार्थ ही चौपट हो रहा है तो इससे बढ़कर और क्या कष्ट ( क्लेश ) होगा ? ॥ ७ ॥

अथोपेक्षाकालत्वादियमुपेक्षेत्याशङ्क्य नाऽयमुपेक्षाकाल इति वक्तुं तत्रैव तावच्छ्लोकद्वयेन विविनक्ति—

द्विषतामुदयः सुमेधसा गुरुरस्वन्ततरः सुमर्षणः।
न महानपि भूतिमिच्छता फलसम्पत्प्रवणः परिक्षयः ॥ ८ ॥

द्विषतामिति। भूतिमुदयमिच्छता। शोभना मेधा यस्य तेन सुमेधसा सुधिया। 'नित्यमसिच्प्रजामेधयोः' इत्यसिच्प्रत्ययः गुरुर्महानप्यस्वन्ततरोऽत्यन्तदुरन्तः। क्षयोन्मुख इत्यर्थः। द्विषतामुदयो वृद्धिः सुखेन मृष्यत इति सुमर्षणः सुसहः। उपेक्ष्य इत्यर्थः। स्वन्तश्चेद् दुर्मर्षण इति भावः। 'भाषायां शासि' इत्यादिना खलर्थे युच्प्रत्ययः। 'महानपि फलसम्पत्प्रवणः फलसम्पदुन्मुखः 'प्रनिरन्तः—' इत्यादिना णत्वम्। परिक्षयो न सुमर्षणः। नोपेक्ष्य इत्यर्थः। अन्यथा दुर्मर्ष इति भावः। न शत्रूदयः एव प्रतिकार्यो न च स्वक्षय एवोपेक्ष्यः; किन्तु स्वान्तत्वास्वन्तत्वाभ्यामुभावपि प्रतिकार्यावुपेक्ष्यौ च भवत इत्यर्थः ॥ ८ ॥

अन्वयः—भूतिम्, इच्छता; सुमेधसा, गुरुः, अस्वन्ततरः, द्विषताम्, उदयः, सुमर्षणः ( भवति ), महान्, अपि, फलसम्पत्प्रवणः, न ( सुमर्षणः भवति ) ॥ ८ ॥

सुधा—भूतिम् = विभूतिम्, ऐश्वर्यमित्यर्थः। इच्छता = अभिलषता, सुमेधसा = सुबुद्धिना, जनेनेति शेषः। गुरुः = महान्, समधिक इति वा, अस्वन्ततरः = दुष्परिणामकः क्षयोन्मुख इत्यर्थः। द्विषतां = शत्रूणाम्, उदयः = अभ्युदयः, समृद्धिरिति वा। सुमर्षणः = सुसहः, भवति। वैरिणामभ्युदय उपेक्ष्यो भवति, नोत्सवे क्षयो भवते क्षीयमाण इत्यर्थः। अपि, महान् = विशेषः अपि, फलसम्पत्प्रवणः = फलसम्पत्त्यभिमुखः परिक्षयः = अपचयः, न = नहि, सुमर्षणः = सहः, भवति। [illegible]

दशा क्षीणा, किन्त्वभ्युदयोन्मुखी तादृशस्य शत्रोरुपेक्षा नहि युक्तेति । अर्थात्स च दुर्योधनोऽनुदिनमभ्युदयोन्मुख एवातोऽसौ नोपेक्ष्यः । यथोक्तं शिशुपालवधे 'उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता । समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च' इति ॥ ८ ॥

समासः—शोभना मेधा यस्य सः सुमेधास्तेन सुमेधसा । शोभनोऽन्तोऽवसानो यस्य सः स्वन्तः, न स्वन्तः अस्वन्तः, अतिशयेनास्वन्तः अस्वन्ततरः । फलस्य सम्पत् फलसम्पत्, तस्या प्रवणः फलसम्पत्प्रवणः ॥ ८ ॥

व्याकरणम्—उदयः = उत् + इण् + भावे घञ् । परिक्षय=परि + क्षि भावे घञ् ॥

वाच्यान्तरम्—भूतिमिच्छन् सुमेधाः गुरुमस्वन्ततरं द्विषतामुदयं सहते । वा गुरुणा अस्वन्ततरेण द्विषतामुदयेन सुमर्षणेन भूयते । महतापि फलसम्पत्प्रवणेन परिक्षयेण न सुमर्षणेन भूयते ॥ ८ ॥

कोषः—'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः । विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा' इत्यमरः ॥ ८ ॥

सारार्थः—यदि वर्त्तमानसमये शत्रोर्दशा उत्तमा, किन्त्वनुदिनं क्षीयमाणा, तर्हि स च शत्रुरुपेक्ष्यः तदर्थं नहि विशेषसावधानताया आवश्यकता । अथ यस्य च दशा तत्काले क्षीणाऽपि, शनैरुन्नत्यभिमुखी, स चोपेक्ष्योपि न जातु पराभवं करोति । स्वयमेव भाविनि काले नश्यति । तथा कृष्णपक्षादौ चन्द्रः पूर्णोऽपि परिक्षीयमाणः अत एव तं राहुरुपेक्षते; तथा च शुक्लपक्षादौ चन्द्रं कृशतममपि प्रतिदिनं वर्द्धमानमवलोक्य पक्षान्ते स्वर्भानुर्ग्रसति । इति ॥ ८ ॥

भाषाऽर्थः—उन्नति की चाह रखने वाले बुद्धिमान् वर्तमान समय में शत्रु की तरक्की और धीरे-धीरे अवनति देखकर सहते हैं और तत्काल में गई-गुजरी हालत और आगे बढ़ती हुई दशा देखकर नहीं सह सकते हैं ॥ ८ ॥

अथोभयोरपि मध्य एकतरस्योदयक्षययोर्गतिमुक्त्वेदानीं युगपत्परिक्षयागमे गतिमाह—

> अचिरेण परस्य भूयसीं विपरीतां विगणय्य चात्मनः ।
> क्षययुक्तिमुपेक्षते कृती कुरुते तत्प्रतिकारमन्यथा ॥ ९ ॥

अचिरेणेति । कृतमनेनेति कृती । कुशल इत्यर्थः । 'इष्टादिभ्यश्च' इतीनिप्रत्ययः । परस्य शत्रोः क्षययोगमचिरेणाशुभाविनीं भूयसीं दुरन्तां च, तथात्मनः क्षययुक्तिं विपरीतां चिरभाविनीमल्पीयसीं च विगणय्य विचार्य । 'ल्यपि लघुपूर्वात्' इत्ययादेशः । उपेक्षते । अन्यथोक्तवैपरीत्ये । परस्य क्षययुक्तावल्पीयस्यास, स्वस्य भूयस्यां च सत्यामित्यर्थः । तत्प्रतिकारं तस्याः क्षययुक्तेः प्रतिकारमचिरेणाशु कुरुते । एवं सती यदा शत्रोरभ्युदयः स्वस्य चातिपरिक्षयो यथास्माकं तदा किं वक्तव्यम् । सद्यः प्रतिकुरुते इत्यर्थासिद्धमनुसंधेयम् ॥ ९ ॥

अन्वयः—कृती, परस्य, अचिरेण, भूयसीं, क्षययुक्तिम्, आत्मनः, च, विपरीतां, विगणय्य, उपेक्षते । अन्यथा, तत्प्रतिकारं, कुरुते ॥ ९ ॥

सुधा—कृती = कुशलः, यत्नवान् वा, परस्य = शत्रोः, अचिरेण = अल्पकालेन, भूयसीं=महीयसीं, क्षययुक्तिम् = नाशप्रकारम्, संहारगतिमित्यर्थः । तथा, आत्मनः = स्वस्य, च अपि, विपरीताम् = तद्विलोमाम्, चिरेण भाविनीं स्वल्पीयसीं च क्षययुक्तिमित्यर्थः । विगणय्य=विविच्य, विचार्येति वा, उपेक्षते=उपेक्षां कुरुते । अन्यथा = उक्तभिन्नदशायाम् अर्थात् शत्रोश्चिरेण भाविनीं, स्वस्य चाशु सम्भाविनीं क्षययुक्तिमालक्ष्येति भावः । तत्प्रतिकारम् = तत्प्रतिक्रियाम्, अर्थात् येन सा क्षययुक्तिर्नश्यति स्वस्य, परस्य चाशु साऽऽयाति तथा, कुरुते = करोति ॥ ९ ॥

समासः—न चिरमचिरं तेनाचिरेण । क्षयस्य युक्तिः क्षययुक्तिस्तां क्षययुक्तिम् । तस्याः ( क्षययुक्तेः ) प्रतिकारस्तत्प्रतिकारस्तं तत्प्रतिकारम् ॥ ९ ॥

व्याकरणम्—विगणय्य = वि + गण + णिच् + क्त्वा + ल्यप् । उपेक्षते = उप + ईक्ष=कर्त्तरि लट् । कुरुते = कृ + लट् ॥ ९ ॥

वाच्यान्तरम्—कृतिना अचिरेण, परस्य भूयस्यपि, क्षययुक्तिः स्वस्य च विपरीता क्षययुक्तिरुपेक्ष्यते, अन्यथा तत्प्रतिकारः क्रियते ॥ ९ ॥

कोषः—'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' इत्यमरः । 'विपरीतो विपर्यासो व्यत्यासो व्यत्ययश्च सः' इत्यमरः । 'वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि' इत्यमरः ॥ ९ ॥

सारार्थः—कुशलो जनस्तु, शत्रोराशु भाविनं नाशोपायं, तथा निजस्य चिरसम्भवं तं समवलोक्य तत्प्रतिकारकरणे वेगवान् नहि भवति । अथ चेद् दीर्घकालेनायान्तीं शत्रोर्विपत्तिम्, स्वस्य च सत्वरमेव भाविनीं तां ज्ञात्वा झटिति तथ यथा शत्रोर्विपत्तिः शीघ्रमेव भवति यथा स्वस्य च विपत्तिर्दूरीभवति, तथा यतते ॥ ९ ॥

भाषाऽर्थः—समझदार लोग, थोड़ी ही देर में होने वाली दुश्मनों की भारी विपत्ति देख और खुद की देर से आने वाली थोड़ी समझ कर टाल देते हैं । लेकिन, वे शत्रुओं की देर से आने वाली और अपनी तुरन्त पहुँचनेवाली विपद् को हटाने के लिये उपाय करते हैं ॥ ९ ॥

तथाप्युपेक्षायामनिष्टमाचष्टे—

अनुपालयतामुदेष्यतीं प्रभुशक्तिं द्विषतामनीहया ।
अपयान्त्यचिरान्महीभुजां जननिर्वादभयादिव श्रियः ॥१०॥

अनुपालयतामिति । उदेष्यतीं वर्धिष्यमाणाम् । [illegible] । इति विकल्पानुप्रासः । द्विषतां प्रभुशक्तिं कोशदण्डजं तेजः । 'स प्रभावः प्रतापश्च यत्तेजः कोशदण्डजम्' इत्यमरः । अनीहया [illegible]

महीभुजां श्रियः सम्पदो जननिर्वादभयान्निकृष्टपुरुषानुरागोत्थलोकापवादभयादिवेति हेतूत्प्रेक्षा । अचिरादपयान्त्यपसरन्ति । यथाह—कामन्दकः—'क्लीबैः स्त्रीव श्रीभिरलसः परिभूयते' इति । अतः पराक्रमितव्यमित्यर्थः ॥१०॥

अन्वयः—उदेष्यतीम्, द्विषताम, प्रभुशक्तिम्, अनीहया, अनुपालयताम्, महीभुजाम्, श्रियः, जननिर्वादभयात्, इव, अचिरात्, अपयान्ति ॥ १० ॥

सुधा—उदेष्यतीम् = वर्धिष्यमाणाम्, द्विषतां = शत्रूणां, प्रभुशक्तिम् = कोशदण्डसामर्थ्यम्, अनीहया = अनिच्छया, अवहेलयेत्यर्थः । अनुपालयताम् = उपेक्षमाणानाम्, महीभुजाम्=भूभुजाम्, राज्ञाम्, श्रियः=राजलक्ष्म्याः, जननिर्वादभयात् इव, अचिरात् = सत्वरमेव, अपयान्ति=निर्गच्छन्ति, दूरीभवन्ति । न तादृशानां जनानां समीपे तिष्ठन्तीति भावः ॥ १० ॥

समासः—प्रभोः शक्तिः प्रभुशक्तिस्तां प्रभुशक्तिम् । महीं भुञ्जन्तीति महीभुजस्तेषां महीभुजाम् । जनानां निर्वादः जननिर्वादः तस्माद्भयं जननिर्वादभयम्, तस्माज्जननिर्वादभयात् ॥ १० ॥

व्याकरणम्—अनुपालयताम्=अनु + पाल् + णिच् + शतृ । द्विषताम् = द्विष् + शतृ । महीभुजाम् = मही + भुज् + क्विप् । अपयान्ति = अप + या + लट् ॥१०॥

वाच्यान्तरम्—उदेष्यतीं द्विषतां प्रभुशक्तिम् अनीहया अनुपालयतो महीभुजो श्रीभिः, जननिर्वादभयात् इव अपयायते ॥ १० ॥

कोषः—'स प्रभावः प्रतापश्च यत्तेजः कोशदण्डजम्' इत्यमरः । 'अवर्णाक्षेपनिर्वादपरीवादापवादवत्' इत्यमरः ॥ १० ॥

सारार्थः—यः कश्चिन्महीपतिः शत्रोरुन्नतिमवलोक्योपेक्षां कुरुते, तस्य समीपे चाण्डालस्पर्शपातकभयादिव सम्पदो नहि आयान्ति, वर्त्तमाना अपि दूरतो गच्छन्तीति ॥ १० ॥

भाषाऽर्थः—बढ़ती हुई, दुश्मनों की दौलत को देख चुपचाप ठहरनेवाले राजाओं की सम्पत्तियाँ, लोगों के अपवाद के भय से मानो निकल जाती हैं ॥१०॥

ननु परिक्षीणः कथं प्रबलेनाभियुज्यत इत्यत्राह—

क्षययुक्तमपि स्वभावजं दधतं धाम शिवं समृद्धये ।
प्रणमन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजा नृपम् ॥ ११॥

क्षयेति । क्षययुक्तमपि तथा सन्तं क्षीणमपि स्वभावजं सहजमनपायं शिवं सर्वलोकाह्लादकं धाम चात्त्रं तेजः प्रतापं च दधतं समृद्धये वृद्धयेऽभ्युत्थितमुद्यन्तम् । वर्धिष्णुमित्यर्थः । नृपं प्रजाः प्रतिपच्चन्द्रं द्वितीयाचन्द्रमिवेत्यर्थः । प्रतिपच्चन्द्रेण द्वितीयाग्रहणम् । प्रतिपदि तस्यादर्शनादिति । प्रणमन्ति महीभावेन वर्तन्त इति

भावः । चन्द्रं तु नमस्कुर्वन्ति । क्षीणस्याप्युत्साहः कार्यसिद्धेर्निदानमित्यर्थः । 'सर्वं हि सततोत्साही दुर्बलोऽपि समश्नुते' इति कामन्दकः ॥ ११ ॥

अन्वयः—प्रजाः, क्षययुक्तम्, अपि, स्वभावजं, शिवं, धाम, दधतम्, समृद्धये, उत्थितम्, अनपायम्, नृपम्, प्रतिपच्चन्द्रम्, इव प्रणमन्ति ॥ ११ ॥

सुधा—प्रजा = जनाः, करदा लोका इति यावत् । क्षययुक्तम् = हानिमन्तम्, स्वभावजम् = प्राकृतिकम्, शिवम् = भाविकल्याणकरम्, धाम = तेजः, दधतं = धारयन्तम्, समृद्धये = ऐश्वर्योन्नत्यै, उत्थितम् = उद्योगपरम्, अनपायम् = निर्दोषम्, नृपम् = राजानम्, [1]क्षययुक्तम् = परिक्षीणम्, कलामात्रावशेषमित्यर्थः । अपि, स्वभावजम्=प्रकृतिजम्; एवमेव, परिक्षीणोऽपि शुक्लपक्षेऽनुदिनं प्रकृत्या वर्धतेऽतः स्वाभाविकम् । यद्यपि चन्द्रबिम्बे स्वतस्तेजो न वर्तते, किन्तु रविकिरणोज्ज्वलभागत उज्ज्वल इवावलोक्यते । तथापि रविकिरणयोगोऽपि प्राकृतिक एवोच्यते । यदि स्वगतं तेजोऽङ्गीक्रियते, तदा सर्वस्यां तिथौ कथं नाखिलं बिम्बमुज्ज्वलमवलोक्यते ? शिवम् = भाविकल्याणसूचकम्, वा शिवशिरोभूषणम्, नामैकदेशे नामग्रहणेन सत्यभावात् । धाम = तेजः, किरणमिति यावत्; समृद्धये = वर्धनाय, क्रमकलोपचयायेति यावत् । उत्थितम् = भूप्रान्ताद्विपति उद्गच्छन्तम् पूर्वक्षितिजादुपरि समुन्नतम्, इति यावत् । अनपायम् = निष्कलङ्कम्, पूर्णबिम्बे एव कलङ्कपूर्णत्वावलोकनात् कलामात्रशेषे कलङ्कादर्शनाच्चेति शेषः प्रतिपच्चन्द्रम् = प्रतिपत्तिथ्युपलक्षितचन्द्रम्, इव प्रणमन्ति=नमस्कुर्वन्ति, अत्र क्षययुक्तमिति नृपचन्द्रयोर्धाम्नोऽपि विशेषणमवगन्तव्यम् । चन्द्रः सूर्यसान्निध्यवशेन छायावृत्तान्तर्गतो यदा तदा तदुज्ज्वलभागोऽस्मदादिदृश्यवृत्तान्तर्गतो न भवति । यदा पुनः क्रमशोऽग्रे गच्छति, तदा क्रमशस्तिर्यक्स्थितया स्वदृश्यभागे तच्छुक्लभागस्य प्रवेशात् तच्छुक्लवृद्धिर्भवतीति कलावृद्धेः कारणम् ॥ ११ ॥

समासः—क्षयेण युक्तः क्षययुक्तस्तम् । स्वस्य भावः स्वभावस्तस्माज्जायते इति स्वभावजः, तं स्वभाजम् । न अपायाः सन्ति यस्मिन् सः अनपायस्तमनपायम् । प्रतिपदश्चन्द्रः प्रतिपच्चन्द्रस्तं प्रतिपच्चन्द्रम् ॥ ११ ॥

व्याकरणम्—दधतम् = धा + शतृ + अम् । प्रणमन्ति=प्र + नम् + लट् । उत्थितम् = उत् + स्था + क्तः ॥ ११ ॥

वाच्यान्तरम्—प्रजाभिः क्षययुक्तोऽपि वा क्षययुक्तमपि स्वभावजं धाम दधत् समृद्धये उत्थितोऽनपायो नृपः प्रतिपच्चन्द्र इव प्रणम्यते ॥ ११ ॥

कोषः—'स्वभावश्च निसर्गश्च प्रकृतिश्च' इति कोषः 'धाम तेजसि दीप्तौ च गृहे स्थाने शरीरके' इति । 'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः । 'हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः' इत्यमरः ॥ ११ ॥

---

[1] क्षयेण राजयक्ष्मणा युक्तमिति वा व्याख्येयम् ।

सारार्थः—यदि वर्त्तमानसमये न्यायपरो राजा हतविभवोऽपि; स्वाभ्युदयार्थं प्रयासं करोति, तदा चिरानुरागिः प्रजाजनास्तस्य सादरं साहाय्यं कुर्वन्ति ॥११॥

भाषाऽर्थः—वर्तमान परिस्थिति में दुर्दशाग्रस्त होने पर भी, आगे के लिये अच्छी प्रतिभा बनाये हुये, उन्नति के लिये तैयार और दोषों से रहित राजा को प्रतिपदा के चन्द्रमा के सदृश प्रजा लोग प्रणाम करते हैं अर्थात् उनका साथ देते हैं ॥ ११ ॥

ननु प्रभुशक्तिशून्यस्योत्साहः कुत्रोपयुज्यत इत्यत्राह—

**प्रभवः खलु कोशदण्डयोः कृतपञ्चाङ्गविनिर्णयो नयः ।**
**स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते ॥ १२ ॥**

प्रभव इति । कर्मणामारम्भोपायः पुरुषद्रव्यसम्पद् देशकालविभागो विनिपातप्रतिकारः कार्यसिद्धश्चेति पञ्चाङ्गानि । यथाह कामन्दकः—'सहायाः साधनोपाया विभागो देशकालयोः । विनिपातप्रतिकारः सिद्धिः पञ्चाङ्गमिष्यते ॥' इति पञ्चानामङ्गानां विनिर्णयः पञ्चाङ्गविनिर्णयः । तद्धितार्थ—'इत्यादिनोत्तरपदसमासः । कृतः पञ्चाङ्गविनिर्णयो यस्य येन वा स तथोक्तः । नयो नीतिः । मन्त्र इति यावत् । कोशोऽर्थराशिः । 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः' इत्यमरः । दण्डश्चतुरङ्गसैन्यम् । 'दण्डोऽस्त्री शासने राज्ञां हिंसायां लगुडे यमे । यात्राज्ञायां सैन्यभेदे' इति वैजयन्ती । तयोः कोशदण्डयोः । प्रभुशक्तेरित्यर्थः प्रभवत्यस्मादिति प्रभवः कारणम् । 'ऋदोरप्' स नयो विधेयपदेषु कार्यवस्तुषु 'पदव्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः, दक्षतां क्षिप्रकारित्वम् । उत्साहमित्यर्थः । लोकः कृष्यादिप्रवृत्तो जनः । नियतिं दैवमिव । 'नियतिर्नियमे दैवे' इति विश्वः । अनुरुध्यतेऽनुसरति । कर्मकर्तरि लट् । मन्त्रस्यापि मूलमुत्साहस्तन्मूलाया प्रभुशक्तेर्मूलमिति किमु वक्तव्यम्, अतः स एवाश्रयणीयः । यतो नक्तन्दिवं मन्त्रयतस्तस्यापि प्रभोर्निरुत्साहस्य न किञ्चित्सिद्ध्यतीति ॥ १२ ॥

अन्वयः—कृतपञ्चाङ्गविनिर्णयः, नयः, कोशदण्डयोः प्रभवः खलु । स ( नयः ) विधेयपदेषु, दक्षताम्, लोकः, नियतिम्, इव अनुरुध्यते ॥ १२ ॥

सुधा—कृतपञ्चाङ्गविनिर्णयः = विहितसहायाद्यङ्गपञ्चकनिश्चयः, अर्थात् राजनीतेः पञ्चाङ्गानि वर्त्तन्ते तेषु प्रथमे के मम सहायकाः सन्तीत्यस्य परिज्ञानमेकम्, तथा च जयस्योपकरणानामेकत्रकरणं द्वितीयम्, एवं देशविभागस्तृतीयम्, तथा कालविभागश्च, अस्मिन् समये इदं कर्त्तव्यमिति । तथा विपत्तेः प्रतिकारः, कुतश्चित् तथा विपदो दूरीकरणायायासः, इति चतुर्थम्, तथा परिणामे कार्यसिद्धिरिति पञ्चमम्, नयः = नीतिः, कोशदण्डयोः = धनराशिचतुरङ्गसैन्ययोः प्रभवः = उत्पत्तिकारणम् । खलु भवति । सः = नयः, विधेयपदेषु = कार्यवस्तुषु, दक्षताम्

दक्षत्वम्, उद्योगमिति यावत्। लोकः = जनः, नियतिम् = दैवम्, भाग्यमिति, वाक्य वा इन्द्रम्, अनुरुध्यते = अनुसरति।

अथ लोकपक्षे व्याख्यायते = कृतपञ्चाङ्गविनिर्णयः = सम्यग् विहितपञ्चाङ्गपत्र-विचारः, नयः = न्यायवान्, गणक इति शेषः। कोशदण्डयोः = अर्थशासनयोः। प्रभवः = उत्पादको भवति, नहि पञ्चाङ्गपत्रं विना धनं, तिथ्यादीनां घटीपलं च ज्ञायते। एवम्भूतः सः = विचारवान्, विधेयपदेषु = कर्त्तव्यलक्षणेषु वा कृत्यवस्तुषु, च कार्यस्थानेषु राज्ञ इति शेषः। दक्षतां = स्फूर्त्तिम्, लोकः = अवलोककः, जन्मपत्र-द्रष्टा गणक इति, नियतिम् = भाग्यम्, इव, अनुरुध्यते = अनुसरति। यथैव भावी, तथैव गणको वदति, नैवंविधस्य गणकस्य कथनं मिथ्या भवतीति भावः॥ १२॥

समासः—कोशश्च कोशदण्डौ तयोः कोशदण्डयोः। पञ्च अङ्गानि पञ्चाङ्गानि, पञ्चाङ्गानां विनिर्णयः पञ्चाङ्गविनिर्णयः, कृतः पञ्चाङ्गविनिर्णयो येन यस्य वा सः कृतपञ्चाङ्गविनिर्णयः। विधेयानां पदानि विधेयपदानि तेषु विधेयपदेषु॥ १२॥

व्याकरणम्—अनुरुध्यते = अनु + रुध + श्यन् + लट्॥ १२॥

वाक्यान्तरम्—कृतपञ्चाङ्गविनिर्णयेन नयेन कोशदण्डयोः प्रभवेण भूयते खलु। तेन विधेयपदेषु दक्षता, लोकेन नियतिरिवानुरुध्यते॥ १२॥

कोषः—'सहायाः साधनोपाया विभागो देशकालयोः। विनिपातप्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते' इति कामन्दकः। 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघ-दिव्ययोः' इत्यमरः। 'दण्डोऽस्त्री शासने राज्ञां हिंसायां लगुडे यमे। मानान्तरे सैन्यभेदे' इति वैजयन्ती। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः। 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः। 'लोकस्तु भुवने जने' इति॥१२॥

सारार्थः—यः कश्चित् राजा नीतेः पञ्चाङ्गानां परिरक्षकस्तदनुसारं चलति च, तस्य धनराशिः सैन्यसमूहश्च न कदापि अल्पतां याति। परन्तु तां नीतिं सामयिक एव दक्षो जनः पालयति। नहि दीर्घसूत्रेण हतोत्साहेन पाल्यते, इति विविच्य भवता सा नीतिरनुसर्तव्या॥ १२॥

भावाऽर्थः—जिस राजनीति के पाँचों अंगों का निर्णय किया जाता है, ऐसी नीति, खजाना और सेनाविभाग की बुनियाद होती है। लेकिन वह नीति चालाकी का पीछा करती है, जैसे लोग दैव ( भाग्य ) ही का भरोसा रखते हैं॥१२॥

ननु सोत्साहस्यासहायस्य कथमर्थसिद्धिरित्याह—

> अभिमानवतो मनस्विनः प्रियमुच्चैः पदमारुरुक्षतः।
> विनिपातनिवर्तनक्षमं मतमालम्बनमात्मपौरुषम्॥ १३॥

अभिमानवत इति। अभिमानवतो मानधनस्य प्रियमिच्छु[illegible] राज्यादिकमारुरुक्षत आरोढुमिच्छतः प्राप्तुकामस्य मनस्विनो धीरस्य[illegible]

स्वपुरुषकार एव विनिपातनिवर्तनक्षममनर्थप्रतिकारसमर्थमालम्बनं सहकारि मतमिष्टम्। यथा कस्यचित्तुङ्गमारोहतः किञ्चित्पतनप्रतिबन्धकमनुचरहस्तादिकमालम्बनं तद्वदिति ध्वनिः। किं पौरुषादन्यैः शूराणामिति भावः ॥ १३ ॥

अन्वयः—अभिमानवतः, प्रियम्, उच्चैः, आरुरुक्षतः, मनस्विनः, विनिपातनिवर्त्तनक्षमम्, आत्मपौरुषम्, आलम्बनम्, मतम् ॥ १३ ॥

सुधा—अभिमानवतः = मानधनस्य, जातिकुलाभिमानशालिन इत्यर्थः। प्रियम् = अभीष्टम्, उच्चैः = उन्नतम्, योग्यतायोग्यम्, आरुरुक्षतः = आरोढुमिच्छतः, मनस्विनः = गम्भीरस्य, विनिपातनिवर्त्तनक्षमम् = विपत्तिध्वंसयोग्यम्, वाऽनर्थप्रतीकारसमर्थम्, आत्मपौरुषम् = निजोद्योग एव, आलम्बनम् = अवलम्बनम्, सहायकमित्यर्थः, मतम् = इष्टम्, वा स्वीकृतम् ॥ १३ ॥

समासः—अभिमानोऽस्यास्तीति अभिमानवान् तस्याभिमानवतः। विनिपातस्य निवर्त्तनं विनिपातनिवर्त्तनम्, तस्य क्षमं विनिपातनिवर्त्तनक्षमम्। आत्मनः पौरुषम् आत्मपौरुषम् ॥ १३ ॥

व्याकरणम्—आरुरुक्षतः = आङ् पूर्वात् रुहेः=सन्नन्तात् शतृप्रत्ययः ॥ १३ ॥

वाच्यान्तरम्—अभिमानवतो मनस्विनः प्रियम् उच्चैः पदम् आरुरुक्षतः विनिपातनिवर्त्तनक्षमेण आत्मपौरुषेण आलम्बनेन भूयते ॥ १३ ॥

कोषः—'गर्वोऽभिमानोऽहङ्कारो मानश्चित्तसमुन्नतिः' इत्यमरः। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः ॥ १३ ॥

सारार्थः—यः स्वजातिकुलाभिमानवान् महीपतिः स्वाभीष्टस्थानलाभाय यतते, तेन अन्यसाहाय्याशा न कर्त्तव्या केवलं निजभुजविक्रमस्यैव साहाय्याशा विधेया, यत्कृत्यं स्वेन सिद्ध्यति, तदन्यं कथयेदिति ॥ १३ ॥

भावार्थः—अपनी जाति और कुल के अभिमान वाला जो राजा अभीष्ट स्थान को चाहे उसको चाहिए कि पराये की आशा छोड़कर केवल आपद् को दूर करने लायक अपने उद्योग का अवलम्बन करे ॥ १३ ॥

पौरुषानङ्गीकारे दोषमाह—

विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः।
नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥ १४ ॥

विपद इति। अविक्रमं पौरुषहीनं विपदोऽभिभवन्त्याक्रामन्ति। आपदुपेतं विपन्नमायतिरुत्तरकालः 'उत्तरकाल आयतिः' इत्यमरः। रहयति त्यजति। निरायतेः, आसन्नक्षयस्येत्यर्थः। लघुताऽगौरवं नियताऽवश्यम्भाविनी। न कस्मिंश्चिन्मान्यित इत्यर्थः। अगरीयाल्लघीयान्नृपश्रियो राजलक्ष्म्याः पदमास्पदं न भवति

यद्वा नृपेति पदच्छेदः। तस्मात्पौरुषं कर्तव्यमेवेत्यर्थः। अत्र पूर्वपूर्वस्याविक्रमादे-रुत्तरोत्तरविपदादिकं प्रति कारणत्वात्कारणमालाख्योऽलङ्कारः तथा च सूत्रम्—'पूर्वपूर्वस्योत्तरहेतुत्वे कारणमाला॥ १४॥

अन्वयः—विपदः, अविक्रमम्, अभिभवन्ति, आपदुपेतम्, आयतिः, रहयति। निरायतेः लघुता नियता, अगरीयान्, नृपश्रियः, पदं, न ( भवति )॥ १४॥

सुधा—विपदः = आपदः नानाविधाः क्लेशा इत्यर्थः। अविक्रमं = निरुद्योगम्, पौरुषहीनमलसमिति यावत्, अभिभवन्ति = आक्रामन्ति, अथ चाविक्रमत्वेनापदा-ऽन्वितो भवति, तदा किं तदाह—आपदुपेतम् = विपद्युक्तम्, आयतिः = उत्तर-कालः, भाविसमय इति यावत्। रहयति = त्यजति, अर्थादनुद्योगिनो विपद्ग्रस्त-तया भाविशुभोदयोपि दूरीभवति। निरायतेः = अनागामिशुभस्य, अलसस्येत्यर्थः। लघुता = क्षुद्रता, अवमानना, नियता = निश्चिता सा च महती न भवति। अतः, अगरीयान् = लघीयान्, नीचो जन इति शेषः। नृपश्रियः = राजलक्ष्म्याः, पदम् = स्थानम्, न भवति, अतो वर्त्तते सर्वासामवनतीनां मूलं तु अनुद्योग एव, अतो भवता यत्नपरेण भाव्यमित्यर्थः॥ १४॥

समासः—न विक्रमः यस्य असौ अविक्रमस्तमविक्रमम्। आपदा उपेत आप-दुपेतस्तमापदुपेतम्। निर्गता आयतिर्यस्मात्सः निरायतिः। अतिशयेन गुरुर्गरी-यान्, न गरीयान् अगरीयान्। नृपस्य श्रीः नृपश्रीः, तस्याः नृपश्रियः॥ १४॥

व्याकरणम्—अभिभवन्ति = अभि + भू + लट्। रहयति = रह + णिच् + लट्॥ १४॥

वाच्यान्तरम्—अविक्रमो जनः विपद्भिः अभिभूयते। आपदुपेतो जन आयत्या रह्यते। निरायतेर्लघुतया नियतया भूयते। अगरीयसा नृपश्रियः पदेन न भूयते॥ १४॥

कोषः—'शक्तिः पराक्रमः प्राणो विक्रमस्त्वतिशक्तिता' इत्यमरः। 'विपत्त्यां विपदापदौ' इत्यमरः। 'उत्तरः काल आयतिः' इत्यमरः। 'पदं व्यवसितत्राणस्थान-लक्ष्माङ्घ्रिवस्तुषु' इत्यमरः॥ १४॥

समार्थः—य उद्योगं न कुरुते, स विपद्ग्रस्तो भवति। तथा च [illegible] अभाग्यो जनो राज्यकरणयोग्यो नहि भवतीति। अतो भवता [illegible] करणीयः॥ १४॥

भावार्थः—आलसी को विपत्तियाँ घेरती हैं, विपत्ति से ग्रसित को होनहार भी छोड़ देता है। बिना होनहार वाले की [illegible] आ जाती है और [illegible] राजपद के लायक नहीं रहते॥ १४॥

फलितमाह—

तदलं प्रतिपक्षमुन्नतेरवलम्ब्य व्यवसायवन्ध्यताम्।
निवसन्ति पराक्रमाश्रया न विषादेन समं समृद्धयः॥ १५॥

तदिति। तत्तस्माद् उपेक्षायां दोषसम्भवादित्यर्थः। उन्नतेरभ्युदयस्य प्रतिपक्षमन्तरायं व्यवसायवन्ध्यतामुद्योगशून्यतामवलम्ब्यालम्। अवलम्बनेनालमित्यर्थः। 'अलङ्खल्वोः प्रतिषेधयोः प्राचां क्त्वा' इति क्त्वा प्रत्ययः। तस्य ल्यबादेशः। तथाहि पराक्रम आश्रयः कारणं यासां तास्तथोक्ताः समृद्धयः सम्पदो विषादेन सममनुत्साहेन निवसन्ति। पौरुषसाध्याः। सम्पदो नानुत्साहसाध्याः, उभयोः सहावस्थानविरोधादित्यर्थः। वैधर्म्येण कार्यकारणरूपोऽर्थान्तरन्यासः ॥ १५ ॥

अन्वयः—तत्, उन्नतेः प्रतिपक्षम्, व्यवसायवन्ध्यताम्, अवलम्ब्य, अलम्, (यतः) पराक्रमाश्रयाः, विषादेन, समं, न, निवसन्ति ॥ १५ ॥

सुधा—तत् = तस्मात्कारणात, उन्नतेः = अभ्युदयस्य, प्रतिपक्षम् = बाधकम्, व्यवसायवन्ध्यताम् = उद्योगशून्यताम्, आलस्यमित्यर्थः। अवलम्ब्य = स्वीकृत्य अलम् = व्यर्थम्। नहि किमपि शुभफलमनयो भवतः प्रकृत्या वर्त्तमानयेति भावः। यतो यस्मात् कारणादिति शेषः। पराक्रमाश्रयः = विक्रमाधीनाः, उद्योगाधारा इत्यर्थः। समृद्धयः = सम्पदः, ऐश्वर्याणीत्यर्थः। विषादेन = अनुत्साहेन, समं=सह, न निवसन्ति = न तिष्ठन्ति, अर्थादुत्साहेन सहैवैश्वर्याणि वर्त्तन्तेऽत उत्साहाश्रयो भवतु भवान्, जहातु हानिमूलमालस्यम्। तथोक्तं भारते—

आलस्यं यदि न भवेज्जगत्यनर्थः को न स्याद्बहुधनवान् बहुश्रुतश्च।
आलस्यादियमवनी च सागरान्ता सङ्कीर्णा नरपशुभिश्च निर्धनैश्च ॥' इति ॥१५॥

समासः—व्यवसायस्य वन्ध्यता व्यवसायवन्ध्यता, तां व्यवसायवन्ध्यताम्। पराक्रम एवाश्रयो यासां ताः पराक्रमाश्रयाः ॥ १५ ॥

व्याकरणम्—अवलम्ब्य = अव + लबि + क्त्वा + ल्यप्। निवसन्ति = नि + वस् + लट् ॥ १५ ॥

वाच्यान्तरम्—पराक्रमाश्रयाभिः समृद्धिभिः विषादेन समं न न्युष्यते ॥ १५ ॥

कोषः—'अलंभूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः। उद्योगो व्यवसायश्च पौरुषम्' इति कोषः। 'पराक्रमो विक्रमश्च साहसः पौरुषम्' इति कोषः। 'खेदो विषादो दुःखञ्च क्लेश इत्यपि कथ्यते' इति ॥ १५ ॥

सारार्थः—यतो हि उद्योगहीनानां न क्वाप्युन्नतिर्भवति, अतो भवद्भिः सत्वरमुद्योगशीलैर्भाव्यम्। सम्पदस्तु तत्रैव तिष्ठन्ति, यत्रैव पराक्रमः, यत्रानुत्साहो वर्तते, तत्र वर्तमाना अपि सम्पदोऽपयान्ति। तेन भवद्भिः समयोचितमाचरणमाचरितव्यमिति ॥ १५ ॥

भावार्थः—क्योंकि बिना उद्योग के सब विपत्तियाँ घेरती हैं, इसलिए आप जान-बूझकर भी ऐसे चुपचाप बैठे हैं, यह ठीक नहीं है। सम्पत्तियाँ तो पराक्रमियों के यहाँ ठहरती हैं न कि उद्योगहीन अनुत्साहियों के यहाँ ॥ १५ ॥

ननु समयः प्रतीक्ष्यते, किं वेगेनेत्यत्राह—

अथ चेदवधिः प्रतीक्ष्यते कथमाविष्कृतजिह्मवृत्तिना ।
धृतराष्ट्रसुतेन सुत्यजाश्चिरमास्वाद्य नरेन्द्रसम्पदः ॥ १६ ॥

अथेति । अथावधिः कालः प्रतीक्ष्यते चेत् । 'अवधिस्त्ववधाने स्यात्सीम्नि काले बिलेऽपि च' इति विश्वः । आविष्कृतजिह्मवृत्तिना प्रकटितकपटव्यवहारेण धृतराष्ट्रसुतेन दुर्योधनेन नरेन्द्रसम्पदो राज्यसम्पदः । नरेन्द्रेति वा पदच्छेदः चिरं चतुर्दशवर्षाण्यास्वाद्यानुभूय कथं सुत्यजाः । ज्ञातास्वादेन तेन पश्चादपि सुखेन युद्धक्लेशं विना न त्यक्ष्यन्त एवेत्यवधिप्रतीक्षणं व्यर्थमित्यर्थः ॥ १६ ॥

अन्वयः—अथ, चेत्, अवधिः, प्रतीक्ष्यते, ( तर्हि ) आविष्कृतजिह्मवृत्तिना, धृतराष्ट्रसुतेन, नरेन्द्रसम्पदः, चिरम्, आस्वाद्य, कथं, सुत्यजाः (भविष्यन्ति) ॥ १६ ॥

सुधा—अथ = पक्षान्तरे, चेत् = यदि, अवधिः = समयसीमा, ( द्यूतपराजिता वनवासे द्वादश वर्षाणि, गुप्तरूपेण चैकं वर्षं यदा वसिष्यथ, तदाऽहं राज्यमर्पयिष्यामीत्येवंरूपो दुर्योधनकृतकालावधिरिति भावः ), प्रतीक्ष्यते = पाल्यते, भवतेति शेषः । तदाऽस्योत्तरं मया दीयतां तावत्—ननु आविष्कृतजिह्मवृत्तिना = प्रकटीकृतकपटव्यवहारेण, दर्शितविविधव्यापारेणेत्यर्थः । लाक्षागृहदाहे विषप्रयोगे, कपटद्यूते इत्यादि बहुत्र कृतस्वकीयस्वभावपरिचयेनेति भावः । धृतराष्ट्रसुतेन = दुर्योधनेन, नरेन्द्रसम्पदः = राजलक्ष्मीः, चिरम् = दीर्घकालम्, त्रयोदशवर्षावधिकमित्यर्थः । आस्वाद्य = उपभुज्य, अनुभूयेति वा कथं = केन प्रकारेण, सुत्यजाः = सुखेन त्याज्याः, भविष्यन्तीति शेषः । दुर्योधनो विना युद्धक्लेशं न दास्यति न वा त्यक्ष्यति स्वराज्यमिति ध्रुवं ज्ञात्वा, स्वसमयप्रतीक्षणं निरर्थकमिति जानीहि ॥ १६ ॥

समासः—जिह्मा वक्रा वृत्तिर्जिह्मवृत्तिः आविष्कृता जिह्मवृत्तिर्येन तेन आविष्कृतजिह्मवृत्तिना । धृतं राष्ट्रं येनासौ धृतराष्ट्रः, तस्य सुतो धृतराष्ट्रसुतस्तेन धृतराष्ट्रसुतेन । नराणामिन्द्रः नरेन्द्रः नरेन्द्रस्य सम्पदो नरेन्द्रसम्पदः ॥ १६ ॥

व्याकरणम्—प्रतीक्ष्यते = प्रति + ईक्ष् + कर्मणि लट् । आस्वाद्य = आ + स्वाद् + क्त्वा + ल्यप् ॥ १६ ॥

वाच्यान्तरम्—अथ चेदवधिं प्रतीक्षसे, तदा आविष्कृतजिह्मवृत्तिः धृतराष्ट्रसुतः नरेन्द्रसम्पदश्चिरमास्वाद्य कथं त्यक्ष्यति । आविष्कृतजिह्मवृत्तिना धृतराष्ट्रसुतेन चिरमास्वाद्य, कथं नरेन्द्रसम्पदः सुत्यजा इति पक्षे ॥ १६ ॥

कोषः—'अवधिस्त्ववधाने स्यात्सीम्नि काले बिलेऽपि च' इति विश्वः । 'अरालं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम् । आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि' इत्यमरः । 'चिराय चिरस्याद्याश्चिरार्थकाः' इत्यमरः ॥ १६ ॥

सारार्थः—बहुधा यो दुर्योधनः स्वस्वभावस्य परिचयं दत्तवान्, स कर्मा
अनुभूतं भुक्तं राज्यं नहि समर्पयिष्यति, इति हेतोस्तव समयप्रतिपालनं
सम्यगिति ध्रुवमवेहि ॥ १६ ॥

भावार्थः—अगर आप उनके तेरह वर्षवाले इकरार पर निर्भर हों, याने तेर
वर्ष बीतने पर खुद मेरा राज्य लौट आवेगा तो यह कभी नहीं हो सकता
क्योंकि जो दुर्योधन बार-बार आप पर अपना कपट ( धोखा ) व्यवहार प्रकट क
चुका है, वह तेरह साल तक राज्य का मजा चखकर कैसे बिना क्लेश के वापस
सकता है ॥ १६ ॥

अथवा तदा दैववशात्स्वयमेव सम्पदो दास्यति चेत्तथापि तत्कथं रोचयेमहीत्याह—

द्विषता विहितं त्वयाऽथवा यदि लब्धा पुनरात्मनः पदम् ।
जननाथ तवानुजन्मनां कृतमाविष्कृतपौरुषैर्भुजैः ॥ १७ ॥

द्विषतेति । अथवा द्विषता विहितं पुनः प्रत्यर्पितमात्मनः पदं राज्यं त्वया
लप्स्यते यदि । लभेः कर्मणि लुट् । हे जननाथ, तवानुजन्मनामनुजानामावि
पौरुषैः प्रकटितपराक्रमैर्भुजैर्नः कृतमलम् । अस्मद्भुजैर्न किञ्चित्साध्यमित्य
राज्यदानादानयोर्द्विषतामेव स्वातन्त्र्येऽस्मद्भुजवैफल्यात । 'क्षत्रियस्य विजेतव्य
इति शास्त्रात्स्वात्रेणैव राज्यं प्राप्तमिति भावः । कृतमिति प्रतिषेधार्थमव्ययं वा
पठ्यते । 'कृतमिति निवारणनिषेधयोः' इति गणव्याख्याने । भुजैरिति गम्यमा
साधनक्रियापेक्षा करणत्वात्तृतीया । उक्तं च न्यासोद्द्योते-'न केवलं श्रूयमा
क्रिया निमित्तं कारकभावस्यापि तु गम्यमानापि' इति ॥ १७ ॥

अन्वयः—हे जननाथ ! यदि, त्वया, अथवा, द्विषता, पुनः, विहितम्, आत्म
पदं, लब्धा ( तदा ) तव अनुजन्मनाम् आविष्कृतपौरुषैः भुजैः, कृतम् ॥ १७

सुधा – हे जननाथ ! नरेन्द्र, राजन्, यदि = चेत्, त्वया = युधिष्ठिरेण, द्विषता
शत्रुणा, दुर्योधनेनेत्यर्थः, पुनः = भूयः, विहितम्, पुनः समर्पितमित्यर्थः । आत्मनः
स्वस्य, पदम् = स्थानम्, राज्याधिकार इत्यर्थः । लब्धा = लप्स्यते, तदा = दुर्योध
कृपाप्राप्तविभवे त्वयि सति, तव = भवतः, युधिष्ठिरस्येत्यर्थः । अनुजन्मनाम् =
अनुजानाम्, कनिष्ठानामस्माकमित्यर्थः । आविष्कृतपौरुषैः = प्रकाशितपराक्र
प्रख्यातसामर्थ्यैरिति यावत् । भुजैः = बाहुभिः, शत्रुघातनलब्धपरमयशोभिर्भुजै
रित्यर्थः । कृतम् = अलम्, निरर्थकम्, नहि तैः किमपि फलमित्यर्थः ॥ १७ ॥

समासः—जनानां नाथः, जननाथस्तत्सम्बोधने हे जननाथ ! अनु पश्चात् ज
येषां तेऽनुजन्मानस्तेषामनुजन्मनाम् । पुरुषस्य भावः पौरुषम्, आविष्कृतं पौरु
येस्तैराविष्कृतपौरुषैः ॥ १७ ॥

व्याकरणम्—लब्धा = लभ् + कर्मणि लुट् । विहितम् = वि + धा + क्त ॥ १७ ॥

वाच्यान्तरम्—हे जननाथ ! द्विषता विहितमात्मनः पदं यदि त्वं लब्धासि तदा तवानुजन्मनाम् आविष्कृतपौरुषा भुजा अलं ( व्यर्थाः ) एवेति ॥ १७ ॥

कोषः—'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः। 'जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः' इत्यमरः। 'भुजबाहू प्रवेष्टो दोः' इत्यमरः ॥ १७ ॥

भावार्थः—यदि वनवासावधिसमयेऽतीते दुर्योधनेन समर्पितमपि राज्यं युद्धं विना भवान् लब्ध्वा महाराजो भविष्यति, तदा सर्वत्रास्माकं वीरताप्रकाशनं सम्भविष्यति, परन्त्वधुनाऽपि ससुरासुरनरा जानन्ति यत्पाण्डवसमा न सन्ति केऽपि वीरास्त्रिलोक्यामिति ख्यातिर्मिथ्यैव भवेत्। पाण्डवा अपि परप्रदत्तपिण्डभोजिन एवेति दुर्यशोवितानं विततं स्यात् ॥ १७ ॥

भाषाऽर्थः—एक तो वह दुर्योधन लौटावेगा ही नहीं, यह जानता हूँ, पर तो भी थोड़ी देर के लिये मैं मान लेता हूँ कि अगर आप अपने दुश्मनों से लौटाये हुये राज्य को पावेंगे भी तो महाराज ! आपके भाइयों की भुजाओं का बल बरबाद हो जायेगा ॥ १७ ॥

ननु साम्नैव कार्यसिद्धौ किं शस्त्रेण ? यथाह—मनु—'साम्ना दानेन भेदेन समस्तैरथवा पृथक्। विजेतुं प्रयतेतारीन्न युद्धेन कदाचन ॥' इति। तत्किमाग्रहेणेत्याशङ्क्याह—

मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्तयते स्वयं हतैः।
लघयन् खलु तेजसा जगन्न महानिच्छति भूतिमन्यतः ॥ १८ ॥

मदेति। मृगाधिपः सिंहो मदसिक्तमुखैः। मदवर्षिभिरित्यर्थः। स्वयं स्वेनैव हतैः करिभिर्वर्तयते वृत्तिं करोति। जीवतीत्यर्थः। चौरादिकाद् वृतेर्लट्। सौत्रादिकस्य तु 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति परस्मैपदनियमादिति। तथाहि—तेजसा प्रभावेण। 'तेजो बले प्रभावे च द्युतित्विड्विषि रेतसि' इति वैजयन्ती। जगल्लघयंल्लघु कुर्वन्महांस्तेजस्व्यन्यतोऽन्यस्मात्पुरुषाद् भूतिं वृद्धिं नेच्छति खलु। नहि तेजस्विनः परायत्तवृत्तित्वं युक्तम्। मनुवचनं त्वशक्तविषयमिति भावः। विशेषेण वक्ष्यमाणसामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ १८ ॥

अन्वयः—मृगाधिपः, मदसिक्तमुखैः स्वयं, हतैः, करिभिः, वर्तते। तेजसा जगत्, लघयन्, महान्, अन्यतः, अन्यतः, भूतिम्, न इच्छति ॥ १८ ॥

सुधा—मृगाधिपः = केसरी, सिंह इत्यर्थः। मदसिक्तमुखैः = मदवारिसिक्तवदनैः, गण्डस्थलनिःसृतमदजलक्षालितकपोलपालिभिरित्यर्थः। स्वयम् = आत्मना, हतैः = मारितैः, करिभिः = गजैः हस्तिभिरित्यर्थः वर्तयते = वृत्तिं कुरुते, स्वयमेव हस्तिनं हत्वा, न तु दुर्बलं हस्तिनमपि हत्वा सिंहः क्षुधा निवर्तयति। का

कथाऽन्यवन्यजन्तूनाम । तथैव, तेजसा = ओजसा पराक्रमेणेत्यर्थः । जगत् = लो
रम्, लघयन् = लघूकुर्वन्, तृणीकुर्वन्नित्यर्थः । स्वपराक्रमस्य पुरतो जग
कस्यापि गणयन्नित्यर्थः । महान् = तेजःप्रभाववान्, जन इति शेषः, अन्यतः = अ
अन्यजनसाहाय्याद् = इति यावत् । भूतिम् = ऐश्वर्यम् नहि, इच्छति = अभि
लषति । स्वबलेनैव वैरिणं विजित्य लब्धुमिच्छतीति ॥ १८ ॥

समासः—मदेन सिक्तं मदसिक्तं, मदसिक्तं मुखं येषां ते मदसिक्तमुखा
मंदसिक्तमुखैः मृगाणामधिपो मृगाधिपः ॥ १८ ॥

व्याकरणम्—वर्त्तयते = वृतु + णिच् + लट् । लघयन् = लघ् + णिच् + श
इच्छति = इष् + लट् ॥ १८ ॥

वाच्यान्तरम्—मृगाधिपेन स्वयं हतैर्मदसिक्तमुखैः करिभिः वर्त्यते । ते
जगत् लघयता महता अन्यतो भूतिर्न इष्यते ॥ १८ ॥

कोषः—'मदो दर्पेऽभिमाने च गजागण्डस्थलाम्बुनि' इति । 'सिंहो मृ
पञ्चास्यो हर्यक्षः केसरी हरिः' इत्यमरः । 'त्रिष्वथो जगती लोको विष्टपं भु
जगत्' इत्यमरः । विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा' इत्यमरः ॥ १८ ॥

सारार्थः—यथा पशूनां राजा सिंहोऽपि दुर्बलं गजमन्यपशुद्वारा हत्वा न
निर्वर्त्तयति अपि तु मदमत्तान् यूथनायकान् दन्तिनः स्वविक्रमेणैव निहत्य जी
नाशां पूरयति । भवांस्तु सर्वेषां राज्ञां शासकः पूर्वमासीत्तथाविधोऽपि स्वपौरु
किमपि करोति । नैतन्महतां योग्यः स्वभावः । महान्तो जना निजौजसा
भूतलं तृणवन्मन्यमानाः नान्यतोऽभ्युदयमभिलषन्ति ॥ १८ ॥

भाषाऽर्थः—जैसे सिंह खुद मतवाले हाथियों को मारकर भूख को मिटा
वैसे ( बड़े ) आदमी सामने दुनिया को तुच्छ समझकर पराये की सहा
से ऐश्वर्य नहीं चाहते ॥ १८ ॥

ननु 'युद्धात् पाक्षिको लाभः उपायान्तरैस्तु न तथेत्याशङ्क्याह—

अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषतः ।

अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम् ॥ १९

अभिमानेति । अभिमानधनस्य वैरानिर्यातनमात्रनिष्ठस्य । अत एव ग
गमनशीलैरस्थिरैः । गत्वरैश्च' इति करबन्तो निपातः । असुभिः प्राणैः का
पुंसि भूम्न्यसवः प्राणा' इत्यमरः । स्थास्नु स्थिरम् । 'ग्लाजिस्थश्च ग्स्नु' इ
ग्स्नुप्रत्ययः । यशश्चिचीषतस्तैः संग्रहीतुमिच्छतः । चिनोतेः सन्नन्ताल्लटः
अचिरमंशवो यस्याः सोऽचिरांशुर्विद्युत्तस्या विलासः स्फुरणं तद्वच्चञ्चला । इ
त्यर्थः । लक्ष्मीः सम्पत्तु प्रसङ्गादागतमानुषङ्गिकमप्राधान्यशिष्टमल्पं फलम् । प्रा
प्राणजं यश एव मुख्यं फलमभ्युपगच्छन्तीति मानिनामिदमेव श्लाघ्यमित्य

अत्रास्थिरप्राणत्यागेन स्थिरयशःस्वीकाराभिधानान्न्यूनाधिकविनिमयात्मकः परिवृत्यलङ्कारः । तदुक्तं काव्यप्रकाशे—'परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः' इति ॥

अन्वयः—अभिमानधनस्य, गत्वरैः, असुभिः स्थास्नु, यशः, चिचीषतः, अचिरांशुविलासचञ्चला लक्ष्मीः आनुषङ्गिकं, फलं, ननु ॥ १९ ॥

सुधा—अभिमानधनस्य = गौरवरक्षणैकलक्ष्यस्य, वा वैरनिर्यातनमात्रविलक्ष्यस्येत्यर्थः गत्वरैः = गमनशीलैः, अस्थायिभिरिति यावत् । असुभिः = प्राणैः, स्थास्नु = स्थिरम् सदा वर्तमानमित्यर्थः । यशः = कीर्तिम् चिचीषतः = संग्रहीतुमिच्छतः, अचिरांशुविलासचञ्चला = विद्युत्स्फुरणवच्चपला, लक्ष्मीः = राजलक्ष्मीः, आनुषङ्गिकम् = आकस्मिकम्, फलं, ननु = निश्चितम् ॥

समासः—अभिमान एव धनं यस्य सोऽभिमानधनस्तस्य अभिमानधनस्य । अचिरम् अंशवो यस्याः सा अचिरांशुः, तस्याः विलासः स्फुरणम्, इव चञ्चला या सा अचिरांशुविलासचञ्चला ॥ १९ ॥

व्याकरणम्—गत्वरैः—गम् क्वरप् । स्थास्नु = स्था—स्नुः । चिचीषतः = चि—सन्—शतृ ॥ १९ ॥

वाच्यान्तरम्—अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषतः अचिरांशुविलासचञ्चलया, आनुषङ्गिकेण फलेन भूयते ननु ॥ १९ ॥

कोषः—'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः । 'स्थास्नुः स्थिरतरः स्थेयान्' इत्यमरः । यशः कीर्तिः समज्ञा च' इत्यमरः । 'अचिरांशुस्तडिद्विद्युत् चञ्चला चपला अपि' इति कोषः ॥ १९ ॥

सारार्थः—जातिकुलगौरवरक्षणैकलक्ष्यो महापुरुषो भुवनश्वरैः प्राणैः सदा स्थायि यश एव प्रधानं फलं मन्यते । नहि प्राणस्य रक्षां कुर्वन् अयशः स्वीकरोति । तत्र युद्धे कृते धनक्षयः स्यात्ततोऽप्ययशो भवतु न काऽपि हानिरेव च, किन्तु धनं क्षणिकं मन्यते, मुख्यं स्थायि वस्तु यश एव पश्यति ॥ १९ ॥

भावार्थः—गौरव ही धन है जिसका ऐसे लोग विनाशशील प्राणों से अविनाशी को जमा करने की इच्छा करते हुये बिजली की चमक की तरह लक्ष्मी का संयोग क्षणिक समझते हैं ॥ १९ ॥

नन्वल्पस्य मानस्य हेतोः कथं प्राणत्यागः समर्थ्यते अत्रोक्तं यतः 'जीवन्नरो भद्रशतानि पश्येत्' इत्याशङ्क्याह—

ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जनः ।
अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः ॥ २० ॥

ज्वलितमिति । जनो भस्मनां चयं पुञ्जम् आस्कन्दति अधितिष्ठति । [illegible]
[illegible] नाक्रामतीति भावः । ज्वलितं ज्वलन्तम् । [illegible] च । 'अभिभूतिः—' इत्यमरः [illegible]

चकाराद्वर्तमानार्थत्वम्। हिरण्यं रेतो यस्य तं हिरण्यरेतसमग्निं नास्कन्दति। कुतः करत्वादिति भावः। अतो हेतोर्मानिनोऽभिभूतिभयात्प्राणलाभेन तेजस्यागोपरिमभविष्यतीति भयादसूनेव सुखमक्लिष्टमुज्झन्ति, त्यजन्ति, धाम तेजस्तु नोज्झन्ति। मानहानिकराज्जीवनात्स्वतेजसा मरणमेव वरमित्यर्थः। पूर्वं तरश्लोकवदर्थान्तरन्यासः।

अन्वयः—जनः भस्मनां, चयम्, आस्कन्दति ( किन्तु ) ज्वलितं, हिरण्यरेतसं न, ( आस्कन्दति ) अतः, अभिभूतिभयात्, सुखम् असून्, उज्झन्ति, धाम, न ( उज्झन्ति ) ॥ २० ॥

सुधा—जनः लोकः भस्मनाम् = भसितानाम्, चयम् = समुहम्, आस्कन्दति = आक्रामति। किन्तु, ज्वलितम् = प्रज्वलितम्, सोष्माणमित्यर्थः। हिरण्यरेतसम् = अग्निं न = नहि, आस्कन्दति, अतः = अस्मात्कारणात्, मानिनः = कुलगौरववन्तः, अभिभूतिभयात् = अपमानभयात्, सुखम् = अव्ययम्, असून् = प्राणान् अपि, उज्झन्ति = त्यजन्ति, परन्तु, धाम = तेजः, विक्रमशालित्वं न उज्झन्ति। तेजोवन्तं शत्रुर्नाभिभवति ॥ २० ॥

समासः—हिरण्यं रेतो यस्य स हिरण्यरेतास्तं हिरण्यरतसम्, अभिभूतेर्भयमभिभूतिभयम्, तस्मादभिभूतियात् ॥ २० ॥

व्याकरणम् - आस्कन्दति = आ + स्कन्द् + लट् । ज्वलितम् = ज्वल + क्त। उज्झन्ति = उज्झ् + लट् ॥ २० ॥

वाच्यान्तरम्—जनेन भस्मनां चयः आस्कन्द्यते, किन्तु ज्वलितोऽग्निर्न। अतो मानिभिः अभिभूतिभयात् असवः सुखम्, उज्झ्यन्ते, किन्तु धाम नेति ॥ २० ॥

कोषः—'हिरण्यरेता हुतभुग्दहनो हव्यवाहन' इत्यमरः। 'समुदायः समुदयः समवायश्चयो गणः इत्यमरः। 'भूतिर्भसितभस्मनि' इत्यमरः 'धाम रश्मौ गृहे देहे तेजस्यापि निगद्यते' इति ॥ २० ॥

सारार्थः—सामर्थ्यवन्तं न कोऽप्याक्रामति, दुर्बलं तु सर्वे आक्रामन्ति। अत इदं ज्ञात्वा सामर्थ्यवान् भव, सामार्थ्यवन्तस्तु प्राणान् प्रत्युत त्यक्तुमिच्छन्ति किन्तु स्वतेजो न कदापि मुञ्चन्ति ॥ २० ॥

सारार्थः—लोग राख की ढेर पर चल सकते हैं, पर प्रज्वलित आग पर नहीं। इसलिये तेजस्वी लोग अपमान के डर से प्राण को बिना तकलीफ छोड़ते हैं पर तेज नहीं छोड़ते क्योंकि प्राण से विशेष तेज को ही मानते हैं ॥ २० ॥

अथवा किमत्र प्रयोजनचिन्तया। किन्तु तेजस्विनामयं स्वभाव एव यजिगीषुत्वमित्याशयेनाह—

किमपेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ॥ २१ ॥

किमिति—मृगाधिपः सिंहः किं फलं प्रयोजनमपेक्ष्य ध्वनतो गर्जतः। धनस्तीति

धरा। पयांस्यच् पयसां धरास्ताम्पयोधरान्मेघान्प्रार्थयतेऽभियाति 'याच्ञायामभि-धाने च प्रार्थना कथ्यते बुधैः' इति केशवः। यद्वा वरुणद्वीत्यर्थः। प्रा अर्थयते। 'प्रा स्याद्याच्ञाऽवरोधयोः, इत्यभिधानात्प्रा अवरोधेन प्रा इति तृतीयान्तरम्। आका-रान्तस्य प्राशब्दस्य योगविभागात् 'आतो धातोः' इत्याल्लोपः। तथापि महीयसो महत्तस्य सा प्रकृतिः खलु यया प्रकृत्याऽन्यसमुन्नतिं परवृद्धिं न सहते। महतः परभञ्जनमेव पुरुषार्थः इत्यर्थः। पूर्ववदलङ्कारः ॥ २१ ॥

अन्वयः—मृगाधिपः, किं फलम्, अपेक्ष्य, ध्वनतः पयोधरान् प्रार्थयते। सा महीयसः प्रकृतिः खलु। यया अन्यसमुन्नतिं न सहते ॥ २१ ॥

सुधा—मृगाधिपः = मृगेन्द्रः, सिंह इति यावत्, किम् = किंरूपम्, फलम् = प्रयो-जनम्, वा लाभम्, अपेक्ष्य = उद्दिश्य, मनसि निश्चित्येति भावः ध्वनतः = गर्जतः, पयोधरान् = जलधरान्, मेघानित्यर्थः। प्रार्थयते = याचते, अर्थात् किमपीति। तत् कथं तदन्तं वारिदं ज्ञात्वा सिंहो गर्जतीत्याह—सा = अन्योत्कर्षामर्षणा, मही-यसः = गरीयसः, मनस्विन इत्यर्थः। प्रकृतिः—स्वभावः। खलु = किल, वर्तते यया = प्रकृत्या, अन्यसमुन्नतिम् = पराभ्युदयम्, न सहते = न मर्षयति, महान् इति शेषः। शत्रोरुत्कर्षनाशनमेव महतः पुरुषार्थफलम् ॥ २१ ॥

समासः—मृगाणामधिपः मृगाधिपः। धरन्तीति धराः पयसां धराः पयोधराः स्तान् पयोधरान्। अन्यस्य समुन्नतिरन्यसमुन्नतिस्तामन्यसमुन्नतिम् ॥ २१ ॥

व्याकरणम्—अपेक्ष्य = अप + ईक्ष + क्त्वा + ल्यप्। प्रार्थयते = प्र + अर्थ + लट्। सहते = सह + लट् ॥ २१ ॥

वाच्यान्तरम्—मृगाधिपेन किं फलमपेक्ष्य ध्वनन्तः पयोधराः प्रार्थ्यन्ते तथा महीयसः प्रकृत्या भूयते, यया अन्यसमुन्नतिः न सह्यते ॥ २१ ॥

कोषः—'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः। 'संसिद्धिप्रकृती त्विमे'। 'स्वरूपं च स्वभावश्च निसर्गश्च' इत्यमरः। 'निषेधवाक्यालङ्कारजिज्ञासाऽनुनये खलु' इत्यमरः॥

सारार्थः—भूस्थोऽपि सिंहः आकाशगतस्य मेघस्य गर्जनं श्रुत्वा 'अयं कोऽप्यस- म्त्समशब्दकरोऽन्यः' इति धिया तं प्रति गर्जति। एवं महतां स्वभाव एव येन प्रतिपक्षिण उत्कर्षं दृष्ट्वा स्वस्यापि तदधिकोत्कर्षाय यतते ॥ २१ ॥

भावार्थः—सिंह गर्जते हुए बादल से क्या कुछ माँगता है ? ( नहीं उसको डपटता है ) यह महान् लोगों ( बड़ों ) की आदत होती है कि जिससे वे औरों की उन्नति नहीं सहते ॥ २१ ॥

संप्रति उक्तप्रयोजनं निगमयति—उक्तार्थोपसंहरणं निगम उच्यते—

कुरु तन्मतिमेव विक्रमे नृप निर्धूय तमः प्रमादजम्।

ध्रुवमेतदवेहि विद्विषां त्वदनुत्साहहता विपत्तयः ॥ २२ ॥

कुरु तदिति । हे नृप, तत्तस्मादुक्तरीत्या पराक्रमोत्साहयोर्हेतुत्वाद्धेतोः 'यत्तदस्ततो हेतौ' इत्यमरः । प्रमादजं तमो मोहं निर्धूय निरस्य विक्रमे पौरुष एव मतिं कुरु । विक्रममेवाङ्गीकुरु, नतूपायान्तरमित्यर्थः । न च विक्रमवैफल्यशङ्का कार्येत्याह—ध्रुवमिति । विद्विषां विपत्तयस्त्वदनुत्साहहतास्तवानुत्साहेनाभ्यवसायेन हताः प्रतिबद्धाः । अन्यथा प्रागेव विपद्येरन्निति भावः । इत्येतद्ध्रुवं निश्चितमवेहि विद्धि । 'ध्रुवं नित्ये निश्चिते च' इति शाश्वतः ॥ २२ ॥

अन्वयः—हे नृप, तत्, प्रमादजं, तमः, निर्धूय, विक्रमे, एव मतिं कुरु। विद्विषां विपत्तयः, त्वदनुत्साहहताः ( सन्ति )। एतद्, ध्रुवम्, अवेहि ॥ ॥

सुधा—हे नृप = हे राजन्, तत् = तस्मात्कारणात्, प्रमादजम् = अनवधानताजनितम्, तमः = मोहम्, निर्धूय = निरस्य, दूरीकृत्येत्यर्थः । विक्रमे = पराक्रमे मतिं = बुद्धिम्, कुरु = विधेहि, नान्यथा कार्यसिद्धिरित्यर्थः । तथाहि, विद्विषाम् = शत्रूणाम्, विपत्तयः = विपदः, क्लेशा इत्यर्थः । त्वदनुत्साहहताः = भवदनुद्योगक्षीणाः, अर्थाद्यदा भवानुत्साहमङ्गीकरिष्यति, तदा तेषां विपत्तयो जनिष्यन्ति । यावदेव भवानुद्योगतत्परो न, तावदेव तेषां विपत्तयो न, अपितु सम्पत्तयः सन्ती एतत् = इति, ध्रुवम् = निश्चितम्, अवेहि = जानीहि । नास्त्यत्र सन्देहलेशोऽपीति शेषः ॥ २२ ॥

समासः—प्रमादाज्जायते इति प्रमादजस्तं प्रमादजम् । न उत्साह इत्यनुत्साहः तव अनुत्साह इति त्वदनुत्साहस्तेन त्वदनुत्साहेन हता इति त्वदनुत्साहहताः ॥२२॥

व्याकरणम्—कुरु = कृ + लोट् । निर्धूय = निर् + धूञ् + क्त्वा + ल्यप् । अवेहि = अव + इण् + लोट् ॥ २२ ॥

वाच्यान्तरम्—हे नृप ! तत् प्रमादजं तमो निर्धूय विक्रमे मतिः क्रियताम् । विद्विषां विपत्तिभिः त्वदनुत्साहहताभिर्भूयते, एतद् ध्रुवं भवता अवेयताम् ॥२२॥

कोषः—'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः' इत्यमरः । 'शक्तिः पराक्रमः प्राणो विक्रमस्त्वतिशक्तिता' इत्यमरः । 'प्रमादोऽनवधानता' इत्यमरः ॥२२॥

सारार्थः—यतो विक्रमेण विना कार्यसिद्धिर्न हि भवति, अतो भवताऽनुत्साहं परित्यज्य उद्योगतत्परेण भवितव्यम् । तावदेव शत्रोः सम्पदो वर्तन्ते, यावन्नभवतोत्साहो नाङ्गीकृतः । यदैव उत्साहमङ्गीकरिष्यति तदैव शत्रोर्विपत्तयः उत्पत्स्यन्ते ।

भावार्थः—हे महाराज ! आप भूल से किये हुए मोह को दूर कर उद्योग में बुद्धि लगाइये । आप ही के अनुत्साह ( अनुद्योग = आलस्य ) से दुश्मनों की विपत्तियाँ बढ़ेंगी, यह आप निश्चित समझें ॥ २२ ॥

न च नः पराजयशङ्का कार्येत्याह—

द्विरदानिव दिग्विभाविताश्चतुरस्तोयनिधीनिवायतः ।
प्रसहेत रणे तवानुजान् द्विषतां कः शतमन्युतेजसः ॥ २३ ॥

द्विरदानिति । दिग्विभावितान्दिक्षु प्रसिद्धांस्तानायत आगच्छतः । आङ्पूर्वादिण्धातोः शतृप्रत्ययः । चतुरो द्विरदान्दिग्गजानिव, तयोक्तविशेषणांश्चतुरस्तोयनिधीनिव, रण आयतो दिग्विभावितान्छतमन्युतेजस इन्द्रविक्रमांश्चतुरस्तवानुजान्द्विषतां मध्ये कः प्रसहेत । सोढुं शक्नुयादित्यर्थः । 'शकि लिङ् च' इति शक्यार्थे लिङ् । अतो निःशङ्कं प्रवर्तस्वेति भावः ॥ २३ ॥

अन्वयः—द्विषतां, कः, दिग्विभावितान्, चतुरः, द्विरदान्, इव, तोयनिधीन्, इव, रणे, आयतः शतमन्युतेजसः, तव, अनुजान्, प्रसहेत ? ॥ २३ ॥

सुधा—द्विषतां = शत्रूणाम्, पक्षे इति शेषः, कः = को वीरः वर्त्तते य इति गजान्, इव । रणे = समरे, चतुरः = चतुर्मितान्, तोयनिधीन् = समुद्रान्, इव, आयतः = आगच्छतः, शतमन्युतेजसः = इन्द्रसमविक्रमान्, तव = युधिष्ठिरस्य, अनुजान् = कनिष्ठान्, अस्मदादीनित्यर्थः प्रसहेत = सोढुं शक्नुयात् ? न कोऽपि तादृशोऽस्मत्प्रतिपक्षयोग्यो वीरवरो लक्ष्यते विपक्षपक्षे इति भावः ॥ २३ ॥

समासः द्वौ रदौ वर्त्तेते येषां ते द्विरदास्तान् । दिक्षु विभाविता दिग्विभावितास्तान् दिग्विभावितान् । तोयानां निधयस्तोयनिधयस्तांस्तोयनिधीन् । शतं मन्यवो यस्य सः शतमन्युः, शतमन्योस्तेज इव तेजो येषां ते शतमन्युतेजसस्तान् शतमन्युतेजसः ॥ २३ ॥

व्याकरणम्—आयतः = आ + इण् + शतृ, प्रसहेत = प्र + षह् + लिङ् ॥ २३ ॥

वाच्यान्तरम्—दिग्विभाविताः द्विरदा इव चत्वारस्तोयनिधय इव आयन्तः शतमन्युतेजसः तव अनुजाः, द्विषतां मध्ये केन प्रसह्येरन् ॥ २३ ॥

कोषः—'दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः' इत्यमरः । 'अभ्यामर्द समराजीकरणाः कलहविग्रहौ' इत्यमरः । 'जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः' इत्यमरः ॥ २३ ॥

सारार्थः—यदि भवानधुना परमितपरिजनतयाऽस्माकं युद्धकरणं नोचितमिति जानाति तदा वर्णं विचारयतु, यत् भवत इन्द्रसमविक्रमाः भ्रातरो वयं च दिग्गजा इव आकारेण, युद्धे तु सागरा इवामतिक्रमणीयाश्च स्मः । तदाऽस्माकं चतुर्णां सम्मिलितानां पुरः शत्रुपक्षीयः को निजजयाकाङ्क्षितः क्षणं तिष्ठेत्, को न रसातलं याति यावत् नातिथिर्भविष्यतीति ॥ २३ ॥

भाषार्थः—चारों दिग्गजों के समान बलवान् और आकार से अपार सागर के

समान आक्रमण योग्य नहीं, ऐसे इन्द्र के समान पराक्रम वाले आपके भाइयों से दुश्मनों के पक्ष में कौन है ? जो ठहर कर क्षण भर युद्ध करे ॥ २३ ॥

आशीर्वादव्याजेन फलितमाह—

ज्वलतस्तव जातवेदसः सततं वैरिकृतस्य चेतसि।
विदधातु शमं शिवेतरा रिपुनारीनयनाम्बुसन्ततिः ॥ २४ ॥

ज्वलत इति। तव चेतसि सततं ज्वलतो वैरिकृतस्य जातवेदसः। क्रोधाग्नेरित्यर्थः शिवेतराऽशिवाऽमङ्गला। वैधव्यदुःखजनकत्वादिति भावः। रिपुनारीनयनाम्बुसन्ततिर्वैरिवनिताऽश्रुप्रवाहः शमं विदधातु। वैरिकृतस्य क्रोधस्य वैरिवधमन्तरेण शान्तसम्भवादवश्यं तद्वधस्त्वया कर्तव्य इत्यर्थः। क्रोधस्य विषयस्य निगरणेन विषयिणो जातवेदस एवोपनिबन्धादतिशयोक्तिरलङ्कारः। तदुक्तम्—'विषयस्यानुपादानाद्विषय्युपनिबध्यते। यत्र सातिशयोक्तिः स्यात्कवेः प्रौढोक्तिजीविता॥' इति। तत्रापि क्रोधस्य जातवेदसो भेदेऽप्यभेदाध्यवसायाद्भेदेऽभेदरूपा। तत एवाम्बुनिर्वाप्यत्वोक्तिश्च घटते। तथा च तथाम्बुसेकेनाग्निः शाम्यति तथा शत्रुवधेन क्रोध इत्यौपम्यं गम्यते ॥ २४ ॥

अन्वयः—शिवेतरा, रिपुनारीनयनाम्बुसन्ततिः, तव चेतसि सततं, वैरिकृतस्य, ज्वलतः, जातवेदसः शमं विदधातु ॥ २४ ॥

सुधा—शिवेतरा=अमङ्गला, अभद्रेति यावत्, वैधव्यक्लेशोत्पन्नत्वादिति भावः। रिपुनारीनयनाम्बुसन्ततिः = शत्रुस्त्रीनेत्राश्रुधारा ( कर्त्री ), तव = युधिष्ठिरस्येत्यर्थः। चेतसि = मनसि, सततम्=अनिशम्, नित्यमिति यावत्। वैरिकृतस्य=शत्रुप्रयुक्तस्य ज्वलतः = प्रदीप्तस्य, उच्छिखस्येत्यर्थः। जातवेदसः = अग्नेः, शत्रुविहितमहापराधजनितदुःखाग्निज्वालया इति भावः। शमम् = उपशान्तिम्, विदधातु = करोतु। अग्निर्शीतलधारायाः पातेन शाम्यति, तथैव तव दुःखाग्निरपि वैरिरमणीवैधव्यजनिताश्रुधारया शाम्यतु इति भावः ॥ २४ ॥

समासः—वैरिणा कृतयः वैरिकृतः तस्य वैरिकृतस्य। शिवादितरा शिवेतरा। नयनानामम्बूनि, तेषां सन्ततिः, नयनाम्बुसन्ततिः। रिपूणां नार्यः रिपुनार्यस्तासां नयनाम्बुसन्ततिरिति रिपुनारीनयनाम्बुसन्ततिः ॥ २४ ॥

व्याकरणम्—ज्वलतः = ज्वल् + शतृ। विदधातु = वि + धा + लोट् ॥ २४ ॥

वाच्यान्तरम्—शिवेतरया रिपुनारीनयनाम्बुसन्तत्या तव चेतसि सततं ज्वलतः वैरिकृतस्य जातवेदसः शमः विधीयताम् ॥ २४ ॥

कोषः—'कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात्,' इत्यमरः। सततानारताश्रान्तसन्ततताविरतानिशम्' इत्यमरः। 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः। 'समथस्तु शमः शान्तिः' इत्यमरः ॥ २४ ॥

सारार्थः—तावत्तव दुःखराशिर्न विलीनो भविष्यति, यावत्ते रिपवो न मरिष्यन्ति, अतो निजदुःखरोगस्य भेषजं शत्रुसंहाररूपं कुर्विति ॥ २४ ॥

भाषाऽर्थः—आप के हृदय में वैरियों के कारण हरदम जलती हुई दुःखरूपी आग को अमङ्गल दुश्मन की रमणियों की आँसू की धारा बुझाये ॥ २४ ॥

इति दर्शितविक्रियं सुतं मरुतः कोपपरीतमानसम् ।
उपसान्त्वयितुं महीपतिर्द्विरदं दुष्टमिवोपचक्रमे ॥ २५ ॥

इतीति । इत्युक्तरीत्या दर्शिता विक्रिया विकारो वागारम्भात्मको येन तं कोपपरीतमानसं कोपाक्रान्तचित्तम् । इदं विशेषणद्वयं द्विरदेऽपि योज्यम् । मरुतः सुतं भीमं महीपतिर्युधिष्ठिरो दुष्टं द्विरदमिव । एतेन भीमस्य शौर्यमेव, न बुद्धिरस्तीति गम्यते । उपसान्त्वयितुमनुनेतुमुपचक्रमे प्रवृत्तः । 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदम् । राज्ञा तावदुपकारविशेषापेक्षया कथञ्चिद्वशो जनः शनैर्द्विरदवद्वशीकरणीयः, न तु त्याज्य इति भावः ॥ २५ ॥

अन्वयः—महीपतिः, इति, दर्शितविक्रियं, कोपपरीतमानसं, मरुतः सुतम्, दुष्टं द्विरदम्, इव, उपसान्त्वयितुम्, उपचक्रमे ॥ २५ ॥

सुधा—महीपतिः = पृथिवीपतिः, युधिष्ठिर इत्यर्थः । इति = इत्थम्, पूर्वोक्तम् चतुर्विंशतिश्लोकोक्तिरूपम् । दर्शितविक्रियम् = प्रकटीकृतमनःक्षोभम्, कोपपरीतमानसम् = क्रोधव्याप्तचित्तम्, मरुतः = वायोः, सुतम् = पुत्रम्, भीममित्यर्थः । तस्य वायोरंशाज्जनितत्वात्, दुष्टं = मदमत्तम्, द्विरदम् = गजम्, इव, उपसान्त्वयितुम् = शामयितुं अनुनेतुम्, वा, उपचक्रमे = आरब्धवान्, प्रवृत्त इत्यर्थः ॥ २५ ॥

समासः—दर्शिताः विक्रिया येन स दर्शितविक्रियस्तं दर्शितविक्रियम् । कोपेन परीतं मानसं यस्य सः कोपपरीतमानसस्तं कोपपरीतमानसम् । मह्याः पतिर्महीपतिः । द्वौ रदौ ( मुखनिर्गतौ ) यस्य स द्विरदस्तं द्विरदम् ॥ २५ ॥

व्याकरणम्—उपसान्त्वयितुम् = उप + सान्त्व + णिच् + तुमुन् । उपचक्रमे = उप + क्रम + लिट् ॥ २५ ॥

वाच्यान्तरम्—महीपतिना इति दर्शितविक्रियं कोपपरीतमानसं मरुतः सुतम् उपसान्त्वयितुं दुष्टं द्विरदम् इव उपचक्रमे ॥ २५ ॥

कोषः—'आत्मजस्तनयः सूनुः सुतः पुत्रः' इत्यमरः । 'समीरमारुतमरुज्जगत्प्राणसमीरणाः' इत्यमरः । 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः । 'दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः' इत्यमरः ॥ २५ ॥

सारार्थः—एवं पूर्वोक्तरूपेण वायुपुत्रं क्रुद्धं भीमं युधिष्ठिरः [illegible] तस्य विघातुं तत्परो बभूव यथा कश्चिन्महामात्रो मदमत्तं हस्तिनं [illegible] प्रकृतिस्थं करोति ॥ २५ ॥

भावार्थः—इस तरह मन के क्षोभ को दर्शाया है जिसने और क्रोध से भरा है दिल जिसका ऐसे वायुपुत्र ( भीमसेन ) को, महाराज युधिष्ठिर अपने कोमल वचनों से ठण्डा करने के लिए प्रस्तुत हुए, जैसे कोई मतवाले हाथी को वश में लाने के लिये उपाय करे ॥ २५ ॥

प्रथमं तावत्स्तुत्यादिभिः प्रसादयति—

**अपवर्जितविप्लवे शुचौ हृदयग्राहिणि मङ्गलास्पदे ।**
**विमला तव विस्तरे गिरां मतिरादर्श इवाभिदृश्यते ॥ २६ ॥**

अपवर्जितेति । विप्लवः प्रमाणबाधः । अन्यत्र बाह्यमलसंक्रमः । सोऽपवर्जितो यस्य तस्मिन्नपवर्जितविप्लवे । शुचौ सौशब्द्यं लोहशुद्धिश्च शुचित्वम् । तद्वतीत्यर्थः । अत एव हृदयग्राहिणि मनोरमे मङ्गलास्पदे । एकत्र हितार्थप्रतिपादकत्वादन्यत्र मङ्गलवस्तुत्वाच्च श्रेयस्करे । 'रोचनं चन्दनं हेम मृदङ्गं दर्पणं मणिम् । गुरुमग्निं तथा सूर्यं प्रातः पश्येत्सदा बुधः ॥' इति पुराणवचनात् । तव गिरां विस्तरे वाक्प्रपञ्चे । 'प्रथने वावशब्दे' इति घञ्प्रतिषेधात् 'ऋदोरप्' इत्यप् । अत एव 'विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः' इत्यमरः । मतिस्त्वद्बुद्धिरादर्शे दर्पण इव । 'दर्पणे मुकुरादर्शौ' इत्यमरः । विमला विशदाऽभिदृश्यते । वाग्वैशद्यादेव मतिवैशद्यमनुमीयते तत्पूर्वकत्वात्तस्येत्यर्थः ॥ २६ ॥

अन्वयः—अपवर्जितविप्लवे, शुचौ, हृदयग्राहिणी, मङ्गलास्पदे तव गिरां विस्तरे ( तव ), विमला मतिः, आदर्शे, इव, अभिदृश्यते ॥ २६ ॥

सुधा—अपवर्जितविप्लवे = प्रमाणयुक्ते, शुचौ = शब्दसौष्ठवे, हृदयग्राहिणि = मनोहरे, मङ्गलास्पदे = विजयप्रदे, तव भीमस्य, गिराम् = वाचाम्, विस्तरे = प्रपञ्चे तव, विमला = निर्मला, मतिः बुद्धिः, अपवर्जितविप्लवे = त्यक्तबाह्यमले, निर्मले इत्यर्थः । शुचौ = शुद्धकाचलोहादिरचिते, पूजादौ स्पर्शयोग्यत्वात् चिरस्थायित्वाच्चेति शेषः । हृदयग्राहिणि = हृदयादूर्ध्वावयवप्रतिबिम्बवति वा; दर्शनेन मनोहरे, मङ्गलास्पदे = कल्याणभाजने, यात्रायां प्रभाते च तद्दर्शनस्य मङ्गलजनकत्वात् । विस्तरे = असङ्कुचिते, महतीत्यर्थः, यत्र सम्यक् ऊर्ध्वाधोभागोऽवलोक्यते तादृशे, आदर्शे = दर्पणे, काचपदार्थे, इव, अभिदृश्यते = अवलोक्यते । यथा दर्पणे मुखमवलोक्यते स्पष्टं, तथैव वचनसमूहेऽपि मतवुद्धिरवलोक्यते इति भावः ॥ २६ ॥

व्याकरणम्—अभिदृश्यते = अभि + दृश + लट् ॥ २६ ॥

वाच्यान्तरम्—अपवर्जितविप्लवे, शुचौ, हृदयग्राहिणि, मङ्गलास्पदे, तव, गिरां विस्तरे तव, मतिम्, आदर्शे, इव अभिपश्यामि ॥ २६ ॥

कोषः—'प्रमाणबाधः किल विप्लवः स्यात्तद्युक्तियुक्तं यथार्थं मतं तत्' इति । 'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः ।' ब्राह्मी तु भारती भाषा

गीर्वाग्वाणी सरस्वती' इत्यमरः। 'विस्तरो विग्रहो व्यासः स च शब्दस्य विस्तरः।' दर्पणे मुकुरादर्शौ' इत्यमरः॥ २६॥

सारार्थः—यथा निर्मले दर्पणे सुस्पष्टं स्वमुखं विलोक्यते, तथैव तव परिशुद्धे वाक्प्रपञ्चे तव मत्याः स्वरूपं दृश्यते॥ २६॥

साराऽर्थः—युक्ति युक्त; पवित्र मनोहर, मङ्गलप्रद तुम्हारी बातों के समूह में तुम्हारी बुद्धि उसी तरह साफ दिखलाई देती है, जैसे शीशे ( आईने ) में किसी का प्रतिबिम्ब दिखाई देता है॥ २६॥

अथ युग्मेनाह—

स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम्।
रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित्॥ २७॥

स्फुटेति। उपपत्तिरिति च पदैः सुप्तिङन्तशब्दैः स्फुटता विस्पष्टार्थता नापाकृता न त्यक्ता अर्थगौरवमर्थभूयस्त्वं च न न स्वीकृतम्। स्वीकृतमेवेत्यर्थः। [illegible]र्थगौरवाभावनिवर्तनार्थं नञ्द्वयम्। 'सम्भाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ' इति वामनः। गिरां पदानामवान्तरवाक्यानां च पृथगर्थता भिन्नार्थता। अपुनरुक्तार्थतेति यावत्। रचिता कृता तथा क्वचिदपि सामर्थ्यं गिरामन्योन्यसाकाङ्क्षत्वं नापोहितं न वर्जितम्। अन्यथा दशदाडिमादिशब्दवदेकवाक्यता न स्यात्'। यथाहुः—'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इति। नन्वर्थगौरवमित्यत्र कथं षष्ठीसमासः 'पूरणगुण—' इत्यादिना प्रतिषेधात्। नैष दोषः। ये शुक्लादयः शब्दा गुणे गुणिनि च वर्तन्ते, यथा पटस्य शौक्ल्यं शुक्लः पट इति च तेषामेवात्र निषेधात्। ये पुनः स्वतो गुणमात्रवचना यथा गौरवं प्राधान्यं रसो गन्धः स्पर्श इत्येवमादयः तेषामनिषेधात् तथा 'तस्यैव गुणैः षष्ठी समस्यते' इति वचनाद् बहुलमभियुक्तप्रयोगदर्शनाच्च। बलाकायाः शौक्ल्यमित्यादौ तु भाष्यकारवचनादसमासः। अत एवाह वामनः—'पत्रपीतिमादिषु गुणवचनसमासो वाक्यित्वात्' इति॥ २७॥

अन्वयः—पदैः, स्फुटता, न अपाकृता। अर्थगौरवं, च, न, स्वीकृतम्, (इति), न, गिरां पृथगर्थता, रचिता, क्वचित्, सामर्थ्यं, न, अपोहितम्॥ २७॥

सुधा—पदैः = सुप्तिङन्तशब्दैः, 'सुप्तिङन्तं पदम्' इत्यनुशासनात्। स्फुटता = स्पष्टार्थता, न अपाकृता = न त्यक्ता, त्वयेति शेषः सर्वत्र [illegible] गर्भावबोधो जायते इति भावः परन्त्वेवं विभ्रमेयु—अर्थगौरवं न [illegible] परिहारार्थमाह—अर्थगौरवम् = [illegible], न स्वीकृतम् = [illegible] इति न, अर्थात्स्वीकृतमेव, स्फुटत्वेऽपि शब्दस्येति शेषः। गिराम् = वाचाम्, पृथगर्थता = अपुनरुक्तार्थता, स्वीकृता, न क्वचित् [illegible] वा पृथगर्थता = भिन्नार्थता, [illegible]। अत्र 'च' [illegible] देहलीदीपन्यायेन [illegible]

न आच्छादितम्, गोपितमित्यर्थः अर्थात् सर्वत्रोत्साहशक्तिस्त्वया स्वकुलोचित स्वभावेन वर्णितेति भावः ॥ २७ ॥

समासः—अर्थस्य गौरवमर्थगौरवम् । पृथक् अर्थः यासां ताः पृथगर्थास्तासां भावः पृथगर्थता ॥ २७ ॥

व्याकरणम्—अपाकृता = अप + आङ् + कृ + क्तः + टाप् । स्वीकृतम् = स्व + च्विः कृ + क्तः । रचिता = रच् + क्तः + टाप् । अपोहितम् = अप + वह + क्तः ॥ २७ ॥

वाक्यान्तरम्—पदानि स्फुटतां न अपाकृतवन्ति । भवान् अर्थगौरवं न स्वीकृतवान् इति, न, गिरां पृथगर्थतां न रचितवान् । क्वचित्सामर्थ्यं न अपोहितवान् ॥ २७ ॥

कोषः—'संभाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधौ' इति वामनः । 'अभावे नह्यनो नापि मा स्म माऽलं च वारणे' इत्यमरः ॥ २७ ॥

सारार्थः—हे भीम ! त्वया प्रतिपाद्येषु वचनेषु, सर्वत्र सरलतः, अर्थबहुल्यम्, पुनरुक्तता पराक्रमविशेषता च प्रदर्शिता ॥ २७ ॥

भाषाऽर्थः—हे भीम ! पदों में जो सरलता, तुमने दिखाई और थोड़े शब्दों में अधिक अर्थ का प्रयोग किया, कहीं भी पुनरुक्ति ( जो एक बार वही दूसरी बार ) नहीं कही और भी अपने पराक्रम को छिपाया नहीं ॥ २७ ॥

उपपत्तिरुदाहृता बलादनुमानेन न चागमः क्षतः ।
इदमीदृगनीदृगाशयः प्रसभं वक्तुमुपक्रमेत कः ॥ २८ ॥

उपपत्तिरिति । किञ्च बलाद् बलमाश्रित्य । कर्मणि ल्यब्लोपे पञ्चमी बलात् उपपत्तिर्युक्तिरुदाहृता । पराक्रमपक्ष एव श्रेयानिति युक्तिरुक्तेत्यर्थः उचितं चैतत् त्महावीरस्येति भावः । तथाऽनुमानेन युक्त्याऽऽगमः शास्त्रं च न क्षतो न दूषितः किन्त्वागमाविरुद्धमेवोक्तम् । अन्यथा तद्विरोधादनुमानस्यैव प्रामाण्यभङ्गापत्तेरिति भावः ईदृगित्थं चप्रियुक्तमिदं वचनमविद्यमान ईदृगाशय इत्थं वाक्प्रयुक्ताभिप्रायो यस्य सोऽनीदृगाशयः । 'अभिप्रायश्छन्द आशयः' इत्यमरः कः प्रसभं हठादवक्तुमुपक्रमेत । न कोऽपीत्यर्थः । इत्थं वक्तुमुपक्रमितैव नास्ति, वक्ता तु दूरापास्त एवेति भावः । केचिदेतच्छ्लोकत्रयं निन्दापरत्वेनापि योजयन्ति । तदसत् हितोपदेशमात्रतत्परस्यातिवत्सलस्य राज्ञो मत्सरिण इव महावीरे भ्रातरि विधेये सर्वानर्थमूलनिन्दातात्पर्यकल्पनाऽनौचित्यादिति ॥ २८ ॥

अन्वयः—बलात्, उपपत्तिः उदाहृता । अनुमानेन, च आगमः, न क्षतः । अनीदृगाशय., कः, ईदृक्, इदं, प्रसभं, वक्तुम् उपक्रमेत ॥ २८ ॥

सुधा—बलात् = बलमाश्रित्य, पौरुषमङ्गीकृत्येत्यर्थः । उपपत्तिः = युक्तिः, उदाहृता = उक्ता, त्वया भीमेनेति शेषः । अनुमानेन च = तर्केणापि, आगमः = शास्त्रं न क्षतः = न बाधितः, अर्थात्सर्वं शास्त्रानुकूलमेव वचः समुदीरितं त्वयेति आशयः । अनीदृगाशयः = ईदृशाभिप्रायरहितः कः = अन्यः जन इति शेषः । ईदृक्

मम:, अवितृप्ततया = असन्तुष्टतया, तात्कालिकात्मविभवपारावारास्पत्वावबोधे- अन्यासन्तोषतयेत्यर्थः । निर्णयम् = निश्चयम्, एव धावति = अनुसरति । यद्- यद्यधुनाऽस्माद्विपक्षोऽस्मद्बलैरधिकतरोऽस्ति, युद्धे कदाचित्प्रबलस्यापि पराजयः हीनबलस्य तु बहुधा पराजय एव दृश्यते श्रूयते, अतोऽस्मिन् समये कृते युद्धे नियमेन ममैव जयः स्यादिति नानुमीयते । अतः पूर्वं प्रकर्षलाभाय उपायं कृत्वा प्रबलो भूत्वा नियतं जेष्याम्येवेति मनसि निश्चयः स्याद्यदा, तदा करिष्यामियुद्धमिति भावः ।, विधेयेषु = कर्त्तव्यकार्येषु, सन्धिविग्रहादिष्वित्यर्थः । विशेषसम्पदः = उत्कृष्टसम्पत्तयः, अवान्तरभूमानः, सुखम् = अक्लेशम्, अवसायितुम् = प्रत्यायितुम्, न क्षमाः = न समर्थाः भवन्ति इति शेषः ॥ २९ ॥

समासः—न विशेषण तृप्त इत्यवितृप्तस्तस्य भावस्तत्ता अवितृप्तता तया अवितृप्ततया । विशेषाश्च ताः सम्पदः, विशेषसम्पदः ॥ २९ ॥

व्याकरणम्—धावति = धाव् + लट् । अवसाययितुम् = अव + षो + णिच् + तुमुन् ॥२९॥

वाच्यान्तरम्—तथापि मे हृदयेन अवितृप्ततया निर्णय एव धाव्यते । विधेयेषु विशेषसम्पद्भिः सुखम्, अवसाययितुम् न क्षमाभिर्भूयते ॥ २९ ॥

कोष:—'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' । 'क्षम शक्ते हिते त्रिषु' 'अथ सम्पदि । सम्पत्तिः श्रीश्च लक्ष्मीश्च' इति चामराः ॥ २९ ॥

सारार्थः—यद्यपि त्वया सर्वं युक्तियुक्तं नीतिशास्त्रानुसारमेवोक्तं; तथापीदानीं शत्रोः प्रबलतया रणकरणं समुचितमिव न पश्यामि । यदा जयकामयोग्या वयं भवामः तदा समरं विधास्यामः ॥ २९ ॥

भावार्थः—तो भी मेरा दिल असन्तोष के कारण अभी निर्णय ही की तरफ दौड़ता है । करने योग्य कर्मों में उसके सूक्ष्म भेद बिना कष्ट के प्रतीति कराने में समर्थ नहीं होते ॥ २९ ॥

वस्तुविशेषावधारणमन्तरेणैव प्रवृत्तिरित्याशङ्क्याह—

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ।। ३० ॥

सहसेति । क्रियत इति क्रिया कार्यं सहसा । अविमृश्येत्यर्थः । 'सहसेत्याकस्मिकाविमर्शयोः' इति गणव्याख्याने । स्वरादिपाठादव्ययम् । न विदधीत न कुर्वीत । कुतः । अविवेकोऽविमृश्यकारित्वं परमत्यन्तमापदां पदं स्थानम् । कारणमित्यर्थः । व्यतिरेकेणोक्तमर्थमन्वयेनाह—वृणत इति । गुणलुब्धा गुणलुभ्या इति सर्वत्र हेतूक्तिः । सम्पदः श्रियः । विमृश्य करोतीति विमृश्यकारी । 'उपपदमतिङ्' इति समासः । तं स्वयमेव वृणते भजन्ते हि । 'वृङ् सम्भक्तौ' इति धातुः । तस्मात्

मृश्यैव प्रवर्तितव्यमित्यर्थः । अत्र सहसा विधाननिषेधरूपविमृश्यकारित्वरूप-कारणस्यापन्निवृत्तिरूपव्यतिरेककार्येण समर्थनाद्वैधर्म्येणार्थान्तरन्यासः । द्वितीयार्धेन च स एव साधर्म्येणेति ज्ञेयम् ॥ ३० ॥

अन्वयः—सहसा, क्रियां न विदधीत । अविवेकः, परमापदां, पदं (भवति) । हि, गुणलुब्धाः, सम्पदः विमृश्यकारिणं, स्वयम्, एव, वृणते ॥ ३० ॥

सुधा—सहसा = अविचार्य, क्रियाम् = कार्यम्, न, विदधीत = कुर्वीत । चिरं विचार्य एव कार्यं करणीयमित्यर्थः । अविवेकः = अविचारः, अविचार्यकारित्वम्, परमापदाम् = विशेषदुःस्थितीनाम्, पदम् = स्थानम्, भवति । यो हि जनो विना विवेकं, हठात् किमपि कार्यं करोति, स च तत्फलं तु न खेव लभते प्रत्युत तत्र विशेषक्लेशो भोगार्थमापतति । हि = यतः, गुणलुब्धाः = शौर्यगाम्भीर्यादिविविध-गुणगृध्नव इत्यर्थः । सम्पदः = सम्पत्तयः, ऐश्वर्याणीति भावः विमृश्यकारिणम् = विचार्य कर्तारम्, जनमिति शेषः । स्वयम् = आत्मनैव, वृणते = भजन्ते, स्वीकुर्वते यथा कन्या बहूनां मध्ये कमपि स्वमत्यनुकूलं वरं वृणीते, तथैव सम्पत्तिरपि विमृश्यकारिणमेव भजते ॥ ३० ॥

समासः—न विवेकः, अविवेकः । परमा आपदः परमापदस्तासां परमापदाम् । विमृश्य करोतीति विमृश्यकारी, तं विमृश्यकारिणम् । गुणेषु लुब्धाः गुणलुब्धाः ॥

व्याकरणम्—विदधीत = वि + धा + विधिलिङ् । वृणते = वृङ् + लट् + त ॥ ३० ॥

वाच्यान्तरम्—सहसा क्रिया न विधीयेत । अविवेकेन परमापदां पदेन भूयते । हि गुणलुब्धाभिः सम्पद्भिः स्वयमेव विमृश्यकारी व्रियते ॥ ३० ॥

कोषः—'विपत्त्यां विपदापदौ' इत्यमरः । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रि-वस्तुषु' इत्यमरः । 'गृध्नस्तु गर्धनः । लुब्धोऽभिलाषुकस्तृष्णक् समौ लोलुपलोलुभौ' इत्यमरः । 'अथ सम्पदि । सम्पत्तिः श्रीश्च लक्ष्मीश्च' इत्यमरः ॥ ३० ॥

सरलार्थः—कस्यापि कार्यस्य करणात्पूर्वमेव तस्माल्लाभं हानिं च विचार्य लाभ-करं तत् कर्तव्यम्, यः किल विना विचारं कर्म करोति स प्रायः पश्चात्तापमनु-तापञ्च प्राप्नोत्येव । अथ च यो विचार्य किमपि करोति, स सर्वदा सुखमेधते । न हि तं कदाचिद् दुःखमापतति यतोऽविचारिता एव दुःखस्यापत्तम् ॥ ३० ॥

भाषाऽर्थः—बिना विचारे कुछ न करना चाहिये । क्योंकि विचार न करके करना ही सब विपत्तियों का स्थान है । क्योंकि गुण का लोभ रखनेवाली सम्पत्तियाँ स्वयं ही, विचारकर काम करनेवालों को स्वीकार करती हैं ॥ ३० ॥

ननु साहसिकस्यापि फलसिद्धिर्दृश्यत एव तत्किं विवेकेनेत्याह—

अभिवर्षति योऽनुपालयन्विधिबीजानि विवेकवारिणा ।
स सदा फलशालिनीं क्रियां शरदं लोक इवाधितिष्ठति ॥ ३१ ॥

अभीति । यः पुमान् विधीयन्ते इति विधयः कृत्यवस्तूनि बीजानीवेत्युप समासः । शरदं लोक इवेति वाच्यगतोपमाऽनुसारात् । तासि विधिबीजानि विवेको वारीव तेन विवेकवारिणा, पूर्ववत्समासः । अनुपालयन्प्रतीक्षमाणः सं भिवर्षति सिञ्चति । स पुमान् । फलं साधननिष्पाद्योऽर्थः, सस्यं च 'सस्ये हेतु फलम्' इत्युभयत्राप्यमरः । तच्छालिनीं क्रियां कर्म लोको जनः । "लोकस्तु भु जने' इत्यमरः । शरदमिव सदा नित्यमधितिष्ठति, सदा क्रियाफलं प्राप्नोत्येव कदाचिदुपभिचरतीत्यर्थः । साहसिकस्य काकतालीयन्यायेन फलसिद्धिर्विवेकि नियतेति भावः । अत्र फलशब्देन सस्यहेतुकृतयोरर्थयोरभेदाध्यवसायाच्छ्लेषमू तिशयोक्तिस्तदनुगृहीता चोपमेत्यनुसन्धेयम् ॥ ३१ ॥

अन्वयः—यः, विधिबीजानि, विवेकवारिणा, अनुपालयन् अभिवर्षति, सदा, फलशालिनीम्, क्रियाम्, लोकः, शरदम्, इव, अधितिष्ठति ॥ ३१ ॥

सुधा—यः = कश्चित् भूपः, विधिबीजानि = कर्त्तव्यकार्यनिदानानि, वि वारिणा = विचाररूपजलेन; अनुपालयन् = संरक्षन्, अभिवर्षति = सिञ्चति, सन् सदाः = सर्वदा, फलशालिनीम् = सस्यभरिताम्, सिद्धियुक्तामित्यर्थः । क्रिया कार्यम् । लोकः = कृषकः, यथा शरदम् = शरत्कालम्, आश्विनकार्त्तिकेतिमास मित्यर्थः, इव, अधितिष्ठति = प्राप्नोति । यथा कृषीवलोऽन्नानां बीजानि भूमौ उप्त्वा, जलेन सिञ्चन् कार्त्तिकान्ते, सस्यसमृद्धिमत् क्षेत्रं पश्यति । तथैव कार्यकर्ताऽपीति भावः ॥ ३१ ॥

समासः—विधय एव बीजानि, विधिबीजानि । विवेक एव वारि इति वि वारि, तेन विवेकवारिणा । फलेन शालते या सा फलशालिनी तां फलशालिनीम्

व्याकरणम्—अभिवर्षति = अभि + वृष् + लट् । अनुपालयन् = अनु + पा णिच् + शतृ । अधितिष्ठति + अधि + स्था + लट् ॥ ३१ ॥

वाच्यान्तरम्—विधिबीजानि विवेकवारिणा अनुपालयता येन अभिवृष्य तेन सदा लोकेन शरदिव फलशालिनी क्रिया अधिष्ठीयते ॥ ३१ ॥

कोषः—'विधिर्विधाने दैवे च' इत्यमरः । 'हेतुर्ना कारणं बीजं निदानं त्वा कारणम्' इत्यमरः । 'विवेकः पृथगात्मता' इत्यमरः । 'आपः स्त्री भूम्नि वार्वा सलिलं कमलं जलम्' इत्यमरः । 'सस्ये हेतुकृते फलम्' इत्यमरः । 'स्यात्तौ श शरद्' इत्यमरः ॥ ३१ ॥

सारार्थः—यथा कृषीवलाः स्वक्षेत्रे धान्यानां बीजान्युप्त्वा, ततोऽङ्कुरस्तु धान्यभिन्नतृणादीन् उत्पाद्य गोमयादिना पोषयन्तो मध्ये मध्ये नद्यादिकुल्यादि प्रणालिकया सिञ्चन्ति, ते आश्विनकार्त्तिकयोर्मध्ये पूर्णानि सस्यानि लभन्ते । त नीतिज्ञा जनाः कर्त्तव्यकृत्यानां निदानानि सन्धिविग्रहादुपायेन, तद्बाधकविधीनु संरक्षन्ति, ते नियतं परिणामे कार्यसिद्धिं प्राप्नुवन्ति ॥ ३१ ॥

भावार्थः—जो कोई किसी काम के बुनियाद की रक्षा करता हुआ, उसे विचाररूप जल से सींचता है, वह हर वक्त अपने कामों में सिद्धि पाता है। जैसे किसान ग्रीष्मान्त में धान्यादिकों के बीज बोकर बचाता हुआ पानी सींचता है, और आश्विन-कार्तिक में अपने हरे-भरे खेत को देखता है।

नियता विवेकिना फलसिद्धिरित्युक्तम्। सम्प्रति तामेव रूप्यर्थं स्तौति—

शुचिः भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलंक्रिया।
प्रशमाभरणं पराक्रमः स नयापादितसिद्धिभूषणः ॥ ३२ ॥

शुचीति—शुचि सम्प्रदायशुद्धं श्रुतं शास्त्रश्रवणं कर्तृ वपुर्भूषयति। अन्यथा विद्वान्पुरुषः शोच्य इति भावः। तस्य श्रुतस्य प्रशमः क्रोधोपशान्तिरलंक्रिया भूषणं भवति। अन्यथा श्रुतवैफल्यादिति भावः। पराक्रमः समयावसरे शौर्यं प्रशमस्याभरणं भवति। अन्यथा सर्वैः परिभूयत इति भावः स पराक्रमः नयापादिता नीतिसम्पादिता। विवेकपूर्विकेति यावत्। सा चासौ सिद्धिश्च सैव भूषणं यस्य तथोक्तः। अन्यथा साहसिकस्य सिद्धिः काकतालीयत्वेन पक्षे पराक्रमवैयर्थ्यं स्यादिति भावः। 'वपुषो भूष्यतैवात्र सिद्धेर्भूषणतैव तु। उभयं मध्यमानां तु तेषां पूर्वापरेच्छया॥' इति विवेकः। एवं विशिष्टसिद्धिरन्यभूषितायाः एव भूषकत्वोक्त्या सर्वोत्तरतया स्तुतिर्गम्यते। अत्रोत्तरस्य पूर्वपूर्वविशेषणत्वादेकावल्यलङ्कारः। तदुक्तम्—'यत्र विशेषणभावं पूर्वं पूर्वं प्रति क्रमेणैव। भवति परं परमेषाऽलङ्कृतिरेकावली कथिता' इति ॥३२॥

अन्वयः—शुचि, श्रुतं वपुः, भूषयति। प्रशमः तस्य, अलंक्रिया, भवति। पराक्रमः, प्रशमाभरणं (भवति)। सः, नयापादितसिद्धिभूषणः (भवति) ॥३२॥

सुधा—शुचि=सम्प्रदायशुद्धम्, गुरुशासनानुसारमित्यर्थः। श्रुतम्=शास्त्रम् (कर्तृ), वपुः=गात्रम्, भूषयति=अलङ्करोति। गुरुशिक्षानुसारं सुपरिश्रमपूर्वकं शास्त्राध्ययनम्, अध्येतुः शरीरस्य भूषणं भवतीति भावः। तथाहि 'विद्या रूपं कुरूपाणाम्' इत्युक्तं नीतौ। अथ, प्रशमः=परिशान्तिः, तस्य=श्रुतस्य, शास्त्रस्येत्यर्थः। अलङ्क्रिया=अलङ्कारः भूषणमिति यावत्, भवति=जायते। शास्त्राणि पठित्वाऽपि येन क्रोधोपशान्तिर्न कृता, तर्हि व्यर्थमेव पठनं तस्य, यतो [illegible] सहसा जना गच्छन्ति इति भावः। अथ, पराक्रमः=विक्रमः, उत्साह इत्यर्थः। प्रशमाभरणम्=शान्तेर्भूषणम् भवति, यदा शान्तो जन उत्साहशीलो भवति, तदा दोषाभावेन कथ्यते इत्यर्थः। सः=पराक्रमः, नयासादितसिद्धिभूषणः=नीति-सम्पादितफलालङ्कारः भवति। यदि पराक्रमी जनो नीत्या स्वकार्यं सम्पादयति तर्हि स प्रशस्यः। यदि च स बलाधिकतया केवलमुद्दण्डः सन् [illegible] प्रत्युत परकृतमपि बाधयति, तदा स [illegible] कोऽपि भवतो [illegible] इत्यर्थः ॥ ३२ ॥

समासः—प्रशमस्याभरणं प्रशमाभरणम् । नयेनापादिता सिद्धिर्नयापादित-सिद्धिः, सैव भूषणं यस्य स नयापादितसिद्धिभूषणः ॥ ३२ ॥

व्याकरणम्—भूषयति = भूष + स्वार्थे णिच् + लट् । भवति = भू + लट् ॥ ३२ ॥

वाच्यान्तरम्—शुचिना श्रुतेन वपुर्भूष्यते । प्रशमेन तस्य अलंक्रियया भूयते । प्रशमाभरणेन पराक्रमेण भूयते । नयापादितसिद्धिभूषणेन भूयते ॥ ३२ ॥

कोष।—'उज्जवलं निर्मलं पूतं पवित्रं शुद्धमेव च' इति कोषः । 'श्रुतं शास्त्रा-वधृतयोः' इत्यमरः । 'शमथस्तु शमः शान्तिः' इत्यमरः । 'भूषणं स्यादलङ्क्रिया । अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम्' इत्यमरः । शक्तिः पराक्रमः प्राणो विक्रम-स्त्वतिशक्तिता' इत्यमरः ॥ ३२ ॥

सारार्थः—शरीरस्य विद्यैव भूषणम् । विद्याया भूषणं शान्तिः । शान्तेर्भूषणं समये पराक्रमप्रकरणम् । पराक्रमस्य भूषणं नीतिपूर्विका कार्यसिद्धिरिति ॥ ३२ ॥

भावाऽर्थः—शरीर का अलङ्कार नियमानुसार विद्याध्ययन है और विद्या का अलङ्कार शान्ति है, शान्ति का भूषण पराक्रम है और पराक्रम का भूषण न्याय से कार्य को सिद्ध करना है ॥ ३२ ॥

विमृश्य कुर्यादिति स्थितम् । तत्र विमर्शोपायः क इत्युक्ते शास्त्रमेवेत्याह—

मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम् ।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम् ॥ ३३ ॥

मतीति । मतिभेदः कार्यविप्रतिपत्तिः मतिभेदस्तम इवेत्युपमितसमासः, दीप इवेत्युपमाऽनुसारात् तेन तिरोहित आच्छन्नेऽत एव गहनं दुरवगाहे कृत्यविधौ कार्यानुष्ठाने विवेकिनां सुकृतः सदभ्यस्तोऽत एव परिशुद्धः निश्चितोऽन्यत्र सुविहितः प्रवाताविद्योषरहितश्च, आगमः शास्त्रम् । 'आगमः शास्त्र आगमे' इति विश्वः । दीप इवार्थदर्शनं कार्यज्ञानं वस्तुप्रतिभासनं च कुरुते ॥ ३३ ॥

अन्वयः—मतिभेदतमस्तिरोहिते, गहने विवेकिनां, कृत्यविधौ, सुकृतः, परिशुद्धः, आगमः, इव अर्थदर्शनं कुरुते ॥ ३३ ॥

सुधा—मतिभेदतमस्तिरोहिते = अनिश्चयान्धकाराच्छन्ने, गहने = दुर्ज्ञेये, विवेकिनाम् = विचारवतां, कृत्यविधौ = कार्यविधाने, कर्मक्रमे इत्यर्थः । सुकृतः = समभ्यस्तः, परिशुद्धः ॥ भ्रान्तिवर्जितः, आगमः = शास्त्रम् । मतिभेदतमस्तिरोहिते = बुद्धिभ्रमकारकान्धकारपिहिते, अत एव, गहने = दुष्प्रवेशे, दुर्गमे इत्यर्थः । विवेकिनां = विवेकिनाम्, दीर्घसूत्राणामित्यर्थः 'वेको रवो अवो वेरो' इत्युक्तेः । कृत्यविधौ = गृहकृत्यानुष्ठाने, सुकृतः = सुविहितः, मध्यगृहे दवस्थाने विवेसितः । परिशुद्धः = निर्मलवर्तिकाविशुद्धः । दीपः = प्रदीपः, इव अर्थदर्शनम् = अभिप्राय-प्रकटनम्, दीपपक्षे अर्थदर्शनं = घटपटादिपदार्थावलोकनं, कुरुते = करोति ॥ ३३ ॥

विधिहेतुः ॥ दैवनिमित्तको दैविक इत्यर्थः । अत एव, आगसाम् = अपराधानाम्, निजकृतप्रमादानामित्यर्थः । अहेतुः = अनिमित्तकः, आकस्मिक इत्यर्थः । विनिपातः = वधःस्खलनम्, अर्थाद्विहितकर्मण्यसाफल्यलाभ इत्यर्थः । अपि समुन्नतेः = अभ्युदयस्य, समः = समानः, भवति । 'महाजनो येन गतः स पन्था' इति नीत्या महदाचरिताचरणेन प्रचलता । जनानामवनतिरप्युन्नतेः सदृश्येवेति भावः ॥ ३४ ॥

समासः—स्पृहणीया गुणा येषां ते स्पृहणीयगुणास्तैः स्पृहणीयगुणैः । महानात्मा येषां ते महात्मानस्तैर्महात्मभिः । विधिरेव हेतुर्यस्य स विधिहेतुः ॥ ३४ ॥

व्याकरणम्—चरिते=चर + क्तः । यच्छताम् = दाण् (यच्छ) + शतृप्रत्ययः ॥४३॥

वाच्यान्तरम्—स्पृहणीयगुणैर्महात्मभिश्चरिते वर्त्मनि मनो यच्छतां जनानाम् विधिहेतुना, आगसामहेतुना, विनिपातेनापि, समुन्नतेः समेन भूयते ॥ ३४ ॥

कोषः—'अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः' इत्यमरः । 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः । विधिविधाने दैवे च' इत्यमरः । 'विनिपातोऽवपाते स्याद् दैवादिव्यसनेऽपि च' इति विश्वः ॥ ३४ ॥

सारार्थः—यत्कर्म, प्रशस्याचरणैर्महानुभावैरनुष्ठीयते, तथाविधं कर्मकुर्वतां यदि दैवकोपात्तत्कर्मफलं नहि भवति, तथाऽपि मनोहानिर्न विधेया । अतो राजनीतिविहितानुसारं कर्म करिष्यतामस्माकं पराजयोऽपि स्याच्चेत्तदा स चापि विजयलाभेनैव समो ज्ञातव्य इत्यर्थः ॥ ३४ ॥

भाषाऽर्थः—प्रशंसनीय ( सराहने लायक ) गुणों से युक्त महानुभावों से प्रचार किये हुए रास्ते में मन को लगाये हुए लोगों की दैविक दुर्घटना या बिना अपराध की अवनति भी उन्नति ही के बराबर समझी जाती है ॥ ३४ ॥

सम्प्रति यद्विमृश्यं तदाह—

**शिवमौपयिकं गरीयसीं फलनिष्पत्तिमदूषितायतिम् ।**
**विगणय्य नयन्ति पौरुषं विजितक्रोधरया जिगीषवः ॥ ३५ ॥**

शिवमिति । जिगीषवो विजयेच्छवो नृपा विजितक्रोधरया जितक्रोधवेगाः सन्तो गरीयसीं प्रभूतामदूषितायतिमक्षतोत्तरकालाम् । स्वन्तामित्यर्थः । फलनिष्पत्तिं फलसिद्धिं विगणय्य । फलवत्त्वं निश्चित्येत्यर्थः । पौरुषं पुरुषकारं शिवमनुकूलमौपयिकमुपायम् । विनयादित्वात्स्वार्थे ठक् । उपायाद्ध्रस्वत्वाच्च । नयन्ति प्रापयन्ति पौरुषमुपायेन योजयन्तीत्यर्थः । नानिश्चितफलं कर्म कुर्वत इति भावः । यथाह कामन्दकः—'निष्फलक्लेशबहुलं सन्दिग्धफलमेव च । न कर्म कुर्यान्मतिमान् सदा वैरानुबन्धि च ॥' इति । नयतिः प्रापणार्थे द्विकर्मः अत्र पौरुषस्य कर्तृस्थकर्मत्वऽप्युपायस्यात्तथात्वात्क्रोधं विनयत इत्यादिवत् 'कर्तृस्थे चाशरीरे कर्मणि इत्यात्मनेपदं न भवति ॥ ३५ ॥

अन्वयः—विजितक्रोधरयाः, जिगषवः, गरीयसीम्, अदूषितायतिम्, फलनिष्पत्तिम्, विगणय्य, पौरुषम्, शिवम्, औपयिकम्; नयन्ति ॥ ३५ ॥

सुधा—विजितक्रोधरयाः=हतकोपवेगाः, शान्ता इत्यर्थः। जीगीषवः=जयाभिलाषिणः मादृशाः। न तु भवादृशाः क्रोधोद्धता इति भावः। गरीयसीम्=महीयसीम्; महत्तरामिति यावत्। अदूषितायतिम्=परिपूर्णपरिणामाम्, सुखोदर्कामिति यावत्। फलनिष्पत्तिम्=फलसिद्धिम्, विगणय्य=विचार्य, शिवम्=कल्याणकरम्, औपयिकम्=उपायसाध्यम् पौरुषम्=पुरुषकारम्, उद्योगमिति यावत्, नयन्ति प्रापयन्ति। न हि सन्दिग्धफले कार्ये विचारशिला लगन्तीति ॥ ३५ ॥

समासः—फलस्य निष्पत्तिस्ताम् फलनिष्पत्तिम्। न दूषिता, अदूषिता, अदूषिता आयतिर्यस्याः सा, अदूषितायतिस्तामदूषितायतिम्। क्रोधस्य रयः क्रोधरयः, विजितः क्रोधरयो यैस्ते विजितक्रोधरयाः। जेतुमिच्छवो जिगीषवः ॥ ३५ ॥

व्याकरणम्—विगणय्य=वि+गण्+णिच्+क्त्वा+ल्यप्। नयन्ति=नी=लट् ॥ ३५ ॥

वाच्यान्तरम्—विजितक्रोधरयैर्जिगीषुभिः गरीयसीमदूषितायतिम्, फलनिष्पत्तिम् विगणय्य शिवम् औपयिकम्, नीयते ॥ ३५ ॥

कोषः—'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः। 'उत्तरः काल आयतिः' इत्यमरः ॥ ३५ ॥

सारार्थः—ये विजयाभिलाषिणो मनीषिणः सन्ति, ते त्वभ्युदयस्य बाधकं क्रोधं पूर्वमेव विजित्य यस्य परिणामे मधुरं सुखं, लाभोऽपि महान्, तादृशमेवोद्योगं कुर्वन्ति। नहि ईश्वरसाहाय्याशया किमप्यनिश्चितं फलं कर्मेति ॥ ३५ ॥

भाषाऽर्थः—जीतने की इच्छा रखनेवाले लोग पहले क्रोध के वेग को जीतकर पीछे जिस काम में अधिक लाभ और परिणाम में विशेष सुख समझते हैं, ऐसे कल्याणकारक तथा उपायसाध्य उद्योग को करते हैं। अन्धाधुन्ध किसी असाध्य, अनिश्चितफल और परिणाम में क्लेशप्रद काम नहीं करते ॥ ३५ ॥

यदुक्तं विजितक्रोधरया इति तदावश्यकमित्याह—

अपनेयमुदेतुमिच्छता तिमिरं रोषमयं धिया पुरः।
अविभिद्य निशाकृतं तमः प्रभया नांशुमताऽप्युदीयते ॥ ३६ ॥

अपनेयमिति। उदेतुमभ्युदेतुमिच्छता राज्ञा पुरः प्रथमं रोषमयं रोषादागतम्। 'मयट् च' इति मयट्। तिमिरज्ञानं धिया विवेकबुद्ध्या करणेनापनेयमपनोद्यम्। तथाहि। अंशुमताऽपि कर्त्रा प्रभया तेजसा करणेन निशाकृतं तमो ध्वान्तमविभिद्य नोदीयते। किन्तु विभिद्यैवेत्यर्थः। सूर्यस्याप्येवं किमुतान्येषामित्यपिशब्दार्थः। इणो भावे लट् ॥ ३६ ॥

अन्वयः—उदेतुम्, इच्छता, ( जनेन ) पुरः, धिया, रोषमयं तिमिरम्, अपनेयम् । अंशुमता, अपि प्रभया, निशाकृतं, तमः, अविभिद्य, न उदीयते ॥ ३६ ॥

सुधा—उदेतुम् = उदयं प्राप्तुम्, अभ्युदयलाभार्थमित्यर्थः। इच्छता = वाञ्छता। जनेनेति शेषः । पुरः = प्रथमम्, धिया = बुद्ध्या, विवेकवत्येति शेषः । रोषमयम् = क्रोधरूपम् । तिमिरम् = तमः मोहमित्यर्थः। अपनेयम्=अपहर्त्तव्यम्, दूरीकार्यमिति यावत् । यथा अंशुमता=सूर्येण, अपि, प्रभया=कान्त्या, तेजसा इत्यर्थः। निशाकृतम्= रात्रिजनितम्; तमः = अन्धकारम्, अविभिद्य = अदूरीकृत्य, अविनाश्येति यावत्। न = नहि, उदीयते = उदयः प्राप्यते । तर्हि, का कथाऽन्येषां तेजस्विनामपीति ॥३६॥

समासः—निशया कृतं निशाकृतम् ॥ ३६ ॥

व्याकरणम्—अपनेयम् = अप + नी + यत् । अविभिद्य = नञ् + वि + भिद् + क्त्वा + ल्यप् । उदीयते = उत् + इण् + लट् ॥ ३६ ॥

वाक्यान्तरम्—उदेतुमिच्छन् ( राजा ) पुरः, धिया रोषमयं तिमिरम्, अपनयेत् । अंशुमानपि प्रभया निशाकृतं तमोऽविभिद्य नोदेति ॥ ३६ ॥

कोषः—'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः' इत्यमरः । 'कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ' इत्यमरः, 'स्यात्पुरः पुरतोऽग्रतः' इत्यमरः । 'निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा' इत्यमरः । 'अंशुमान् सविता सूर्यो मार्तण्डो मिहिरो रविः' इत्यन्यकोषः ॥ ३६ ॥

सारार्थः—इह जगति यः किल स्वाभ्युदयमिच्छेत, स तु पूर्वमुन्नतिबाधकं क्रोधं परित्यज्य यत्नान्तरं कुर्यात् । यथा तेजस्विनां धुरीणोऽपि सूर्यो यावद्रात्रिजमन्धकारं न नाशयति तावन्नोदेतीति । अतो भवान् क्रोधं त्यजतु, ततः कार्यसिद्धिर्भविष्यतीति भीमं प्रति युधिष्ठिरोक्तिः ॥ ३६ ॥

भाषाऽर्थः—उन्नति ( तरक्की ) चाहनेवालों को चाहिए कि पहले ( शुरु में ) अपने गुस्से को रोकें। क्योंकि सूर्य भी जब तक रात में जमे हुए अन्धकार को अपनी किरणों से नाश नहीं कर लेते; तब तक उदय नहीं होते । अन्धकार को नाश करने के बाद में उदित होते हैं ॥ ३६ ॥

ननु दुर्बलस्यैवमस्तुक्रोधादेव कार्यसिद्धिरित्यत आह—

**बलवानपि कोपजन्मनस्तमसो नाभिभवं रुणद्धि यः ।**
**क्षयपक्ष इवैन्दवीः कलाः सकला हन्ति स शक्तिसम्पदः ॥३७॥**

बलवानिति । बलवाञ्छूरोऽपि यः कोपाज्जन्म यस्य तस्य कोपजन्मनः । 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' इति वामनः'। तमसो मोहस्य । कृद्योगात्कर्तरि षष्ठी । अभिभवमाक्रामतिं न रुणद्धि न निवारयति । स नृपः क्षयस्य पक्ष क्षयपक्षः

कृष्णपक्षः ऐन्दवीरिन्दुसम्बधिनीः कला इव। 'कला तु षोडशो भागः' इत्यमरः। सकलाः समग्राः, शक्तिसम्पदः प्रभुमन्त्रोत्साहशक्तीरितक्षोऽपि हन्ति नाशयति। अन्धस्य जङ्घाबलमिव क्रोधान्धस्य लोकोत्तरमपि सामर्थ्यं व्यर्थमेवेत्यर्थः। अत्र कालस्य सर्वकारणत्वात्क्षयपक्षस्य कलाक्षयकारित्वमस्त्येव। तमसस्तु तत्कालविजृम्भणात्तथा व्यपदेशः ॥३७॥

अन्वयः—बलवान्, अपि यः कोपजन्मनः, तमसः, अभिभवं, न, रुणद्धि। सः, क्षयपक्षे, ऐन्दवीः, कलाः, इव, सकलाः, शक्तिसम्पदः हन्ति ॥ ३७ ॥

सुधा—बलवान् = सामर्थ्यवान्, अपि, यः = कश्चित् ( न तु दुर्बलः ) कोपजन्मनः = रोषजनितस्य, तमसः = मोहस्य, अभिभवम् = आक्रमणम् न रुणद्धि = न निवारयति। सः = कोपाभिभवपीडितः, क्षयपक्षे = कृष्णपक्षे; ऐन्दवीः = चान्द्रीः, कला इव सकलाः = निखिलाः, निःशेषा इत्यर्थः। शक्तिसम्पदः = प्रभुमन्त्रोत्साहशक्तिसम्पत्तीः, हन्ति = नाशयति। अतः प्रथमं भवान् कोपं परिहरतु, इति भीमं प्रत्याक्षेपः ॥ ३७ ॥

समासः—कोपाद् जन्म यस्य तस्य कोपजन्मनः। क्षयस्य पक्षः क्षयपक्षः,तस्मिन् क्षयपक्षे। यद्वा क्षयश्चासौ पक्षः क्षयपक्षः। शक्तयः एव सम्पदः, शक्तिसम्पदः ॥३७॥

वाच्यान्तरम्—बलवता येन कोपजन्मनस्तमसोऽभिभवो न रुध्यते, तेन क्षयपक्षे ऐन्दव्यः कला इव सकलाः शक्तिसम्पदो हन्यन्ते ॥ ३७ ॥

कोषः—'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः' इत्यमरः। 'कला तु षोडशो भागः' इत्यमरः ॥ ३७ ॥

सारार्थः—यः सामर्थ्यवान् जनः स्वशरीरजमपि रिपुं क्रोधं न नाशयितुं समर्थः स कथं शरीरनिर्गतं शत्रुं नाशयिष्यति। प्रत्युत क्रोधमोहावृतस्य कृष्णपक्षे चन्द्रसम्बन्धिन्यः क्षीयमाणाः कला इव सर्वाः प्रभुमन्त्रोत्साहशक्तयः क्षीयन्ते ॥ ३७ ॥

भावार्थः -जो कोई कोप से उमड़े हुए मोह के आक्रमण को नहीं रोक सकता वह कृष्णपक्ष की चन्द्रमाकी कलाकी तरह अपनी सब शक्ति सम्पत्ति खो देता है।

विमृश्य कुर्वतः क्रियाप्रकारमाह—

समवृत्तिरुपैति मार्दवं समये यश्च तनोति तिग्मताम्।
अधितिष्ठति लोकमोजसा स विवस्वानिव मेदिनीपतिः ॥३८॥

समेति। यः समा नातिमृदुर्नातितिग्मा वृत्तिर्यस्य स समवृत्तिः सन् समये सत्यवसरे मार्दवं मृदुवृत्तित्वमुपैति, तिग्मतां तीक्ष्णवृत्तित्वं च तनोति। स मेदिनीपतिर्विवस्वानिव ओजसा तेजसा लोकमधितिष्ठत्याक्रमति। सूर्योऽपि ऋतुभेदेन समवृत्तिरित्यादि योज्यम् ॥ ३८ ॥

अन्वयः—यः समवृत्तिः ( सन् ), समये; मार्दवम् उपैति, तिग्मतां, च तनोति, सः, मेदिनीपतिः, विवस्वान्, इव, ओजसा, लोकम् अधितिष्ठति ॥३८॥

सुधा—यः = कश्चित्, समवृत्तिः = मध्यमव्यापारवान्, नात्युग्रा नातिशान्ता वृत्तिर्यस्य तादृशः सन् इत्यर्थः । समये = शान्त्यवसरे, मार्दवम् = सहिष्णुताम्, उपैति = प्राप्नोति, तथा च क्रोधकरणोचितसमये, तिग्मताम् = उग्रताम्; कठोरवृत्तितामित्यर्थः । तनोति = विस्तारयति, सः = उभयवृत्तिः, मेदिनीपतिः = भूपतिः राजेत्यर्थः । विवस्वान् = सूर्यः, इव, ओजसा = तेजः प्रभावेण, लोकं = जनं भुवनं च, अधितिष्ठति = आक्रामति । यथा ग्रीष्मसमये यः सूर्यः प्रचण्डकिरणः, स एव हेमन्तेऽतीव सुसहो भवति तथैव, राज्ञाऽपि अपराधिनि जने तीव्रेण, सज्जने उपकारकरे च मृदुवृत्तिना भवितव्यमित्यर्थः ॥ ३८ ॥

समासः—समा वृत्तिर्यस्य स समवृत्तिः । मेदिन्याः पतिर्मेदिनीपतिः ॥ ३८ ॥

व्याकरणम्—उपैति = उप + इण् + लट् । तनोति = तनु + लट् । अधितिष्ठति= अधि + ष्ठा + लट् ॥ ३८ ॥

वाच्यान्तरम्—येन समवृत्तिना समये मार्दवमुपेयते, तथा च तिग्मता तन्यते । तेन महीपतिना, विवस्वतेव, ओजसा लोकोऽधिष्ठीयते ॥ ३८ ॥

कोषः—'लोकस्तु भुवने जने' इत्यमरः । 'गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही' इत्यमरः । 'भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः' इत्यमरः ॥३८॥

सारार्थः—यो राजा सदैव सहनशीलो भवति, अथवा सदैव क्रोधोद्धतो भवति स नहि प्रजाः वशीकर्तुं रक्षितुं च शक्नोति । अतो यः सज्जने गुणिनि जने नम्रतां मृदुतां च, दुर्जने दण्ड्ये चोग्रतां तीक्ष्णतां भजते स एव राजा प्रजाः पालयितुं समर्थो भवति । यथा सूर्यः हेमन्तर्तौ परमप्रियोऽपि ग्रीष्मेऽतीव दुःसहो भवति, तथैव ॥ ३८ ॥

भाषाऽर्थः—जैसे सूर्य समय समय पर सह्य और असह्य होते हैं, वैसे ही राजा को भी कभी सहिष्णु और कभी कड़ा होना चाहिये । जो ऐसा होता है, वह अपनी प्रजा को वश में रख सकता है ॥ ३८ ॥

> क्व चिराय परिग्रहः श्रियां क्व च दुष्टेन्द्रियवाजिवश्यता ।
> शरदभ्रचलाश्चलेन्द्रियैरसुरक्षा हि बहुच्छलाः श्रियः ॥ ३९ ॥

क्वेति । श्रियां सम्पदां चिराय बहुकालं परिग्रहः स्वायत्तीकरणं क्व । इन्द्रियाणि वाजिन इवेति समासः । दुष्टानाममार्गधाविनामिन्द्रियवाजिनां वश्यो वशङ्गतस्तस्य भावस्तत्ता क्व । नोभयमेकत्र तिष्ठतीत्यर्थः । कुतः हि यस्माच्छरदभ्रचलाः किञ्च बहुच्छला बहुव्याजाः बहुरन्ध्रा इति यावत् । 'छलं तु स्खलिते व्याजे' इति विश्वः । श्रियः सम्पदः । चलेन्द्रियैरजितेन्द्रियैरसुरक्षा रक्षितुमशक्याः । कथञ्चित्प्राप्ता अपि श्रियो नाविनीतेषु तिष्ठन्तीत्यर्थः । वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ३९ ॥

अन्वयः—श्रियां परिग्रहः चिराय क ?, दुष्टेन्द्रियवाजिवश्यता च क ? हि शरदभ्रचलाः, बहुच्छलाः, श्रियः चलेन्द्रियैः, असुरक्षाः ( भवन्ति ) ॥ ३९ ॥

सुधा—श्रियां = सम्पदाम्, परिग्रहः = स्वायत्तीकरणम्, चिराय = बहुकालम्, क = कुत्र, मे कुत्रापि सदैव केनापि श्रियो वशीकर्तुं शक्यन्ते इति भावः । तथा च दुष्टेन्द्रियवाजिवश्यता = चपलेन्द्रियघोटकाधीनता, च = अपि, क = कुत्र, अर्थाद्वशी-कृतेन्द्रियैरपि जनैश्चिरं श्रीर्न रक्षितुं पार्यते, किमुत स्वद्विषैरवशेन्द्रियैः क्रोधपरवशै-रित्यर्थः । हि = यतः, यस्मादित्यर्थः । शरदभ्रचलाः = शरदृतुमेघवच्चलाः शरदृतु-राश्विनकार्त्तिकाख्यां मासाभ्यां, भवति, तत्र मेघा निर्जलत्वाल्लघवो भवन्ति अतो हि ते वायुना झटिति झटित्याकृष्यन्त इति भावः । बहुच्छलाः=विशेषव्याजवृत्तिमत्यः, श्रियः = सम्पदः, चलेन्द्रियैः = अव्यवस्थितैः । असुरक्षाः = दूरक्षाः, न सुखेन रक्षितुं शक्याः भवन्ति । वा असुभिः प्राणैः रक्षा भवति यासां ता असुरक्षाः भवन्ति ॥३९॥

समासः—वशङ्गतो वश्यस्तस्य भावस्तत्ता वश्यता, इन्द्रियाण्येव वाजिनः, इन्द्रियवाजिनः, दुष्टा ये इन्द्रियवाजिनः, तेषां वश्यतेति दुष्टेन्द्रियवाजिवश्यता । शरदोऽभ्रं शरदभ्रं, शरदभ्रवत् चला इति शरदभ्रचलाः । चलानि इन्द्रियाणि येषां ते चलेन्द्रियास्तैश्चलेन्द्रियैः । बहुनि छलानि यासु ता बहुच्छलाः । न सुखेन रक्षा यासां ता असुरक्षाः ॥ ३९ ॥

व्याकरणम्—असुरक्षाः = नञ् + सु + रक्ष् + खल् + टाप् ॥ ३९ ॥

वाच्यान्तरम्—श्रियां परिग्रहेण चिराय क भूयते । दुष्टेन्द्रियवाजिवश्यतया च क भूयते । शरदभ्रचलाभिर्बहुच्छलाभिः श्रीभिश्चलेन्द्रियैरसुरक्षाभिर्भूयते ॥ ३९ ॥

कोषः—'चिराय चिररात्राय चिरस्याद्याश्चिरार्थका' इत्यमरः । 'घोटके वीति-तुरगतुरङ्गाश्वतुरङ्गमाः । वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः । 'अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः' इत्यमरः ॥ ३९ ॥

सारार्थः—प्रथमन्तु जितेन्द्रियैः स्थिरबुद्धिभिरपि चिरं न च लक्ष्मी रक्षितुं पार्यते तर्ह्यजितेन्द्रियाणां चपलानां का तस्याश्चिररक्षणे शक्तिः ? अतो लक्ष्मीरक्षणेच्छुभि-र्जनैः सदासावधानैर्जितेन्द्रियैश्च भवितव्यमिति ॥ ३९ ॥

भाषाऽर्थः—एक तो चिरकाल तक लक्ष्मी को अपने वश में रखना ही कठिन होता है । दूसरी बात यह है कि दुष्ट ( कुमार्ग में ही दौड़ने वाले ) इन्द्रियरूप घोड़ों को अपने वश में रखना भी दुःसाध्य है । इसलिये जिन्होंने इन्द्रियों को वश में नहीं किया है, उनसे आश्विन-कार्त्तिक के बादल की ऐसी क्षणिक और विशेष दंगा-फसाद वाली सम्पत्ति ( लक्ष्मी ) की रक्षा नहीं होती ॥ ३९ ॥

क्रोधस्य दुष्टतामुक्त्वा तस्य त्यागमुपदिशति—

किमसामयिकं वितन्वता मनसः क्षोभमुपात्तरंहसः ।
क्रियते पतिरुच्चकैरपां भवता धीरतयाऽधरीकृतः ॥ ४० ॥

किमिति। उपात्तरंहसः प्राप्तत्वरस्य मनसः। समयोऽस्य प्राप्तः सामयिकः। 'समयस्तदस्य प्राप्तम्' इति ठञ्। स न भवतीत्यसामयिकस्तमप्राप्तकालं क्षोभं वितन्वता भवता धीरतया धैर्यगुणेन। 'मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु' इति रसिकाः। अधरीकृतस्तिरस्कृतः। प्रागिति शेषः। अपां पतिः समुद्रः किं किमर्थमुच्चकैरधिकः क्रियते। न पराजितं पुनरुच्चकैः कुर्यादिति भावः। अत्र वितन्वतेति भीमविशेषणत्वेन अपाम्पतिपदार्थहयोच्चैःकरणे हेतुत्वोक्त्या काव्यलिङ्गमलङ्कारः॥४०

अन्वयः—उपात्तरंहसः मनसः असामयिकं क्षोभं, वितन्वता, भवता, धीरतया, अधरीकृतः, अपां, पतिः, किम्, उच्चकैः क्रियते ॥ ४० ॥

सुधा—उपात्तरंहसः = प्राप्तवेगस्य, सदैव चञ्चलस्येत्यर्थः। मनसः = चित्तस्य, असामयिकम् = अकालिकम्, अनवसरजमिति यावत्। क्षोभम् = विकारम्, चाञ्चल्यादिकम्, वितन्वता = प्रकटयता, भवता = त्वया, भीमेनेत्यर्थः। धीरतया = धैर्येण, अधरीकृतः = तिरस्कृतः, लघूकृत इत्यर्थः। अपाम् = जलानां, पतिः = स्वामी समुद्र इत्यर्थः। किम् = कथम्, कस्मात्कारणादित्यर्थः। उच्चकैः = उन्नतः, अधिकः क्रियते = विधीयते ॥ ४० ॥

समासः—समये भवः सामयिकः न सामयिकोऽसामयिकस्तमसामयिकम्। उपात्तं रंहो येन तस्य उपात्तरंहसः। धीरस्य भावः धीरता, तया धीरतया ॥४०॥

व्याकरणम्—वितन्वता = वि + तनु + शतृ। क्रियते + कृ + लट् ॥ ४० ॥

वाच्यान्तरम्—उपात्तरंहसो मनसोऽसामयिकं क्षोभं वितन्वन् भवान्, धीरतया अधरीकृतम्, अपां पतिम्, किमुच्चकैः करोति ॥ ४० ॥

कोषः—'रंहस्तरसी तु रयः स्यदः' इत्यमरः ॥ ४० ॥

सारार्थः—प्रथमस्तु धैर्यवतां धुरीणः पाथोधिरेव विजयते जगति, यः किल जगत्प्लावकानामपि सर्वं जलप्रवाहं स्वान्तः संरच्यापि स्वतटमर्यादोल्लङ्घनं न करोति। परन्तु नानाविधेपूपस्थितेषु धैर्यध्वंसकेषु दुःखेष्वपि यस्त्वं धैर्यं न त्यक्तवान्, तेन 'समुद्रादप्यधिकधैर्यवान् भीमः' इति ख्यातिर्जनतायामजनि, साऽधुना कथमकालिकं मनोवेगमवाप्य त्वया विपरीता क्रियते इति ॥ ४० ॥

भाषाऽर्थः अत्यन्त वेगवान् मन के विकार को दिखाता हुआ तुम अपने संतोष तथा धैर्य से नीच बनाये समुद्र को अब क्यों बढ़ा बनाते हो ॥ ४० ॥

**श्रुतमप्यधिगम्य ये रिपून् विनयन्ते न शरीरजन्मनः।**
**जनयन्त्यचिराय सम्पदामयशस्ते खलु चापलाश्रयम् ॥ ४१ ॥**

श्रुतमिति। किञ्च ये श्रुतं शास्त्रमधिगम्यापि शरीरजन्मनः शरीरप्रभवान् रिपून् कामक्रोधादींश्च विनयन्ते न नियच्छन्ति। 'कर्तृस्थे चाशरीरे कर्मणि' इत्यात्मने-

पदम्। ते खल्वचिराय सम्पदां चापलाश्रयमस्थैर्यनिबन्धनमयशो दुष्कीर्तिं जनयन्ति। आश्रयदोषादस्थैर्यं सम्पदां न स्वदोषादित्यर्थः। अजितारिषड्वर्गस्य कुतः सम्पद इति भावः ॥ ४१ ॥

अन्वयः—ये, श्रुतम्, अधिगम्य, अपि शरीरजन्मनः, रिपून्, न, विनयन्ते, ते, खलु, अचिराय, सम्पदाम्, चापलाश्रयम्, अयशः, जनयन्ति ॥ ४१ ॥

सुधा—ये = केचन श्रीमन्तः, श्रुतम् = राजनीतिप्रभृतिशास्त्रम्, अधिगम्य = अधीत्य, सम्यगवगत्येति भावः। अपि, शरीरजन्मनः = स्वदेहजातान्, रिपून् = शत्रून्, कामक्रोधादीनित्यर्थः। न विनयन्ते = न दूरीकुर्वन्ति, ते = कामक्रोधादिवशीकृताः, खलु = निश्चयेन, अचिराय = सत्वरमेव, सम्पदाम् = श्रियाम्, चापलाश्रयम् = चाञ्चल्यमूलकम्, अयशः = अपकीर्तिं, जनयन्ति = उत्पादयन्ति। शान्तचित्ता एव धनवन्तो भूत्वा यशस्विनो भवन्ति। अशान्तास्तु धनवन्तसन्तो जन्तूनकारणमेव निघ्नन्तो झटित्येवापयशो लभन्ते इति भावः ॥ ४१ ॥

समासः—शरीराज्जन्म येषां तान् शरीरजन्मनः। चपलस्य भावश्चापलम्, चापल्माश्रयो यस्य तत् चापलाश्रयम्, तत् ॥ ४१ ॥

व्याकरणम्—अधिगम्य = अधि + गम् + क्त्वा + ल्यप्। विनयन्ते = वि + नी + लट्। जनयन्ति = जन् + णिच् + लट् ॥ ४१ ॥

वाच्यान्तरम्—यैः श्रुतमधिगम्यापि शरीरजन्मनो रिपवो न विनीयन्ते, तैः सम्पदां चापलाश्रयमयशश्चिराय जन्यते ॥ ४१ ॥

कोषः—'श्रुतं शास्त्रावधृतयोः' इत्यमरः। रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः। 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रह' इत्यमरः। 'यशः कीर्तिः समज्ञा च' इत्यमरः ॥ ४१ ॥

सारार्थः—ये राजानः शास्त्रमपि सम्यक् पठित्वा असमये कामक्रोधादीन् देहजायमानानपि शत्रून् न निवारयितुं शक्नुवन्ति, ते कथं बहिर्गतशत्रून् हनिष्यन्ति। तथाविधाश्च भूपा ऐश्वर्यमदमत्ताः सन्तोऽन्यायमाचरन्तो झटित्येव दुष्कीर्तिं प्रसारयन्ति यत्किल लक्ष्म्याः चापल्यमित्येवम्, परन्तु वस्तुतो लक्ष्म्याश्रयीभूतस्य जनस्यैव स दोषोऽस्ति, नहि लक्ष्म्या इति ॥ ४१ ॥

भाषाऽर्थः—जो कोई शास्त्र आदि पढ़ करके भी स्वयं देह से पैदा हुए शत्रु ( काम, क्रोध आदि ) को नहीं हटाता वह झट लक्ष्मी की चञ्चलता से होने वाले अपयश को पैदा करते हैं। अर्थात् 'सम्पत्ति चञ्चला है' ऐसी सम्पत्ति को दोष देते हैं॥

तथा क्रोधात्कार्यहानिरित्याशयेनाह—

**अतिपातितकालसाधना स्वशरीरेन्द्रियवर्गतापनी।**

**जनवन्न भवन्तमक्षमा नयसिद्धेरपनेतुमर्हति ॥ ४२ ॥**

अतिपातितेति । अतिपातितान्यतिक्रान्तानि कालः समयोऽनुरूपः साधनानि सहायादीनि यया सा तथोक्ता । तापयतीति तापनी । कर्तरि ल्युट् । टित्वान्ङीप् । स्वस्य यच्छरीरमिन्द्रियवर्गश्च तयोस्तापन्यक्षमा क्रोधो भवन्तं जनवत्पृथग्जनमिव । 'तेन तुल्यम्—'' इति वतिप्रत्ययः । तेनेवार्थो लभ्यते । 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययम् । नयसिद्धेर्नयसाध्यफलादपनेतुं पृथक्कर्तुं नार्हति । अक्षमयक्राऽपरस्थाप सन्तापातिरिक्तं फलं नास्तीत्यर्थः ॥ ४२ ॥

अन्वयः—अतिपातितकालसाधना, स्वशरीरेन्द्रियवर्गतापनी, अक्षमा, जनवद्, भवन्तं, नयसिद्धेः, अपनेतुम्, न, अर्हति ॥ ४२ ॥

सुधा—अतिपातितकालसाधना = अतिक्रान्तसमयसहाया, सामयिकसाहाय्यविघटनकरीति भावः । स्वशरीरेन्द्रियवर्गतापनी = आत्मदेहेन्द्रियगणदाहिका अक्षमा=अशान्तिः, क्रोध इत्यर्थः । जनवत्=अनधीतनीतिनरवत्, ग्राम्यमूर्खजनम् इवेत्यर्थः । नानाऽऽगमज्ञाननिपुणं त्वामिति भावः । नयसिद्धेः = नीतिसाध्यफलात् न अपनेतुम् = दूरीकर्तुम्, अर्हति = योग्या भवतीत्यर्थः ॥ ४२ ॥

समासः—कालश्च साधनानि च ( इति द्वन्द्वसमासः ) कालसाधनानि, अतिपातितानि कालसाधनानि यया, वा अतिपातिते कालसाधने यया सा, अतिपातितकालसाधना । इन्द्रियाणां वर्गः इन्द्रियवर्गः, शरीरञ्चेन्द्रियवर्गश्च तयोस्तापनी शरीरेन्द्रियवर्गतापनी । नयस्य सिद्धिर्नयसिद्धिस्तस्याः (पञ्चमी) नयसिद्धेः ॥४२॥

व्याकरणम्—अर्हति = अर्ह + लट् ॥ ४२ ॥

वाच्यान्तरम्—अतिपातितकालसाधनया स्वशरीरेन्द्रियवर्गतापन्या अक्षमया जनवद् भवन्तं नयसिद्धेरपनेतुं न अर्ह्यते ॥ ४२ ॥

कोषः—'निर्वर्तनोपकरणानुव्रज्यासु च साधनम्' इत्यमरः । 'हृषीकं विषयीन्द्रियम्' इत्यमरः ॥ ४२ ॥

सारार्थः—सामयिककार्यविध्वंसकरो निजस्यापि शरीरप्रज्वालकः क्रोधाग्निश्चेन्मूर्खमिव त्वामपि स्ववशं करोति, तदा शास्त्राध्ययनस्य कुलीनतायाश्च फलं न किमपीति ॥ ४२ ॥

भाषाऽर्थः—मौके का काम और सहायक को बिगाड़ने वाला, अपने भी देह और इन्द्रियों को जलानेवाला क्रोध मामूली आदमी के समान आपको भी न्यायतः सिद्धि के मार्ग से हटाने के लिये योग्य नहीं ॥ ४२ ॥

'दुष्टः' क्रोध इत्युक्तम् । क्षमाया गुणानाह—

उपकारकमायतेर्भृशं प्रसवः कर्मफलस्य भूरिणः ।
अनपायि निबर्हणं द्विषां न तितिक्षासममस्ति साधनम् ॥ ४३ ॥

उपकारकमिति। आयतेरुत्तरकालस्य भृशमत्यन्तमुपकारकम्। स्थिरफलहेतुरित्यर्थः। भूरिणः प्रभूतस्य कर्मफलस्य। प्रसूयतेऽनेनेति प्रसवः कारणम्। अपायि न भवतीत्यनपायि स्वयमविनश्यदेव द्विषां निवर्हणं विनाशकमेवंगुणकं साधनं तितिक्षासमं क्षमातुल्यं नास्ति। 'क्षान्तिः क्षमा तितिक्षा च' इत्यमरः। 'तिज निशाने' इति धातोः। 'गुप्तिज्किद्भ्यः सन्' इति क्षमार्थे सन्प्रत्ययः। तितिक्षासममित्यनुक्तोपमेया समास आर्थी लुप्तोपमा, भृशायत्यनपायिशब्दैः साधनान्तरवैलक्षण्याद्व्यतिरेकश्च व्यज्यते। भेदप्राधान्य उपमानादुपमेयस्याधिक्ये विपर्यये च व्यतिरेकः ॥ ४३ ॥

अन्वयः—आयतेः, भृशम्; उपकारकम्, भूरिणः, कर्मफलस्य, प्रसवः, अनपायि, द्विषां; निवर्हणं, तितिक्षासमं, न साधनं; अस्ति ॥ ४३ ॥

सुधा—आयतेः = उत्तरकालस्य, आगामिसमयस्येत्यर्थः। भृशम् = अत्यर्थम्, परमित्यर्थः। उपकारकम् = इष्टसाधकम्, भूरिणः = बहुलस्य, कर्मफलस्य = कर्मसिद्धेः, प्रसवः = जनकम्, अनपायि = निर्दोषं, निरुपद्रवमिति भावः। द्विषां = शत्रुणां; निवर्हणं = विनाशकम्ः प्रकृत्या क्षमाशीलस्य शत्रुः स्वयं विनश्यतीति भावः। तितिक्षासमं = शान्तितुल्यं, साधनम् = उपकरणं, नास्ति। उक्तं च नीतौ 'क्षमा शस्त्रं करे यस्य दुर्जनः किं करिष्यति। अतृणे पतितो वह्निः स्वयमेवोपशाम्यति' इति ॥ परन्तु क्षात्रधर्मे सदैव क्षमाऽवलम्बनमपि दोष एव मन्यते। तदुक्तं नीतौ—'एकः क्षमावतां दोषो द्वितीयो न हि विद्यते। यदेनं क्षमया युक्तं तृणवन्मन्यते जनः' ॥ इति ॥ ४३ ॥

समासः—कर्मणां फलं कर्मफलम् तस्य कर्मफलस्य। न अपायाः सन्ति यस्मिन् तदनपायि। तितिक्षया समं तितिक्षासमम् ॥ ४३ ॥

व्याकरणम्—अस्ति = अस् + लट् ॥ ४३ ॥

वाच्यान्तरम्—आयतेर्भृशमुपकारकेण, भूरिणः कर्मफलस्य प्रसवेन अनपायिना द्विषां निवर्हणेन, तितिक्षासमेन साधनेन नहि भूयते ॥ ४३ ॥

कोषः—'उत्तरः काल आयतिः' इत्यमरः। 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्' इत्यमरः। 'बहुलं भूरि पर्याप्तं प्रभूतं प्रचुरं परम्' इति कोषः। 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः। 'शान्तिः क्षमा तितिक्षा च' इत्यमरः ॥ ४३ ॥

सारार्थः—वर्त्तमानसमये तूपकारकमेव, भविष्यत्कालेऽपि परमोपकारकम्, बहुकार्यसिद्धेरुत्पादकं दोषलेशहीनं, विनाऽस्त्रेण शत्रुसंहारकमुपकरणं यद्यस्ति भूमौ, तर्हि केवलं शान्तिरेवैका। अतः शान्तिमतः शत्रुः स्वयं नश्यति ॥ ४३ ॥

भावार्थः—भविष्य में भला करने वाला, अनगिनत कामों के फल को देने वाला, सब तरह के दोषों से बचा हुआ और सहज ही वैरियों का संहार करने

वाला यदि कोई ऐसा उपकरण है तो केवल शान्ति ही है, शान्ति के बराबर दूसरा और कोई भी नहीं है ॥ ४३ ॥

ननु तितिक्षया कालक्षेपे दुर्योधनः सर्वान् राज्ञो वशीकुर्यादित्यत्राह—

प्रणतिप्रवणान्विहाय नः सहजस्नेहनिबद्धचेतसः ।
प्रणमन्ति यदा सुयोधनं प्रथमे मानभृतां न वृष्णयः ॥ ४४ ॥

प्रणतीति । सहजस्नेहेनाकृत्रिमप्रेम्णा निबद्धचेतसोऽस्मासु गाढं लग्नचित्ताः। दुर्योधने तु न तथेति भावः । किं च मानभृतामहङ्कारिणां प्रथमेऽग्रेसराः । सुयोधनस्तु ततोऽपीति भावः । वृष्णयो यादवाः प्रणतिप्रवणान्प्रणामपरान् । सुयोधनस्तु न तथेति भावः । नोऽस्मान्विहाय सुयोधनं सदा न प्रणमन्ति न नमन्ति नानुसरन्ति । किन्तु कार्यकाले त्यक्ष्यन्त्येवेत्यर्थः । सति यादवविग्रहे न किञ्चिदस्माकमसाध्यं भवेदिति भावः । अनेकपदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ४४ ॥

अन्वयः—मानभृतां, प्रथमे, वृष्णयः, प्रणतिप्रवणान्, सहजस्नेहनिबद्धचेतसः नः, विहाय, सदा, सुयोधनं, प्रणमन्ति ॥ ४४ ॥

सुधा—मानभृताम् = अहङ्कारिणाम्, प्रथमे = अग्रगण्याः, नहि यादवसमाः शौर्यौदार्यवीर्यगाम्भीर्यरूपवित्तादिभिः केऽपि सन्तीति भावः । एवम्भूताः वृष्णयः= यादवाः, प्रणतिप्रवणान् = प्रणामनम्रान्, सदा विनयवत इत्यर्थः । सहजस्नेहनिबद्धचेतसः = स्वाभाविकप्रेमबद्धमनसः, नः = अस्मान्, विहाय = त्यक्त्वा, सदा = सर्वदा, सुयोधनं = धृतराष्ट्रज्येष्ठपुत्रं, दुर्योधनमित्यर्थः । न प्रणमन्ति = न नमन्ति । नहि तं सदाऽनुसरन्ति, केवलमधुनाऽस्मदाश्रयाभावेन स्वेष्टसाधनाय तस्याश्रयोऽङ्गीकृतो यादवैः, अस्माकं कौरवैर्जाते विग्रहे नियतं तं विहायास्मत्पक्षे आगमिष्यन्तीति फलितार्थः ॥ ४४ ॥

समासः—प्रणत्यां प्रवणाः प्रणतिप्रवणास्तान् प्रणतिप्रवणान् । सहजः स्वाभाविको यः स्नेहः स सहजस्नेहस्तेन सहजस्नेहेन निबद्धं चेतो येषां तान् सहजस्नेहनिबद्धचेतसः । मानं बिभ्रतीति मानभृतस्तेषां मानभृताम् ॥ ४४ ॥

व्याकरणम्—प्रणमन्ति—प्र + नम् + लट् ॥ ४४ ॥

वाच्यान्तरम्—मानभृतां प्रथमैर्वृष्णिभिः प्रणतिप्रणवान् सहजस्नेहनिबद्धचेतसो नः विहाय सदा सुयोधनो न प्रणम्यते ॥ ४४ ॥

कोषः—'प्रणामप्रणती समे' इति कोषः । 'प्रवणं क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे' इत्यमरः । 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहः' इत्यमरः । 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः ॥ ४४ ॥

सारार्थः—यदा मम दुर्योधनादिभिर्विग्रह उपस्थितः स्यात्तदानीं येऽधुना दुर्योधनाश्रयः सन्ति, तेऽपि तं मुक्त्वाऽस्मत्पक्षमनुगमिष्यन्ति, तत्र सर्वप्रथमं

महाह्काग्रिणो यादवा अपमानकरमत्युद्धतं दुर्योधनं त्यक्त्वा सदा विनयनम्रानस्माननुयास्यन्ति, नात्र कश्चित्सन्देहलेशः। अधुना स्वकार्यनिर्वाहार्थमस्मान् वनवासतयाऽकिञ्चित्करान् विचार्य, तस्याश्रयेण समयं यापयन्ति ॥ ४४ ॥

भाषाऽर्थः—स्वाभिमानियों में सबसे पहले गिनने लायक यादव, प्रणत और स्वाभाविक प्रेम से बँधे हुये दिलवाले हमें छोड़कर दुर्योधन के आगे कभी नहीं शिर नवावेंगे, जरूर हमारे ही पक्ष में रहेंगे ॥ ४४ ॥

**सुहृदः सहजास्तथेतरे मतमेषां न विलङ्घयन्ति ये।**
**विनयादिव यापयन्ति ते धृतराष्ट्रात्मजमात्मसिद्धये ॥ ४५ ॥**

सुहृद् इति। किं चैषां वृष्णीनां ये सहजाः सहजाताः। मातृपितृपक्षीया इत्यर्थः। 'अन्येष्वपि दृश्यते' इति डप्रत्ययः। सुहृदो मित्राणि तथेतरे कृत्रिमसुहृदश्च मतं वृष्णिपक्षं न विलङ्घयन्ति नातिक्रामन्ति। ते द्वयेऽपि नृपाः। दुर्योधनोपजीविनोऽपीति भावः। आत्मसिद्धये आत्मजीवनार्थं धृतराष्ट्रात्मजं दुर्योधनं विनयादानुकूल्यादिव यापयन्ति कालं गमयन्ति। कार्यकाले ते वृष्णिपक्षप्रवेशिन एवेत्यर्थः। यातेर्ण्यन्ताल्लट्। 'अर्तिह्री'–इत्यादिना पुगागमः ॥ ४५ ॥

अन्वयः—एषां, सुहृदः, तथा सहजाः, इतरे, च ये मतं, न, विलङ्घयन्ति, ते आत्मसिद्धये, धृतराष्ट्रात्मजं, विनयात्, इव यापयन्ति ॥ ४५ ॥

सुधा—एषां = यादवानां, सुहृदः = मित्राणि तथा सहजाः = बान्धवाः, मातृपितृपक्षीया इत्यर्थः। इतरे = अन्ये, च, ये = तटस्था इत्यर्थः। भूपा इति शेषः। मतम् = अनुशासनं, न विलङ्घयन्ति = नोल्लङ्घयन्ति ( तेऽधुना ) आत्मसिद्धये = स्वार्थसिद्धये, धृतराष्ट्रात्मजं = दुर्योधनं, विनयाद् = अनुनयात्, इव, यापयन्ति = समयमतिवाहयन्ति ॥ ४५ ॥

समासः—धृतराष्ट्रस्यात्मजो धृतराष्ट्रात्मजस्तम्। आत्मनः सिद्धिरात्मसिद्धिस्तस्यै।

व्याकरणम्—विलङ्घयन्ति = वि + लघ् + णिच् + लट्। यापयन्ति = या + णिच् + लट् ॥ ४५ ॥

वाच्यान्तरम्—एषां सुहृद्भिः सहजैस्तथेतरैर्यैर्मतं न विलङ्घ्यते, तैरात्मसिद्धये धृतराष्ट्रात्मजो याप्यते ॥ ४५ ॥

कोषः—'वयस्थः स्निग्धः सवया अथ मित्रं सखा सुहृद्' इत्यमरः। 'समानोदर्यसोदर्यसगर्भ्यसहजाः समाः' इत्यमरः। 'विनयानुनयौ समौ' इति कोषः ॥ ४५ ॥

सारार्थः—यादवास्तु भविष्यन्त्येवास्मत्पक्षे, अवशिष्टेष्वपि भूपेषु, ये केचन यादवानां मित्रभूतास्तथा च ये बान्धवा एवं तद्भिन्ना अपि ये यादवविचारानुकूलाः सन्ति, ते सर्वे साम्प्रतं स्वार्थसिद्धिसाधनाय कपटस्नेहं दर्शयन्तो दुर्योधनाश्रये वर्त्तमानाः समयं क्षपयन्ति। कार्यकालेऽस्मत्पक्ष एवागमिष्यन्ति ॥ ४५ ॥

भाषाऽर्थः—यादवों के जो मित्र हैं, जो बन्धु बान्धव या गोतिया हैं, और जो

कोई भी इनके मत ( विचार राय ) में रहते हैं, वे सब अभी अपने स्वार्थसाधन के लिये दुर्योधन के प्रति बाहरी प्रेम दर्शाते हुए समय काट रहे हैं ॥ ४५ ॥

किञ्च नायमभियोगकाल इत्याशयेनाह—

अभियोग इमान् महीभुजो भवता तस्य कृतः कृतावधेः।
प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिव ॥ ४६ ॥

अभियोग इति। कृतावधेः परिभाषितकालस्य। 'अवधिस्त्ववसाने स्यात्सीम्नि काले बिलेऽपि च' इति विश्वः। तस्य सुयोधनस्य। कर्मणि षष्ठी। भवता कृतः। अवधित इति शेषः। अभियोगः। आक्राभिभव इति यावत्। 'अभियोगस्तु शपथे स्यादाक्रे च पराभवे' इति विश्वः। इमान्पूर्वोक्तान्महीभुजो राज्ञो हरिदश्व उष्णरश्मिः कमलाकरानिव समुत्पतन्नुद्यन्नेव प्रविघाटयिता भेत्स्यति। घाटयतेर्भौवादिकात्तृट्। चौरादिकस्य तु 'मितां ह्रस्वः' इति ह्रस्वत्वं स्यात् ॥ ४६ ॥

अन्वयः—कृतावधेः, तस्य, भवता, कृतः, अभियोगः, इमान्, महीभुजः, समुत्पतन्, हरिदश्वः, कमलाकरान्, इव, प्रविघाटयिता ॥ ४६ ॥

सुधा—कृतावधेः = नियमितसमयस्य, द्वादशवर्षाणि वनवासम्, एकवर्षं कुत्रापि रहसि वासं विधाय यदा पुनरागमिष्यन्ति भवन्तस्तदा राज्यमर्पयिष्यामीत्येवं विहितसमयसीम्न इत्यर्थः। तस्य = दुर्योधनस्य, भवता = त्वया, भीमेनेत्यर्थः। कृतः = विहितः, उत्पादितः, अभियोगः = नवपराभवः ( कर्त्ता ), इमान् = यादव-तन्मित्र-बान्धवादीनित्यर्थः। महीभुजः = भूपतीन्, तु, समुत्पतन् = समुद्गच्छन्, हरिदश्वः = सूर्यः, कमलाकरान् = कमलकुसुमसमूहान्, इव, प्रविघाटयिता = भेत्स्यति, अर्थादुद्यदादित्यः सम्पुटितवदनस्यापि कमलवनस्य मुखोद्घाटनं करोति तथैव त्वयोत्पादितस्याक्रपराभव इमान् भूपान् वाचालान् करिष्यतीति भावः ॥ ४६ ॥

समासः—महीं भुनक्तीति तान् महीभुजः। कृतोऽवधिर्येन सः कृतावधिस्तस्य कृतावधेः। हरितोऽश्वा यस्य स हरिदश्वः। कमलानामाकराः कमलाकरास्तान् कमलाकरान् ॥ ४६ ॥

व्याकरणम्—प्रविघाटयिता = प्र + वि + घट् + णिच् + लुट्। समुत्पतन् = सम + उद् + पत् + शतृ ॥ ४६ ॥

वाच्यान्तरम्—कृतावधेस्तस्य भवता कृतेनाभियोगेनेमे महीभुजः समुत्पतता हरिदश्वेन कमलाकरा इव प्रविघाटयितारः भविष्यन्तीति ॥ ४६ ॥

कोषः—'अवधिस्त्ववसाने स्यात्सीम्नि काले बिलेऽपि च' इत्यमरः। 'अभियोगस्तु शपथे स्यादाक्रे च पराभवे' इति विश्वः। 'भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः' इत्यमरः। सहस्रपत्रं कमलं शतपत्रं कुशेशयम्' इत्यमरः ॥ ४६ ॥

सारार्थः—दुर्योधनेन या त्रयोदशवार्षिकी समयमर्यादा कृता; तन्मध्य एव चेद्युयं तेन साकं विग्रह कर्मस्तदा ये तद्वश्यनन्तरमात्मनाऽस्मत्पक्षमङ्गीकरिष्यन्ति, त एव भूपा अस्मान् नीतिप्रतिकूलान् ज्ञात्वा स्वयमस्मद्विषो भविष्यन्ति । यथा सूर्योदये कमलवनानि स्वयं स्फुटितानि भवन्ति तद्वद् द्विषताऽधुना विग्रहे कृते सर्वथा स्वीयैव हानिरस्ति, तेन मौनावलम्बनमेव वरम् ॥ ४६ ॥

भाषाऽर्थः—समय का करार करनेवाले दुर्योधन के साथ अभी अगर आप विग्रह ठानेंगे तो यही विग्रह सब राजाओं के मेरे पक्ष से फुटा देगा, जैसे कि उदय होते ही सूर्य कमल वन मुख ( कलियों के अग्रभाग ) को स्फुटित करता है ॥४६॥

अथ ये वृष्णिपक्षास्तान्प्रत्याह—

**उपजापसहान्विलङ्घयन् स विधाता नृपतीन्मदोद्धतः ।**
**सहते न जनोऽप्यधःक्रियां किमु लोकाधिकधाम राजकम् ॥४७॥**

उपजापेति । मदोद्धतः स दुर्योधनो नृपतीनन्यान्नृपान्विलङ्घयन्मदादवमानयन् । सहन्त इति सहाः । पचाद्यच् । उपजापस्य सहान् भेदयोग्यान् । 'समौ भेदोपजापौ' इत्यमरः । विधाता विधास्यति । दधातेर्लुट् । अवमानितो जनः सुभेद्य इति भावः । न च ते सहिष्णव इत्याह—जनः प्राकृतोऽप्यधः क्रियामपमानं न सहते । लोकाधिकधाम लोकोत्तरप्रतापं राजकं राजसमूहः 'गोत्रोक्षोष्ट्र–' इत्यादिना वुञ्प्रत्ययः । किमु न सहत इति किं वक्तव्यमित्यर्थः । तथा सति कृत्स्नमेव राजमण्डलमस्मानेवावलम्बिष्यत इति भावः ॥ ४७ ॥

अन्वयः—मदोद्धतः, सः, नृपतीन्, विलङ्घयन् ( सन् ), उपजापसहान्, विधाता जनः अपि, अधः क्रियां; न, सहते, लोकाधिकधाम, राजकं, किमु ॥ ४७ ॥

सुधा—मदोद्धतः = अविनयी, उद्दण्ड इति यावत् । सः = दुर्योधन इत्यर्थः । नृपतीन् = भूपान्, स्वाश्रितानिति शेषः । विलङ्घयन् = तिरस्कुर्वन् सन् स्वयमेव, उपजापसहान् = भेदयोग्यान् विधाता = विधास्यति; करिष्यतीति यावत् । नहि तेषामात्मपक्षिणो विधातुं गूढचरप्रेषणावश्यकतेति भावः । कुतः इति तद्धेतुमाह— जनः = साधारणलोकः, अपि, विभवादिहीनोऽपि लोक इत्याशयः । अधःक्रियां = तिरस्क्रियाम्, अपमानमिति यावत् । न सहते = न क्षमते, तर्हि लोकाधिकधाम = लोकोत्तरतेजस्कम्, राजकं = राजसमूहः, किमु = किमिव, सहते नहि कथमपि दुर्योधनकृतावमानं ते सहिष्यन्ते, तदा नियतं नः पक्षमङ्गीकरिष्यन्तीति ॥ ४७ ॥

समासः—सहन्त इति सहा, उपजापस्य सहा उपजापसहाः । मदेनोद्धतः मदोद्धतः । लोकेभ्योऽधिकमिति लोकाधिकं लोकाधिकं धाम यस्य तद् लोकाधिकधाम । राज्ञां समूहो राजकम् ॥ ४७ ॥

व्याकरणम्—विलङ्घयन् = वि + लघ् = णिच् + शतृ । सहते + सह् + लट् ॥४७॥

वाच्यान्तरम्—मदोद्धतेन तेन नृपतीन् विलङ्घयता नृपतय उपजापसहा विधातारः । जनेनाऽप्यधः क्रिया न सह्यते, लोकाधिकधाम्ना राजकेन किम ॥ ४७ ॥

कोषः—'अथ समौ भेदोपजापौ' इत्यमरः । 'नृपतिर्भूपती राजा लोकेशो जनशासकः' इति कोषः । 'अधःक्रिया तिरस्क्रियाऽवमानमित्युदीर्यते' इति कोषः । '···अथ राजकम् । राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात्' इत्यमरः ॥ ४७ ॥

सारार्थः—स च दुर्योधनो महानुद्धतोऽस्ति, अतोऽवश्यं समये समये निजाश्रितान् भूपानवहेलया द्रक्ष्यति, अपमानितास्तु ते स्वयं तस्माद्भिन्ना भूत्वाऽस्मत्पक्षमागमिष्यन्ति । अस्माकं तेषां स्वपक्षमेलनार्थं गूढचरप्रेषणावश्यकतापि न भविष्यति, अतोऽधुना समयप्रतीक्षणकरणमेवोचितमिति ॥ ४७ ॥

भाषाऽर्थः—मद से उद्धत दुर्योधन राजाओं का अपमान करता हुआ खुद अपने से उन राजाओं को फोड़ेगा । क्योंकि मामूली लोग भी किसी दूसरे का अपमान नहीं सह सकते, फिर लोगों से बढ़े हुये प्रतापवाले राजाओं के समूह की बात ही क्या ? ॥ ४७ ॥

ननु 'सखीनिव' इत्यादिवनेचरोक्त्या तस्य भवसम्भावनाऽपि कथमित्यत आह—

**असमापितकृत्यसम्पदां हतवेगं विनयेन तावता ।**
**प्रभवन्त्यभिमानशालिनां मदमुत्तम्भयितुं विभूतयः ॥ ४८ ॥**

असमापितेति । असमापितकृत्यसम्पदामकृतकृत्यानामतोऽभिमानशालिनामहङ्कारिणां विभूतयः संपद एव तावता स्वल्पेन विनयेन । कार्यवशादारोपितेनेति शेषः । हतवेगं प्रतिबद्धवेगं न तु स्वरूपतो हतं मदमुत्तम्भयितुं वर्धयितुं प्रभवन्ति । सर्वथा दुर्जनसंपदो विकारयन्तीति भावः ॥ ४८ ॥

अन्वयः—असमापितकृत्यसम्पदाम्, अभिमानशालिनां, विभूतयः, तावता विनयेन, हतवेगं मदम् उत्तम्भयितुं, प्रभवन्ति ॥ ४८ ॥

सुधा—असमापितकृत्यसम्पदाम्=अपूर्णकार्याणाम्, अकृतकृत्यानामिति यावत् । अभिमानशालिनाम् = अहङ्कारिणां, विभूतयः = ऐश्वर्याणि (कर्तृ), तावता=स्तोकेन परिमितेनेति वा, विनयेन = नम्रतया, हतवेगं = किञ्चिदवरुद्धजवम्, मदं = दर्पम्, उत्तम्भयितुं = वर्धयितुं, प्रभवन्ति = पारयन्ति ॥ ४८ ॥

समासः—कृत्यानां सम्पत् कृत्यसम्पत्, न समापिता कृत्यसम्पद्यैस्तेऽसमापितकृत्यसम्पदस्तेषामसमापितकृत्यसम्पदाम् । हतो वेगो यस्य स हतवेगस्तं हतवेगम् । अभिमानेन शालन्ते ये तेऽभिमानशालिनस्तेषामभिमानशालिनाम् ॥ ४८ ॥

व्याकरणम्—प्रभवन्ति = प्र + भू + लट् । उत्तम्भयितुं = उत् + स्तम्भ + णिच् । तुमुन् ॥ ४८ ॥

वाच्यान्तरम्—असमापितकृत्यसंपदामभिमानशालिनां विभूतिभिः, तावता विनयेन हतवेगो मद उत्तम्भयितुं प्रभूयते ॥ ४८ ॥

कोषः—'वेगः प्रवाहजवयोरपि' इत्यमरः। 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः। 'विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा' इत्यमरः। 'मादो मद उद्वेग उद्भ्रमे' इत्यमरः ॥ ४८ ॥

सारार्थः—ये किल व्यवस्थितबुद्धयो न भवन्ति, ते किमपि कार्यं प्रारम्भादवसानपर्यन्तं न सम्पादयन्ति एवम्भूताः सन्तोऽपि यदि ते गौरवान्विता अपि भवन्ति, तदा कृत्रिमोपायेन यदि स्वाज्ञानगर्वं गोपयन्ति तथाऽपि तस्य गर्वस्य मूलवर्त्तमानतया तेषां सम्पदः पुनः संवर्धयन्ति। यदि अहङ्कारिणां मदो व्याजविनयेन नश्यति; नश्यत्यपि क्षणमात्रमेवेति ॥ ४८ ॥

भाषाऽर्थः—अधूरा काम करनेवाले घमण्डियों की दौलत थोड़ी बहुत बनाई नम्रता से दबी हुई भी मद ( दर्प ) को बढ़ाती ही है ॥ ४८ ॥

अथ मदस्यानर्थहेतुतां युग्मेनाह—

**मदमानसमुद्धतं नृपं न वियुङ्क्ते नियमेन मूढताम्।**
**अतिमूढ उदस्यते नयान्नयहीनादपरज्यते जनः ॥ ४९ ॥**

मदेति। मदमानाभ्यां दर्पाहङ्काराभ्यां समुद्धतं नृपं मूढता कार्यापरिज्ञानं नियमेनावश्यं न वियुङ्क्ते न विमुञ्चति। अतिमूढो नयान्नीतिमार्गादुदस्यत उत्क्षिप्यते। कर्मकर्तरि लट्। नयहीनाज्जनोऽपरज्यतेऽपरक्तो भवति। 'स्वरितञितः—' इत्यादिनाऽऽत्मनेपदम् ॥ ४९ ॥

अन्वयः—मूढता, मदमानसम्, उद्धतं ( वा मदमानसमुद्धतं ) नृपं नियमेन, न, वियुङ्क्ते। अतिमूढः, नयाद्, उदस्यते, जनः, नयहीनाद्, अपरज्यते ॥ ४९ ॥

सुधा—मूढता = विवेकशून्यता, कर्त्तव्याकर्त्तव्यज्ञानहीनतेति यावत्। मदमानसं=दर्पान्वितचित्तम्, उद्धतम्=अविनयं वा मदमानसमुद्धतं = दर्पाहङ्कारोद्दण्डं, नृपं = राजानम्, ऐश्वर्यवन्तमित्यर्थः। नियमेन = निश्चयेन, न वियुङ्क्ते=न त्यजति अथ, अतिमूढः = परमविवेकहीनः, नयात् = नीतेः, उदस्यते = उत्क्षिप्यते, नीतिमार्गान्मूढो जनो भ्रष्टो भवतीति भावः, जनः = प्रजागणः, नयहीनाद् = अन्यायरताद्, भूपादिति शेषः। अपरज्यते = नानुरज्यते, विरक्तो भवतीत्यर्थः। अथ यत्र प्रजाभूपयोर्मिथो मैत्री न, तत्र चिरकल्याणमपि न भवति। तथाहि='सदाऽनुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसम्पदः' इत्यनेनैव कविवरेणादिसर्गे चोक्तम् ॥

समासः—मदश्च मानश्च मदमानौ, ताभ्यां समुद्धतो मदमानसमुद्धतस्तं मदमानसमुद्धतम्। नयेन हीनो नयहीनस्तस्मान्नयहीनात् ॥ ४९ ॥

व्याकरणम्—वियुङ्क्ते = वि + युज् + लट्।　　उदस्यते = उत् + अस् + लट्। अपरज्यते = अप + रञ्ज + लट् ॥ ४९ ॥

वाच्यान्तरम्—मूढतया मदमानसमुद्धतो नृपः, नियमेन न वियुज्यते। अतिमूढेन नयादुदस्यते। जनेन नयहीनादपरज्यते ॥ ४९ ॥

कोषः—'नयो नाये' इत्यमरः ॥ ४९ ॥

सारार्थः—दर्पाहङ्कारवान् जनोऽवश्यं विवेकहीनो भवति । यः किल विवेकभ्रष्टः स तु नियतं नीतिमार्गाच्च्युतो भवति । अन्यायी (नीतिवर्जितः) जनः, प्रजारञ्जको नैव भवतीति ॥ ४९ ॥

भावाऽर्थः—जो कोई राजा मद से अहङ्कारवान् होता है, उसको जरूर मूढ़ता घेरती है। जो मूढ़ हुआ, वह न्याय नहीं करता याने अन्यायी कहलाता है और अन्यायी राजा से प्रजा बिगड़ जाती है।

अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसन्ततिः ।
सुकरस्तरुवत्सहिष्णुना रिपुरुन्मूलयितुं महानपि ॥ ५० ॥

अपरागेति—अपरागोऽप्रीतिः । द्वेष इति यावत्, समीरण इव । तेनेरितश्चोदितः अत एव क्रमेण शीर्णा शीर्णीभूताऽऽकुला चला च मूलसन्ततिः । प्रकृत्यादिस्वजनवर्गः शिफासङ्घातश्च यस्य स तथोक्तः । 'मूलं वशीकृते स्वीये शिफातारान्तिकादिषु' इति वैजयन्ती । रिपुर्महानपि तरुवद् वृक्ष इव सहिष्णुना क्षमावतोन्मूलयितुमुद्धर्तुं सुकरः सुसाध्यः । सुकरोन्मूलन इत्यर्थः । अत्र मदादेः पूर्वपूर्वस्योत्तरं प्रति कारणत्वात्कारणमाला, तरुवदित्युपमा चेति द्वयोः संसृष्टिः ॥ ५० ॥

अन्वयः—अपरागसमीरणेरितः, क्रमशीर्णाकुलमूलसन्ततिः, महान्, अपि रिपुः तरुवत्, सहिष्णुना, उन्मूलयितुं; सुकरः, भवति ॥ ५० ॥

सुधा—अपरागसमीरणेरितः=विरागवायुप्रेरितः, वैररूपेण मारुतेनाघातमुपगत इत्यर्थः । क्रमशीर्णाकुलमूलसन्ततिः = परिशिथिलव्याकुलामात्यादिजनः, महान् = विशालः, अपि, रिपुः=शत्रुः, तरुवत् = वृक्षवत्, अर्थात्तरुपक्षे—अपरागसमीरणेरितः = झञ्झावातप्रेरितः, ( न परागो धूलिर्यस्मिन्, सः अपरागस्तादृशः समीरणो महावातः, तेनेरित इति अपरागसमीरणेरितः, अर्थाद्वायौ तदैव धूलिराहित्यं, यदा सवृष्टिको वायुर्वहति तदैव वृक्षादयः पतन्ति ), क्रमशीर्णाकुलमूलसन्ततिः = शनैः शिथिलिपरिच्छिन्नशिफासमूहः ( सवृष्टिकवेगवद्वायौ वहति शनैः शनैः परितो भ्रामितस्य तरोर्मूले जलमन्तः पविशति, ततः सकलशिफासमूहाः शिथिलास्तथा भिन्नाश्च भवन्ति, तदुत्तरक्षणे स च वृक्षो हाहाकारं कृत्वा पतति ), महान् = उच्चशाखः, एवम्भूतवृक्षस्य पतनवत्, सहिष्णुना = शान्तिमता, क्षमावता वा जनेन, उन्मूलयितुम् = उत्पाटयितुम्, उत्पाट्य पातयितुमिति, वृक्षपक्षे—उन्मूलयितुं = समूलं नाशयितुं, सुकरः = सुसाध्यः; भवतीति शेषः ॥ ५० ॥

समासः—अपरागः समीरण इवेति अपरागसमीरणः, तेन ईरित इत्यपरागसमीरणेरितः । मूलानां सन्ततिर्मूलसन्ततिः क्रमेण शीर्णा चाकुला च शीर्णाकुला मूलसन्ततिर्यस्य सः, क्रमशीर्णाकुलमूलसन्ततिः ॥ ५० ॥

व्याकरणम्—ईरितः=ईर् + क्तः। उन्मूलयितुम् + उद् + मूल + णिच् = तुमुन् ॥

वाच्यान्तरम्—अपरागमसमीरणेरितेन, क्रमशीर्णाकुलमूलसन्ततिना, महता रिपुणा, तरुवदुन्मूलयितुं सुकरेण भूयते ॥ ५० ॥

कोषः—'समीरमारुतमरुज्जगत्प्राणसमीरणाः। प्रकम्पनो महावातो झञ्झावातः सुवृष्टिकः' इत्यमरः। मूलं वशीकृते स्वीये शिफाताराऽन्तिकादिषु' इति वैजयन्ती। 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः' इत्यमरः। रिपौ वैरिसपत्नारिद्विषद्द्वेषण-दुर्हृदः' इत्यमरः ॥ ५० ॥

सारार्थः—यथा झञ्झावातवेगस्याघातेन पीडितोऽत एव शनैः शनैः परिशिथिल-त्रुटितशिफासमूहो वृक्षः वायुनोन्मूल्यते, तथैव विरक्तमन्त्रिवर्गपरित्यक्तः शत्रुरपि समयप्रतीक्षकेण शान्तिमता जनेन जेतुं सुकरो भवति ॥ ५० ॥

भाषाऽर्थः दिल फटने की हवा से धक्का खाया हुआ धीरे-धीरे मन्त्री वगैरह रूपी जड़ जिसकी उखड़ गयी है, ऐसा बड़ा भी वैरी रहमदिल वाले आदमी द्वारा वृक्ष ( पेड़ ) के समान उखाड़ने में सरल होता है ॥ ५० ॥

नन्वन्तर्भेदमात्रेण कथं सुसाध्यस्तत्राह—

अणुरप्युपहन्ति विग्रहः प्रभुमन्तःप्रकृतिप्रकोपजः।
अखिलं हि हिनस्ति भूधरं तरुशाखाऽन्तनिघर्षजोऽनलः ॥ ५१ ॥

अणुरिति। अणुरल्पोऽप्यन्तःप्रकृतिप्रकोपजोऽन्तरङ्गामात्याद्यपरागसमुत्थः। 'प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारणे। छन्दःकारणगुह्येषु जन्त्वमात्याधिकेष्वपि ॥' इति वैजयन्ती। विग्रहो वैरं प्रभुमुपहन्ति नाशयति। अत्र दृष्टान्तमाह—तरुशाखा-न्तानां विघर्षो घर्षणं तज्जोऽनलोऽग्निः। भूधरं गिरिमखिलं साकल्येन हिनस्ति हि दहतीत्यर्थः। अत्रोपमानोपमेयसमानधर्माणां प्रतिबिम्बतया निर्देशेन दृष्टान्तालङ्कारः।

अन्वयः—अणुः अपि, अन्तःप्रकृतिप्रकोपजः, विग्रहः, प्रभुम्, उपहन्ति। हि, तरुशाखाऽन्तनिघर्षजः, अनलः, अखिलं, भूधरं, हिनस्ति ॥ ५१ ॥

सुधा—अणुः = स्वल्पः, अपि = किल, अन्तःप्रकृतिप्रकोपजः = अन्तरङ्गामात्यादि-विरक्तिजनितः, विग्रहः = विरोधः, ( कर्त्ता ), प्रभुं = स्वामिनं, राजानमित्यर्थः। उपहन्ति = नाशयति। तथाहि—हि = यथा, तरुशाखाऽन्तनिघर्षजः = वृक्षशाखा-ऽग्रसङ्घर्षणोत्थः, अणुः = स्फुलिङ्गः, अपि, विग्रहः = ग्रहीतुमशक्यः, शमयितुमसाध्य इत्यर्थः। अन्तःप्रकृतिप्रकोपजः = वृक्षमध्यवर्त्यूष्मविकारजातः, अनलः = अग्निः, अखिलं = सकलं, निरवशेषमित्यर्थः। भूधरं = गिरिम्, हिनस्ति = ध्वंसयति, दह-तीत्यर्थः। अर्थात् पर्वतं यथा स्वावयवोत्पन्नसङ्घातसङ्घर्षजवह्निर्दहति न कस्यापि पर्वतदहनाय वह्निक्षेपावश्यकता, तथैव विरुद्धमन्त्रिवर्गादियुक्तं राजानं स्वान्योन्य-विरोध एव नाशयति। नान्यस्य भेदार्थं गूढचरप्रेषणावश्यकतेति ॥ ५१ ॥

समासः—अन्तःप्रकृतीनां प्रकोपः, अन्तःप्रकृतिप्रकोपः, तस्माज्जातोऽन्तःप्रकृतिप्रकोपजः । तरूणां शाखास्तरुशाखास्तासामन्ता इति तरुशाखाऽऽन्तास्तेषां निघर्षाज्जातो यः स तरुशाखान्तनिघर्षजः ॥ ५१ ॥

व्याकरणम्—उपहन्ति = उप + हन + लट् । हिनस्ति = हिसि + लट् + श्नम् ॥

वाच्यान्तरम्—अणुनाऽप्यन्तःप्रकृतिप्रकोपजेन विग्रहेण प्रभुरुपहन्यते । हि तरुशाखाऽन्तनिघर्षजेनानलेनाखिलो भूधरो हिंस्यते ॥ ५१ ॥

कोषः—'स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु । स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाणवः' इत्यमरः । 'अस्त्रियां समरानीकरणाः समरविग्रहौ' इत्यमरः । 'भूधरः पर्वतः शैलो गिरिगोत्राचलादयः' इति कोषः । 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः' इति मेदिनी ॥ ५१ ॥

सारार्थः—यस्य राज्ञः स्वकीयमन्त्रिमण्डले मिथो न मैत्री स स्वयं नश्यति । यथा पर्वतोपरि जायमानशमीवृक्षशाखादिसङ्घर्षणाज्जातोऽग्निः स्वाधारं पर्वतमेव दहतीति ॥ ५१ ॥

भावार्थः—अपने मन्त्रियों के बीच में जरा भी बिगाड़ हो तो वह मालिक को चौपट कर देती है । पर्वत पर वृक्षों की डारों की रगड़ से पैदा हुई आग समूचे पर्वत ( पहाड़ ) को जला देती है ॥ ५१ ॥

तथापि कथं वर्द्धमानं शत्रुमुपेक्षेतेत्याशङ्क्य दुर्विनीतत्वादित्याह—

**मतिमान्विनयप्रमाथिनः समुपेक्षेत समुन्नतिं द्विषः ।**
**सुजयः खलु तादृगन्तरे विपदन्ता ह्यविनीतसम्पदः ॥ ५२ ॥**

मतिमानिति । मतिमान्प्राज्ञः । विनयं प्रमथ्नातीति विनयप्रमाथिनो दुर्विनीतस्य द्विषः समुन्नतिं वृद्धिं समुपेक्षेत । उपेक्षायाः फलमाह—तादृगविनीतोऽन्तरे क्वचिद्रन्ध्रे सुजयः सुखेन जेतुं शक्तः खलु । हि यस्मादविनीतसम्पदो विपदन्ताः विपन्मर्यादकाः । अनर्थोदर्का इत्यर्थः ॥ ५२ ॥

अन्वयः—मतिमान्, विनयप्रमाथिनः, द्विषः, समुन्नतिं, समुपेक्षेत । तादृग्, अन्तरे, सुजयः, खलु । हि, अविनीतसम्पदः, विपदन्ताः ( भवन्ति ) ॥ ५२ ॥

सुधा—मतिमान् = धीमान्, विचारवानित्यर्थः । विनयप्रमाथिनः = विनयहीनस्य, अनयस्य, उद्धतस्येत्यर्थः । द्विषः=शत्रोः, समुन्नतिम्=अभ्युदयं, समुपेक्षेत= न तदर्थचिन्तितो भवेदिति भावः । तादृग् = उद्धतः, शत्रुरिति शेषः । अन्तरे = मध्ये, एवं, सुजयः = सुखेन जेतुं योग्यः, खलु = किल । हि = यतः, अविनीतसम्पदः = उद्धतैश्वर्याणि, विपदन्ताः = दुःखपरिणामाः भवन्तीति शेषः । धनमपि विचारवतां विनयिनामेव सुखावसानं, नहि = मदोद्धतस्येत्यर्थः ॥ ५२ ॥

समासः—विनयं प्रमथ्नातीति विनयप्रमाथी, तस्य विनयप्रमाथिनः । विपद् अन्ते यासां विपदन्ताः । अविनीतस्य सम्पदोऽविनीतसम्पदः ॥ ५२ ॥

व्याकरणम्—समुपेक्षेत = सम् + ईक्ष + लिङ् ॥ ५२ ॥

वाच्यान्तरम्—मतिमता विनयप्रमाथिनो द्विषः समुन्नतिः समुपेक्ष्येत, तादृशाऽन्तरे सुजयेन भूयते । ह्यविनीतसम्पद्भिर्विपदन्ताभिर्भूयते ॥ ५२ ॥

कोषः—'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः ॥

सारार्थः—उद्धतस्य शत्रोरभ्युदयमवलोक्य विचारवान् जनश्चिन्तां तत्पराजयार्थं न कुर्यात्, अपि तु मदोद्धतो रिपुः स्वयं सुखेन पराजितो भवति । यस्मात् कारणाद् उद्धतस्य जनस्यैश्वर्याणि दुःखावसानान्येव भवन्ति ॥ ५२ ॥

भाषाऽर्थः—बुद्धिमान् आदमी को चाहिये कि अपने उद्धत शत्रु की उन्नति को देखकर न घबराये । क्योंकि, उद्धत शत्रु बीच ही में मौत से मात होने के लायक हो जाता है । क्योंकि बेरहम दिलवाले लोगों की बदौलत आखिर में विपत्ति हो ही जाती है ॥ ५२ ॥

कथं दुर्विनीतस्य शत्रोः सुजयत्वमित्याशङ्क्य भेदजर्जरितत्वादित्याह—

**लघुवृत्तितया भिदां गतं बहिरन्तश्च नृपस्य मण्डलम् ।**
**अभिभूय हरत्यनन्तरः शिथिलं कूलमिवापगारयः ॥ ५३ ॥**

लघ्विति । लघुवृत्तितया स्वस्य दुर्वृत्तिरूपतया बहिर्मित्रादिजनपदेष्वन्तरमात्यादिषु च भिदां भेदं गतम् । 'षिद्भिदादिभ्योऽङ्' इत्यङ्प्रत्ययः । नृपस्य मण्डलं राष्ट्रमनन्तरः सन्निहितो जिगीषुरापगारयो नदीवेगः शिथिलमन्तर्भेदजर्जरकूलमिवाभिभूयाक्रम्य हरति ॥ ५३ ॥

अन्वयः—अनन्तरः, लघुवृत्तितया, भिदां, गतं, बहिः, अन्तः, च, नृपस्य, मण्डलम्, अभिभूय, आपगारयः, शिथिलं, कूलम्, इव, हरति ॥ ५३ ॥

सुधा—अनन्तरः = सन्निहितः जिगीषुरित्यर्थः । प्रतिपक्षीति यावत् ( कर्ता ) । लघुवृत्तितया = क्षुद्रवृत्तितया, नीचाचारतयेति यावत् । भिदां गतं = भेदं प्राप्तं मिथो विभिन्नचित्तमित्यर्थः । बहिः = मित्रादिषु, अन्तः = मन्त्रिवर्गेषु, नृपस्य = राज्ञः, मण्डलं = राष्ट्रम्, अभिभूय = आक्रम्य, हरति = नाशयति । यथा, अनन्तरः = तटनिकटवर्ती, आपगारयः = नदीवेगः ( कर्ता ), लघुवृत्तितया = नीचवृत्तित्वेन, भिदां = भिन्नतां, गतं = यातम्, बहिः = तटास्किञ्चिद्बाह्यप्रदेशेऽपि, अन्तः = नदीमध्येऽपि; नृपस्य = नरपेयस्य, जलस्येति शेषः । मण्डलं = समूहम्, अभिभूय = परितो भ्रामयित्वाऽऽवर्त्तरूपेणेत्यर्थः । अत एव शिथिलं = जर्जरं कूलं = वेलां, ( नदी ) तटमिति यावत् वा, हरति = पातयति, तथैवेति ॥ ५३ ॥

समासः—लघ्वी वृत्तिर्यस्य स लघुवृत्तिस्तस्या भावस्तत्ता लघुवृत्तिता, तया लघुवृत्तितया । आपगाया रयः आपगारयः ॥ ५३ ॥

व्याकरणम्—अभिभूय = अभि + भू + क्त्वा + ल्यप् ॥ ५३ ॥

वाच्यान्तरम्—अनन्तरेण; लघुवृत्तितया भिदां गतं बहिरन्तश्च नृपस्य मण्डलम् अभिभूय, आपगारयेण शिथिलं कूलमिव ह्रियते ॥ ५३ ॥

कोषः—'भेदोपजापावुपधा' इत्यमरः। 'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु' इत्यमरः। 'स्रोतस्वती द्वीपवती स्रवन्ती निम्नगाऽऽपगा' इत्यमरः। 'रंहस्तरसी तु रयः स्यदः जव' इत्यमरः ॥ ५३ ॥

सारार्थः—राज्ञो नीचाचारप्रचारतया विरक्तैर्मन्त्रिप्रभृतिभिर्भिन्नं राजानं समवगम्य समयप्रतीक्षकः समीपवर्ती जिगीषुः प्रयासं विनैव तं ध्वंसयति। यथा निम्नवर्ति शिथिलं तीरं नदीवेगः खण्डयति, तथैवेति ॥ ५३ ॥

भाषाऽर्थः—नीच आचरण के कारण पृथक् हो गये हैं मन्त्री और मित्रगण जिस के ऐसे राजा के राज्य को दूसरे जीतने वाले प्रतिपक्षी झट चढ़ाई करके चौपट कर देते हैं। जैसे नदी का वेग दोनों किनारों को काटकर गिरा देता है ॥ ५३ ॥

अनुशासतमित्यनाकुलं नयवर्त्माकुलमर्जुनाग्रजम् ।
स्वयमर्थ इवाभिवाञ्छितस्तमभीयाय पराशरात्मजः ॥ ५४ ॥

अन्विति। इतीत्थमाकुलमरिनिकारस्मरणात्क्षुभितमर्जुनाग्रजं भीमसेनं नयवर्त्म नीतिमार्गमनाकुलसङ्कीर्णं यथा तथाऽनुशासतमुपदिशन्तम्। 'जक्षित्यादयः षट्' इत्यभ्यस्तात्च्छतुर्नुमभावः। तं युधिष्ठिरं पराशरात्मजो वेदव्यासः। स्वयमभिवाञ्छितोऽर्थ इव साक्षान्मनोरथ इवेत्युत्प्रेक्षा। अभीयाय प्राप्तः ॥ ५४ ॥

अन्वयः—पराशरात्मजः, इति आकुलम्, अर्जुनाग्रजं, नयवर्त्म, अनाकुलम्, अनुशासतं, तं स्वयम्, अभिवाञ्छितः, अर्थः, इव, अभीयाय ॥ ५४ ॥

सुधा—पराशरात्मजः = पराशरपुत्रः व्यास इत्यर्थः। इति = एवम्, पूर्वोक्तक्रमेणेत्यर्थः। आकुलं = खिन्नं, शत्रुकृताक्षेपक्षोभव्यग्रमित्यर्थः। अर्जुनाग्रजम् = भीमं, नयवर्त्म=नीतिमार्गम्, एवमुचितमेवं त्वन्मतमनुचितमिदानीमितिरूपम्, अनाकुलं=सुप्रसन्नं, यथा स्यात्तथा. स्वयं निश्चिन्तो भूत्वेति भावः। अनुशासतम्= उपदिशन्तं, तं=युधिष्ठिरं प्रति, स्वयं = साक्षात, शरीरधारीत्यर्थः। अभिवाञ्छितः= अभिलषितः, अर्थः=प्रयोजनमिव, अभियाय=प्राप्तः। अर्थात् युधिष्ठिरस्यैतत्पूर्वत एवेदमिष्टं, यद्यधुना व्यास आगच्छेत् तदा सर्वदा मम शुभं भविष्यतीति इच्छाऽनन्तरमेव व्यासमागतमवलोकितवानिति भावः ॥ ५४ ॥

समासः—न आकुलः यथा तथाऽनाकुलम्। नयस्य वर्त्म नयवर्त्म, तत्। अर्जुनस्याग्रजः अर्जुनाग्रजस्तम् अर्जुनाग्रजम्। पराशरस्यात्मजः पराशरात्मजः ॥ ५४ ॥

व्याकरणम्-अनुशासतम्=अनु + शास + शतृ। अभीयाय=अभि=इण् + लिट्।

वाच्यान्तरम्—पराशरात्मजेन स्वयमभिवाञ्छितेनार्थेनेव, भीममनुशासत् स युधिष्ठिरः अभीये ॥ ५४ ॥

कोषः—'खिन्नो व्यग्रोऽसुखी क्लेशी चाकुलश्चिन्तितो मतः' इति कोषः। 'अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः' इत्यमरः। 'अर्थः प्रयोजने भाव' इति कोषः॥

सारार्थः—यदा युधिष्ठिरः वनेचरवदननिवेदितवचनश्रवणस्मृतिजायमानखेद-खिन्नं भीमं स्वनीतिरीत्योपदिशति स्म तदानीमेव शरीरधारी मनोरथ इव व्यासः समागतः ॥ ५४ ॥

भावार्थः—इस तरह घबड़ाये हुए भीम के प्रति स्थिरचित्त से नीति का रास्ता बनाते हुए महाराज युधिष्ठिर के पास खुद मनोरथस्वरूप श्रीव्यासजी आ पहुँचे ॥

अथ युग्मेनाह—

**मधुरैरवशानि लम्भयन्नपि तिर्यञ्चि शमं निरीक्षितैः ।**
**परितः पटु बिभ्रदेनसां दहनं धाम विलोकनक्षमम् ॥ ५५ ॥**

मधुरैरिति—मधुरैः शान्तैर्निरीक्षितैरवलोकनैः । नपुंसके भावे क्तः । न विद्यते वशमायत्तत्वं येषां तान्यवशानि प्रतिकूलानि । 'वशमायत्ततायां च' इति विश्वः । तिर्यञ्चि मृगपक्ष्यादीनि शमं शान्तिं लम्भयन्प्रापयन् । 'लभेश्च' इति नुमागमः । 'गत्यर्थ—' इत्यादिना द्विकर्मकत्वम् । परितः पटूज्ज्वलमेनसाम् । दह्यतेऽनेनेति दहनं निवर्तकं तथाऽपि विलोकनक्षमं दर्शनीयम् । वह्न्यादिविलक्षणमिति भावः । धाम तेजो बिभ्रत् ॥ ५५ ॥

अन्वयः—मधुरैः, निरीक्षितैः, अवशानि, अपि, तिर्यञ्चि, शमं, लम्भयन्, परितः पटु, एनसां, दहनं विलोकनक्षमं, धाम, बिभ्रत् ( ददृशे ) ॥ ५५ ॥

सुधा—मधुरैः=शान्तैः, प्रेमपूर्णैरिति वा अक्रूरैरिति यावत् । निरीक्षितैः= अवलोकनैः, अवशानि=स्वतन्त्राणि, अपरप्रत्ययकराणीत्यर्थः, अपि, तिर्यञ्चि= पशुपक्षिसमूहान्, शमं=शान्तिं, लम्भयन्=प्रापयन्, पुनः, परितः=समन्तात्, पटु=उज्ज्वलम्, एनसां=पापानां, दहनं=ज्वालकं, तथाऽपि, विलोकनक्षमं= दर्शनार्हं, धाम=तेजः, बिभ्रद्=दधत्, व्यासः ( ददृशे इति ) ॥ ५५ ॥

समासः—विलोकने क्षमं, विलोकनक्षमम् ॥ ५५ ॥

व्याकरणम्—लम्भयन्=लभ्+णिच्+शतृ+नुम् । बिभ्रद्=भृ+शतृ ॥५५॥

वाच्यान्तरम्—मधुरैर्निरीक्षितैरवशान्यपि तिर्यञ्चि शमं लम्भयन्तं, धाम बिभ्रतं व्यासं ( ददर्श ) ॥ ५५ ॥

कोषः—'स तिर्यङ्चस्तिरोऽञ्चति' इत्यमरः। 'कलुषं वृजिनैनोऽघमंहो दुरित-दुष्कृतम्' इत्यमरः ॥ ५५ ॥

सारार्थः—द्वैतवने यत्र युधिष्ठिरः सपरिवारोऽतितिष्ठत्, यत्र प्रकृत्या चञ्चला अपि नरं निरीक्ष्य व्याधबुद्ध्या द्रुतं पलायनपराः परस्परविरोधिनोऽपि ये पशु-पक्षिण आसन्, तान् परमसौम्यनयनावलोकेन शान्तान् कुर्वन् पापप्रणाशकं तेजः-पुञ्जं दधद् व्यासो युधिष्ठिरजिज्ञासया समागतः ॥ ५५ ॥

भाषाऽर्थः—स्वच्छन्द पशु-पक्षियों को भी अपने मीठे अवलोकन से शान्त करते हुए और पापों को नाश करने वाले, चमकदार तथा दर्शनीय तेज को धारण किये हुए व्यास युधिष्ठिर के यहाँ उपस्थित हुए ॥ ५५ ॥

सहसोपगतः सविस्मयं तपसां सूतिरसूतिरापदाम् ।
ददृशे जगतीभुजा मुनिः स वपुष्मानिव पुण्यसञ्चयः ॥ ५६ ॥

सहसेति । पुनः सहसोपगतोऽकस्मादागतस्तपसां सूतिः प्रभव आपदामसूतिरप्रभवः । निवर्तकः इति यावत् । स मुनिर्व्यासो वपुष्मान्देहधारी पुण्यसञ्चयः पुण्यराशिरिवेत्युत्प्रेक्षा । जगतीभुजा राज्ञा सविस्मयं ददृशे दृष्टः ॥ ५६ ॥

अन्वयः—सहसा, उपगतः, तपसां सूतिः, आपदाम्, असूतिः, सः, मुनिः, वपुष्मान्, पुण्यसञ्चयः इव, जगतीभुजा, सविस्मयं ददृशे ॥ ५६ ॥

सुधा—सहसा = अकस्मात्, उपगतः = प्राप्तः, समागत इत्यर्थः । तपसां = तपश्चरणस्य, सूतिः = जनकः, आपदां=दुःखानाम्, असूतिः=अनुत्पादकः, विनाशक इत्यर्थः । सः = एवम्भूतः, मुनिः = योगी, व्यास इति शेषः । वपुष्मान् = देहवान्, पुण्यसञ्चयः = सुकृतराशिः, इव, जगतीभुजा = राज्ञा, युधिष्ठिरेणेति भावः, सविस्मयं = साश्चर्यं सचकितमित्यर्थः । अहो धन्या वयं, यदस्मिन्दुःखावसरे दुःखौघध्वंसकस्य व्यासस्य दर्शनमभवत् क्वेदृशो धर्म आसीत् येन समेदृक् सौभाग्यमुपस्थितं, लौकिकी गाथाऽपि सत्यैव 'एति जीवन्तमानन्दो नर वर्षशतादपि' वा० रा० एवं सबहुचकितं, ददृशे = दृष्टः ॥ ५६ ॥

समासः—विस्मयेन सह यथा स्यात्तथेति क्रियाविशेषणम् । जगती भुनक्तीति जगतीभुक् तेन जगतीभुजा । पुण्यानां सञ्चयः पुण्यसञ्चयः ॥ ५६ ॥

व्याकरणम्—ददृशे = दृशेः कर्मणि लिट् ॥ ५६ ॥

वाच्यान्तरम्—जगतीभुक्, सहसोपगतं तपसां सूतिम्, आपदामसूतिम्, मुनिम्, वपुष्मन्तं पुण्यसञ्चयमिव ददर्श ॥ ५६ ॥

कोषः—'अतर्किते तु सहसा' इत्यमरः । 'विस्मयोऽद्भुतमाश्चर्यं चित्रमपि' इत्यमरः । 'तपः कृच्छ्रादिकर्म च' इत्यमरः । 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृष' इत्यमरः ॥ ५६ ॥

सारार्थः—यदा भीमं प्रति युधिष्ठिर उपदेशं ददाति स्म, तदानीमकस्मादपरिमेयपुण्यपुञ्जस्तपःप्रचारको व्यासस्तत्रोपस्थितो बभूव ॥ ५६ ॥

भाषाऽर्थः—एकाएक ( अचानक ) पहुँचे हुए, तपस्याओं को पैदा करने वाले, विपत्तियों का संहार करनेवाले, देहधारी पुण्य के ढेर के जैसे महात्मा व्यास मुनि को बड़े अचरज के साथ महाराज युधिष्ठिर ने देखा ॥ ५६ ॥

**अथोच्चकैरासनतः परार्ध्यादुद्यन् स धूतारुणवल्कलाग्रः ।**
**रराज कीर्णाकपिशांशुजालः श‍ृङ्गात्सुमेरोरिव तिग्मरश्मिः ॥५७॥**

अथेति। अथ दर्शनानन्तरम्। उच्चकैरुन्नतात्पराध्यार्च्छ्रेष्ठात्। 'अर्धाद्यत्'। 'परावराधमोत्तमपूर्वाच्च' इति यत्प्रत्ययः। आसनतः सिंहासनादुद्यन्नुत्तिष्ठन्नत एव धूतानि कम्पितान्यरुणानि वल्कलाग्राणि यस्य स तथोक्तः। स नृपः कीर्णं विस्तृतमाकपिशमंशुजालं यस्य स तथोक्तः सुमेरोः श‍ृङ्गादुद्यंस्तिग्मरश्मिरिव रराज ॥ ५७ ॥

अन्वयः—अथ उच्चकैः, परार्ध्याद्, आसनतः, उद्यन्, धूतारुणवल्कलाग्रः, सः, कीर्णाकपिशांशुजालः सुमेरोः श‍ृङ्गाद् उद्यन् तिग्मरश्मिरिव रराज ॥ ५७ ॥

सुधा—परार्ध्यात्=महामूल्यवत इत्यर्थः। आसनतः=पीठात्, सिंहासनादित्यर्थः। उद्यन्=उत्तिष्ठन्, अकस्मादागतं व्यासं विलोक्य ससम्भ्रमं सिंहासनादुत्थित इत्यर्थः। अत एव, धूतारुणवल्कलाग्रः=कम्पितरक्तवृक्षत्वक्प्रान्तः, सः=युधिष्ठिरः, सुमेरोः=सुवर्णाद्रेः, श‍ृङ्गाद्=शिखराद्, उद्यन्, अत एव कीर्णाकपिशांशुजालः=व्याप्तपीतवर्णकिरणनिकरः, तिग्मरश्मिः=सूर्यः, इव, रराज=शुशुभे। अत्रेतः पूर्ववृत्तान्तस्य दुःखरूपत्वाद्, अतः परं समभ्युदयलाभसम्भवाद् भिन्नेन पद्येन कविर्वर्णयति। इदं वंशस्थवृत्तम्। तल्लक्षणञ्च 'जतौ तु वंशस्थमुदीरितं जरौ' इति॥

समासः—वल्कलस्याग्राणि वल्कलाग्राणि, अरुणानि वल्कलाग्राणि, इत्यरुणवल्कलाग्राणि, धूतान्यरुणवल्कलाग्राणि यस्य स धूतारुणवल्कलाग्रः। अंशूनां जालम् अंशुजालम्, आसमन्ताद्भावेन कपिशं पीतमंशुजालमिति आकपिशांशुजालं, कीर्णं आकपिशांशुजालं यस्य स कीर्णाकपिशांशुजालः। तिग्मा रश्मयो यस्य स तिग्मरश्मिः ॥ ५७ ॥

व्याकरणम्—उद्यन्=उत्+इण्+शतृ। रराज=राज्+लिट् ॥ ५७ ॥

वाच्यान्तरम्—अथ उच्चकैः परार्ध्यादासनतः उद्यता, धूतारुणवल्कलाग्रेण तेन सुमेरोः श‍ृङ्गादुद्यता कीर्णाकपिशांशुजालेन तिग्मरश्मिनेव रेजे ॥ ५७ ॥

कोषः—'पीठमासनम्' इत्यमरः। 'मुख्यवर्यवरेण्याश्च प्रवर्होऽनवरार्ध्यवत्। परार्ध्याग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम्' इत्यमरः। 'वल्कद्रुत्वगित्युक्तम्' इति कोषः। 'कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ' इत्यमरः ॥ ५७ ॥

सारार्थः—यथा सुमेरोः श‍ृङ्गादुदितः सूर्यो भाति, तथैवासनादुत्थितो युधिष्ठिरः शुशुभे ॥ ५७ ॥

भाषाऽर्थः व्यासजी को देखने के बाद झट ऊँचे अच्छे आसन पर से उठे हुए, इसीसे डोलता हुआ लाल पेड़ की छाल के वस्त्र का किनारा है जिसका, ऐसे युधिष्ठिर उस समय सुमेरु के शिखर से उदय हुए, पीली किरण समूहों से दिगन्त को ढाँकते हुए सूर्य के समान शोभित हुए ॥ ५७ ॥

अवहितहृदयो विधाय सोऽर्हामृषिवदृषिप्रवरे गुरूपदिष्टाम् ।
तदनुमतमलञ्चकार पश्चात् प्रशम इव श्रुतमासनं नरेन्द्रः ॥ ५८ ॥

अवहितेति । स नरेन्द्रोऽवहितहृदयोऽप्रमत्तचित्तः सन् । ऋषिप्रवरे मुनिश्रेष्ठे ऋषिवदृष्यर्हाम् । अर्हार्थे वतिप्रत्ययः । गुरूपदिष्टाम् । शास्त्रीयामित्यर्थः । अर्हां पूजाम् । 'गुरोश्च हलः' इत्यकारप्रत्ययः । विधाय पश्चादनन्तरं तदनुमतं तेनानुज्ञातमासनम् । प्रशमः शान्तिः श्रुतं शास्त्रश्रवणमिव । अलञ्चकार । उक्तं च— 'प्रशमस्तस्य भवत्यलङ्क्रिया' इति । मुन्याज्ञयोपविष्टवानित्यर्थः ॥ ५८ ॥

अन्वयः—सः, नरेन्द्रः, अवहितहृदयः, ( सन् ), ऋषिप्रवरे, ऋषिवद्, गुरूपदिष्टाम्, अर्हां विधाय, पश्चात्, तदनुमतम्, आसनम्, प्रशमः, श्रुतम्, इव, अलञ्चकार ।

सुधा—सः = युधिष्ठिरः, नरेन्द्रः = राजा, अवहितहृदयः = सावधानचित्तः, सन्, ऋषिप्रवरे=योगिश्रेष्ठे, मुनिवरे, व्यास इत्यर्थः । ऋषिवद्=ऋषियोग्यां, गुरूपदिष्टां= गुरूपदेशानुसारां, शास्त्रविहितामित्यर्थः । यथा ( पाद्यं, मधुपर्कः, आचमनीयं, स्नानीयं, भोज्यं, पुनराचमनीयं, शयनं चेत्यादि, सर्वविधरूपाम् ) अर्हाम् = पूजां, विधाय = कृत्वा, पश्चात = पूजाऽनन्तरं, सुस्थे मुनौ, तदनुमतं = तदनुज्ञातं, व्यासेन निर्दिष्टम्, आसनम्=पीठम्, प्रशमः=शान्तिः, श्रुतं=शास्त्रश्रवणम्, इव, अलञ्चकार= परिगृहीतवान्, व्यासपूजां कृत्वा तदाज्ञया स्वयमप्युपविष्ट इत्यर्थः ॥ ५८ ॥

पद्यपरिचयः—इदं 'पुष्पिताग्रा' नाम वृत्तम् । इदमर्धसमम्, अथादर्धं समं यस्य तत्, तथाहि = प्रथमपादलक्षणं तृतीयपादलक्षणेन समम् । द्वितीयपादलक्षणं तु चतुर्थेन सममिति भावः । ततस्तल्लक्षणञ्च 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति । अस्यायमाशयः—विषमे प्रथमतृतीयचरणे, नगणनगणरगणयगणा भवन्ति, समे च चरणेऽर्थाद् द्वितीयचतुर्थपादयोः नगणजगणजगणरगणा एको गुरुश्चैते यत्र पद्यार्धे; तत्पुष्पिताग्रा नाम वृत्तम् । प्रकृतौ यथा—

न न र य न ज ज र ग
। । । । । । ऽ । ऽ । ऽ ऽ । । । । ऽ । । ऽ । ऽ । ऽ ऽ
अ व हि त हृ द यो वि धा य सो ऽर्हा मृ षि व दृ षि प्र व रे गु रू प दि ष्टाम्

न न र य न ज ज र य
। । । । । । ऽ । ऽ । ऽ ऽ । । । । ऽ । । ऽ । ऽ । ऽ ऽ
त द नु म त म ल ञ्च का र प श्चा त्प्र श म इ व श्रु त मा स नं न रे न्द्रः

समासः—अवहितं हृदयं यस्य सः अवहितहृदयः । ऋषिषु प्रवरः ऋषिप्रवरः तस्मिन् ऋषिप्रवरे । गुरुणोपदिष्टा या सा तां गुरूपदिष्टाम् ॥ ५८ ॥

व्याकरणम्--विधाय = वि + धा + क्त्वा + ल्यप् । अलञ्चकार = अलं + कृ + लिट् ॥ ५८ ॥

वाच्यान्तरम्---तेन नरेन्द्रेणावहितहृदयेन सता, ऋषिप्रवरे ऋषिवदर्हां विधाय तदनुमतमासनं प्रशमेन श्रुतमिवालञ्चक्रे ॥ ५८ ॥

कोषः—'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः। 'पूजा नमस्याऽपचितिः सपर्याऽर्चाऽर्हणाः समाः' इत्यमरः। 'श्रुतं शास्त्रावधृतयोः' इत्यमरः ॥ ५८ ॥

सारार्थः--व्यासं समागतं विलोक्यासनादुत्थाय मन्वादिस्मृतिप्रोक्तगुरुजनोचितसत्कारेण तं सन्तोष्य स्वयमपि युधिष्ठिरस्तेनानुज्ञातः ( स्वमप्यासने उपविश एवम् ) आसने उपविवेश ॥ ५८ ॥

भाषार्थः--वह महाराज युधिष्ठिर स्थिरचित्त होकर, ऋषिमुनियों की जैसी होनी चाहिए वैसी गुरुजनों के मुख से निकली हुई, व्यास की पूजा ( अर्घ्य, पाद्य, आसन, भोजन इत्यादि ) करके उन्हीं की आज्ञा से आसन पर बैठे ॥ ५८ ॥

व्यक्तोदितस्मितमयूखविभासितोष्ठस्तिष्ठन्मुनेरभिमुखं स विकीर्णधाम्नः ।
तन्वन्तमिद्धमभितो गुरुमंशुजालं लक्ष्मीमुवाह सकलस्य शशाङ्कमूर्तेः ॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये द्वितीयः सर्गः ॥ २ ॥

व्यक्तेति । व्यक्तोदितैः स्फुटोद्गतैः स्मितमयूखैर्विभासितावोष्ठौ यस्य स तथोक्तः । विकीर्णधाम्नो विस्तीर्णतेजसा मुनेरभिमुखं तिष्ठन् स नृपः । इद्धं दीप्तमंशुजालं तन्वन्तं गुरुं गीष्पतिम् ! 'गुरुर्गीष्पतिपित्रादौ' इत्यमरः । 'अभितः परितः-' इत्यादिना द्वितीया । अभितोऽभिमुखम् । तिष्ठत इति शेषः । सकलस्य सम्पूर्णस्य शशाङ्का मूर्तिर्यस्य तस्येन्दोर्लक्ष्मीमुवाह वहतिस्म । अत्रोपमेयस्य राज्ञ उपमानेन्दुधर्मेण लक्ष्म्याः साक्षात्सम्बन्धासम्भवात्तत्सदृशीं लक्ष्मीमिवेति प्रतिबिम्बकरणाक्षेपादसम्भववस्तुसम्बन्धारपदार्थवृत्तिर्निदर्शनालङ्कारः । तदुक्तम्—'प्रतिबिम्बस्याकरणं सम्भवता यत्र योगेन । तत्साम्यं सम्भवता निदर्शना सा द्विधाऽभिमता ॥' इति ॥

इति मल्लिनाथसूरिविरचितायां घण्टापथव्याख्यायां द्वितीयः सर्गः ॥

अन्वयः—व्यक्तोदितस्मितमयूखविभासितोष्ठः, विकीर्णधाम्नः, मुनेः, अभिमुखं, तिष्ठन् सः, इद्धम्, अंशुजालं, तन्वन्तं, गुरुम्, अभितः, सकलस्य, शशाङ्कमूर्तेः, लक्ष्मीम्, उवाह ॥ ५९ ॥

सुधा—व्यक्तोदितस्मितमयूखविभासितोष्ठः = स्पष्टनिर्गतेषद्धास्यहेतुकदन्तपङ्क्तिकिरणशोभितदशनच्छदः, विकीर्णधाम्नः = परितः प्रसृततेजसः, मुनेः = व्यासस्य, अभिमुखं = संमुखं, तिष्ठन् , सः = युधिष्ठिरः, इद्धं = दीप्तं, चञ्चदित्यर्थः । अंशुजालं = किरणनिकरं, तन्वन्तं = विस्तारयन्तं, गुरुम् = बृहस्पतिम्, अभितः = अभिमुखस्थि-

तस्य, सकलस्य = कलापरिपूर्णस्य, वा पूर्णस्य, शशाङ्कमूर्त्तेः=चन्द्रबिम्बस्य, लक्ष्मीं= शोभाम्, उवाह = वहति स्म, यथा गुरुसम्मुखस्थितचन्द्रो भवति तथैव व्यासाभिमुखो युधिष्ठिर इत्यर्थः ॥ ५९ ॥

समासः—स्मितस्य मयूखाः स्मितमयूखाः, व्यक्तं यथा स्यात्तथा उदिता व्यक्तोदिता ये स्मितमयूखास्ते व्यक्तोदितस्मितमयूखास्तैर्विभासितौ ओष्ठौ यस्य स व्यक्तोदितस्मितमयूखविभासितोष्ठः । विकीर्णं धाम यस्य स विकीर्णधामा तस्य विकीर्णधाम्नः । अंशूनां जालमंशुजालम् । कलाभिः सहितः सकलस्तस्य । शश एवाङ्को यस्यां सा शशाङ्का, शशाङ्का मूर्तिर्यस्य स शशाङ्कमूर्त्तिश्चन्द्रस्तस्य शशाङ्कमूर्त्तेः ॥

व्याकरणम्—तिष्ठन् = ष्ठा + लट् + शतृ । उवाह = वह् + लिट् ॥ ५९ ॥

वाच्यान्तरम्—व्यक्तोदितस्मितमयूखविभासितोष्ठेन विकीर्णधाम्नो मुनेरभिमुखं तिष्ठता तेनेद्धमंशुजालं तन्वन्तं गुरुमभितः सकलस्य शशाङ्कमूर्त्तेर्लक्ष्मीरूहे ॥ ५९ ॥

कोषः—'स मनाक् स्मितम्' इत्यमरः । 'किरणोस्त्रमयूखांशुगभस्तिघृणिधृष्णयः' इत्यमरः 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमरः । 'बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः' इत्यमरः ॥ ५९ ॥

सारार्थः—यथा बृहस्पतेः सम्मुखे वर्त्तमानस्य पूर्णचन्द्रस्य शोभा जायते तथैव व्यासाभिमुखोपविष्टस्य युधिष्ठिरस्य श्रीर्बभूवेति भावः ॥ ५९ ॥

भाषाऽर्थः—जैसे अपने किरणों को फैलाते हुए बृहस्पति के सामने चन्द्रमा की शोभा होती है, ठीक वैसे ही परम प्रशस्त तेजवाले व्यास मुनि के सामने बैठे हुए महाराज युधिष्ठिर शोभित होते थे ॥ ५९ ॥

वृत्तपरिचयः—इदं वसन्ततिलकसंज्ञं वृत्तम्—तल्लक्षणञ्च—'उक्तं वसन्ततिलका तभजा जगौ गः'-इति । अथात्र तत्प्रतीतिः—

| त | भ | ज | ज | ग ग |
|---|---|---|---|---|
| S S । | S । । | । S । | । S । | S S |
| व्यक्तोदि | तस्मित | मयूख | विभासि | तोष्ठः । |

एवं समवृत्तत्वाच्चतुर्ष्वपि पादेषु विज्ञेयं विज्ञैः ।

इति मिश्रोपनामकेन श्रीगङ्गाधरशर्मणा कृता द्वितीयसर्गस्य सुधाव्याख्या परिपूर्णेति ।

महाकविभारविप्रणीतं

# किरातार्जुनीयम्

## ( तृतीयः सर्गः )

महामहोपाध्यायमल्लिनाथसूरिविरचितया 'घण्टापथ'-व्याख्यया
पं० श्रीगङ्गाधरशर्मकृतया 'सुधा'-व्याख्यया च सहितम्

# भूमिका

## १. संस्कृत काव्य

संस्कृत में सभी प्रकार की साहित्यिक रचनाओं को दो भागों में बाँटा गया है। दृश्य-काव्य और श्रव्यकाव्य। दृश्यकाव्य के अन्तर्गत नाटकादि आ जाते हैं। श्रव्यकाव्य के भी तीन भेद हो जाते हैं :-१. पद्य २. गद्य ३. चम्पू ('पद्यं गद्यं च मिश्रं च तत् त्रिधैव व्यवस्थितम्'-दण्डिनः)। पुनः पद्य के भी दो प्रकार होते हैं :-१. महाकाव्य-जैसे रघुवंशम्, किरातार्जुनीयम्, शिशुपालवधम् इत्यादि, २. खण्डकाव्य—जैसे, मेघदूत, भामिनी-विलास, अमरुशतक इत्यादि। गद्य के भी दो प्रकार होते हैं :—(१) कथा—जैसे कादम्बरी और (२) आख्यायिका-जैसे, हर्षचरित। श्रव्यकाव्य का तीसरा भेद है चम्पू, जो गद्य और पद्य दोनों का मिश्रण होता है; जैसे भारतचम्पू, विश्वगुणादर्श चम्पू इत्यादि ('गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते')?

## २. महाकाव्य के लक्षण

'किरातार्जुनीयम्' एक महाकाव्य है जैसा नाम ही से स्पष्ट है। 'महाकाव्य' एक बड़ा काव्य होता है जो विस्तार में तो बड़ा होता ही है, हर दृष्टि से बड़ा होता है। संस्कृत के आलंकारिकों ने महाकाव्य के लक्षणों की विस्तृत विवेचना की है। अग्निपुराण, काव्यादर्श साहित्यदर्पण, काव्यालङ्कार एवं सरस्वतीकण्ठाभरण ग्रन्थों में महाकाव्य की परिभाषा दी गई है। यहाँ हम 'साहित्यदर्पण' से महाकाव्य की विस्तृत परिभाषा उद्धृत करते हैं :—

सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः। सद्वंशः क्षत्रियो वाऽपि धीरोदात्तगुणान्वितः॥
एकवंशभवा भूपाः कुलजा बहवोऽपि वा। शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते॥
अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसंधयः। इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम्॥
चत्वारस्तस्य वर्गाःस्युस्तेष्वेकं च फलं भवेत्। आदौ नमस्क्रियाऽऽशीर्वा वस्तुनिर्देश एव वा॥
कचिन्निन्दा खलादीनां सतां च गुणकीर्तनम्। एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः॥
नातिस्वल्पा नातिदीर्घा सर्गा अष्टाधिका इह। नानावृत्तमयः कापि सर्गः कश्चन दृश्यते॥
सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत्। संध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः॥
प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः। संभोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः॥
रणप्रयाणोपयमन्त्रपुत्रोदयादयः। वर्णनीया यथायोगंसाङ्गोपाङ्गा अमी इह॥
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा। नामास्य सर्गोपादेयकथया सर्गनाम तु॥

सर्वप्रथम महाकाव्य सर्गों में विभक्त होता है। नायक—या तो कोई देवता या उच्चवंशोत्पन्न क्षत्रिय होता है, वह धीरोदात्त प्रकृति का नायक होता है। नायक एक वंश

से कई राजा भी हो सकते है जैसे रघुवंश में । प्रधान रस शृङ्गार, वीर या शान्तरस होता है और अन्य रस उसके सहायक होते हैं । कथावस्तु नाटक के समान ही होती है, वह ऐतिहासिक हो सकती है या किसी सज्जन के सत्कर्मसम्बन्धी । पुरुषार्थचतुष्टय की प्राप्ति इसका ध्येय होता है और उसकी प्राप्ति के साधनों का वर्णन प्रधान होता है । काव्य के प्रारम्भ में इष्टदेव की स्तुति, मङ्गलकामना या कथा का निर्देश होता है । दुर्जनों की निन्दा तथा सज्जनों की प्रशंसा, सन्ध्या, सर्योदय, चन्द्रोदय, रात्रि, गोधूलि, दिन, अन्धकार, प्रेमियों का मिलन-वियोग, आखेट, ऋषि, स्वर्ग, नगर, यश, युद्ध, आक्रमण, विवाह उपदेश, पुत्रजन्म इत्यादि इसके वर्ण्य विषय होते हैं । महाकाव्य में एक सर्ग में एक ही छन्द का प्रयोग होता है और सर्ग के अन्त में छन्द बदल दिया जाता है । सर्ग न तो बहुत छोटे और न बहुत बड़े होने चाहिये, उनकी संख्या कम से कम आठ होनी चाहिये। कभी-कभी एक ही सर्ग में कई वृत्तों का भी प्रयोग पाया जाता है । सर्ग के अन्त में आगे आने वाले सर्ग की कथा का उल्लेख होता है । महाकाव्य का नाम—कवि, वर्ण्यविषय, नायक या किसी अन्य व्यक्ति के नाम पर रखा जा सकता है किन्तु प्रत्येक सर्ग का नामकरण उसके अन्तर्गत वर्ण्य विषय के अनुसार ही होना चाहिये ।

## ३. महाकवि भारवि

व्यक्तिगत जीवन—संस्कृत साहित्य के महाकवियों में भारवि का दूसरा स्थान है। कवि के व्यक्तिगत जीवन के विषय में हमारा ज्ञान अनिश्चित सा ही है । कदाचित हमारे महाकवि को अत्यन्त दुःखमय एवं निर्धनतापूर्ण जीवन व्यतीत करना पड़ा था जैसे जीवन का वरदान सदैव से सभी भाषा के महाकवियों को मिलता रहा है । अपने यौवन में उनकी प्रतिभा का आदर करने वाला, एवं उन्हें आश्रय देने वाला भी शायद कोई न मिला था । भारवि की निर्धनता के सम्बन्ध में एक रोचक कथा भी प्रचलित है । महाकवि के घर में निर्धनता का ताण्डवनृत्य हो रहा था और महाकवि थे जो काव्य सरोवर में गोते लगाने में आनन्द ले रहे थे । कविप्रिया से कवि की यह लापरवाही कैसे सही जा सकती थी ? अपने व्यंग्य बाणों से वह कवि के हृदय को बेधती, खरी-खोटी सुनाती ही रहती । पत्नी की डाँट-फटकार से ऊबकर कवि ने अपनी अकर्मण्यता का अनुभव किया। आसन डोला, और वे चल पड़े राजा का आश्रय ढूँढ़ने के लिये । कुछ ही दूर गये होंगे कि एक सुन्दर सरोवर मिला; प्रकृति के प्रेमी कवि के लिये सरोवर का आकर्षण प्रबल हो गया और थका-माँदा कवि वहीं विश्राम करने लगा । वहीं कवि ने इस श्लोक की रचना की :—

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥ ( कि० २ : ३० )

कवि को अपनी दशा का अनुभव तो हो ही चुका था अतः श्लोकानुसार ही वह जिसे

ढूँढ़ने चला था वह वहीं मिल गया। आखेट के लिये निकला हुआ राजा कवि की रचना को सुनकर अत्यन्त प्रसन्न हुआ और उन्हें राजधानी चलने को कहकर शिकार के लिये चल पड़ा, इधर कवि की रचना को लेकर राजा चलते बने और उधर जब कवि फटे कपड़े पहने, सुदामाजी की तरह राजमहल के फाटक पर पहुँचा तो उसे भी प्रवेश का अधिकार न मिल सका। निराश होकर उसे वैसे ही लौटना पड़ा जैसे प्रायः गुणी एवं विद्वान् भी बाह्याडम्बर के अभाव में तिरस्कृत होते हैं। राजा ने कवि के इस श्लोक को अपने कक्ष में स्वर्णाक्षरों में अङ्कित कराया था। एक वर्ष बाद वह एक बार शिकार पर निकला। राजा एक सप्ताह के लिये राजधानी से बाहर गया था, किन्तु दूसरी रात को पड़ाव निकट ही होने से वह महल में लौट आया। उसने अपनी शय्या पर रानी के साथ किसी अन्य व्यक्ति को सोते हुए देखा। अत्यन्त क्रोधावेश में तलवार से दोनों का काम तमाम करने ही वाला था कि उसका ध्यान उन स्वर्णाक्षरों की ओर गया 'सहसा विदधीत न क्रियाम्' इस वाक्य को देखते ही राजा ने उन दोनों को जगाकर फिर उन्हें दण्ड देने का निश्चय किया। जब उसने उन दोनों को जगाया तो यह देखकर उसके आश्चर्य का ठिकाना न रहा कि रानी के साथ उसका एकलौता पुत्र सोया था जिसे एक दाई चुरा ले गई थी और जो उसी शाम को मिल गया था। राजा ने उस कवि का पता लगाया जिसके लिखे श्लोक की पंक्ति ने राजा को शोकसागर में डूब जाने से बचाया और उसे अतुल धनराशि से सम्मानित किया।

कवि के व्यक्तिगत जीवन के विषय में उसका एकमात्र महाकाव्य एकदम मौन है। किरातार्जुनीयम् से केवल इतना ही हम कह सकते हैं कि ये शैव थे। अपने पिता, पितामह या गुरु किसी का भी उल्लेख इन्होंने 'किरातार्जुनीयम्' में नहीं किया है जैसा अन्य कवियों ने अपनी रचनाओं में अपना परिचय दिया है। 'अवन्तिसुन्दरीकथा' में दण्डी ने अपने पूर्वजों का विस्तृत वर्णन दिया है। इसके अनुसार दक्षिणभारत में कौशिक गोत्र के ब्राह्मण रहते थे जो बाद में अचलपुर ( बरार के अन्तर्गत एलिचपुर ) में आकर बस गये। इसी वंश में 'नारायणस्वामी' उत्पन्न हुए। इनके पुत्र दामोदर हुए, यही दामोदर कवि 'भारवि' नाम से विख्यात हुए। भारवि पहले क्षेत्रीय नरेश विष्णुवर्धन के आश्रित थे फिर वे राजा दुर्विनीत के मित्र हो गये। दुर्विनीत ने 'किरातार्जुनीयम्' के सर्वाधिक क्लिष्ट पन्द्रहवें सर्ग पर टीका भी लिखी। अन्त में भारवि पल्लववंशी सम्राट् सिंहविष्णु के दरबार में रहने लगे। भारवि का पुत्र मनोरथ' था। उसका चौथा पुत्र वीरदत्त था जिसने गौरी से विवाह किया; इसी वीरदत्त और गौरी का पुत्र था दण्डी।

अवन्तिसुन्दरीकथा के अनुसार कवि का निवास स्थान एलिचपुर ही सिद्ध होता है, किन्तु स्वर्गीय प्रो० आर० आर भागवत ने निम्न श्लोक में आये सह्य पर्वत के आधार पर इनका निवास स्थान दक्षिण भारत में माना है :—

उरसि शूलभृतः प्रहिता मुहुः प्रतिहति ययुरर्जुनमुष्टयः।
भृशरया इव सह्यमहीभृतः पृथुनि रोधसि सिन्धुमहोर्मयः॥ ( १७. ५ )

किन्तु इस कथन से पूर्णरूपेण सहमत नहीं हुआ जा सकता। यह सम्भव है कि कवि ने पश्चिमी समुद्र तटों पर भ्रमण किया हो और लहरों की क्रीडाओं को जी भर देखा हो; इससे यह नहीं कहा जा सकता कि वे एलिचपुर में रहते हों। महाकवि का हिमालय वर्णन कुछ खटकने वाला एवं कालिदास की तुलना में अधूरा लगता है, अत एव यह कहा जा सकता है कि वे उत्तर भारतीय कवि नहीं थे और न उन्होंने उत्तर भारत की यात्रा ही की थी।

**स्थितिकाल**—महाकवि भारवि के स्थितिकाल के विषय में निम्न विचार एवं प्रमाण प्रस्तुत किये जाते हैं :—

( १ ) दक्षिण के चालुक्यवंशी नरेश पुलकेशी द्वितीय के समय के ऐहोल शिलालेख में भारवि का नाम कालिदास के साथ मिलता है। यह शिलालेख बीजापुर में ऐहोल ग्राम के एक जैन मन्दिर में मिला है। इसका समय ५५६ शकाब्द अर्थात् ६३४ ई० है। प्रशस्तिलेखक रविकीर्ति कोई जैन कवि है जो अपने को कालिदास और भारवि के समान यशस्वी बताता है ( स विजयतां रविकीर्तिः कविताश्रित-कालिदासभारविकीर्तिः )। इससे यह तात्पर्य निकलता है कि सातवीं शताब्दी के उत्तरार्ध के पूर्व भारवि इतनी प्रसिद्धि प्राप्त कर चुके थे जिससे उनका नाम कालिदास के नाम के साथ लिया जाने लगा था।

( २ ) चूंकि भारवि का नाम कालिदास के साथ लिया गया है अतः कहा जा सकता है कि ये दोनों समकालीन रहे हों; किन्तु यह उचित नहीं। दोनों की शैली में इतना महान् अन्तर है कि दोनों दो भिन्न-भिन्न युगों के कवि हैं; दोनों के समय की काव्य की धारायें एक दूसरे से इतनी विपरीत हैं कि कालिदास से भारवि तक पहुँचने में काव्य की ६ शताब्दी का समय लग ही गया होगा। अतः भारवि कालिदास के समकालीन नहीं हो सकते।

( ३ ) गंग नरेश दुर्विनीत से समय के गुमरेड्डीपुर के लेख से ज्ञात होता है कि दुर्विनीत ने 'किरातार्जुनीयम्' के १५ वें सर्ग पर टीका लिखी थी। लेख के समय के विषय में विद्वानों में मतभेद है; किन्तु नवीनतम अन्वेषणों से दुर्विनीत का राज्यकाल ५८० ई० ठहरता है और भारवि का समय इसके बाद किसी प्रकार नहीं रखा जा सकता है।

( ४ ) अवन्तिसुन्दरी कथा के आधार पर भारवि विष्णुवर्धन के सभापण्डित थे। विष्णुवर्धन पुलकेशी द्वितीय का अनुज था और लगभग ६१५ में वह महाराष्ट्र पर राज्य करता था। उसका समकालीन होने से भारवि का समय सातवीं शताब्दी का प्रारम्भ होना चाहिये।

( ५ ) बाण ने कहीं भी भारवि का नाम नहीं लिया है। इससे स्पष्ट है कि भारवि बाण से बहुत पहले नहीं रहे होंगे और न बाण के समय में इतने प्रसिद्ध ही हुए होंगे कि बाण उनका उल्लेख करते। इन सभी विचारों से यही निष्कर्ष निकलता है कि भारवि का समय ५५० ई० से ६०० ई० तक ही माना जा सकता है।

## ४. किरातार्जुनीयम्

महाकवि भारवि का एकमात्र ग्रन्थ है महाकाव्य 'किरातार्जुनीयम्'। महाकाव्य का नामकरण किरातवेषधारी शङ्कर एवं पाण्डुपुत्र अर्जुन के युद्ध की घटना को लेकर किया गया है जो इस काव्य की प्रमुख घटना है। सम्पूर्ण महाकाव्य १८ सर्गों में निबद्ध है। महाकाव्य के नायक हैं वीर अर्जुन जो पाशुपतादि दिव्यास्त्रों की प्राप्ति के लिये इन्द्रकील पर्वत पर तपस्या करते हैं। नायक के चारित्रिक महत्व को बढ़ाने के लिये कवि ने शङ्कर भगवान् को किरात के रूप में उपस्थित किया है। काव्य का मुख्य रस है वीर रस, एवं शृङ्गारादि इसके सहकारी रस हैं। महाकाव्य 'श्री' शब्द से प्रारम्भ होता है और प्रत्येक सर्ग के अन्तिम छन्द में 'लक्ष्मी शब्द का प्रयोग है। भारवि के युग कवियों की यह एक प्रमुख विशेषता है। ' माघ' एवं श्रीहर्ष ने भी क्रमशः 'श्री' एवं 'आनन्द' शब्द सर्गान्त में प्रयुक्त किये हैं।

**कथा की पृष्ठभूमि**—महाकाव्य की कथा महाभारत पर आधारित है। महाभारत को कई नाटक एवं महाकाव्यों का उपजीव्य होने का गौरव प्राप्त है। यह काव्य महाभारत की मुख्य कथा से ही सम्बन्धित है। पाण्डु की मृत्यु के बाद पाण्डव धृतराष्ट्र की संरक्षकता में रहने लगे। ज्येष्ठ पाण्डव युधिष्ठिर जब युवक हुए तो धृतराष्ट्र ने उन्हें हस्तिनापुर का युवराज बनाया। धृतराष्ट्र का ज्येष्ठ पुत्र दुर्योधन युधिष्ठिर के युवराज बन जाने से ईर्ष्या से जल रहा था और उनसे अत्यन्त द्वेष रखता था। दुर्योधन ने पाण्डवों को हर एक प्रकार से कष्ट देने एवं उन्हें नष्ट करने का जाल रचा, किन्तु पाण्डव बचते गये। उन्हें लाक्षागृह में जला देने का भी षड्यन्त्र उसने रचा किन्तु इस बार भी पाण्डव बच निकले। वे ब्राह्मणों का वेष बनाकर गुप्त रूप से रहने लगे और इसी बीच अर्जुन ने द्रौपदी के स्वयंवर में अपनी युद्धकला का प्रदर्शन किया। राजकुमारी द्रौपदी पाँचों पाण्डवों की पत्नी बनी। जब धृतराष्ट्र को पाण्डवों के जीवित होने का समाचार मिला तो उन्होंने उन्हें बुलाकर अपने पुत्रों एवं पाण्डवों में राज्य का विभाजन कर दिया। यमुना के तट पर इन्द्रप्रस्थ नगर को युधिष्ठिर ने अपनी राजधानी बनायी और चारों दिशाओं को जीतकर राजसूय यज्ञ किया। युधिष्ठिर की उन्नति देखकर ईर्ष्यालु दुर्योधन ने एक दूसरा षड्यन्त्र किया और अपने पिता से कहलाकर पाण्डवों को द्यूतक्रीड़ा के लिये निमन्त्रण दिया। दुर्योधन के मामा शकुनि की कपटपूर्ण चाल के आगे पाण्डव दाँव हराते गये और

अन्त में द्रौपदी को भी हार गये। भरी सभा में द्रौपदी का अपमान किया। क्रुद्ध भीम ने दुःशासन का रक्त पीने एवं दुर्योधन की जाँघ तोड़ने की प्रतिज्ञा की। उनकी प्रतिज्ञा की सूचना पाकर चतुर धृतराष्ट्र ने उन्हें बुलाकर फिर उनका राज्य वापस कर दिया। अपने इस षड्यन्त्र में भी असफल होने पर दुर्योधन ने फिर उन्हें द्यूतक्रीड़ा के लिये आमन्त्रित किया। इस बार शर्त यह रही की हारने वाला बारह वर्ष तक वनवास एवं एक वर्ष तक अज्ञातवास करेगा। यदि तेरहवें वर्ष में वह पहचान लिया जाय तो फिर उसी प्रकार १३ वर्ष और व्यतीत करने पड़ेंगे। पाण्डव इस बार भी हार गये। अपने भाइयों एवं पत्नी को साथ लेकर युधिष्ठिर ने वन की राह ली। महाकाव्य की कथा वहीं से प्रारम्भ होती है।

**महाकाव्य की कथा**—द्वैतवन में निवास करते हुए युधिष्ठिर ने दुर्योधन की नीति एवं शासन-व्यवस्था जानने के लिये एक वनेचर को दूत के रूप में भेजा। ब्रह्मचारी वेष में वह वनेचर दुर्योधन के राज्य का सम्पूर्ण वृत्तान्त जानकर युधिष्ठिर के पास लौट आया।

> श्रियः कुरूणामधिपस्य पालनीं प्रजासु वृत्तिं यमयुङ्क्त वेदितुम्।
> स वर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचरः॥
>
> कि॰ सर्गः १. श्लोक १.

वनेचर दुर्योधन के राज्य का सम्पूर्ण हाल बताता है कि किस प्रकार कपट से जीती हुई पृथ्वी को दुर्योधन नीति से जीत लेना चाहता है। सारी बातें बताकर वनेचर लौट जाता है। शत्रु के अभ्युदय का समाचार सुनकर एवं अपने पतियों की दुर्दशा देखकर द्रौपदी अत्यन्त ही दुःखित होती है। वह धर्मराज को उत्तेजित करने के लिये एवं शत्रु से शीघ्र बदला लेने के लिये नीतियुक्त वचन कहती है। तत्पश्चात् भीम भी द्रौपदी के सलाह की पुष्टि करते हैं और अपने बाहुबल के प्रयोग करने की आतुरता प्रदर्शित करते हैं। नीति विशारद युधिष्ठिर अपने वचनों से भीम को शान्त कर देते हैं एवं उन्हें शान्तिपूर्वक उपयुक्त समय की प्रतीक्षा करने का उपदेश देते हैं। इसी बीच भगवान् व्यास आते हैं वे अर्जुन को दिव्यास्त्र-प्राप्ति के लिये इन्द्र की तपस्या करने को कहते हैं। व्यास के भेजे गये गुह्यक के साथ अर्जुन इन्द्रकील पर्वत पर पहुँचते हैं। अर्जुन की कठिन तपस्या से डरकर इन्द्र तपस्या भङ्ग करने के लिये अप्सराओं को भेजते हैं जैसा वे बराबर करते-रहते हैं। किन्तु उससे भी जब अर्जुन का व्रत भंग नहीं होता है। तब स्वयं इन्द्र उन्हें शिव की तपस्या करने का उपदेश देते हैं। अर्जुन पुनः तपस्या करते हैं। इधर एक मायावी दैत्य अर्जुन को मारने के लिये सूअर का रूप धारण करता है। इस बात को जानकर भगवान् शिव भी अर्जुन की रक्षा के हेतु किरात का मायावी वेश धारण करते हैं। किरात और अर्जुन दोनों सूअर पर एक साथ ही बाण छोड़ते हैं। बाण के लिये—अर्जुन एवं किरात में विवाद चलता है और फिर युद्ध चल पड़ता है। अस्त्र-शस्त्रों के बाद वे मल्लयुद्ध पर

उतर आते हैं। अर्जुन की वीरता से प्रसन्न होकर भगवान् शिव प्रकट होते हैं तथा अर्जुन की पाशुपतास्त्र-प्राप्ति की अभिलाषा पूरी होती है और महाकाव्य पूरा होता है :—

व्रज जय रिपुलोकं पादपद्मानतः सन्, गदित इति शिवेन श्लाघितो देवसंगैः।
निजगृहमथ गत्वा सादरं पाण्डुपुत्रो, धृतगुरुजयलक्ष्मीर्धर्मसूनुं ननाम॥ १८.४०

'जाओ अपने शत्रुओं को जीतो' ऐसा आशीर्वाद प्राप्त कर अर्जुन लौट आते हैं एवं युधिष्ठिर के चरणों में सादर प्रणाम करते हैं।

## महाभारत एवं किरातार्जुनीयम् की कथा में अन्तर

यद्यपि 'किरातार्जुनीयम्' की कथा 'महाभारत' पर ही आधारित है, फिर भी कवि ने अपनी ओर से काव्य में पर्याप्त सामग्री जोड़ डाली है। केवल कथामात्र का ही अवलम्बन करने पर सात सर्गों तक कथा समाप्त हो सकती थी, किन्तु कवि ने इसे १८ सर्गों में वर्णन किया है। वास्तव में कवि अपनी प्रतिभा से उसमें नवीन रुचि का सृजन करता है एवं कथा को सजीवता प्रदान करता है।

( १ ) सर्वप्रथम कवि ने पात्रों के स्वरूप में भी पर्याप्त परिवर्तन कर दिया है। महाभारत के उद्धत भीम भारवि के हाथों एक सुयोग्य राजनीतिज्ञ बन जाते हैं।

( २ ) महाभारत में व्यास मन्त्र का उपदेश युधिष्ठिर को देते हैं और युधिष्ठिर अर्जुन को, किन्तु 'किरातार्जुनीयम्' के व्यास अर्जुन को ही उपदेश देते हैं।

( ३ ) महाभारत में अर्जुन इन्द्रकील पर्वत पर मन की गति से भी तीव्र मन्त्र की शक्ति से पहुँच जाते हैं। 'किरात' में यक्ष उन्हें पहुँचाता है।

( ४ ) इन्द्र, अर्जुन को मोहित करने के लिये 'किरातार्जुनीयम्' में, अप्सराओं को भेजता है, जिनका वर्णन चार सर्गों में किया गया है, फिर इन्द्र एक वृद्ध तपस्वी का वेश धारण कर आते हैं और अर्जुन की तपस्या से विरत होने को कहते हैं। महाभारत के अनुसार अर्जुन के इन्द्रकील पर्वत पर पहुँचते ही इन्द्र तपस्वी वेश में मिलते हैं।

( ५ ) महाभारत में शिव किरात का वेश धारण कर उमा के साथ आते हैं, और अर्जुन से अकेले लड़ते हैं। 'किरातार्जुनीयम्' से वे सेनासहित लड़ते हैं; किन्तु अर्जुन उनकी सेना को तितर-बितर कर देते हैं। सेना का वर्णन करके कवि अर्जुन की वीरता के महत्त्व की वृद्धि कर देता है। युद्ध के वर्णन में भी कवि भारवि का वर्णन अधिक सजीव है जब कि महाभारत का युद्ध वर्णन नीरस एवं शुष्क है।

( ६ ) युद्ध का अन्त भी दोनों में भिन्न रूप से होता है। महाभारत में अर्जुन बेहोश हो जाते हैं और सब होश में आते हैं तो किरात के सिर पर वही माला देखते हैं जो

उन्होंने शिवमूर्ति पर चढ़ायी थी और उसी के कारण शिव को पहचान लेते हैं। किरातार्जुनीयम्' के अनुसार जब द्वन्द्व युद्ध में अर्जुन शिव का पैर पकड़ते हैं जो शिव प्रसन्न होकर उन्हें हृदय से लगा देते हैं, प्रकट होते हैं एवं पाशुपतास्त्र प्रदान करते हैं।

( ७ ) इसके अतिरिक्त भारवि ने अर्जुन की तपस्या का, वनस्थली एवं वन का तथा नाना दृश्यों का सजीव वर्णन कर 'किरातार्जुनीयम्' को कमनीय एवं मनोरम कलेवर प्रदान किया हैं।

## ४. कवि एवं काव्य की समीक्षा

महाकवि भारवि, निःसन्देह एक उच्चकोटि के कवि हैं। उनका एकमात्र महाकाव्य 'किरातार्जुनीयम्' पञ्चमहाकाव्यों में एक है। महाकवि भारवि कलापक्ष के कवि हैं परन्तु अन्य कलावादी कवियों यथा माघ के समान न तो इनमें शब्द एवं अर्थ का उतना गाम्भीर्य है और न श्रीहर्ष की तरह प्रौढोक्ति को लम्बी उड़ान एवं पदलालित्य। उनकी महत्त्वपूर्ण विशेषता है उनका अर्थगौरव। अर्थ के गाम्भीर्य पर ही उनका ध्यान रहा है और इसमें वे सफल भी है। पण्डितों की उक्ति 'भारवेरर्थगौरवम्' उनके इसी गुण के कारण है। शब्दों की क्रीडा के फेर में वे हमेशा नहीं पड़ते। उनके काव्य की मान्यता उन्हीं के शब्दों में देखनी हो तो हम निम्न श्लोक से समझ सकते हैं :—

स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम्।
रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित् ॥ २१७ ॥

काव्य में अस्पष्टता का बहिष्कार, अर्थगौरव पर विशेष ध्यान एवं वाणी के अर्थ में पौनरुक्त्य से परहेज रखना ही उन्हें अभीष्ट था और यही विशेषता है 'किरातार्जुनीयम् की कला की। कालिदास के महाकाव्यों से घटनाचक्र अविरल मैदानी नदी की गति के समान मन्थर गति से चलता है। उसमें अवरोध नहीं है, स्थान-स्थान पर सुन्दर वर्णन आते हैं और पाठक उनमें खो जाता है। कालिदास पाठक की मनोवैज्ञानिक स्थिति को पहचानते हैं और इसके पहले कि पाठक एक वर्णन से ऊबे वे आगे बढ़ जाते हैं। भारवि में ऐसी बात नहीं। किसी विषय को लेकर जब तक अपना सम्पूर्ण दिमाग खाली नहीं कर लेते हैं वे आगे नहीं बढ़ते हैं। अलंकारों, कल्पनाओं एवं शब्दों का आडम्बर खड़ा कर देते हैं। यही कारण हैं कि पाठक ऊब जाता है। भारवि में ऐसे स्थलों का अभाव नहीं है, तब उनका अनावश्यक लम्बा वर्णन खटकता है। अप्सराओं के आगमन एवं विहार का ही वर्णन चार सर्गों में करके कवि ने अपनी इस विशेषता का परिचय दिया है। तेरहवें सर्ग में भी किरात के मुख से जो वचन भारवि ने कहलाये हैं उनमें अजीब व्यतिक्रम एवं अनावश्यक वर्णन का आभास मिल सकता हैं।

भारवि की शाब्दी क्रीडा उनका एक अन्य दोष है जो सहृदय पाठक को खटके बिना नहीं रह सकता। ऐसी ही शाब्दी क्रीडा का उदाहरण है किरातार्जुनीयम् का १५ वाँ सर्ग जो चित्रालंकार से परिपूर्ण है, इसी कारण मल्लिनाथ ने कहा है कि 'नारिकेलफलसंमितं वचो भारवेः' प्रो० कीथ का कथन है—

'Bharavi, however, is guilty of error tastes from which Kalidasa is free. Especially in Canto XV he sets himself to try 'tours deforce of the most foolish kind. redolent of the excesses of the Alexandrian poets'

किन्तु महाकवि भारवि की वर्णनात्मक प्रतिभा में सन्देह नहीं किया जा सकता है। वर्णन की सूक्ष्मता के आगे छोटी-छोटी वस्तु का वर्णन करने में भी नहीं चूकते हैं। जिस चित्र का वर्णन करते हैं पूरा जी खोल कर करते हैं, मानों उन्हें स्वयं ही सन्तोष नहीं होता और इसी कारण उनका वर्णन सर्वाङ्गपूर्ण लगता है चाहे वह अप्सराओं की कामकेलियाँ हों या अर्जुन एवं किरात का संघर्ष या भीम और युधिष्ठिर के नीतिवचन। वीर रस के वर्णन में भारवि अद्वितीय हैं। दूसरे सर्ग में भीम के वचनों की सजीवता से वीर रस की सृष्टि उनकी अद्वितीय वर्णन शैली का एक उदाहरण है। वीर रस के वे सिद्धहस्थ एवं कुशल कवि हैं। अर्जुन के धनुष खींचने का वर्णन उदाहरण स्वरूप लिया जा सकता हैं :—

प्रविकर्षनिनादभिन्नरन्ध्रः पदाविष्टम्भनिपीडितस्तदानीम्।
अधिरोहति गाण्डिवं महेषौ सकलः संशयमारुरोह शैलः॥ ( १३. १६ )

वर्णन द्वारा जिस प्रकार की सजीवता भारवि-पाठकों के सम्मुख प्रस्तुत करते हैं उसके उदाहरणस्वरूप हम विद्ध सूकर के पृथ्वी पर गिरने का वर्णन पढ़कर जान सकते हैं :—

अथ दीर्घतमं तमः प्रवेक्ष्यन् सहसा रुग्णरयः स संभ्रमेण।
निपतन्तमिवोष्णरश्मिमुर्व्यां बलयीभूततरुं धरां च मेने॥ ( १३. ३० )
स गतः क्षितिमुष्णशोणितार्द्रः खुरदंष्ट्राग्रनिपातदारिताश्मां।
असुभिः क्षणवीक्षितेन्द्रसूनुर्विहितामर्षगुरुध्वनिनिरासे॥ ३१॥

प्रकृति वर्णन में भी भारवि सफल हुए हैं। उनका प्रकृति-वर्णन यद्यपि कालिदास के समान मनोरम एवं चित्ताकर्षक नहीं हो सका है किन्तु जितना भी वर्णन किया है उनमें उनकी सूक्ष्म परख का और वर्णन की प्रभावोत्पादकता का परिचय मिलता है। एक-दो उदाहरण प्रस्तुत है—

मृणालिनीनामनुरञ्जितं त्विषा विभिन्नमम्भोजपलाशशोभया।
पयः स्फुरच्छालिशिखापिशङ्गितं द्रुतं धनुष्खण्डमिवाहिविद्विषः॥ ( ४. २० )

यही नहीं सरोवर का वर्णन, सूर्यास्त एवं रात्रि का वर्णन एवं प्रभात-वर्णन सभी उन्होंने कुशलता के साथ किया है। सब में सजीवता है और है एक अनूठापन।

वीर रस के वर्णन में भारवि अद्वितीय तो हैं ही शृङ्गार रस के वर्णन में भी वे कम नहीं। कालिदास में शृङ्गार का वर्णन है, किन्तु भारवि के समान वासना और विलासिता से परिपूर्ण नहीं। रघुवंश के अन्तिम सर्ग में कालिदास का शृङ्गार-वर्णन वासना से ओत-प्रोत है अवश्य, किन्तु भारवि इस क्षेत्र में उनसे बढ़ गये हैं। भारवि का शृङ्गार-वर्णन अत्यधिक उत्तेजक, ऐन्द्रिय एवं वासनामय है। अप्सराओं का वनविहार, पुष्पावचय, रतिकेलि, जलक्रीडा सबके वर्णन में शृङ्गार का नग्न वर्णन उन्होंने किया है। 'किराता-र्जुनीयम्' के आठवें, नवें एवं दशवें सर्ग में इनका शृङ्गार-वर्णन देखा जा सकता है। उदाहरणार्थः —

विहस्य पाणौ विधृते धृताम्भसि प्रियेण वध्वा मदनार्द्रचेतसः।
सखीव काञ्ची पयसा घनीकृता बभार वीतोच्चयबन्धमंशुकम्॥ ( ८. ५१ )

'जलविहार के समय किसी नायिका ने हाथ में पानी लेकर नायक .पर उछालना चाहा, इसे देखकर प्रिय ने हँसकर हाथ पकड़ लिया। स्पर्श के कारण नायिका का मन कामासक्त हो गया, उसका नीवीबंधन ढीला हो गया, पर पानी से सिमटी हुई करधनी ने उसके अंशुक को इसी तरह रोक लिया, जैसे वह सखी के समान ठाक समय पर नायिका की सहायता कर रही हो।'

उनके वर्णन की प्रभावोत्पादकता के विषय में प्रो० कीथ का कथन है—

'His style, at its best, has a calm dignity which is certainly attractive, while he excels also in the observation and record of the beauties and of maidens',

पात्रों के चरित्र-चित्रण में भी भारवि सफल हुए हैं। महाभारत के क्रोधी भीम को महाकवि ने काव्य में एक कुशल नीतिज्ञ का रूप दिया है। अर्जुन की वीरता का वर्णन करने के लिए किरात एवं किरातसेना के साथ युद्ध दिखा कर उन्हें विजयी ही दिखाया है। युधिष्ठिर की नीतिज्ञता एवं शान्तिप्रियता का भी चित्रण उन्होंने कुलशता से किया है।

भारवि ने अपने काव्य को अलङ्कारों से सुसज्जित करने का प्रयत्न किया है। उनकी उपमाओं में कालिदास की उपमाओं के समान न तो स्वाभाविकता है और न आकर्षण। अपनी एक उपमा के कारण उन्हें 'आतपत्र-भारवि' की उपाधि भी मिली है। इस उपमा में इन्होंने कमल के उड़ते हुए पराग को लक्ष्मी के आतपत्र की उपमा दी है। उपमा, रूपक, उत्प्रेक्षा, समासोक्ति, निदर्शना के अतिरिक्त यमक, श्लेष तथा प्रहेलिकादि चित्रकाव्यों में भी ये दक्ष हैं। उनके अर्थान्तरन्यास का एक उदाहरण यह है :—

दनुजः स्विदयं क्षपाचरो वा वनजे बलं बतास्ति सत्त्वे ।
अभिभूय तथा हि मेघनीलः सकलं कम्पयतीव शैलराजम् ॥ ८ ॥

अतिशयोक्ति का उदाहरण :—

अपयन्धदुपः शिवान्तिकस्थैर्विवरेसद्भिरभिल्ययया जिहानः ।
युगपद् ददृशे विशन्वराहं तदुपोढैश्च नभश्चरैः पृषत्कः ॥ २३ ॥

और यह है उनकी उपमा का एक उदाहरण :—

स तमालनिभे रिपौ सुराणां घननीहार इवाविषक्तवेगः ।
भयविप्लुतमीक्षितो नभःस्थैर्जगतीं ग्राह इवापगां जगाहे ॥ २४ ॥

कालिदास का अनुकरण करके इन्होंने व्याकरण से सम्बन्धित उपमाएँ भी दी है उनमें भी कालिदास के समान सफल नहीं हो पाये हैं । यथा—

स भवस्य भवक्षयैकहेतोः सितसप्तेश्च विधास्यतोः सहार्थम् ।
रिपुराप पराभवाय मध्यं प्रकृतिप्रत्ययोरिवानुबन्धः ॥ १९ ॥

उनकी श्लेषानुप्राणितोपमा निम्न छन्द में देखी जा सकती है :—

इति तेन विचिन्त्य चापनाम प्रथमं पौरुषचिह्नमाललम्बे ।
उपलब्धगुणः परस्य भेदे सचिवः शुद्ध इवाददे च बाणः ॥ १३—१४ ॥
कथाप्रसंगेन जनैरुदाहृतादनुस्मृताखण्डलसूनुविक्रमः ।
तवाभिधानाद्व्यथते नताननः सुदुःसहान्मन्त्रपदादिवोरगः ॥ १२ ॥

और यह है उनकी एक मालोपमा :—

अविवेकवृथाश्रमाविवार्थं क्षयलोभाविव संश्रितानुरागम् ।
विजिगीषुमिवानयप्रमादाववसादं विशिखौ विनिन्यतुस्तम् ॥ १३. २९ ॥

महाकवि भारवि की हृदयग्राही उक्तियाँ उनकी एक प्रमुख विशेषता है । वे राजनीति के निष्णात पण्डित थे और राजनीतिक ग्रन्थों का उन्हें पूर्ण ज्ञान था । उनके काव्य में सुन्दर उक्तियों का अभाव नहीं है जो अनायास ही काव्य में एक नवीन जीवन डाल देती है । यथा—

'हितं मनोहारि च दुर्लभं वचः ।, 'सहसा विदधीत न क्रियाम् ।'
'विमलं कलुषीभवच्च चेतः कथयत्येव हितैषिणं रिपुं वा ।'
'संवृणोति खलु दोषमज्ञता ।', 'परवृद्धिषु बद्धमत्सराणां
किमिव ह्यस्ति दुरात्मनामलङ्घ्यम्' इत्यादि ।

यही कारण है कि इनके काव्य में एक मनोरम गाम्भीर्य है और व्यावहारिक ज्ञान की चमत्कारिणी प्रौढ़ता भी ।

भारवि की कविता अपनी सर्वोत्तमा अवस्था में प्रसादगुण युक्त है । यद्यपि कालिदास के समान प्रसादगुण भारवि में नहीं मिलता; फिर भी माघ के समान निकट समासान्त पदावली का इनकी कविता में अभाव है । भारवि के अर्थ को समझना कुछ परिश्रमसाध्य है और नारियल के फल की भाँति ऊपर के कठोर आवरण को तोड़ने पर ही काव्य-रस का पान सम्भव है । भारवि की रीति गौड़ी तो नहीं है किन्तु ठीक कालिदास की वैदर्भी भी नहीं है । भारवि ने अपने पांडित्य-प्रदर्शन में भी कमी नहीं रखी है । उनका पाण्डित्य-प्रदर्शन ऐसा दोष हो गया है जो उनकी कविता के भावना-पक्ष को दुर्बल बना देता है । अपने व्याकरण-ज्ञान का उन्होंने बराबर प्रदर्शन करने का लोभ किया है और पाणिनि के अनेक सूत्रों के लिये उदाहरण भी प्रस्तुत किया है । उन्होंने व्याकरण के चक्कर में पड़कर उस प्रवृत्ति को जन्म दिया जो इनके बाद के कवियों—भट्टि, माघ, श्रीहर्ष में अधिक हो चली है ।

'तन्' धातु का अत्यधिक प्रयोग कुछ खटकता है और अतीत की घटना का वर्णन करने में भारवि 'परोक्षभूते लिट्' का प्रयोग करते हैं और लङ्-लुङ् का प्रयोग अपरोक्ष भूत के लिये । व्याकरण की त्रुटियाँ भारवि में कम है किन्तु 'आजघ्ने' का प्रयोग व्याकरण-संगत नहीं है ।

विविध छन्दों के प्रयोग में भारवि सिद्धहस्त हैं । वंशस्थ भारवि का प्रिय छन्द है और अधिक सफल भी वे वंशस्थ में ही हुए हैं । इसके अतिरिक्त इन्होंने इन्द्रवज्रा, उपेन्द्रवज्रा, द्रुतविलम्बित, प्रमिताक्षरा, प्रहर्षिणी आदि कई छन्दों का प्रयोग किया है। कालिदास के खास छन्द छः है, भारवि के बारह तो माघ के सोलह ।

भारवि की कविता में गीतिमय माधुर्य की अपेक्षा वर्णनात्मक एवं तर्कात्मक ओज का प्राधान्य है । सुश्लिष्ट पद-विन्यास के आचार्य कालिदास के समान प्रसादमयी हृदयावर्जक पदावली का अस्तित्व इनके महाकाव्य में तो सचमुच नहीं है किन्तु अर्थगौरवमय पदों का विन्यास यहाँ पूर्ण मात्रा में है । भारवि ने जितना लिखा है प्रौढ़ता, अनुभूति एवं भावुकता के साथ लिखा है । संस्कृत काव्य की एक नवीन शैली विचित्रमार्ग की सृष्टि करने के लिये भारवि प्रबन्ध काव्यों के विकास में गौरवपूर्ण स्थान रखते हैं ।'

जैसा कि डॉ० डे ने कहा है—'भारवि की कला प्रायः अत्यधिक अलंकृत नहीं है, किन्तु आकृति-सौष्ठव का नियमितता व्यक्त करती है । शैली दुष्प्राप्य कान्ति भारवि में सर्वथा नहीं है, ऐसा कहना ठीक नहीं होगा, किन्तु भारवि उसकी व्यंजना अधिक नहीं कराते। भारवि का अर्थगौरव, जिसके लिए विद्वानों ने उनकी अत्यधिक प्रशंसा की है, उनकी गंभीर अभिव्यंजना शैली का फल है,किन्तु यह अर्थ गौरव एक साथ भारवि की शक्ति तथा दुर्बलता ( भावपक्ष की दुर्बलता ) दोनों को व्यक्त करती है । भारवि की अभिव्यंजना शैली का

परिपाक अपनी उदात्त स्निग्धता के कारण सुन्दर लगता है, उसमें शब्द तथा अर्थ के सुडौलपन की स्वस्थता है, किन्तु महान् कविता की उस शक्ति की कमी है, जो भावों की स्फूर्ति तथा हृदय को उठाने की उच्चतम क्षमता रखती है।

श्री आर० सी दत्त Civilization of the Ancient India में लिख हैं :—

'In the richness of a creative faney, in true tenderness and Pathos, and even in the sweetness of melody of verse, Kalidasa is incomparably a greater poet. But nexertheless Bharavi boasta of a vigour of thought and of langunage, a spirited and lofty eloquence in expression, which Kalidasa seldom equals.'

निःसदेह विचारों एवं भाषा की स्फूर्ति एवं उच्चकोटि की अभिव्यक्ति में भारवि कालिदास से भी बढ़ जाते हैं भले ही कल्पना का वैभव, कोमलता, भावुकता एवं गीति-काव्य की मधुरता में महाकवि कालिदास उनसे बहुत आगे हैं।

पण्डितों में यह उक्ति है कि भारवि से माघ बढ़कर है तथा माघ ने भारवि के प्रभाव को कम करने के लिये, उन्हें नीचा दिखाने के लिये अपने काव्य की रचना की थी।

> तावद्भा भारवेर्भाति यावन्माघस्य नोदयः।
> उदिते च पुनर्माघे भारवेर्भा रवेरिव॥

किन्तु माघ के काव्य में अस्वाभाविकता, शुष्कता एवं कृत्रिमता बढ़ ही गई है और उनकी रचना में भारवि का अनुकरण स्पष्ट है।

# तृतीय सर्ग कथासार

## युधिष्ठिर और अर्जुन के प्रति व्यास की उक्ति

हे राजन्! संग्राम में उसी की जय होती है जिसके पास सेना तथा अस्त्रादि का विशेष बल है, यह बात परशुराम के साथ युद्ध करने में भीष्म ने उन्हें पराजित करके लोगों को दिखला दी है। और यमराज से भी नहीं डरनेवाले भीष्म तथा कर्ण एवम् प्रलयकालाग्नि के समान युद्ध में भयंकर द्रोणाचार्य आदि योद्धागण सब दुर्योधन के पक्ष में हैं अतः उन सबों को जिनसे जीत सकें उन दिव्य-अस्त्रों को पाने के लिये मैं अर्जुन को एक मन्त्र बतलाता हूँ जिसके द्वारा वे कठिन तपस्या कर इन्द्र भगवान् को प्रसन्न कर दिव्य अस्त्र तथा पराक्रम प्राप्तकर युद्ध में विजयी हों, बस यही मेरे आने का उद्देश्य है, ऐसा कह व्यासजी पुनः अर्जुन से कहने लगे—हे अर्जुन! तुम अब मेरे कथनानुसार साथ में अस्त्रों को भी लिये हुए मुनियों की भाँति जाकर तपस्या करो, और जहाँ पर

तपस्या करनी है वहाँ पर यह यक्ष तुम्हें शीघ्र ही पहुँचा देगा ऐसा कहकर जैसे ही व्यास जी अन्तर्धान हुए वैसे ही अर्जुन के पास यक्ष उपस्थित हो गया तब उन्हें जाने के लिये उद्यत देख द्रौपदी अर्जुन से कहने लगी।

## अर्जुन के प्रति द्रौपदी की उक्ति

जबतक तपस्या पूरी न हो तबतक आप हमलोगों के बिना व्यग्र न होना क्योंकि बिना दृढ़ आग्रह के कोई सिद्ध नहीं होता और उन्हें तपस्या के लिये उत्तेजित करने के लिये पुनः कहने लगी कि—संसार में तेजस्वी पुरुषों की मान-हानि प्राण-हानि के तुल्य ही होता है, शत्रु से पराजित होने पर उनका अपमान होता है और शत्रुओं ने जो-जो दुर्व्यवहार किये हैं और जिन्हें कि—मैं स्मरण भी नहीं करना चाहती, आज मुझे वे ही सब तुम्हारे बिना यद्यपि और भी कष्ट पहुचायेंगे तथापि उन सबों को इस आशय से सहूँगी कि आप शीघ्र ही शत्रुओं को जीतने योग्य सामर्थ्य प्राप्त कर पुनः मिलेंगे। अतः अब आप तपस्या के लिये जायँ और आपके समस्त विघ्नों को इन्द्र भगवान् दूर करें। हे नाथ! आप व्यास जी का आदेश पालन करते हुए हमलोगों के मनोरथ को सफल करें। अब आपको कृतकार्य देखकर पुनः आनन्द से आलिङ्गन करना चाहती हूँ। तब इन सब बातों को सुनकर अर्जुन को दुर्योधनादिकों के ऊपर अत्यन्त क्रोध हुआ वह कवच पहनकर तलवार, धनुष और तरकश लेकर यक्ष के बताये हुये रास्ते से इन्द्रकील पर्वत पर तपस्या करने के लिये चल पड़े। उनके जाने पर सब लोगों को अत्यन्त दुःख मालूम पड़ने लगा, पर समझाकर किसी भाँति अपने-अपने चित्त को शांत किया। उस समय मङ्गलसूचक दिव्य दुन्दुभी शब्द तथा आकाश में पुष्पवर्षा होने लगी जिसे देखकर सब अत्यन्त प्रसन्न हुये।

व्याख्याता—
गोरखपुर विश्वविद्यालय

—उमेशचन्द्र पाण्डेय

# अथ तृतीयः सर्गः

अथ त्रिभिर्मुनिं विशिषंश्चतुर्भिः कलापकमाह—तदुक्तम्—'द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम्। कलापकं चतुर्भिः स्यात्तदूर्ध्वं कुलकं स्मृतम्॥' इति—

ततः शरच्चन्द्रकराभिरामैरुत्सर्पिभिः प्रांशुमिवांशुजालैः।
बिभ्राणमानीलरुचं पिशङ्गीर्जटास्तडित्वन्तमिवाम्बुवाहम्॥ १॥

तत इति॥ तत उपवेशानन्तरं धर्मात्मजो युधिष्ठिरः। शरच्चन्द्रकराभिरामैः। आह्लादकैरित्यर्थः। उत्सर्पिभिरूर्ध्वं प्रसारिभिरंशुजालैः प्रांशुमुन्नतमिव स्थितमित्युत्प्रेक्षा। पुनरानीलरुचं कृष्णवर्णं पिशङ्गीः पिङ्गलवर्णाः गौरादित्वान्ङीष्। जटाः बिभ्राणं धारयन्तमत एव तडित्वन्तं विद्युद्युक्तमम्बुवाहमिव स्थितमित्युत्प्रेक्षा॥१॥

अन्वयः—ततः शरच्चन्द्रकराभिरामैः, उत्सर्पिभिः, अंशुजालैः प्रांशुम् इव, आनीलरुचम्, पिशङ्गीः, जटाः, बिभ्राणं (तं) तडित्वन्तम्, अम्बुवाहम् इव स्थितं युधिष्ठिरं आवभाषे) इति चतुर्थश्लोकेन सम्बन्धः॥ १॥

व्याख्या—ततः = उपवेशानन्तरम्, शरच्चन्द्रकराभिरामैः = शरदृतुकचन्द्र-किरणवन्मनोहरैः, उत्सर्पिभिः, उपरि प्रसरणशीलैरिति यावत्। अंशुजालैः=किरण-समूहैः, प्रांशुम् = उन्नतम्, इव स्थितम्, पुनः आनीलरुचं = कृष्णवर्णम्, पिशङ्गीः = पीतवर्णाः, जटाः = संयमितकेशविशेषाः, बिभ्राणं = दधानं, तं व्यासं, तडित्वन्तं=विद्युत्समन्वितम्, अम्बुवाहं=जलधरम्, मेघमिवेति यावत्। वर्त-मानं युधिष्ठिरः, आवभाषे=उवाच॥ १॥

समासः—शरदः (आश्विनकार्तिकयोः) यश्चन्द्रः, स शरच्चन्द्रः, तस्य ये करास्ते शरच्चन्द्रकरास्त इव अभिरामा यैः तैः शरच्चन्द्रकराभिरामैः। अंशूनां जालानि, तैरंशुजालैः। आ समन्तान्नवेन नीला रुग् यस्य तमानीलरुचम्, अम्बूनि वहतीति अम्बुवाहः॥ १॥

व्याक०—बिभ्राणम्=भृ + लट् + शानच्। उत्सर्पिभिः=उत् + सृप् + णिनिः॥

वाच्यान्तरम्—शरच्चन्द्रकराभिरामैरंशुजालैः प्रांशुरिव स्थितिः आनीलरुक् पिशङ्गी जटा बिभ्राणो व्यासः तडित्वान् अम्बुवाह इव युधिष्ठिरेणावभाषे॥ १॥

कोषः—'सुन्दरो रुचिरश्चारुरभिरामो मनोहर' इति कोषः। 'स्युः प्रभा रुग्रुचि-स्त्विड्भाभाश्छविद्युतिदीप्तय' इत्यमरः। 'अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहक' इत्यमरः॥ १॥

सारार्थः—व्यासयुधिष्ठिरयोरुपवेशनानन्तरं शारदीयपूर्णचन्द्रकिरणनिकरमिव किरणं धारयन्। यथा विद्युत्वान् मेघो भवति तथा स्वयं कृष्णवर्णः पीतवर्णं जटाजूटं बिभ्राणो व्यासो युधिष्ठिरेण सादरं पृष्ट इति ॥ १ ॥

भाषार्थः—बैठने के बाद शरद् ऋतु की किरणों जैसे मनोहर और ऊपर फैलते हुए किरण-पुञ्जों से एक उच्च ढेर के जैसे बैठे और खुद श्यामवर्ण, पीले रंग की जटाओं को धारण किये हुये जैसे बिजुली से शोभित बादल हो, वैसे बैठे व्यासजी से महाराज युधिष्ठिर बोले ॥ १ ॥

प्रसादलक्ष्मीं दधतं समग्रां वपुःप्रकर्षेण जनातिगेन।
प्रसह्य चेतःसु समासजन्तमसंस्तुतानामपि भावमार्द्रम् ॥ २ ॥

प्रसादेति ॥ पुनः समग्रां सम्पूर्णां प्रसादः सौम्यता तस्य लक्ष्मीं सम्पदं दधतम्। अत एव जनमतिगच्छतीति जनातिगेन लोकातिशायिना। 'अन्येष्वपि दृश्यते' इति डप्रत्ययः। वपुःप्रकर्षेणाकारसम्पदाऽसंस्तुतानामपरिचितानामपि। व्यासोऽयमित्यजानतामपीत्यर्थः। 'संस्तवः स्यात्परिचयः' इत्यमरः। चेतःसु चित्तेष्वार्द्रं स्नेहार्द्रं भावमभिप्रायं प्रसह्य बलात्समासजन्तम्। लगयन्तमिति यावत्। 'दंशसञ्जस्वञ्जां शपि' इत्युपधाया लोपः। प्रसन्नाकारेषु सर्वोऽपि स्निह्यतीति भावः ॥ २ ॥

अन्वयः—समग्रां प्रसादलक्ष्मीं दधतं, जनातिगेन वपुःप्रकर्षेण, असंस्तुतानाम्, अपि चेतःसु आर्द्रंभावं प्रसह्य समासजन्तम् ( व्यासं युधिष्ठिरम् आबभाषे ) इति चतुर्थश्लोकेन सङ्गतिः ॥ २ ॥

व्याख्या—समग्रां = सकलाम्; प्रसादलक्ष्मीं = सौम्यत्वशोभां, दधतं=दधानं, जनातिगेन=लोकातिगेन, वपुःप्रकर्षेण=शरीरोत्कर्षेण, असंस्तुतानाम्=अपरिचितानाम्, अपि, जनानामिति शेषः, चेतःसु, = मनःसु, आर्द्रं = प्रेमरसपूर्णम्, भावम्= अभिप्रायम्, प्रसह्य = बलात्, समासजन्तं = योजयन्तं, तं व्यासं युधिष्ठिर उवाचेति शेषः। अर्थात् परिचितं जनं दृष्ट्वा साधारणस्य स्नेहार्द्रो भाव उत्पद्यते, अपरिचितं विलोक्य यावदालापो न भवति तावन्मिथः सम्पुटितमिव मुखं, कीलितमिव मनः, उदासीने नयने, एवं भवति, परन्तु, इदं सामान्यस्य लक्षणम्। परिचितमपि जनमपरिचितवदौदासीन्यं दर्शयतीति, अधमस्य लक्षणम्! तथाऽपरिचितमपि जनमालोक्याकारणं मनः प्रेमपूर्णं परिचितवद् यस्य भवति, तदुदारचरितस्य लक्ष्म, यद् व्यासस्योचितमेवेति किं चित्रम्? ॥ २ ॥

समासः—प्रसादस्य लक्ष्मीः प्रसादलक्ष्मीस्तां प्रसादलक्ष्मीम्! वपुषः प्रकर्षः वपुःप्रकर्षस्तेन वपुःप्रकर्षेण। अति गच्छतीति अतिगः, जनेभ्योऽतिगः जनातिगस्तेन जनातिगेन, न संस्तुता असंस्तुतास्तेषामसंस्तुतानाम् ॥ २ ॥

व्याक०—दधतं=धा + शतृ। समासजन्तम्=सम् + आ + षञ् + लट् + शतृ ॥

वाच्यान्तरम्—समग्रां, प्रसादलक्ष्मीं दधद् जनातिगेन वपुःप्रकर्षेणासंस्तुतानामपि चेतःस्वार्द्रं भावं समासजन् ( व्यासः युधिष्ठिरेण पृष्ट इति ) ॥ २ ॥

कोषः—'प्रसादस्तु प्रसन्नता' इत्यमरः। 'समग्रं सकलं पूर्णमखण्डं स्यादनूनके' इत्यमरः। 'असंस्तुतोऽपरिचित' इति कोषः ॥ २ ॥

सारार्थः—सकलप्रसन्नतापरिपूर्णम्, अपरिचितजनेष्वपि प्रेमपूर्णं भावं प्रदर्शयन्तं व्यासं युधिष्ठिर उवाचेति ॥ २ ॥

भाषार्थः—पूरी प्रसन्नता को दर्शाते हुए, सकल-लोकाधिक देह की कान्ति से अनजान लोगों के दिलों में भी प्रेमरस के गीले भाव को उपजाते हुए व्यास से युधिष्ठिर बोले ॥ २ ॥

**अनुद्धताकारतया विविक्तां तन्वन्तमन्तःकरणस्य वृत्तिम् ।**
**माधुर्यविस्रम्भविशेषभाजा कृतोपसम्भावमिवेक्षितेन ॥ ३ ॥**

अनुद्धतेति ॥ पुनरनुद्धताकारतया शान्ताकारत्वेन लिङ्गेनान्तःकरणस्य वृत्तिं विविक्तां पूताम्। शान्तामिति यावत्। 'विविक्तौ' पूतविजनौ' इत्यमरः। तन्वन्तं प्रकटयन्तम्। आकृतिरेवास्य चित्तशुद्धिं कथयेतीत्यर्थः। पुनर्माधुर्यं निसर्गसौम्यता विस्रम्भो विश्वासः। 'समौ विस्रम्भविश्वासौ' इत्यमरः। तयोर्विशेषमतिशयं भजतीति यथोक्तेनेक्षितेन दर्शनेनैव कृतोपसम्भाषा सम्भाषणं येन तमिवेत्युत्प्रेक्षा। दृष्टिविशेषेणैवोपसम्भाषमाणमिव स्थितमित्यर्थः, काशिकायां तु 'उपसम्भाषणमुपसान्त्वनम्' इति भासनादिसूत्रे ॥ ३ ॥

अन्वयः—अनुद्धताकारतया, अन्तःकरणस्य विविक्तां वृत्तिः तन्वन्तम्, माधुर्यविस्रम्भविशेषभाषा, ईक्षितेन कृतोपसम्भाषम्, इव ( स्थितं व्यासं युधिष्ठिर आबभाषे ) ॥ ३ ॥

व्याख्या—अनुद्धतया = अतिनम्रचेष्टया, अन्तःकरणस्य = हृदयस्य, विविक्तां = स्पष्टाम्, अगोपितामित्यर्थः। वा, विविक्ताम् = पवित्रां, निर्मलामित्यर्थः। वृत्तिं= चित्तचेष्टां, तन्वन्तम् = प्रकाशयन्तम्, माधुर्यविस्रम्भविशेषभाजा = सौम्यत्वविश्वाससंयुतेन, ईक्षितेन = अवलोकनेन, कृतोपसम्भाषं = कृतालापम्, इव स्थितं, व्यासं युधिष्ठिर उवाचेति शेषः ॥ ३ ॥

समासः—न उद्धतोऽनुद्धत आकार इत्यनुद्धताकारस्तस्य भावस्तत्ता, इत्युनुद्धताकारता तयाऽनुधताकारतया, मधुरस्य भावो माधुर्यम्, माधुर्यं, च विस्रम्भश्च माधुर्यविस्रम्भौ तयोर्यो विशेषः स माधुर्यविस्रम्भविशेषस्तं भजतीति माधुर्यविस्रम्भविशेषभाक् तेन माधुर्यविस्रम्भविशेषभाजा। कृता उपसम्भाषा येन सः, तं कृतोपसम्भाषम् ॥ ३ ॥

व्याकरणम्—तन्वन्तम् = तनु + शतृ ॥ ३ ॥

वाच्यान्तरम्—अनुद्धताकारतयाऽन्तःकरणस्य विविक्तां वृत्तिं तन्वन्, माधुर्यं विस्रम्भविशेषभाजा, ईक्षितेन कृतोपसम्भाष इव स्थितो व्यासो युधिष्ठिरेण पृष्टः ॥

कोषः—'विविक्तौ पूतविजनौ' इत्यमरः। 'आजीवो जीविका वार्ता वृत्तिर्वर्त्तनजीवने' इत्यमरः। "समौ विस्रम्भविश्वासौ" इत्यमरः। 'दर्शनालोकनेक्षितम्' इत्यमरः।

सारार्थः—अतिसरलप्रवृत्त्याऽन्तर्गतमपि भावं प्रकाशयन् परमसौम्यविश्वासप्रकाशकेनावलोकनेन यथाऽन्योन्यं वार्त्ता क्रियते, तथैव लक्षितं व्यासं युधिष्ठिर उवाचेति ॥ ३ ॥

भाषार्थः—बिल्कुल सीधे-सादे स्वरूप से दिल के भाव को दर्शाते और सौम्यता तथा विश्वास से भरी आँखों से जैसे एक दूसरे से बातचीत करे, वैसे बैठे व्यास से युधिष्ठिर बोले ॥ ३ ॥

**धर्मात्मजो धर्मनिबन्धिनीनां प्रसूतिमेनःप्रणुदां श्रुतिनाम्।**
**हेतुं तदभ्यागमने परीप्सुः सुखोपविष्टं मुनिमावभाषे ॥ ४ ॥**

धर्मेति ॥ पुनर्धर्मं निबध्नन्तीति धर्मनिबन्धिनीनामग्निहोत्रादिधर्मप्रतिपादिकानाम्। एनःप्रणुदामघच्छिदाम्। क्विप्। श्रुतीनां वेदानाम्। 'श्रुतिः स्त्री वेदआम्नायः' इत्यमरः। प्रसूतिं प्रभवं सुखेनोपविष्टं मुनिं तदभ्यागमने तस्य मुनेरागमने हेतुं, परीप्सुर्जिज्ञासुः। आप्नोतेः सन्नन्तादुप्रत्ययः 'आप्ज्ञप्यृधामीत्' इतीकारः। 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः। आवभाषे उवाच ॥ ४ ॥

अन्वयः—तदभ्यागमने हेतुं परीप्सुः, धर्मात्मजः, धर्मनिबन्धिनीनाम्, एनःप्रणुदां, श्रुतीनाम् प्रसूतिं, सुखोपविष्टं मुनिम्, आवभाषे ॥ ४ ॥

व्याख्या—तदभ्यागमने = व्यासागमने, हेतुं = कारणं, किमर्थं निरीहोऽपि भवानकिञ्चित्करस्य ममाश्रये यात्रा कृतेतिरूपमित्यर्थः। परीप्सुः = जिज्ञासुः, धर्मात्मजः = धर्मपुत्रो युधिष्ठिरः, ( कर्त्ता ), धर्मनिबन्धिनीनाम्, धर्मविषयकाणाम् एनःप्रणुदाम् = पापोच्छेदिकानां, श्रुतीनां = वेदानाम्, प्रसूतिं = जनकं, वेदान्तसूत्रादेर्निर्मातृत्वात् सुखोपविष्टं = सुप्रसन्नासीनम्, मुनिं = व्यासम्, आवभाषे = उवाचेति ॥

समासः—धर्मस्यात्मजो धर्मात्मजः। धर्मान्निबध्नन्तीति धर्मनिबन्धिन्यः, तासां धर्मनिबन्धिनीनाम्। एनांसि प्रणुदन्ति यास्ता एनः प्रणुदस्तासामेनःप्रणुदाम्। तस्य अभ्यागमनं तस्मिन् तदभ्यागमने। सुखेन उपविष्टः सुखोपविष्टस्तं सुखोपविष्टम् ॥

व्याक०—परीप्सुः = परि + आप + सन् + उः। आवभाषे = आ + भाष + लिट्।

वाच्यान्तरम्—तदभ्यागमने हेतुं परीप्सुना धर्मात्मजेन धर्मनिबन्धिनीनामेनःप्रणुदां श्रुतीनां प्रसूतिः सुखोपविष्टो मुनिराबभाषे ॥ ४ ॥

कोषः—'कलुषं वृजिनैनोऽघम्'' इत्यमरः। 'श्रुतिर्वेदे च कर्णे च' इति कोषः। 'हेतुर्ना कारणं बीजं निदानं त्वादिकारणम्'—इत्यमरः ॥ ४ ॥

तारार्थः—व्यासागमनप्रयोजनज्ञानाय युधिष्ठिरो वेदविभागविधातारं व्यासं प्रत्युवाच ॥ ४ ॥

भावार्थः—उन ( व्यास ) के आने के बारे में कारण पूछने की इच्छावाले महाराज युधिष्ठिर, धर्मसम्बन्ध पापनाशक, वेदों के उत्पादक, आराम-चैन से बैठे हुए, उन व्यास जी से बोले ॥ ४ ॥

**अनाप्तपुण्योपचयैर्दुरापा फलस्य निर्धूतरजाः सवित्री।**
**तुल्या भवद्दर्शनसम्पदेषा वृष्टेर्दिवो वीतबलाहकायाः ॥ ५ ॥**

अनाप्तेति ॥ अनाप्तपुण्योपचयैरकृतपुण्यसंग्रहैर्दुरापा दुर्लभा। फलस्य सवित्री श्रेयस्करी निर्धूतरजा हतरजोगुणा। अन्यत्र निरस्तधूलिः। 'रजो रजोगुणे धूलौ परागार्तवयोरपि' इति शाश्वतः। एषा भवद्दर्शनसम्पत्सम्पत्तिः। लाभ इति यावत्। सम्पदादिभ्यः क्विपो भावार्थत्वात्। वीतबलाहकाया गतमेघाया दिव आकाशस्य सम्बन्धिन्या वृष्टेस्तुल्येत्युपमाऽलङ्कारः अनभ्रवृष्टिवदतर्कितोपपन्नं भवद्दर्शनं सर्वथा कस्यचिच्छ्रेयसो निदानमित्यर्थः वारि वहतीति बलाहकः। पृषोदरादित्वात्साधुः ॥

अन्वयः—अनाप्तपुण्योपचयैः, दुरापा, फलस्य सवित्री, निर्धूतरजाः, एषा भवद्दर्शनसम्पत्, वीतबलाहकायाः, दिवः, वृष्टेः, तुल्या ॥ ५ ॥

व्याख्या—अनाप्तपुण्योपचयैः—अप्राप्तपुण्यसमूहैः, अकृतसुकृतनिचयैरित्यर्थः। जनैरिति शेषः। दुरापा = दुर्लभा। फलस्य = मनोरथस्य, सवित्री = जननी, अभीष्टकल्याणकारिणी। निर्धूतरजाः = निरस्तरजोगुणा, सात्त्विकीति भावः। एषा = इयम्, आधुनिकीति भावः। भवद्दर्शनसम्पत् = त्वदवलोकनसम्पत्तिः, वृष्टिपक्षे, अनाप्तपुण्योपचयैः = अकृतधर्मैः, कृषकैः, दुरापा = दुष्प्राप्या, फलस्य = सस्यस्य, सवित्री = निदानरूपा, उत्पादयित्री। निर्धूतरजाः = हतधूलिः, वीतबलाहकायाः = विगतमेघायाः, दिवः = आकाशस्य, वृष्टेः = वर्षायाः, तुल्या = समा अर्थाद् वृष्टिर्भवतु न वा, किन्तु नभसि वारिदे आयाते 'वृष्टिसम्भवो लोकैरुच्यते परमाकाशे मेघं दृष्ट्वा सर्वथा वृष्टेरसम्भवो ज्ञायते लोकैः, तदानीं च जलवर्षणं भवति, तदतर्कितं तथा, तथैव हतभाग्येऽपि मयि परमभाग्यवल्लोक इव स्वकृपादृष्टिवृष्टिर्विहिता भवतेति ॥ ५ ॥

समासः—पुण्यानामुपचयाः पुण्योपचयाः न आप्ताः पुण्योपचया यैस्तैरनाप्तपुण्योपचयैः। दुःखेनावाप्यत इति दुरापा, निर्धूतं रजो यया सा निर्धूतरजाः।

बीता गता बलाहका यस्यां सा बीतबलाहका, तस्या वीतबलाहकायाः ॥ ५ ॥

व्याकरणम्—सवित्री = सवितृ + ङीप् ॥ ५ ॥

वाच्यान्तरम्—अनाप्तपुण्योपचयैर्दुरापया फलस्य सवित्र्या, निर्धूतरजसाऽतया भवद्दर्शनसम्पदा वीतबलाहकाया दिवो वृष्टेस्तुल्यया भूयते ॥ ५ ॥

कोषः—'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृष' इत्यमरः। 'वृष्टिर्वर्षम्' इत्यमरः। 'द्योदिवौ द्वे स्त्रियामभ्रं व्योमपुष्करमम्बरम्' इत्यमरः। अभ्रंमेघोवारिवाहः स्तनयित्नुर्बलाहक' इत्यमरः ॥ ५ ॥

सारार्थः—अनुपार्जितधर्मैर्जनैर्दुर्लभं सकलकल्याणकरं पापध्वंसकं भवद्दर्शनमकस्माद्, हतभाग्यस्य मम तथा सञ्जातं यथा निर्मेघादाकाशाज्जलवर्षणं विलोक्य जना हर्षोत्फुल्लनयना भूत्वा साश्चर्यमवलोकयन्तीति ॥ ५ ॥

भाषाऽर्थः—नहीं किया है पुण्यों का संग्रह जिन लोगों ने, उनसे दुर्लभ और मनोरथ को पूरा करनेवाली, पापनाशिनी, आपकी दर्शनरूपिणी लक्ष्मी, बिना बादल के आकाश की वर्षा के समान है ॥ ५ ॥

**अद्य क्रियाः कामदुघाः क्रतूनां सत्याशिषः सम्प्रति भूमिदेवाः।**
**आ संसृतेरस्मि जगत्सु जातस्त्वय्यागते यद्बहुमानपात्रम् ॥ ६ ॥**

अद्येति ॥ अद्य क्रतूनां क्रिया अनुष्ठानानि। कामान् दुहन्तीति कामदुघाः। फलदा इत्यर्थः। 'दुहः कब्घश्च' इति कप्प्रत्ययो घादेशश्च। सम्प्रत्यद्य भूमिदेवाः ब्राह्मणाः। 'द्विजात्यग्रजन्मभूदेववाडवाः'। 'विप्रश्च ब्राह्मणः' इत्यमरः। सत्याशिषो जाता। ब्राह्मणाशिषोऽद्य फलिता इत्यर्थः। यद्यतः कारणात्त्वय्यागते सति। त्वदागमनेन निमित्तेनेत्यर्थः अस्मीत्यहमर्थेऽव्ययन्। 'अस्मीत्यस्मदर्थानुवादेऽहमर्थेऽपि' इति गतव्याख्याने। 'दासे कृतगासि भवत्युचितः प्रभूणां पादप्रहार इति सुन्दरि नास्मि दूये' इति प्रयोगाच्च। आ संसृतेरा संसारात्, यावत्संसारमित्यर्थः। अभिविधावाङ् विकल्पादसमासः। जगत्सु बहुमानपात्रं बहुयोग्यताभाजनं जातः। सकलसत्कर्मफलभूतं त्वदागमनं येन मे जगन्मान्यतेति भावः ॥ ६ ॥

अन्वयः—अद्य क्रतूनां क्रियाः कामदुघा सम्प्रति भूमिदेवाः सत्याशिषः (जाताः) यत् त्वयि, आगते, आ संसृतेः जगत्सु बहुमानपात्रं जातः अस्मि ॥ ६ ॥

व्याख्या—अद्य = अस्मिन् दिने, क्रतूनां = यज्ञानां, क्रियाः = कारणानि, कामदुघाः = इष्टपूर्तिकराः, जाता इति शेषः। इतः कालात्पूर्वं यज्ञानां फलं मम वितरीतं वनवासादरूपमेव जातम्, इति मम सानुरोधोऽनुभव आसीदधुना भवद्दर्शनेन साधारणाऽपगता, अवश्यं कदाऽपि पुण्यफलं शुभं भवेत्येवेति निश्चय उत्पन्नो मम मनसीति भावः। तथा च सम्प्रति = वर्तमानसमये, इदानीमित्यर्थः। भूमिदेवाः =

ब्राह्मणाः, सत्याशिषः = सत्याशीर्वादाः अमिथ्याशुभवचनाः, जाता इति शेषः। यद् = यस्मात्, त्वयि = भवति, व्यासः इत्यर्थः। आगते = समागते, ममाश्रयं प्रत्युपस्थिते सतीत्यर्थः असंसृतेः = सृष्ट्यादितः जगत्सु = संसारेषु बहुमानपात्रम् = परमसत्कारभाजनं, जातः = जनितः, अस्मि, अहमति शेषः। बहुभिः पुण्यैरपि दुर्लभं तन्मम समजनि, अतोऽद्य मत्तोऽधिकभाग्यवाश्च कोऽप्यन्य इति भावः ॥६॥

समास—कामान् दुहन्ति यास्ताः कामदुघा। सत्या आशिषे येषां ते सत्याशिषः। भूमौ ये देवास्ते भूमिदेवाः। बहुः मानः तस्य पात्रमिति बाहुमानपात्रम् ॥ ६ ॥

व्याकरणम्—अस्मि = अस + लट् + जातः = जन् + क्तः ॥ ६ ॥

वाच्यान्तरम्—अद्य क्रतूनां क्रियाभिः कामदुघाभिर्भूयते। सम्प्रति भूमिदेवैः सत्याशीर्भिर्भूयते। यत् त्वय्यागते मया बहुमानपात्रेण जातम् ॥ ६ ॥

कोषः—'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मुखः क्रतुः' इत्यमरः। 'एतर्हि सम्प्रतीदानीमधुना साम्प्रतम्' इत्यमरः। 'द्विजात्यग्रजन्म-भूदेव-वाडवाः। विप्रश्च ब्राह्मणोऽसौ' इत्यमरः ॥ ६ ॥

सारार्थः—अस्मात्कालात्पूर्वमहं यज्ञस्यापि फलं न किमपि शुभमेव भवति। नहि ब्राह्मणस्य वचनानि ( भवन्तोऽतीव भाग्यवन्तो भविष्यथ एवं ) न सत्यत्वेन भवन्तीति दुःखावसरे धारणाऽऽसीत् परन्तु साम्प्रतं मन्ये, सृष्ट्यादितो मत्समोऽन्यो न कोऽपि भाग्यवान् जातः, यतोऽतर्कितं दुर्लभं भवद्दर्शनसनायासेन समासादितम्, अतो मन्ये च पूर्वविहितयज्ञानुष्ठानफलोदयोऽद्यैव, ब्राह्मणानामाशीर्वादा अप्यद्यैव सफला जाता इत्यादि ॥ ६ ॥

भाषार्थः—आज ही मेरे पहले के किये हुए यज्ञ सफल हुए, इस समय ब्राह्मणों के आशीर्वाद सत्य सिद्ध हुए, क्योंकि जब से संसार शुरु हुआ, तब से इस दुनियाँ में मेरे समान दूसरा कोई नहीं, ऐसा मैं आपके आने से परम-सत्कार-भाजन हुआ ॥ ६ ॥

**श्रियं विकर्षत्यपहन्त्यघानि श्रेयः परिस्नौति तनोति कीर्तिम्।**
**संदर्शनं लोकगुरोरमोघं तावात्मयोनेरिव किं न धत्ते॥ ७ ॥**

श्रियमिति॥ आत्मयोनेर्ब्रह्मण इव लोकगुरोस्तवामोघमविफलं संदर्शनं श्रियं विकर्षत्याकर्षति। अघानि दुःखान्यपहन्ति। 'अंहो दुःखव्यसनेष्वघम्' इत्यमरः। श्रेयः पुरुषार्थं परिस्नौति स्रवति। कीर्तिं च तनोति। किं बहुना किं न धत्ते किं न करोति। सर्वं करोतीत्यर्थः॥ ७ ॥

अन्वयः—लोकगुरोः, तव, अमोघं सन्दर्शनम्, आत्मयोनेः ( दर्शनम् ) इव, श्रियं, विकर्षति, अघानि, अपहन्ति, श्रेयः परिस्नौति, कीर्तिं तनोति, किं न धत्ते ॥७॥

व्याख्या—लोकगुरोः=संसारोपदेशकस्य, तव=भवतः, व्यासस्येत्यर्थः। अमोघम्=अव्यर्थं, सफलमित्यर्थः। दर्शनम्=अवलोकनं ( कर्तृ )। आत्मयोनेः=ब्रह्मणः, दर्शनमिव, श्रियं=सम्पत्तिम्, विकर्षति=आकर्षति, गतामपि राज्यलक्ष्मीं पुनरावर्त्तयतीति भावः। अघानि=पापानी, अपहन्ति=नाशयन्ति, श्रेयः=कल्याणं, परिस्नौति=स्रवति, कीर्तिं=यशः, ख्यातिं, तनोति=विस्तारयति, एवं किं न धत्ते, सर्वं ददातित्यर्थः ॥ ७ ॥

समासः—लोकस्य भुवनस्य गुरुर्लोकगुरुस्तस्य लोकगुरोः। न मोघमित्यमोघम्, आत्मा एव योनिरुत्पत्तिस्थानं यस्य स आत्मयोनिस्तस्यात्मयोनेः ॥ ७ ॥

व्याकरणम्—विकर्षति=वि+कृष्+लट्। अपहन्ति=अप+हन्+लट्। तनोति=तनु+लट्। परिस्नौति=परि+स्नु+लट्। धत्ते=धा+लट् ॥ ७ ॥

वाच्यान्तरम्—आत्मयोनेरिव लोकगुरोस्तव सन्दर्शनेन श्रियो विकृष्यन्ते, अघान्यपहन्यन्ते, श्रेयः परिस्नूयते, किं न धीयते ॥ ७ ॥

कोषः—'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इत्यमरः। 'कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम्' इत्यमरः। 'यशः कीर्त्तिः समज्ञा च' इत्यमरः। 'लोकस्तु भुवने जने' इति कोषः। 'ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामह' इत्यमरः ॥ ७ ॥

सारार्थः—इह जगति तद्वस्तु विद्यत एव न हि यन्न सम्पादयति भवतां संदर्शनं, सर्वमलभ्यमसाध्यमज्ञं मनोरथं पूरयतीति ॥ ७ ॥

भाषाऽर्थः—ब्रह्मा के समान आपका दर्शन, गयी हुई लक्ष्मी को भी लौटाता है और पापों का नाश करता है। कल्याण ( भलाई ) करता है। यश फैलाता है और क्या-क्या नहीं देता ?। अर्थात् सब कुछ देता है ॥ ७ ॥

**श्च्योतन्मयूखेऽपि हिमद्युतौ मे न निर्वृतं निर्वृतिमेति चक्षुः।**
**समुज्झितज्ञातिवियोगखेदं त्वत्सन्निधावुच्छ्वसतीव चेतः ॥ ८ ॥**

श्च्योतदिति ॥ हे भगवन्, श्च्योतन्मयूखे सुधास्राविकारे हिमद्युताविन्दावपि विषये न निर्वृतम्। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। मे चक्षुस्त्वत्सन्निधौ निर्वृतिं सुखमेति। तथा चेतश्च समुज्झितज्ञातिवियोगखेदं त्यक्तबन्धुविरहदुःखं समुच्छ्वसतीवानुपरोधेन प्राणितीवेत्युत्प्रेक्षा। पूर्वार्धे तु निर्वृतिकारणे सत्यपीन्दावनिर्वृतिकथनाद्विशेषोक्तिः। तदुक्तम्—'तत्सामग्र्यामनिवृत्तिर्विशेषोक्तिर्निगद्यते इति ॥ ८ ॥

अन्वय—श्च्योतन्मयूखे, हिमद्युतौ, अपि न निर्वृतं मे चक्षुः, त्वत्सन्निधौ निर्वृत्तिम्, एति समुज्झितज्ञातिवियोगखेदम् ( मे ) चेतः, उच्छ्वसिति, इव ॥ ८ ॥

व्याख्या—श्च्योतन्मयूखे = पीयूषपूरस्राविकिरणो, हिमद्युतौ = चन्द्रे, अपि, न निर्वृतम् अशान्तम्, मे = मम, युधिष्ठिरस्येत्यर्थः। चक्षुः = नयनं, त्वत्सन्निधौ = भवत्समीपे, निर्वृत्तिं = शान्तिम्, एति = गच्छति, अमृतवर्षिकिरणस्यापि चन्द्रस्य दर्शनेन न तथा नेत्रं शीतलम् जातं, यथा भवत्सौम्यशरीरदर्शनेनेति भावः अत्रायमाशयः। बाह्यं दुखं बाह्योपचारेण दूरीभवितुमर्हति न हि आन्तरिकं तेन, किन्तु आन्तरिकमान्तरिकोपचारेणैव, यथाऽन्तर्दाहः शीतलजलपानादिना, न हि बहिश्चन्दनलेपनेन, तद्वत् ममान्तःकरणजनिता व्यथा तु हृदयाह्लादकेन त्वद्दर्शनेनैव दूरीभूता, न हि नयनाह्लादकचन्द्रकिरणेनेति, तद्युक्तमेवेति, समुज्झितज्ञातिवियोगखेदं= त्यक्तबान्धवविच्छेदखिन्नम्, प्रसन्नमित्यर्थः। मम चेतः = चित्तं, त्वत्सन्निधौ, उच्छ्वसिति=ऊर्ध्वोच्छ्वासं गृह्णाति। अर्थाद् रे दुःख ! अधुना तव कः प्रभावः ! जितमस्मदुदितभाग्येन, नातः परमागन्तुं शक्नोषि अस्मदन्तिके, मम भाग्योदयकरोऽयं महात्मा, एवं पुनरागमिष्यति तदा पुनःपुनस्त्वं ताडितं भविष्यसि। अतोऽयं शिवस्ते मार्गः यन्न कदापि निश्चितप्राणहरे मयि समागन्तव्यम् ॥ ८ ॥

समासः—श्च्योतन्तो मयूखा यस्य स श्च्योतन्मयूखस्तस्मिन् श्च्योतन्मयूखे। हिमा हिमजननी द्युतिर्यस्य स हिमद्युतिस्तस्मिन् हिमद्युतौ। ज्ञातीनां वियोगः ज्ञातिवियोगः, ज्ञातिवियोगेन यः खेद स ज्ञातिवियोगखेदः, समुज्झितो ज्ञातिवियोगखेदो येन तत् समुज्झितज्ञातिवियोगखेदम् ॥ ८ ॥

व्याकरणम्—निर्वृतम = निर + वृ + क्तः । एति = इण + लट् । उच्छ्वसति = उद् = श्वस् + लट् ॥ ८ ॥

वाच्यान्तरम्—श्च्योतन्मयूखेऽपि हिमद्युतौ न निर्वृतेन मे चक्षुषा त्वत्सन्निधौ निर्वृतिरीयते। समुज्झितज्ञातिवियोगखेदेन मे चेतसोच्छ्वस्येते ॥ ८ ॥

कोषः—'किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः' इत्यमरः। 'हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धव' इत्यमरः ॥ 'लोचनं नयनं नेत्रीमक्षणं चक्षुरक्षिणी' इत्यमरः। 'सगोत्रबान्धवा' इत्यमरः ॥ ८ ॥

सारार्थः—परमाह्लादकमप्यमृतकिरणं चन्द्रं विलोक्य यन्मम नयनं न शीतलं जातं, तदधुनाऽऽकस्मिकभवद्दर्शनेन शीतलं पूतं च जातं, तथा चाधुना बन्धुविरहव्यथां परित्यज्य मम मनस्त्वत्समीपे सुखान्वितं भवतीति ॥ ८ ॥

भाषाऽर्थः—अमृत बनानेवाली किरणें हैं जिसकी, ऐसे चन्द्रमा को भी देखकर जो ठण्डी नहीं हुई, ऐसी मेरी आँख आपको देखकर ठण्डी होती हैं और बन्धुओं

के बिछुड़ने के दुःख को छोड़कर अभी मेरा शरीर आपके निकट साँस ( उच्छ्वास ) लेता है ॥ ८ ॥

**निरास्पदं प्रश्नकुतूहलित्वमस्मास्वधीनं किमु निःस्पृहाणाम् ।**
**तथाऽपि कल्याणकरीं गिरं ते मां श्रोतुमिच्छा मुखरीकरोति ॥९॥**

निरास्पदमिति । प्रश्नकुतूहलित्वं निरास्पदम् । त्वदागमनप्रयोजनप्रश्नो निरास्पद इत्यर्थः । 'आस्पदं प्रतिष्ठायाम्' इति निपातः । प्रश्नावकाशे हेतुमाह—निस्पृहाणाम् । युष्मादृशामित्यर्थः । अस्मास्वधीनमायत्तं किमु । न किञ्चिदस्मत्तो लब्धमित्यर्थः । आधारत्वविवक्षायां सप्तमी । तथाऽपि कल्याणकरीम् । अस्मद्धितैकहेतुमित्यर्थः । निःस्पृहवृत्तेः पारार्थ्यादिति भावः । 'कृञो हेतु–' इति टप्रत्यये ङीप् । अतस्ते गिरं श्रोतुमिच्छा माम् । मुखं वागस्यास्तीति मुखरो निरन्तरभाषी । 'रप्रकरणो खमुखकुञ्जेभ्य उपसंख्यानम्' इति रः । 'दुर्मुखे मुखराबद्धमुखौ' इत्यमरः । ततश्च्विप्रत्ययः । मुखरीकरोति । व्याहारयतीत्यर्थः । निस्पृहस्यापि ते वाक्यमस्मद्धितकरत्वाछ्रोतव्यमिति भावः ॥ ९ ॥

अन्वयः—प्रश्नकुतूहलित्वं, निरास्पदम् अस्मासु निःस्पृहाणाम्, अधीनं किमु । तथाऽपि कल्याणकरीं ते गिरं श्रोतुम्, इच्छा, मां मुखरीकरोति ॥ ९ ॥

व्याख्या—प्रश्नकुतूहलित्वम् = भवदागमनप्रयोजनपृच्छौत्सुक्यम् । निरास्पदम् = अनाधारम्, अयुक्तमित्यर्थः । कुत इत्यत आह—अस्मासु = पाण्डवेषु, विषयिष्वित्यर्थः, निःस्पृहाणां = निरीहाणामनिच्छावतामित्यर्थः । अधीनम् = आयत्तं किमु ! न किमप्यस्मभ्यं लभ्यं विद्यते भावादृशां वीतस्पृहाणामत आगमनजिज्ञासा व्यर्थैवेति भावः । तथाऽपि = आगमनहेतुपृच्छौत्सुक्योऽनाश्रयेऽपि, ते = तव, कल्याणरीं = मङ्गलकरीं, गिरं = वाचं, श्रोतुम् = आकर्णयितुम्, इच्छा = अभिलाषा, मां = युधिष्ठिरम्, मुखरीकरोति = वाचालयति, व्याहारयतीत्यर्थः, निःस्पृहस्य ते समागमो न स्वार्थसाधनाय, किन्तु मदर्थसम्पादनायैवातस्तन्निजमङ्गलविधायकवचनश्रवणाभिलाषा मां प्रेरयति ॥ ९ ॥

समासः—कुतूहलमस्यास्तीति कुतूहली कुतूहलिनो भावः कुतूहलित्वम् प्रश्नस्य कुतूहलित्वम्, प्रश्नकुतूहलित्वम्, निर्गता स्पृहा येषां ते निःस्पृहास्तेषां निःस्पृहाणाम् ॥ ९ ॥

व्याकरणम्—मुखरीकरोति=मुखर + च्वि + कृ + लट् । श्रोतुम् = श्रु=तुमुन् ॥९॥

वाच्यान्तरम्—प्रश्नकुतूहलित्वेन निरास्पदेन भूयते । निःस्पृहाणामस्मास्वधीनेन केन भूयते । यथाऽपि कल्याणकरीं ते गिरं श्रोतुमिच्छयाहं मुखरीक्रियते ॥९॥

कोषः—'कौतूहलं कौतुकं च कुतुकं च कुतुहलम्' इत्यमरः । 'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः । 'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी

सरस्वती' इत्यमरः। 'इच्छाऽऽकाङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथ' इत्यमरः। 'अधीनो निघ्न आयत्त' इत्यमरः ॥ ९ ॥

सारार्थः—यतो भवादृशां वीतस्पृहाणां कुत्रापि किमपि लब्धुं समागमनं नहि भवति, अतस्तवागमनकारणप्रश्नोऽनुपपन्नोऽस्ति। तथाऽपि कल्याणसाधिकां भवदीयां वाणीं श्रोतुमिच्छा मां प्रेरयतीति ॥ ९ ॥

भाषार्थः—'आप यहाँ किस लिये आये हैं ? यह पूछना व्यर्थ है। क्योंकि आप जैसे निरीह लोगों को मेरे यहाँ क्या प्रयोजन है। तो भी अपना मङ्गल करनेवाली आपकी बात सुनने की इच्छा मुझे बकवादी बनाती है ॥ ९ ॥

इत्युक्तवानुक्तिविशेषरम्यं मनः समाधाय जयोपपत्तौ।
उदारचेता गिरमित्युदारां द्वैपायनेनाभिदधे नरेन्द्रः ॥ १० ॥

इतीति ॥ इतीत्थमुक्तिविशेषरम्यमुक्तिवैचित्र्यचारु यथा तथोक्तवान्। उदारचेता महामना नरेन्द्रो द्वैपायनेन व्यासेन। द्वीपमयनं स्थानं जन्मभूमिर्यस्य स द्वीपायनः स एव द्वैपायनस्तेन। 'प्रज्ञादिभ्यश्च' इति स्वार्थेऽण्प्रत्ययः। नापत्यार्थे। 'नडादिभ्यः फक्'। तेष्वेव पाठाद्बाधितार्थत्वाच्च। जयोपपत्तौ मनः समाधाय। जयसिद्धिमपेक्ष्येत्यर्थः। इति वक्ष्यमाणप्रकारामुदारामर्थवतीं गिरमभिदधे उक्तः। दुहादित्वादप्रधाने कर्मणि लिट्। 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्। अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः।' इति वचनात् ॥ १० ॥

अन्वयः—इति, उक्तिविशेषरम्यम्, उक्तवान्, उदारचेता, नरेन्द्रः, द्वैपायनेन, जयोपपत्तौ, मनः, समाधाय, इति, उदरां, गिरम्, अभिदध्रे ॥ १० ॥

व्याख्या—इति = पूर्वोक्तनवश्लोकार्थरूपम्, उक्तिविशेषरम्यं = वचनवैचित्र्यचारु, चमत्कृतिकरवाक्यरचनमित्यर्थः। उक्तवान् = कथितवान्, उदारचेताः = विशालहृदयः नरेन्द्रः = राजा युधिष्ठिर इत्यर्थः। द्वैपायनेन = व्यासेन, जयोपपत्तौ = जययुक्तौ, शत्रुपराजयसाधकोपाय इत्यर्थः। मनः = चित्तं, समाधाय=संयोज्य, इति= वक्ष्यमाणाम्, उदाराम् = अर्थबहुलां, गिरं = वाणीम्, अभिदधे = उक्तः ॥ ११ ॥

समासः—उक्तिनां विशेष उक्तिविशेषस्तेनोक्तिविशेषेण रम्यमित्युक्तिविशेषरम्यम्। जयस्योपपक्तिर्जयोपपत्तिस्तस्यां जयोपपत्तौ। उदारं चेतो यस्य स उदारचेताः। द्विर्गता आपो यस्मात्तद्द्वीपं, द्वीपगयनं यस्य स द्वीपायनः, स एव द्वैपायनस्तेन द्वैपायनेन ॥ १० ॥

व्याकरणम्—उक्तवान् = वच् + क्तवत्। सामाधाय = सम् + आ + धा = क्त्वा + ल्यप्। अभिदधे + अभि + लिट् ॥ १० ॥

वाच्यान्तरम्—इत्युक्तिविशेषरम्यमुक्तवन्तमुदारचेतसं नरेन्द्रं द्वैपायनो जयोपपत्तौ मनः समधायेत्युदारां गिरमाभिदधौ ॥ १० ॥

कोषः—'व्याहार उक्तिर्लपितं भाषितं वचनं वच' इत्यमरः। 'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती' इत्यमरः ॥ १० ॥

सारार्थः—एवं स्वं प्रति चमत्कारेणोक्तवन्तं युधिष्ठिरं प्रति, तथा जयलाभो भवेत्तथा विचार्य तत्सिद्धान्तरूपं वचनं व्यासोऽब्रवीत् ॥ १० ॥

भाषार्थः—इस तरह बड़ी ही चमत्कारपूर्ण बात कहते हुए फैले दिल वाले युधिष्ठिर के प्रति, व्यासजी जय होने की युक्ति में दिल लगाकर आने वाली बातें बोले ॥

आदौ तावत्तस्य माध्यस्थ्यभङ्गदोषं युग्मेन परिहरति—

**चिचीषतां जन्मवतामलघ्वीं यशोऽवतंसामुभयत्र भूतिम्।**
**अभ्यर्हिता बन्धुषु तुल्यरूपा वृत्तिर्विशेषेण तपोधनानाम् ॥११॥**

चिचीषतामिति ॥ अलघ्वीं गुर्वीम्। वोतोगुणवचनात् इति ङीष्।। यशोऽवतंसां कीर्तिभूषणाम्। उभयत्रेह चामुत्र च भूतिं श्रेयश्चिचीषतां चेतुं संग्रहीतुमिच्छताम्। चिनोतेः सन्नन्ताच्छतृप्रत्ययः। जन्मवतां शरीरिणां बन्धुषु विषये तुल्यरूपैकविधा वृत्तिर्व्यवहारोऽभ्यर्हितोचिता तपोधनानां स्वस्मत्सदृशां विशेषेण नियमेनाभ्यर्हिता ॥ ११ ॥

अन्वयः—अलघ्वीं, यशोऽवतंसाम्, उभयत्र, भूतिं, चिचीषतां, जन्मवता, बन्धुषु, तुल्यरूपा, वृत्तिः, अभ्यर्हिता, तपोधनानां, विशेषेण, तुल्यरूपा ॥ ११ ॥

व्याख्या—अलघ्वीं = महार्घीं, यशोऽवतंसां = कीर्तिभूषणाम्, उभयत्र = इह अमुत्र च, भूतिम् = ऐश्वर्यं, चिचीषतां = सङ्ग्रहीतुमभिलषतां, जन्मवतां = देहवताम्, बन्धुषु = स्वजनेषु, तुल्यरूपा=एकरूपा, अभेदरूपेति भावः। वृत्तिः = व्यापारः, वा व्यवहार इत्यर्थः। अभ्यर्हिता = अभ्युचिता, समुचितेति भावः। तपोधनानां = तपस्विनाम्, अस्मत्सदृशामिति शेषः। तु विशेषेण = अधिकतया, निश्चयेनेत्यर्थः तुल्यरूपा वृत्तिरुचितेति भावः ॥ ११ ॥

समासः—चेतुमिच्छन्तश्चिचीषन्तस्तेषां चिचीषताम्। जन्मास्त्येषामिति जन्मवन्तस्तेषां जन्मवताम्। न लघ्वीत्यलघ्वी तामलघ्वीम्। यश एवावतंसो यस्याः सा यशोऽवतंसा तां यशोऽवतंसाम्। तुल्यं रूपं यस्याः सा तुल्यरूपा। तप एव धनं येषामिति तपोधनानां ॥ ११ ॥

व्याक०—चिचीषतां = चिञ् + सन् + शतृ। अभ्यर्हिता = अभि + अर्ह + तृच् ॥

वाच्यान्तरम्—जन्मवतां बन्धुषु तुल्यरूपया वृत्त्याऽभ्यर्हितया भूयते ॥ ११ ॥

कोषाः—'प्राणी तु चेतनो जन्मी जन्तुजन्यशरीरिण' इत्यमरः। 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽपि शेखर' इत्यमरः। 'विभूतिर्भूतिरैश्वर्यम्' इत्यमरः। 'सगोत्रबान्धवज्ञातिबन्धुस्वजना' इत्यमरः ॥ ११ ॥

सारार्थः—ये जना इह लोके परलोके च महतीं स्फुरन्तीं यशःपताकां लब्धुमिच्छन्ति, तैः स्वजनेषु निष्पक्षपातो व्यवहारो विधेयः, न हि कदाचित्पक्षपातकार्यः पक्षपाते कृतेऽयशः प्रसरति। तत्र ये किल तपस्विनस्तेषां कथैव का, तैस्तत् नियमेन सर्वत्र समदृष्टिः संरक्ष्या, अन्यथा योगिलक्षणनिपातः स्यादिति ॥ ११ ॥

भाषाऽर्थः—बहुत यशरूप अलङ्करण अर्थात् ऐश्वर्य को जमा करने वाले लोगों को चाहिए कि अपने परिजनों में बराबर व्यवहार रखें। फिर तपस्वियों को तो जरूर समदृष्टि रखनी चाहिए ॥ ११ ॥

**तथाऽपि निघ्नं नृप तावकीनैः प्रह्वीकृतं मे हृदयं गुणौघैः।**
**वीतस्पृहाणामपि मुक्तिभाजां भवन्ति भव्येषु हि पक्षपाताः ॥ १२ ॥**

तथापीति॥ तथाऽपि तुल्यवृत्तौ चित्तेऽपि। हे नृप! तावकीनैस्त्वदीयैः। 'युष्मदस्मदोरन्यतरस्यां खञ्च' इति खञ्प्रत्ययः। 'तवकममकावेकवचने' इति तवकादेशः गुणौघैः प्रह्वीकृतमावर्जितं मे हृदयं निघ्नं त्वदायत्तम्' 'अधीनो निघ्न आयत्तः' इत्यमरः। ननु निःस्पृहस्य कोऽयं पक्षपात इत्यत्राह—वीतेति। वीतस्पृहाणां विरक्तानां मुक्तिभाजाम्। मुमुक्षूणामित्यर्थः। भवन्तीति भव्याः साधवः। 'भव्यगेय–' इत्यादिना कर्तरि निपातः। तेषु पक्षपाताः स्नेहा भवन्ति। न तु साध्वनुग्रहो महतां माध्यस्थ्यभञ्जक इति भावः ॥ १२ ॥

अन्वयः—तथाऽपि (हे) नृप!, तावकीनैः, गुणौघैः, प्रह्वीकृतं, मे, हृदयं, निघ्नं, हि, वीतस्पृहाणां, मुक्तिभाजाम्, अपि, भव्येषु, पक्षपाताः, भवन्ति ॥ १२ ॥

व्याख्या—तथापि=समव्यवहारविधानौचित्येऽपि, हे नृपः=हे राजन्, युधिष्ठिर! इत्यर्थः। तावकीनैः=त्वदीयैः, त्वत्सम्बन्धिभिरित्यर्थः। गुणौघैः=गुणसमूहैः, प्रह्वीकृतम्=आवर्जितम्, मे=मम, व्यासस्येत्यर्थः। हृदयम्=मनः, निघ्नं=त्वदधीनं जातमिति शेषः। हि=यस्माद्धेतोः, वीतस्पृहाणां=निरीहाणां विषयाभिलाषविमुखानामित्यर्थः। मुक्तिभाजाम्=मोक्षाभिलाषिणाम्, अपि समदृष्टिरक्षणोचितानामपि योगिनामित्यर्थः। भव्येषु=सज्जनेषु, पक्षपाताः=स्नेहाः, एकपक्षोपकारकरणाभिलाषा इत्यर्थः। भवन्ति=जायन्ते ॥ १२ ॥

समासः—गुणानामोघा गुणौघास्तैर्गुणौघैः। वीता विगता स्पृहा येषां ते वीतस्पृहास्तेषां वीतस्पृहाणाम्। भक्तिं भजन्त इति भक्तिभाजस्तेषां भक्तिभाजाम्। पक्षे पाताः पक्षपाताः ॥ १२ ॥

व्याकरणम्—भवन्ति = भू + लट् ॥ १२ ॥

वाच्यान्तरम्—तथाऽपि हे नृप ! त्वावकीनैर्गुणौघैः प्रह्वीकृतेन मे हृदयेन निघ्नेन भूयते । हि वीतस्पृहाणां भक्तिभाजामपि भव्येषु पक्षपातैर्भूयते ॥ १२ ॥

कोषः—'अधीनो निघ्न आयत्त' इत्यमरः ॥ १२ ॥

सारार्थः—यद्यपि तपोधनैरस्मत्सदृशैः सर्वत्र समा दृष्टि रक्ष्या, तथाऽपि तव गुणसमूहैर्वशीकृतं मदीयं मनः, यतो निरीहाणामपि दीनभव्येषु पक्षपातो भवत्येवेति ॥ १२ ॥

भाषार्थः—तो भी, हे राजा युधिष्ठिर ! तुम्हारे गुणों से पिघला हुआ मेरा मन तुम्हारे कब्जे में पड़ गया है । क्योंकि वैरागी और मुक्ति चाहनेवालों का भी अनाश्रय भव्य (भले) आदमी में पक्षपात (एकतरफा ख्याल) हो ही जाता है ॥१२॥

अथ नृपस्य गुणवत्तां प्रकटयितुं धृतराष्ट्रस्य दुश्चेष्टामुद्घाटयति—

**सुता न यूयं किमु तस्य राज्ञः सुयोधनं वा न गुणैरतीता ।**
**यस्त्यक्तवान्वः स वृथा बलाद्वा मोहं विधत्ते विषयाभिलाषः ॥१३॥**

सुता इति ॥ यूयं तस्य राज्ञो धृतराष्ट्रस्य सुताः पुत्रा न किमु । अपि तु सुता एवेत्यर्थः । गुणैः शान्तिदानदाक्षिण्यादिभिः सुयोधनं नातीता नातिक्रान्ता वा । अतीता एवेत्यर्थः । कर्तरि क्तः । असुतत्वमगुणत्वं च त्यागे हेतुः । युष्मासु तन्नास्तीत्यर्थः । उपालम्भे कारणमाह—य इति । यो धृतराष्ट्रो वा युष्मान्वृथा निष्कारणमेव त्यक्तवान् । यदि वयं सुता गुणाधिकाश्च तर्हि कथमत्याक्षीत्तत्राह—बलादिति । स विषयाभिलाषः भोगतृष्णा बलाद्वा बलादिव । 'वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये' इति विश्वः । मोहमविवेकं विधत्ते । विषयाभिलाषातिरिक्तो न कश्चिद्युष्मत्त्यागहेतुरस्तीत्यर्थः । अत्र कार्यकारणसमर्थनरूपोऽर्थान्तरन्यासः ॥ १३ ॥

अन्वयः—यूयं, तस्य, राज्ञः, न, किमु, वा, गुणैः सुयोधनं, न अतीताः, यः, वः, वृथा, वा, बलात्, त्यक्तवान्, स, विषयाभिलासः, मोहं, विधत्ते ॥

व्याख्या—यूयम्=भवन्तः, पाण्डवा इत्यर्थः । राज्ञः=भूपतेः, तस्य=धृतराष्ट्रस्य, सुताः=पुत्राः न किमु=किं न भवथ, अपि तु तस्य यूयं पुत्रोपमा एवेति भावः । वा=अथवा, गुणैः=शौर्यौदार्यगाम्भीर्यविद्याऽऽदिभिः सुयोधनं=दुर्योधनम्, अतीताः=अतिक्रान्ताः, न ? अपि तु अतीता एव, अर्थात् भवत्स्वपि पुत्रेषु सत्सु दुर्योधनश्चेद्गुणवत्तमस्तदा तत्पक्षपातकरणं किञ्चिद् युक्तम् परन्तु तथा न, किन्तु स च दुर्योधनो दुर्गुणैर्भवन्तमतिक्रान्तः, ईदृश्यां स्थितौ यजन्मान्धेन स्वात्मजस्य पक्षपातः ? कृतः स नोचित इत्याशयः । यः=धृतराष्ट्रः, एतन्नामको दुर्योधनपितेति

यावत्। वः युष्मान्, पाण्डवानिति भावः। वृथा = अकारणमेव, वा = पक्षान्तरे, बलात् = सहसा, अविचिन्त्यैवेत्यर्थः। त्यक्तवान् = जहौ, सः विषयभिलाषः = रूपादिभोगेच्छाऽऽत्मकः, मोहं = भ्रमं, विधत्ते = करोति। अर्थात् स्वार्थपरता वा भोगाभिलाषाऽपि कर्त्तव्यमार्गेऽन्धकाररूपेणागत्य किं न कर्त्तव्यमिति ज्ञाननिश्चयस्यावलोकनबाधां करोतीत्यर्थः॥ १३॥

समासः—विषयाणामभिलाषो विषयाभिलाषः॥ १३॥

व्याकरणम्—त्यक्तवान् = त्यज + क्तवत्। विधत्ते = वि + धा + लट्॥ १३॥

वाच्यान्तरम्—युष्माभिः किमु तस्य राज्ञः सुतैर्न भूयते। वा युष्माभिः सुयोधनोगुणैर्नातीतः। येन यूयं वृथा त्यक्ताः। विषयाभिलाषेण मोहो विधीयते॥ १३॥

कोषः—'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी' इत्यमरः। 'वृथा निरर्थकाविध्योः' इत्यमरः। 'मोहश्चित्तभ्रमो भ्रान्तिर्भ्रमो मूर्च्छेति संमता' इति कोषः॥

सारार्थः—भवन्तोऽपि धृतराष्ट्रस्य भ्रातृपुत्रत्वेन पुत्रोपमा एव, तत्रापि दुर्योधनापेक्षया विशेषगुणवन्तोऽपि सन्ति, तथापि तेन यद्भवन्तस्त्यक्ताः स्वपुत्रोऽङ्गीकृतस्तन्नोचितं विहितम्। परन्तु विषयाभिलाषो मोहं करोति, तेन हेतुना धृतराष्ट्रस्य मतिर्मोहापन्ना जाता इति॥ १३॥

भाषाऽर्थः—क्या आप पाँचो भाई धृतराष्ट्र के लड़के नहीं हैं या दुर्योधन से विशेष गुणी नहीं हैं, जो उसने आप लोगों को छोड़ दिया सो व्यर्थ ही और विना विचार से, क्योंकि विषय की चाह मनुष्य को हृदयहीन कर देती है॥ १३॥

अथ राज्ञ उत्साहवर्द्धनाय शत्रोर्हानिं सूचयति—

**जहातु नैनं कथमर्थसिद्धिः संशय्य कर्णादिषु तिष्ठते यः।**
**असाधुयोगा हि जयान्तरायाः प्रमाथिनीनां विपदां पदानि॥ १४॥**

जहात्विति॥ एनं धृतराष्ट्रमर्थसिद्धिः कथं न जहातु। जहात्वेवेत्यर्थः। 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' इति प्राप्तकाले लोट् तस्य हानिकालः प्राप्त इत्यर्थः। कुतः। यो धृतराष्ट्रः संशय्य सन्दिह्य कर्णादिषु। तिष्ठते कर्णादीन्दुर्मन्त्रिणः सन्दिग्धार्थनिर्णेतृत्वेनावलम्बत इत्यर्थः। 'प्रकाशनस्थेयाख्ययोश्च' इति स्थेयाख्यामात्मनेपदम्। तिष्ठतेऽस्मिन्निति स्थेयो विवादपदनिर्णेता। तथा हि। असाधुयोगा दुर्जनसंसर्गा जयान्तराया जयविघातकाः। किञ्च प्रमाथिनीनामुन्मूलनशीलानां विपदां पदानि स्थानानि। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः। न केवलं जयघातिनः किन्त्वनर्थकारिणश्चेत्यर्थः धृतराष्ट्रोऽपि दुर्जनः—विधेयत्वाद् विनंक्ष्यतीति॥ १४॥

अन्वयः—यः, कर्णादिषु, संशय्य, तिष्ठते, एनम्, अर्थसिद्धिः, कथं, न, जहातु, हि, जयान्तरायाः, असाधुयोगाः, प्रमाथिनीनां, विपदां पदानि ( भवन्ति )॥

व्याख्या—यः = धृतराष्ट्रः, कर्णादिषु=अङ्गराजप्रभृतिषु, संशय्य=संशयमवाप्य, तिष्ठते=निर्णेतृत्वेनावलम्बते, तम्, एनं, कथं=कस्माद्, न=नहि, अर्थसिद्धिः= प्रयोजनसिद्धिः, जह्यातु=त्यजतु, अवश्यमेव दुर्नयतां कर्णादीनां मन्त्रणया तस्येष्ट- सिद्धिः कथमपि न भविष्यतीति भावः। हि=यस्मात् कारणात्, जयान्तरायाः= जयविघ्नरूपाः, असाधुयोगाः दुर्जनसंसर्गाः, प्रमाथिनीनाम्=उन्मूलनशीलानां, विपदाम्=आपदां, दुःखानामित्यर्थः। पदानि=स्थानानि, भवन्ति ॥ १४ ॥

समासः—अर्थस्य सिद्धिरर्थसिद्धिः। कर्ण आदिर्येषां ते कर्णादयस्तेषु कर्णादिषु। न साधुरसाधुः, असाधोर्योगा असाधुयोगाः, जयस्यान्तरायाः जयान्तरायाः ॥१४॥

व्याकरणम्—जहातु=हा+लोट्। संशय्य=सम्+शीङ्+क्त्वा+ल्यप्। तिष्ठते=ष्ठा+लट् ॥ १४ ॥

वाच्यान्तरम्—येन कर्णादिषु संशय्य स्थीयते। सोऽयं कथं नार्थसिद्ध्या हीयतां, हि जयान्तरायैरसाधुयोगैर्विपदां पदैर्भूयते ॥ १४ ॥

कोषः—'कर्णः श्रुतौ, कर्णभूपे, जात्यःयत्नमहाभुजे-' इति कोषः। 'विघ्नोऽन्त- रायः प्रत्यूह' इत्यमरः। 'पदंव्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः॥ १४॥

सारार्थः=अहो कर्णदुर्योधनदुःशासनादीनामन्यायमार्गनिरतानां विचारेण यो धृतराष्ट्रः प्रवर्तते। कथं तस्याभ्युदयो भविष्यति। वस्तुतो दुर्जनजनसङ्गतयो जय- विघ्नस्वरूपस्तथा चोन्मूलनशीलानां विपत्तीनां स्थानान्येव भवन्ति, अतो नियतं कियता कालेन तस्य विपत्तयः समुत्पत्स्यन्ते ॥ १४ ॥

भाषार्थः—जो कि संदेह होने पर कर्ण आदि अन्यायियों की राय पर चलता है, कैसे उसको कार्यसिद्धि नहीं छोड़ेगी। क्योंकि जय का विघ्नरूप दुर्जनों का सङ्ग सत्यानाश करनेवाली विपत्तियों की जगह है ॥ १४ ॥

एवं शत्रोरनर्थं सूचयित्वा राज्ञोऽर्थसिद्धिं सूचयति—

**पथश्च्युतायां समितौ रिपूणां धर्म्यां दधानेन धुरं चिराय।**
**त्वया विपत्स्वप्यविपत्तिरम्यमाविष्कृतं प्रेम परं गुणेषु ॥ १५॥**

पथ इति ॥ रिपूणां समितौ सभायाम्। 'सभासमितिसंसदः' इत्यमरः। पथश्च्यु- तायां मार्गाद् भ्रष्टायाम्। दुरात्मनो दुःशासनस्य स्त्रीग्रहणसाहसमङ्गीकृतवत्या- मित्यर्थः। चिराय धर्म्यां धर्मादनपेताम्। 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः। धुरं भारं दधानेन। कृच्छ्रेष्वपि धर्मादचलतेत्यर्थः। त्वया विपत्स्वपि, अविपत्त्या- विनाश्यत एव रम्यं गुणेषु शान्त्यादिषु विषये परमुत्कृष्टं प्रेमाविष्कृतं प्रकटी- कृतम्। दुःसहमपि सोढवता त्वया साधु कृतमिति भावः ॥ १५ ॥

अन्वयः—पथश्च्युतायां, रिपूणां, समितौ, चिराय, धर्म्यां, धुरं, दधानेन, त्वया, विपत्सु, अपि, अविपत्तिरम्यं, गुणेषु, परं, प्रेम, आविष्कृतम् ॥ १५ ॥

व्याख्या—पथश्च्युतायां = न्यायमार्गभ्रष्टायां, रिपुणां = शत्रूणां, दुर्योधनादीनामित्यर्थः। समितौ = सभायां, धर्म्यां = धर्मयुक्तां, धुरं = भारं, दधानेन = बिभ्रता, त्वया = भवता, युधिष्ठिरेणेत्यर्थः। विपत्सु = आपत्सु, द्रौपदीवस्त्रकर्षणादिष्वित्यर्थः। अपि, अविपत्तिरम्यं = सुखावसरवद्रुचिरं, वा, अविपत्ति=अनश्वरं, रम्यं = चारु, निष्कपटमित्यर्थः। परं=परमम्, प्रेम = स्नेहः, आविष्कृतम् = प्रकटीकृतम्। सुखावसरे सर्वे गुणेषु प्रेम प्रदर्शयन्ति, परन्तु दुःखावसरेऽपि भवानेव गुणेषु प्रेम प्रदर्शितवान्, अतो भवान् भव्यस्तेन त्वयि पक्षपातो नानुचित इति ॥ १५ ॥

समासः—न विपत्तिर्यत्र तद् अविपत्तिः ॥ १५ ॥

व्याकरणम्—आविष्कृतम् = आविस् = कृ + क्तः ॥ १५ ॥

वाच्यान्तरम्—पथश्च्युतायां रिपुणां समितौ धर्म्यां धुरं दधानस्त्वं विपत्सु, अविपत्तिरम्यं परं प्रेम गुणेषु आविष्कृतवान् ॥ १५ ॥

कोषः—'अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः' इत्यमरः'। 'सभासमितिसंसद' इत्यमरः। 'प्रेमा ना प्रियता हार्दं प्रेम स्नेह' इत्यमरः ॥ १५ ॥

सारार्थः—अहो किमधिकं भवतो गुणाधिक्यं वर्णयामि, द्रौपदीवस्त्रापकर्षणसमयेऽप्यन्यायमार्गनिरतानां कौरवाणां सभायां भवान् धर्मं न त्यक्तवान्, तथा चाक्लेशेन गुणेष्वेवादरोऽङ्गीकृतः विपद्दशायां बहवो धर्मवन्तोऽपि किञ्चित् कालपर्यन्तं धर्मं विहायावसरं प्रतीक्षन्ते परं भवाँस्तु तादृश्यामप्यवस्थायां धर्ममेवाङ्गीकृतवान् ॥ १५ ॥

भाषाऽर्थः—नीतिमार्ग से उतरी हुई दुश्मनों की सभा में धर्मयुक्त कार्यभार वहन करते हुए भी तुम्हारे द्वारा विपत्ति में अच्छी हालत के जैसे गुणों में प्रेम दर्शाया गया है ॥ १५ ॥

**विधाय विध्वंसमनात्मनीनं शमैकवृत्तेर्भवतश्छलेन।**
**प्रकाशितत्वन्मतिशीलसाराः कृतोपकारा इव विद्विषस्ते ॥ १६ ॥**

विधायेति ॥ किं च शम. एवैका मुख्या वृत्तिर्यस्य तस्यापरोपतापिनो भवतश्छलेन कपटेन। आत्मने हितं आत्मनीनः स न भवतीत्यनात्मनीनः। स्वस्यैवानर्थहेतुरित्यर्थः। तम्। 'आत्मन्विश्वजनभोगोत्तरपदात्खः' इति खप्रत्ययः। विध्वंसमपकारं विधाय कृत्वा। प्रकाशितः प्रख्यापितस्त्वन्मतिशीलयोस्तव प्रज्ञासद्वृत्तयोः सारः प्रकर्षो यैस्ते तथोक्ताः। ते तव विद्विषः कृतोपकाराः त्वोपकृतवन्त इव। अपकारोऽप्युपकारायैव संवृत्तः। यदेषां दौर्जन्यं युष्मत्सौजन्यं च जगति सुव्यक्त-

भवतीत्यर्थः। विद्यमानस्यापि सुजनस्य चन्दनदारुण इव गुणाः परिभव इव प्रचुरीभवन्तीति भावः ॥ १६ ॥

अन्वयः—शमैकवृत्तेः भवतः, छलेन, आत्मनीनं, विध्वंसं, विधाय, प्रकाशितत्वन्मतिशीलसाराः ते, विद्विषः, कृतोपकाराः, इव ( सन्ति ) ॥ १६ ॥

व्याख्या—शमैकवृत्तेः = शान्तिप्रधानव्यवहारस्य, भवतः = तव, युधिष्ठिरस्येत्यर्थः। छलेन=कपटेन। अनात्मनीनं = स्वानिष्टकरं, विध्वंसं=सर्वहानिं, विधाय= कृत्वा, प्रकाशितत्वन्मतिशीलसाराः = प्रकटितभवद्बुद्धिप्रकृतिप्रकर्षाः, ते = तव, युधिष्ठिरस्येर्थः। विद्विषः = शत्रवः, कृतोपकाराः=विहितसाहाय्याः, इव, सन्तीति। अर्थात् मिथो मित्रतायां दुर्जना अप्युपकारिण एव भवन्ति, का कथा सज्जनानाम्, परन्तु मिथो विरोधे जनिते दुर्जनाः, प्रकृतिं प्रकटयन्ति, सज्जना अपि स्वस्वभावं प्रदर्शयन्ति। किन्तु दुर्जनकृतापकारस्य प्रत्यपकारं न कुर्वन्ति तदानीं सज्जनस्य परिचयो यद्दुर्जनकृतापकारानपि समापयित्वा, तत्प्रतीकारं ये न कुर्वन्ति 'ये यदनिष्टमिष्टं वा कुर्वन्ति ते तत् स्वार्थाय, अतश्चेदस्मदीयो रिपवोऽस्माकमनिष्टमाचरन्ति, तदा कुर्वन्तु, तत्फलं त एव प्राप्स्यन्ति, न तत्प्रत्युत्तरं दास्यामः, एवं स्वभाववतां भवतां स्वभावपरिचय एव प्रकाशितो भवद्वैरिणा सर्वत्रेति भावः ॥ १६ ॥

समासः—आत्मने हित आत्मनीनः न आत्मनीन इत्यनात्मनीनः, तमनात्मनीनम्। शम एवैका वृत्तिर्यस्य सः, शमैकवृत्तिस्तस्य शमैकवृत्तेः। मतिश्च शीलश्च मतिशीले, तव मतिशीले, इति त्वन्मतिशीले त्वन्मतिशीलयोः सारौ, त्वन्मतिशीलसारौ, प्रकाशितौ त्वन्मतिशीलसारौ यैस्ते प्रकाशितत्वन्मतिशीलसाराः। कृतः उपकारो यैस्ते कृतोपकाराः ॥ १६ ॥

व्याकरणम्—विधाय = वि + धा + क्त्वा + ल्यप् ॥ १६ ॥

वाच्यान्तरम्—शमैकवृत्तेर्भवतश्छलेन, अनात्मनीनं विध्वंसं विधाय, प्रकाशितत्वन्मतिशीलसारैस्ते विद्विड्भिः कृतोपकारैरेव भूयते ॥ १६ ॥

कोषः—'शमथस्तु शमः शान्तिः' इत्यमरः। 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः। 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः' इत्यमरः। 'शुचौ तु चरिते शीलम्' इत्यमरः ॥ १६ ॥

सारार्थः—दुर्योधनस्तु शान्तिशीलस्य भवतो या हानिः कृता सा स्वस्यैवानर्थरूपा तस्य। प्रत्युत पदे पदे तेनापकृपा अपि भवन्तस्तस्यापकारमकृत्वा विपत्तावपि नीतिनियम एव पालित इत्यतुलं यशस्तत्कारणमेव प्रसृतं जगति। अतस्ते शत्रवो भवतः कृतोपकारा इव लक्ष्यन्ते मयेति युधिष्ठिरं प्रति व्यासोक्तिः ॥ १६ ॥

भावार्थः—शान्ति रखना ही एक चाल है जिसकी, ऐसे आपकी हानि के छल से अपनी हानि करके आपकी बुद्धि ( समझ ) और शील ( सच्चरित्रता ) ईमानदारी के प्रभाव को प्रकाशित करनेवाले आपके दुश्मन लोग आपके उपकारी के ही समान हैं ॥ १६ ॥

अथ प्रयोजनान्तरमाह—

**लभ्या धरित्री तव विक्रमेण ज्यायांश्च वीर्यास्त्रबलैर्विपक्षः ।**
**अतः प्रकर्षाय विधिर्विधेयः प्रकर्षतन्त्रा हि रणे जयश्रीः ॥१७॥**

लभ्येति ॥ तव । त्वयेत्यर्थः । 'कृत्यानां कर्तरि वा' इति षष्ठी । धरित्री । विक्रमेण लभ्या प्राप्तव्या । न च सुलभ्या तं विनेत्याह—विपक्षश्च शत्रुरपि । वीर्यं शौर्यमस्त्राण्याग्नेयादीनि बलानी सैन्यानि तैर्ज्यायान्प्रशस्यतरः । अधिकतर इति यावत् । ज्येष्ठस्य 'यादादीयसः' इति ज्यादेशः । अतः प्रकर्षायाधिक्याय । उपायो विधेयः कर्तव्यः । कुतः । हि यस्माद्रणो जयश्रीः प्रकर्षतन्त्रा प्रकर्षप्रधाना । प्रकर्षायत्तेत्यर्थः । 'तन्त्रं प्रधाने सिद्धान्ते' इत्यमरः । बलिन एव जयः, न तु दुर्बलस्येति भावः ॥ १७ ॥

अन्वयः—तव धरित्री, विक्रमेण, लभ्या, च, विपक्षः, वीर्यास्त्रबलैः, ज्यायान् अतः, प्रकर्षाय, विधिः, विधेयः, हि, रणे, जयश्रीः, प्रकर्षतन्त्रा ॥ १७ ॥

व्याख्या—तव = भवतः, युधिष्ठिरस्येत्यर्थः । धरित्री = पृथ्वी, विक्रमेण = पराक्रमेण, लभ्या, = प्राप्या भविष्यतीति शेषः । न तु शान्त्या लभ्येति भीममतानुमोदनम् । विपक्षश्च = शत्रुश्च, वीर्यास्त्रबलैः = शौर्यशस्त्रसैन्यैः, ज्यायान् = महीयान्, अस्तीति शेषः । अतः = अस्मात्, कारणात् प्रकर्षाय = उत्कर्षाय, शत्रुतोऽधिकवीर्यशस्त्रसैन्यसम्पादनायेत्यर्थ । विधिः = विधानं, विधेयः = कर्तव्यः, हि—यस्मात्, कारणात्, रणे = सङ्ग्रामे, जयश्रीः=जयलक्ष्मीः, प्रकर्षतन्त्रा = उत्कर्षजनाधीना, न त्वपकर्षजनायत्तेति भावः । अनेनाधुना युद्धकरणमुचितमिति युधिष्ठिर-मतानुमोदनं कृतं भगवता व्यासेन यतो मिथः सहजयोरनुरोधः शान्तो भवेदिति ॥ १७ ॥

समासः—वीर्यं चास्त्राणि च बलानि च वीर्यास्त्रबलानि, तैर्वीर्यास्त्रबलैः । प्रकर्षस्वतन्त्रं मुख्यो यस्याः सा प्रकर्षतन्त्रा । जयस्य श्रीः जयश्रीः ॥ १७ ॥

व्याकरणम्—लभ्या = लभ् + यत् । विधेयः = वि + धा + यत् ॥ १७ ॥

वाच्यान्तरम्—त्वं स्वकीयां धरित्रीं विक्रमेण लप्स्यसे । तव विपक्षेण वीर्यास्त्रबलैर्ज्यायसा भूयते । अतः प्रकर्षाय विधिः विधेहि, रणे जयश्रिया प्रकर्षतन्त्रया भूयते ॥ १७ ॥

कोषः—'धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः' इत्यमरः। 'शक्तिः पराक्रमः प्राणो विक्रमस्त्वतिशक्तिता' इत्यमरः। 'वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्' इत्यमरः। 'उत्साहोऽध्यवसायः स्यात्सवीर्यमतिशक्तिभाक्' इत्यमरः। 'द्विड्विपक्ष-हिता-मित्र-दस्यु-शात्रव-शत्रव' इत्यमरः। 'विधिर्विधाने दैवे च' इत्यमरः। 'तन्त्रं प्रधाने सिद्धान्ते' इत्यमरः। 'अस्त्रियां समरानीकरणाः कलहविग्रहौ' इत्यमरः ॥ १७ ॥

सारार्थः—विना पराक्रमेण भवतो राज्यलाभो न भविष्यति। परन्तु भवदपेक्षयाऽधुना शौर्यशस्त्रसैन्यैर्भवच्छत्रव एक विशेषा अतस्ते भवतोऽधिकविक्रमवन्तः सन्ति, अथ सङ्ग्रामे जयलाभो विशेषतया विक्रमाधिकस्यैवातोऽधुना युद्धे कृते तेषामेव जयसम्भवः, न तु विक्रमवतो भवतस्तेन विशेषविक्रमसम्पादनायोपायः प्रकर्त्तव्यः, वदाम्यपि तमुपायमग्रे—इति ॥ १० ॥

भाषाऽर्थः—आपकी गई भूमि ( जगह ) पराक्रम से मिलेगी, अभी आपका वैरी आपसे बल, शस्त्र और सेनाओं से बलवान है। इसलिये आपको बलवान् होने के लिए उपाय करना चाहिये। क्योंकि युद्ध में जयलक्ष्मी बलवान् ही के अधीन होती है ॥ १७ ॥

अथ 'त्रि'—इत्यादिना श्लोकचतुष्टयेन विपक्षज्यायस्त्वं वर्णयति—

**त्रिःसप्तकृत्वो जगतीपतीनां हन्ता गुरुर्यस्य सजामदग्न्यः।**
**वीर्यावधूतः स्म तदा विवेद प्रकर्षमाधारवशं गुणानाम् ॥ १८ ॥**

त्रिसप्तेति ॥ त्रिरावृत्तान्सप्तवारांस्त्रिःसप्तकृत्वः। एकविंशतिकृत्व इत्यर्थः। त्रिःसप्तशब्दयोः सुप्सुपेति समासः। 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति। कृत्वसुच्प्रत्ययः। जगतीपतीनां महीपतीनां हन्ता नाशको गुरुधनुर्वेदोपदेष्टा सः। प्रसिद्ध इत्यर्थः। अत एव यच्छब्दानपेक्षत्वम्। तदुक्तं काव्यप्रकाशे—'प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते' इति। जमदग्नेरपत्यं पुमाञ्जामदग्न्यः। 'गर्गादिभ्यो यञ्' इति यञ्प्रत्ययः। यस्य भीष्मस्य वीर्यावधूतो विक्रमाभिभूतः। अम्बिकास्वयंवर इत्यर्थः। तदा भङ्गप्राप्तिसमये गुणानां शौर्यादीनां प्रकर्षमतिशयमाधारवशमाश्रयाधीनं विवेद जज्ञे स्म। स्वविद्यायाः स्वशिष्ये भीष्मे स्वस्मादपि प्रकर्षाधानदर्शनादिति भावः। 'स्म पादपूरणे भूतेऽर्थे च' इति विश्वः ॥ १८ ॥

अन्वयः—(यः) त्रिःसप्तकृत्वः, जगतीपतीनां, हन्ता, गुरुः, सः, जामदग्न्यः, यस्य वीर्यावधूतः, ( सन् ) तदा गुणानां प्रकर्षम्, आधारवशं, विवेद ॥ १८ ॥

व्याख्या—( यः ) त्रिःसप्तकृत्वः = त्रिगुणसप्तवारम् , एकविंशतिवारमित्यर्थः। जगतीपतीनाम् = महीपतीनां, क्षत्रियाणामित्यर्थः। हन्ता = नाशकः, गुरुः = धनुरस्यवेदोपदेशकः। भीष्मस्यापीति शेषः। सः = तथाविधः, जामदग्न्यः = जमदग्निमुनिपुत्रः, परशुराम इत्यर्थः। यस्य = भीष्मस्य, वीर्यावधूतः = पराक्रमतिरस्कृतः, भीष्मेण पराजितः सन्नित्यर्थः। तदा = स्वपराजयावसरे, गुणानां = शौर्यौदार्यगाम्भीर्यादीनाम् , प्रकर्षम् = उत्कर्षम् , आधारवशम् = आश्रयाऽनुगुणं, विवेद = ज्ञातवान्। अन्यत्किमु कथ्यते परशुरामोऽपि येन पराजितस्तादृशो भीष्मः 'कस्य मनो भयैकप्रवणं न कुर्यादि'ति पुरः श्लोकेन सम्बन्धः। न हि गुणोत्कर्षो गुरावेव तिष्ठति, शिष्योऽपि चेद् गुरोरधिकसत्पात्ररूपस्तदा गुर्वपेक्षया शिष्य एवाधिकगुणवानिति भावः ॥ १८ ॥

समासः—त्रिः, त्रिगुणाः सप्त, इति त्रिःसप्तकृत्वः। जगत्याः पतयो जगन्ती, पतयस्तेषां जगतीपतीनाम्। जमदग्नेरपत्यं पुमान् जामदग्न्यः। वीर्येणावधूतो, वीर्यावधूतः। आधारस्य वश आधारवशस्तमाधारवशम् ॥ १८ ॥

व्याकरणम्—त्रिःसप्तकृत्वः = त्रि + सुच् + सप्त + कृत्वसुच्। विवेद = विद् + लिट् ॥ १८ ॥

वाच्यान्तरम्—त्रिःसप्तकृत्वो जगतीपतीनां हन्त्रा गुरुणा तेन जामदग्न्येन यस्य वीर्यावधूतेन गुणानां प्रकर्ष आधारवशो विविदे ॥ १८ ॥

कोषः—'जगती जगतिच्छन्दो विशेषेऽपि क्षितावपि' इत्यमरः। 'स्म पादपूरणे भूतेऽर्थे' इति विश्वः। 'गुरुः प्रधाने महति चोपदेष्टर्यपि स्मृत' इति कोषः। 'मत आधार आश्रय' इति कोषः ॥ १८ ॥

सारार्थः—यः परशुराम एकविंशतिवारं निःक्षत्रियां महीमकरोत् , तच्छिष्योऽपि भवन् भीष्मः, अम्बाप्रेरितं तं परशुरामं जित्वा स्वपक्षः ( नाहं करिष्यामि करग्रहं कयाऽप्येवम्भूपः ) रक्षितः। स गुरोरपि विजेता भीष्मः केन भवत्पक्षीयेण निवारयितुं योग्यः ? नहि केनापीति ॥ १८ ॥

कथासन्दर्भः—एकदा भीष्मस्य ( देवव्रतस्य ) पिताशन्तनुर्मृगयार्थं वनं गतस्तत्रैकां दाशकन्यकामालोक्य स्त्रीविरहितेन कामाधिकतया तस्यामासक्तो भूत्वा तत्पितरं धीवरं कन्यादानाय प्रार्थयामास। स च धीवरः—मम प्राणमपि गृह्णातु राजा, नाहं वृद्धाय, विवाहार्हवयस्कपुत्राय भवते दास्यामि स्वकन्यां, दास्यामि चेत्तदा भवत्पुत्राय देवव्रताय' इत्युत्तरं ददौ, ततस्तदुचितकथया लज्जितः कामबाणभिन्नमर्मावयवः स्वभवनमागत्य कोपभवने निद्राव्याजेन भूमौ निःश्वसन् प्राणान् हातुं पतितः। प्रभाते, अतीते च किय़ति समये, उषसि उत्थानशीलमपि राजानमनुत्थितमालोक्य परिचारका मन्त्रिणश्च तत्सकाशं गत्वाऽवलोकितवान्तः

वीयां पृष्ठां, ज्ञातवांश्च तस्याशयं, तथा देवव्रतस्तत्पुत्रस्तयाभिलाषपूर्त्यै तस्य दाशस्याग्तिके गत्वाऽतिसत्वरम् मत्पित्रे देहि दुहितरं विवाहविधिनेत्यादिशत्। श्रुत्वा तद्वचनं, नाहं तस्मै दास्यामि, किं भवत्युपस्थितेऽस्मद्दौहित्रो राज्यभागी स्यादथवा भवत्पुत्रपरम्परायाः सम्भवेऽपि। यदि ग्रहीष्यति, तदा त्वदर्थं चेत्तथा ददामि सादरमिति निशम्य तदानीमेव देवव्रतेन प्रतिज्ञा कृता 'नाहं करिष्यामि विवाहं कयाऽपि सार्कं, नाहं राज्यमङ्गीकरिष्यामिति' हेतोस्तस्य नाम भीष्मो भीष्मप्रतिज्ञाकरणाज्जातम्। अथ तां दाशकन्यां योजनगन्धां व्यासमातरं कालीं समानीय स्वजनकायार्पिता भीष्मेण। तस्यां चित्रवीर्यविचित्रवीर्यौ द्वौ भ्रातरौ भीष्मस्य जातौ कदाचित्सञ्जनिते काश्या महाराजस्य कन्यानां वीर्यशुल्के स्वयम्वरे सम्मिलिता निमन्त्रिता भूपतयः। भीष्मोऽपि स्वानुजाभ्यां सह तत्र गतः। परन्तु भीष्ममागतमेव विज्ञाय सर्वे राजानः स्वकीयामाशा विफलाभविष्यन्तीमनुमान्य यथादिशं गताः अन्ते च भीष्मः अम्बा-अम्बिका-अम्बालिका-चेति कन्यात्रयमादाय स्वधामागमत्। तदानीमम्बाऽवदद् 'अहं पूर्वत एव शाल्वभूपानुरक्ता आसम्' इति निशम्य 'गच्छ यथेष्टं स्वच्छन्दचारिणि'–एवं कथयित्वा स्वानुजयोरम्बिकाम्बालिकाभ्यां विवाहं चकार परन्तु शाल्वेन 'नाहं त्वां परपरिगृहीतां ग्रहीष्यामि' इत्थमपमानिता पुनः साऽम्बिका लज्जावनतवदना भीष्मशरणमेवोपस्थिता 'त्वमेव मां गृहाण कुरुष्व मां किङ्करीमपि' इति प्रार्थितवती। परन्तुः भीष्मः स्वप्रतिज्ञाभङ्गभिया तां दूरतस्त्यक्त्वा स्थितः। अथ सा किंकर्त्तव्यविमूढा भूत्वाऽन्ते 'यदस्य गुरुः परशुराम एव कथयिष्यति तदा तदाज्ञां नोल्लंघयिष्यति' इति विचार्य रामान्तिकं गत्वा तस्मै सर्वं स्वखेदहेतुमकथयत्। ततो जातदयेन तेन भीष्मसन्निधिमागत्यादिशत् 'कुरु विवाहमनयाऽम्बया'। ततो 'नहि करिष्यामि कदापि कयाऽपि सह करग्रहम्' इति साग्रहं वचः श्रुत्वा प्रकृत्या कोपने रामस्तेन सह योद्धुमारब्धः। युद्धे च भीष्मेण पराजितः स्वस्थानं गतः। सा च द्रुपदयज्ञकुण्डे पतित्वा ततो नपुंसकवेषेण शिखण्डीति नाम्ना परिचितस्तस्मान्निःसृतो भीष्ममृत्युनिदानीभूताऽभवदिति ॥ १८ ॥

भाषाऽर्थः—एक्कीस बार राजाओं का संहार करनेवाले, धनुर्वेद के आचार्य परशुराम ने भी उस भीष्म से हार कर माना कि गुणों की विशेषता पात्र के अनुसार होती है ॥ १८ ॥

**यस्मिन्ननैश्वर्यकृतव्यलीकः पराभवं प्राप्त इवान्तकोऽपि।**
**धुन्वन्धुनः कस्य रणे न कुर्यान्मनो भयैकप्रवणं स भीष्मः ॥१९॥**

यस्मिन्निति ॥ यस्मिन्भीष्मे विषये। अनीश्वरस्य भावोऽनैश्वर्यमसामर्थ्यम्। 'नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्' इति विकल्पान्नञः पूर्वपदवृद्ध्यभावः। तेन

कृतव्यलीको जनितवैलक्ष्यः। 'दुःखे वैलक्ष्ये व्यलीकम्' इति यादवः। अन्तकोऽपि यमोऽपि पराभवं प्राप्त इव। भीष्मस्येच्छामरणत्वादन्तकोऽपि पराजित इवास्ते, किमुतान्य इति भावः। स भीष्मो रणे धनुर्धुन्वन्कम्पयन्कस्य मनो भयैकप्रवणं भय एकप्रवणमेकोन्मुखम्। शिवभागवतवत्समासः। न कुर्यात्। सर्वस्यापि मनसि भयं कुर्यादेवेत्यर्थः॥ १९॥

अन्वयः—यस्मिन्, अनैश्वर्यकृतव्यलीकः, अन्तकः, अपि, पराभवं, प्राप्तः, इव, रणे, धनुः, धुन्वन्, सः, भीष्मः, कस्य, मनः, भयैकप्रवणं, न, कुर्यात्?॥ १९॥

व्याख्या—यस्मिन् = भीष्मे, अनैश्वर्यकृतव्यलीकः = असामर्थ्यजनितदुःखः, अन्तकः = यमः, अपि, पराभवम् = पराजयं, प्राप्तः = गतः, इव जातः। तादृश इति शेषः। रणे = सङ्ग्रामे, धनुः = शरासनं, धुन्वन् = चालयन्, सन्, कस्य = जनस्य, मनः = चित्तम्, भयैकप्रवणं = भीष्माभिमुखं, न कुर्यात् = न विदधीत, अपि तु सर्वेषामपि कुर्यादेव, वा कस्य = ब्राह्मणोऽपि, मनो भयैकप्रवणं कुर्यादेवेति॥ १९॥

समासः—ईश्वरस्य भाव ऐश्वर्यं न ऐश्वर्यम् अनैश्वर्यम्, अनैश्वर्येण कृतं व्यलीकं यस्यः सः अनैश्वर्यकृतव्यलीकः। एकस्मिन्नेव प्रवणमेकप्रवणम्, भय एकप्रवणं भयैकप्रवणम्॥ १९॥

व्याकरणम्—कुर्यात्=कृ + लिङ्। प्राप्तः, प्र + आप + क्तः॥ १९॥

वाच्यान्तरम्—यस्मिन्ननैश्वर्यकृतव्यलीकेनापि पराभवं प्राप्तेनेव, रणे धनुर्धुन्वता तेन भीष्मेण कस्य मनो भयैकप्रवणं न क्रियेत॥ १९॥

कोषः—'व्यलीकमप्रियकार्यवैलक्ष्येष्वपि पीडने'—इत्यमरः। 'कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तक' इत्यमरः। 'धनुश्चापो धन्वशरासनकोदण्डकार्मुकम्' इत्यमरः। प्रवणं क्रमनिम्नोर्व्याम' इत्यमरः॥ १९॥

सारार्थः—महाभारते, शिखण्डिनं पुरस्कृत्य यदाऽसंख्यैः शरैरर्जुनेन भीष्मो रोमरोमसु वेधितस्तदा, तस्य मरणमुपस्थितमपि, स्वतपोब्रह्मचर्यप्रभावेण 'नाहमधुना याम्यायने मृत्वा नरकमार्गेण गमिष्यामि परलोकम्, अतोऽहं सौम्यायने समागते त्यक्ष्यामि निजप्राणैः सहैतच्छरीरम्" इति निश्चित्य, इच्छामरणत्वेन यममप्यवमान्य, भीष्माष्टम्यां स्वदेहं जहौ, एवमिच्छाऽधीनमरणत्वेन यमस्याज्ञाऽपि भीष्मसमीपे न धावति, ईदृशः स धनुः करे कुर्वन केन निवार्यते, प्रत्युत जगति विदित एव तादृशो जनो नहि, यस्तं निवारयतीति॥ १९॥

भावार्थः—जिस भीष्माचार्य के आगे अपनी शक्ति के अभाव से पैदा हुआ है दुःख जिसे, ऐसे यमराज भी हारे हुए की तरह मालूम पड़ते हैं। धनुष को

हाथ में चलाते हुए लड़ाई में ऐसे भीष्म से किसका मन भय के तरफ नहीं खिंच सकता, बल्कि सबों का मन भयभीत हो जायगा ॥ १९ ॥

सृजन्तमाजाविषुसंहतीर्वः सहेत कोपज्वलितं गुरुं कः।
परिस्फुरल्लोलशिखाऽग्रजिह्वं जगज्जिघत्सन्तमिवान्तवह्निम् ॥२०॥

सृजन्तमिति ॥ आजौ रण इषुसंहतिर्बाणसंघान्सृजन्तं वर्षन्तं कोपज्वलितमत एवं परिस्फुरन्त्यो लोलाश्च शिखाग्राण्येव जिह्वा यस्य तं तथोक्तं जगल्लोकं जिघत्सन्तमत्तुमिच्छन्तम्। अदेः सन्नन्ताच्छतृप्रत्ययः'। 'लुङ्सनोर्घस्लृ' इति घस्लादेशः। अन्तवह्निं कालाग्निमिव स्थितं गुरुं द्रोणं वो युष्माकं मध्ये कः सहेत सोढुं शक्नुयात्। न कोऽपीत्यर्थः। 'शकि लिङ् च' इति शक्यर्थे लिङ् ॥ २० ॥

अन्वयः—आजौ, इषुसहतीः, सृजन्तं, कोपज्वलितं, परिस्फुरल्लोलशिखाऽग्रजिह्वं जगत्, जिघत्सन्तम् , अन्तवह्निम्, इव गुरुम् , वः, कः, सहेत ॥ २० ॥

व्याख्या—आजौ = संग्रामे, इषुसंहतीः, = शरवर्षाः, सृजन्तं = कुर्वन्तं, कोपज्वलितं = क्रोधोद्दीपितम् , अत एव, परिस्फुरल्लोलशिखाऽग्रजिह्वम्=परिचलचपलज्वालाऽग्ररसनं, जगत् = भुवनं, जिघत्सन्तम्=अत्तुमिच्छन्तम् , अन्तवह्निम्= प्रलयाग्निम्, इव गुरुम् = शस्त्रशास्त्राचार्यं, द्रोणमिति शेषः। वः = युष्माकम्, पाण्डवानां मध्ये इत्याशयः, कः = जनः, सहेत = क्षमते, न कोऽपि ॥ २० ॥

समासः—इषूणां संहतय इषुसंहतयस्ता इषुसंहतीः। कोपेन ज्वलितः कोपज्वलितस्तं कोपज्वलितम्। परिस्फुरन्त्यः लोलाश्च शिखाः परिस्फुरल्लोलशिखाः तासामग्राण्येव जिह्वा यस्य सः परिस्फुरल्लोलशिखाऽग्रजिह्वस्तं परिस्फुरल्लोलशिखाऽग्रजिह्वम्। अन्तस्य प्रलयस्य वह्निरन्तवह्निस्तमन्तवह्निम् ॥ २० ॥

व्याकरणम्—सहेत = सह + लिङ् ॥ २० ॥

वाच्यान्तरम्—आजाविषुसंहतीः सृजन् कोपज्वलितः, परिस्फुरल्लोलशिखाग्रजिह्वो जगद् जिघत्सन्नन्तवह्निरिव गुरुर्वः केन सह्येत ॥ २० ॥

कोषः—'समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः' इत्यमरः। 'कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः' इत्यमरः। 'स्त्रियां तु संहतिर्वृन्दनिकुरम्बं कदम्बकम्' इत्यमरः। 'कोपक्रोधामर्षरोषप्रतिघारुट्क्रुधौ स्त्रियौ' इत्यमरः। 'रसज्ञा रसना जिह्वा' इत्यमरः। 'अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जय' इत्यमरः ॥ २० ॥

सारार्थः—सङ्ग्रामे शरवृष्टिं कुर्वतः, संसारं नाशयितुं प्रवृत्तस्य प्रलयाग्नेरिव द्रोणाचार्यस्य गुरोः पुरतो भवत्पक्षीयः कोऽपि न स्थास्यति ॥ २० ॥

भाषार्थः—युद्धमें शरवर्षा करते हुए, क्रोध ( गुस्सा ) से प्रज्वलित, लहलहाती हुई ज्वाला की छोर ही है जिह्वा जिसकी, ऐसे प्रलय काल की आग के

समान द्रोणाचार्य को आपके दल वालों में कौन रोकेगा? अर्थात् कोई भी नहीं॥ २०॥

**निरीक्ष्य संरम्भनिरस्तधैर्यं राधेयमाराधितजामदग्न्यम्।**
**असंस्तुतेषु प्रसभं भयेषु जायेत मृत्योरपि पक्षपातः॥ २१॥**

निरीक्ष्येति॥ संरम्भेण कोपेन निरस्तं त्याजितं धैर्यं निर्विकारचित्तत्वं येन तं तथोक्तम् आटोपेनैव परधैर्यापहारिणमित्यर्थः। आराधितजामदग्न्यं शुश्रूषित-भार्गवम्। जामदग्न्यादधिगतास्त्ररहस्यमित्यर्थः। राधेयं राधासुतं कर्णम् 'स्त्रीभ्यो ढक्'। निरीक्ष्य मृत्योरप्यसंस्तुतेष्वपरिचितेषु। 'संस्तवः स्यात्परिचयः' इत्यमरः भयेषु प्रसभं पक्षपातः परिचयो जायेत। मृत्युरप्यस्माद्बिभीयात्किमुतान्य इति भावः। सम्भावनायां लिङ्। अत्र जनिक्रियाऽपेक्षया समानकर्तृकत्वाभावेऽपि पक्ष-पातक्रियाऽपेक्षया तत्सम्भवान्निरीक्ष्येति ल्यप्निर्देश समर्थनीयः। 'प्रधानोपसर्जन-भावस्त्वप्रयोजकः' इति व्यक्तिविवेककारः। अत्र भयसम्बन्धरहितस्य मृत्योर्भय-सम्बन्धाभिधानादसम्बन्धे सम्बन्धरूपातिशयोक्तिरलङ्कारः॥ २१॥

अन्वयः—संरम्भनिरस्तधैर्यम्, आराधितजामदग्न्यं, राधेयं निरीक्ष्य, असंस्तुतेषु भयेषु प्रसभं, मृत्योः, अपि, पक्षपातः, जायेत॥ २१॥

व्याख्या—संरम्भनिरस्तधैर्यं=कोपत्यक्तसन्तोषम्, आराधितजामदग्न्यं= सेवितपरशुरामं, राधेयं=राधापुत्रं कर्णमित्यर्थः। निरीक्ष्य=विलोक्य, सङ्ग्रामे इति शेषः। असंस्तुते=अपरिचितेषु, अकस्माज्जनितेष्वित्यर्थः। भयेषु भीतिषु, प्रसभं=बलात्, सहसेत्यर्थः। मृत्योः यमराजस्य, अपि, पक्षपातः, परिचयः, जायेत=उत्पद्येत। यमस्यापि भयमुत्पद्यते तथाविधं कर्णं विलोक्य तर्हि का कथा-ऽन्येषामिति भावः॥ २१॥

समासः—संरम्भेण निरस्तं धैर्यं यस्यः सः, तं संरम्भनिरस्तधैर्यम्, आरा-धितः जामदग्न्यो येन सः, आराधितजामदग्न्यस्तमाराधितजामदग्न्यम्। राधाया अपत्यं पुमान् राधेयस्तं राधेयम्। न संस्तुता असंस्तुतास्तेष्वसंस्तुतेषु, पक्षे पातः पक्षपातः॥ २१॥

व्याकरणम्—निरीक्ष्य=निर+ईक्ष्+क्त्वा+ल्यप्। जायेत-जन्+लिङ्॥

वाच्या०—राधेयं निरीक्ष्यसंस्तुतेषु भयेषु प्रसभं मृत्योरपि पक्षपातेन जायेत॥

कोषः—'क्रोधः कोपस्तु संरम्भ' इति कोपः। 'संस्तवः स्यात् परिचय' इत्य-मरः। 'प्रसभं तु बलात्कारो हठ' इत्यमरः॥ २१॥

सारार्थः—युद्धे यः कर्णः प्रतिपक्षिणां धैर्यनाशं करोत्येव, येन परशुरामसेवया युद्धशिक्षा शिक्षिता, यं विलोक्य, जगद्भयङ्करस्यापि यमस्य भयमुत्पद्यते, तदग्रे न कोऽपि भवत्पक्षीयः स्थातुं योग्यः॥ २१॥

भाषाऽर्थः—क्रोध से धैर्यको दूर करने वाले परशुराम की सेवाकर धनुर्वेद पढ़ने वाले कर्ण को देखकर निडर ( निर्भय ) यम को भी भय हो जाता है ॥ २१॥

अथानन्तरं करणीयमागमनप्रयोजनं च युग्मेनाह—

**यया समासादितसाधनेन सुदुश्चरामाचरता तपस्याम् ।**
**एते दुरापं समवाप्य वीर्यमुन्मूलितारः कपिकेतनेन ॥ २२ ॥**

ययेति ॥ यया विद्यया करणेन सुदुश्चरामतिदुष्करां तपस्यां तपश्चर्याम्। 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यङ्। 'अप्रत्ययात्' इति स्त्रियामप्रत्ययः। आचरता। पशुपतिं प्रति तपः कुर्वतेत्यर्थः। अत एव समासादितं प्राप्तं साधनं पाशुपतास्त्ररूपं येन तेन। कपिर्हनुमान्केतनं चिह्नं यस्य तेन। अर्जुनेनेत्यर्थः। दुरापमन्यस्य दुर्लभं वीर्यं तेजः समवाप्य। एते पूर्वोक्ता भीष्मादय उन्मूलितार उन्मूलयिष्यन्ते। उन्मूलयतेर्ण्यन्तात्कर्मणि लुट्। अत्र चिण्वदिडागमेऽपि तस्य 'असिद्धवदत्राभात्' इत्यसिद्धत्वाद् 'णरनिटि' इति णिलोपः। तन्निमित्तस्यैव 'अनिटि' इति निषेधात्। उक्तं च—'चिण्वद् वृद्धिर्युक्च हन्तेश्च घत्वं, दीर्घश्चोक्तो यो मितां वा चिणीति। इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वलिनिमित्तो विघाती ॥' इति ॥ २२ ॥

अन्वयः—यया सुदुश्चरां, तपस्याम्, आचरता, समासादितसाधनेन, कपिकेतनेन, दुरापं, वीर्यं, समवाप्य, एते; उन्मूलितारः ॥ २२ ॥

व्याख्या—यया = मन्त्रविद्यया, ( करणेन )। सुदुश्चराम् = अतिदुःसाध्यां, तपस्यां = तपश्चर्यां, तपोऽनुष्ठानमित्यर्थः। आचरता = कुर्वता, अर्थादिन्द्रप्रभृतिदेवानुद्दिश्य तपो विदधतेत्यर्थः। तदनन्तरं, समासादितशाधनेन=संलब्धयुद्धोपकरणेन, प्राप्तपाशुपतास्त्रादिविविधायुधेनेत्यर्थः। कपिकेतनेन=अर्जुनेन, दुरापं= दुर्लभं, कष्टसाध्यमित्यर्थः ; वीर्यम् = पौरुषं, समवाप्य=लब्ध्वा, अलौकिकं शौर्यमासाद्येति भावः। एते = दुर्दान्ताः, भीष्मद्रोणकर्णादयो दुर्जयाः शत्रुपक्षीयाः, उन्मूलितारः = उन्मूलयिष्यन्ते, तां विद्यां दातुमागतोऽस्मीति, पुरःपद्येन सम्बन्धः मदुपदिष्टतपोऽनुष्ठानं विना न जेतुं शक्या एते, अतोऽर्जुनोऽवश्यं प्रेषणीयस्तपःसम्पादनयेति भावः ॥ २२ ॥

समासः—समासादितं साधनं येन सः, समासादितसाधनस्तेन समासादितसाधनेन। कपिर्हनुमान् केतनं चिह्नं पताकायां यस्य सः, कपिकेतनस्तेन। कपिकेतनेन ॥ २२ ॥

व्याकरणम्—उन्मूलितारः = उद् + मूल् + लुट्। समवाप्य=सम् + अव + आप् + ल्यप् ॥ २२ ॥

वाच्यान्तरम्—यथा समासादितसाधनः सुदुश्चरां तपस्यामाचरन् कपिकेतनो दुरापं वीर्यं समवाप्यैतानुन्मूलयिता ॥ २२ ॥

कोषः—'निर्वर्तनोपकरणानुव्रज्यासु च साधनम्' इत्यमरः। 'तपः कृच्छ्रादि-कर्मसु-' इत्यमरः। 'कपिः-प्लवङ्ग-प्लवग-शाखामृग-वलीमुखा' इत्यमरः। 'पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्' इत्यमरः ॥ २२ ॥

सारार्थः—यां मदुपदिष्टां मन्त्रविद्यां प्राप्य, तदनुसारेण तपस्यां विधाय, ततोऽलौकिकं पाशुपतप्रभृति दिव्यास्त्रं समासाद्य भीष्मद्रोणकर्णप्रभृतीन् वीरानर्जुनो विनाशयिष्यति ॥ २२ ॥

भाषार्थः—जिस मेरी विद्या के बल से परम कठिन तपस्या कर उससे युद्धोपकरण लाभ करके औरों से दुर्लभ पराक्रमवाले अर्जुन उन ( भीष्म आदि ) का नाश करेंगे ॥ २२ ॥

**महत्त्वयोगाय महामहिम्नामाराधनीं तां नृप ! देवतानाम् ।**
**दातुं प्रदानोचित ! भूरिधाम्नीमुपागतः सिद्धिमिवास्मि विद्याम् ॥२३॥**

महत्त्वेति ॥ हे नृप, महत्त्वयोगाय प्रकर्षलाभाय महामहिम्नां महानुभावानां देवतानामिन्द्रादीनाम्। आराध्यतेऽनयेत्याराधनी ताम्। प्रसादयित्रीमित्यर्थः। करणे ल्युट्। ङीप्। भूरिधाम्नीं महाप्रभावाम्। 'धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः' इति विश्वः। 'अन उपधालोपिनोऽन्यतरस्याम्' इति वा ङीप्। विद्यामिन्द्रमन्त्ररूपां सिद्धिं साक्षात्कार्यसिद्धिमेवेति विद्याया अमोघत्वोक्तिः। हे प्रदानोचित ! दानपात्रभूत ! फलभोक्तृत्वादस्य पात्रत्वोक्तिः, दातुमुपागतोऽस्मि ॥ २३ ॥

अन्वयः—हे प्रदानोचित ! नृप ! महत्त्वयोगाय, महामहिम्नां, देवतानाम्, आराधनीं, भूरिधाम्नीं, तां विद्यां, सिद्धिम्, इव दातुम्, उपागतः अस्मि ॥२३॥

व्याख्या—हे प्रदानोचित != हे वितरणयोग्य ! नृप != राजन् !, महत्त्वयोगाय—उत्कर्षलाभाय, महामहिम्नां = परमप्रभावाणां, देवतानां = देवानाम्, आराधनीं = सेवनीयाम्, भूरिधाम्नीम् = अतितेजोवतीं, तां = विद्यां, सिद्धिम् = इष्टपूर्तिम्, इव, दातुं = वितरितुम्, आगतः = इह समागतः, अस्मि = भवामि, अहमिति शेषः। सिद्धिपक्षे, भूरिधाम्नाम् = अतिप्रभावसाधनीम्, अनेन 'निरास्पदं प्रश्नकुतूहलित्वमि'-ति पद्यस्योत्तरं दत्तं व्यासेनेति ॥ २३ ॥

समासः—महत्त्वस्य योगो महत्त्वयोगस्तस्मै महत्त्वयोगाय। महान् महिमा यासान्ता महामहिमानस्तासां, महामहिम्नाम्। प्रकर्षेण दानस्योचितः प्रदानोचितस्तत्सम्बुद्धौ हे प्रदानोचित ! भूरि धाम यस्याः सा भूरिधाम्नी, तां भूरिधाम्नीम् ॥ २३ ॥

व्याकरणम्—दातुं = दा + तुमुन्। उपागतः = उ + आ = गम् + क्तः। अस्मि = अस् लट् ॥ २२ ॥

वा०—हे प्रदानोचित ! तां विद्यां दातुमुपागतेन मया भूयते ॥ २३ ॥

कोषः—'वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम्' इत्यमरः। 'धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः' इत्यमरः। 'पुरुहुः पुरु भूयिष्ठं स्फारं भूयिश्च भूरि च' इत्यमरः ॥ २३ ॥

सारार्थः—हे दानपात्र, भवतः शत्रुरधुनोत्कृष्टोऽस्ति, जयस्तूत्कर्षाधीनस्तेन तादृशादपि शत्रोर्यथा भवानुत्कृष्टः स्यात्तथा यस्या विद्यायाः प्रभावेण भवान् भविष्यति, तां सकलदेवपूज्यां परमपराक्रमसम्पादनीं विद्यां भवते दातुमहमिहागतोऽस्मीति ॥ २३ ॥

भावार्थः—हे देने के ( सिखाने के ) योग्य ! हे राजन् ! बड़े होने के लिए परम महिला वाले देवताओं से माननीय, अत्यन्त तेज और बल बढ़ाने वाली सिद्धि (मनोरथपूर्ति) के समान विद्या को देने के लिये मैं आया हूँ ॥ २३ ॥

**इत्युक्तवन्तं व्रज साधयेति प्रमाणयन्वाक्यमजातशत्रोः।**
**प्रसेदिवासं तमुपाससाद वसन्निवान्ते विनयेन जिष्णुः ॥२४॥**

इतीति ॥ इत्युक्तवन्तं प्रसेदिवांसं प्रसन्नम्। 'भाषायां सदवसश्रुवः' इति क्वसुः। तं मुनिं जिष्णुर्जयशीलोऽर्जुनः। 'ग्लाजिस्थश्च-' इति ग्स्नुप्रत्ययः। व्रज साधयानुतिष्ठेत्येवंरूपम्। अजातशत्रोर्धर्मराजस्य। स्वयमविद्वेषणशीलत्वादियं संज्ञा। वाक्यं प्रमाणयन्। तदादिष्टः सन्नित्यर्थः। अन्ते वसंश्छात्र इव। 'छात्रन्तेवासिनौ शिष्ये' इत्यमरः। विनयेनानौद्धत्येनोपाससाद समीपं प्राप ॥ २४ ॥

अन्वयः—जिष्णुः, इति, उक्तवन्तं, प्रसेदिवांसं, तं व्रज, साधय, इति, अजातशत्रोः, वाक्यम्, प्रमाणयन्, अन्ते, वसन्, इव विनयेन, उपाससाद ॥ २४ ॥

व्याख्या—जिष्णुः=अर्जुनः, इति=पूर्वोक्तपद्यद्वयार्थरूपं, वाक्यम्, उक्तवन्तं= कथितवन्तम्, प्रसेदिवांसं = सुप्रसन्नं, तं = व्यासं प्रति, व्रज = गच्छ, साधय= अनुतिष्ठ, तां विद्यामिति शेषः। इति, अजातशत्रोः = अखिलजनहितैषिणः, युधिष्ठिरस्येत्यर्थः। वाक्यं = वचनम्, प्रमाणयन् = स्वीकुर्वन्, अन्ते वसन्, इव=अन्तेवासी इव, छात्र इवेत्यर्थः। विनयेन = नम्रवेषेण, उपाससाद = समीपमगमत्। यथा छात्रोऽध्ययनायाध्यापकसमीपं गच्छति, तथा व्याससमीपं विद्यालाभायार्जुनो जगामेति भावः ॥ २४ ॥

समासः—न जात इत्यजातः, अजातः शत्रुर्यस्य तस्याजातशत्रोः ॥ २४ ॥

व्याकरणम्—व्रज = व्रज् + लोट्। साधय = साध् + णिच् + लोट्। प्रमाणयन् = प्र + मान् + णिच् + शतृ। उपाससाद=उप + आ + षद् + लिट् ॥ २४ ॥

वाच्यान्तरम्—इत्युक्तवान् प्रसेदिवान् सः ( व्यासः ) व्रज साधय, इति अजातशत्रोर्वाक्यं प्रमाणयताऽन्तेवसता जिष्णुना विनयेनोपासेदे ॥ २४ ।'

कोषः—'प्रसेदिवान् प्रसन्नः स्यादानन्देन समन्वित' इति कोषः। छात्रान्तेवसिनौ शिष्ये–' इत्यमरः। 'जिष्णुरिन्द्रेऽर्जुनेऽन्यस्मिन् जयशीले जनेऽपि च' इति कोषः ॥ २४ ॥

सारार्थः—पूर्वोक्तप्रकारेणोपदिशन्तं व्यासं प्रति युधिष्ठिरस्याज्ञया छात्र इवार्जुनो गतवान् ॥ २४ ॥

भाषाऽर्थः—इस तरह कहते हुए, हँसमुख व्यास के पास 'जाओ' उस विद्या को साधो, यह बड़े भाई युधिष्ठिर की बात मानकर अर्जुन विद्यार्थी के समान उपस्थित हुए ॥ २४ ॥

**निर्याय विद्याऽथ दिनादिरम्याद्बिम्बादिवार्कस्य मुखान्महर्षेः ।**
**पार्थाननं वह्निकणावदाता दीप्तिः स्फुरत्पद्ममिवाभिपेदे ॥२५॥**

निर्यायेति ॥ अथ वह्निकणावदाता स्फुलिङ्गवदुज्ज्वला। देवतासान्निध्यादिति भावः, विद्येन्द्रमन्त्ररूपा। दिनादिरम्यादर्कस्य प्रभातभास्करस्य। बिम्बादिव महर्षेर्व्यासस्य मुखान्निर्याय निर्गत्य। समासेऽनञ्पूर्वे क्त्वो ल्यप्। दीप्तिरर्कदीधितिः। स्फुरद्विकसत्पङ्कजमिव। पार्थाननमर्जुनस्य मुखमभिपेदे प्रविष्टा ॥ २५ ॥

अन्वयः—अथ 'वह्निकणावदाता, ( कर्त्री ) विद्या, दिनादिरम्यात्, अर्कस्य, बिम्बाद्, इव, महर्षेः मुखाद्, निर्याय, दीप्तिः, स्फुरत्पद्मम् इव, पार्थाननम्, अभिपेदे ॥ २५ ॥

व्याख्या—अथ = व्याससमीपेऽर्जुनगमनानन्तरं, वह्निकणावदाता = अग्निस्फुलिङ्गधवला, दैवतत्वादिति शेषः। विद्या=योगविद्या, इन्द्रप्रसन्नकरणमन्त्ररूपेत्यर्थः ( कर्त्री )। दिनादिरम्यात् = प्रभातसुन्दराद्, अर्कस्य = सूर्यस्य, बिम्बाद् = मण्डलाद्, इव, महर्षे = व्यासस्य, मुखाद् = वदनात्, निर्याय=निर्गत्य, पार्थाननम् = अर्जुनमुखम्, अभिपेदे=प्राप्ता। ( यथा ) दीप्तिः=सूर्यभाः, स्फुरत्पद्मं = विकसत्कमलकुसुमम्, इव ॥ २५ ॥

समासः—दिनस्यादिः दिनादिस्तस्मिन् दिनादौ रम्यो यस्तस्माद्दिनादिरम्यात्। महांश्चासौ ऋषिर्महर्षिस्तस्य महर्षेः। पृथायाः कुन्त्या अपत्यं पुमान् पार्थस्तस्य, पार्थस्याननमिति। पार्थाननम्। वह्नेः कणा वह्निकणा इवावदाता धवला या सा वह्निकणावदाता। स्फुरच्च तत्पद्मं स्फुरत्पद्मम् ॥ २५ ॥

व्या०—निर्याय = निर् + या + क्त्वा + ल्यप् अभिपेदे = अभि + पद् + लिट्।

वाच्यान्तरम्—वह्निकणावदाततया विद्यया दिनादिरम्यादर्कस्य बिम्बादिव महर्षेर्मुखान्निर्याय दीप्त्या स्फुरत्पद्ममिव पार्थाननमभिपेदे ॥ २५ ॥

कोषः—'प्रभातोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि' इत्यमरः। 'सुन्दरं रुचिरं रम्यं चारु सर्वाङ्गशोभनम्' इति कोषः। 'विकर्तनार्कमार्त्तण्ड-मिहिरारुणपूषणः' इत्यमरः। 'मुखमास्यं च वदनम्' इति कोषः। 'स्युः प्रभा रुग् रुचिस्त्विड्भाभाश्छवि-द्युति-दीप्तय' इत्यमरः। 'वापुंसि पद्मं नलिनमरविन्दं महोत्पलम्' इत्यमरः॥

सारार्थः—यथा प्रभाते सूर्यबिम्बान्निर्गताः किरणा ईषद्विकसितकमलमुखे पतन्ति, तथैव व्याससुखादिन्द्रप्रसन्नकरमन्त्ररूपा विद्याऽर्जुनमुखे प्रविष्टेति ॥२५॥

भाषाऽर्थः—जैसे प्रातः ( सुबह ) समय के सुन्दर सूर्य के मण्डल से कान्ति निकलकर खिले हुए कमल के मुख में बैठती है, बस, वैसे ही व्यास के मुख से वह आग की चिनगारी के समान उज्ज्वल विद्या निकलकर अर्जुन के मुख में घुस गई ॥ २५ ॥

**योगं च तं योग्यतमाय तस्मै तपः प्रभावाद्वितताार सद्यः।**
**येनास्य तत्त्वेषु कृतेऽवभासे समुन्मिमीलेव चिराय चक्षुः ॥२६॥**

योगं चेति ॥ योग्यतमायार्हत्तमाय तस्मै पार्थाय तं वक्ष्यमाणमहिमानं योगं ध्यानविधिं च 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः। तपःप्रभावाद वितताार। ददौ। चिरकालप्राप्यमपीति भावः। येन योगेन तत्त्वेषु प्रकृतिमहदादिषु। तथा च। 'मूलप्रकृतिर्महानहङ्कारो मनश्च पञ्च तन्मात्राणि पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च महाभूतानीति चतुर्विंशतितत्त्वानि'। तत्रावभासे साक्षात्कारे कृते सत्यस्यार्जुनस्य चक्षुरपि चिराय समुन्मिमीलेवोन्मिषितमिवेत्युत्प्रेक्षा। तदा तस्य कोऽपि महानखिलाज्ञानभञ्जनस्तत्त्वावभासश्चिरादन्धस्य दृष्टिलाभ इवाभवदिति भावः। २६ ॥

अन्वयः—योग्यतमाय, तस्मै, तं योगं, च, तपः प्रभावात्, सद्यः, वितताार। येन, तत्त्वेषु, अवभासे, कृते, अस्य, चक्षुः, चिराय, समुन्मिमील. इव ॥ २६ ॥

व्याख्या—योग्यतमाय = दानपात्रतमाय, तस्मै = अर्जुनाय, तं = वक्ष्यमाणं, योगं=चित्तनिरोधात्मकं, वा, इन्द्रप्रसन्नत्वसम्पादकसुपलक्षं, तपःप्रभावात्= सुकृतानुभावाद्, अभ्यस्तत्वेनेत्यर्थः। सद्यः=शीघ्रमेव, वितताार = ददौ, येन=योगेन, तत्त्वेषु = प्रकृत्यादिषु। अवभासे = प्रत्यक्षे, कृते = विहिते, अर्जुनस्य, चक्षुः = नेत्र, चिराय=चिरकालं, समुन्मिमील इव=उन्मिमील इव ॥ २६ ॥

समासः—अतिशयेन योग्यो योग्यतमस्तस्मै योग्यतमाय। तपसां प्रभावस्तपःप्रभावस्तस्मात् तपःप्रभावात् ॥ २६ ॥

व्या०—वितितार=वि + तॄ + लिट् । समुन्मिमील=सम् + उद् + मील् × लिट् ॥

वाच्यान्तरम्—तेन व्यासेन तस्मै योग्यतमाय स योगश्च तपःप्रभावात् सद्यो वितेरे । येन तत्त्वेष्ववभासे कृतेऽस्य समुन्मिमीले वेति ॥ २६ ॥

कोषः—'योग्यः सन्नहनोपायध्यानसङ्गतियुक्तिषु-'इत्यमरः । 'सद्यः सपदि तत्क्षणे' इत्यमरः । 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी' इत्यमरः ॥ २६ ॥

सारार्थः—ततो व्यासस्तत्क्षणोऽर्जुनाय योगं शिक्षयामास अथार्जुनोऽपि तेन योगबलेन ध्यानस्थोऽभवदिति ॥ २६ ॥

भाषार्थः—उसके बाद व्यासजी ने देने के लायक अर्जुन को अपने तपोबल से झट उस योग को दे दिया, जिससे तत्त्वों में प्रत्यक्ष विचार करने पर अर्जुन की आँख खुल गयी ॥ २६ ॥

आकारमाशंसितभूरिलाभं दधानमन्तःकरणानुरूपम् ।
नियोजयिष्यन्विजयोदये तं तपःसमाधौ मुनिरित्युवाच ॥२७॥

आकारमिति ॥ आशंसित आख्यातो भूरिलाभोऽनेकश्रेयःप्राप्तिर्येन तं तथोक्तम् । महाभागसूचकमित्यर्थः । अन्तःकरणशब्देन तद्वृत्तिरुत्साहो लक्ष्यते । तदनुरूपं । तदनुकूलम् । उत्साहानुगुणव्यापारक्षममित्यर्थः । आकारं मूर्तिं दधानं तमर्जुनं मुनिर्विजयोदये विजयफलके तपःसमाधौ तपोनियमे । 'समाधिर्नियमे ध्याने नीवाके च समर्थने' इति विश्वः । नियोजयिष्यन् । नियोजयितुमिच्छन्नित्यर्थः । 'लृट् शेषे च' इति लृट् । 'लृटः सद्वा' इति सत्प्रत्ययः । इति वक्ष्यमाणमुवाच ॥ २७ ॥

अन्वयः—मुनिः, आशंसितभूरिलाभम्, अन्तःकरणानुरूपम्, आकारं दधानं, तं, विजयोदये, तपःसमाधौ, नियोजयिष्यन्, इति, उवाच ॥ २७ ॥

व्याख्या—मुनिः = वेदव्यासः, आशंसितभूरिलाभम् = आख्यातप्रचुरप्राप्तिम्; अन्तःकरणानुरूपं = चित्तानुकूलम्, आकारम्, = मूर्तिं, दधानं = धारयन्तं, तम् = अर्जुनं, विजयोदये = अरिपराजयफले, तपःसमाधौ = तपोनियमे, नियोजयिष्यन् = लगयिष्यन्, सन्, इति=वक्ष्यमाणं, वचः, उवाच=कथयामास ॥२७॥

समासः—भूरि लाभः भूरिलाभः, आशंसितो भूरिलाभो येन स आशंसितभूरिलाभस्तमाशंसितभूरिलाभम् । अन्तःकरणस्यानुरूपोऽन्तःकरणानुरूपस्तमन्तःकरणानुरूपम् । विजय एवोदयो यस्मिन् स विजयोदयस्तस्मिन् विजयोदये । तपसःसमाधिस्तस्मिंतपःसमाधौ ॥ २७ ॥

व्याकरणम्—दधानं = धा + लट् + शानच् । नियोजयिष्यन् = नि + युज् + णिच् + लृट् + शतृ । उवाच=वच् + लिट् ॥ २७ ॥

वाच्यान्तरम्—आशंसितभूरिलाभमन्तःकरणानुरूपमाकारं दधानः सोऽर्जुनः विजयोदये तपःसमाधौ नियोजयिष्यता मुनिनेत्यूचे ॥ २७ ॥

कोषः—'समाधिर्नियमे ध्याने नीवाके च समर्थने'-इति विश्वः। आकारस्त्विङ्ग इङ्गितम्' इत्यमरः। 'पुरुहुः पुरु भूयिष्टं स्फारं भूयश्च भूरि च' इत्यमरः ॥ २७ ॥

सारार्थः—व्यासोपदिष्टयोगविद्यां समासाद्यार्जुनस्याकृतिस्तथा जाता यथा भाविकृत्यसम्पन्नता स्फुटमेव द्योत्यते, इति स्वोद्योगं सफलमवलोक्य पुनस्तपो-नियमे योजयितुं तं व्यासो वक्ष्यमाणवचनमुवाचेति ॥ २७ ॥

भाषार्थः—अधिक लाभ होने की झलक है जिसमें, और मन के अनुकूल चेष्टा को धारण किए हुए अर्जुन का विजय-फल वाले तपस्या के नियम में लगाने की इच्छा से व्यास जी फिर बोले ॥ २७ ॥

**अनेन योगेन विवृद्धतेजा निजां परस्मै पदवीमयच्छन् ।**
**समाचराचारमुपात्तशस्त्रो जपोपवासाभिषवैर्मुनीनाम् ॥ २८ ॥**

अनेनेति ॥ अनेन स्वोपदिष्टेनः योगेन विवृद्धतेजा निजां पदवीं परस्मै अयच्छन्। परस्य प्रवेशमयच्छन्नित्यर्थः। उपात्तशस्त्रो गृहीतायुधः सन्। जपोपवासाभिषवैः स्वाध्यायानशनस्नानैर्मुनीनामाचारं समाचरानुतिष्ठ ॥ २८ ॥

अन्वयः—अनेन, योगेन, विवृद्धतेजाः, निजां, पदवीं, परस्मै, अयच्छन्, उपात्तशस्त्रः, जपोपवासाभिषवैः, मुनीनाम्, आचारं, समाचार ॥ २८ ॥

व्याख्या—अनेन = मदुपदिष्टेन, योगेन = तपोनियमेन, विवृद्धतेजाः = प्राप्त-पराक्रमः, 'त्वमिति शेषः। निजां=स्वीयाम्, आधुनिकीं दीनामित्यर्थः। पदवीम् = पद्धतिम्, परस्मै = अन्यस्मै शत्रवे, इत्यर्थः। अयच्छन् = अददत्, अपरिचितस्य स्वाश्रये प्रवेशं न दद्यदित्यर्थः। उपात्तशस्त्रः=गृहीतायुधः सन्, जपोपवासाभिषवैः= जपव्रतस्नानैः, मुनीनां=योगिनाम्, आचारम्=आचरणं, समाचर=अनुतिष्ठ। न हि वने विविधशत्रुसङ्कुलेऽसावधानेन त्वया स्थातव्यमित्याशयः ॥ २८ ॥

समासः—विवृद्धं तेजो यस्य स विवृद्धतेजाः। उपात्तं शस्त्रं येन स उपात्तशस्त्रः। जपश्चोपवासश्चाभिषवश्च जपोपवासाभिषवास्तैर्जपोपवासाभिषवैः ॥ २८ ॥

व्याकरणम्—अयच्छन् = नञ् + दाण् + लट् + शतृ। समाचर = सम् + आ + चर—लोट् ॥ २८ ॥

वाच्यान्तरम्—अनेन योगेन विवृद्धतेजसा, निजां पदवीं परस्मै अयच्छतोपात्तशस्त्रेण जपोपवासाभिषवैर्मुनीनामाचारः समाचर्यताम् ॥ २८ ॥

कोषः—'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः। 'अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः' इत्यमरः। 'स्वाध्यायः स्याज्जपः सुत्याभिषवः सवनं च सा' इत्यमरः। 'नियमो व्रतमस्त्री तच्चोपवासादिपुण्यकम्' इत्यमरः॥ २८॥

सारार्थः—अस्मदुपदिष्टयोगाभ्यासेन स्वप्रभावं संवर्धयन्, स्वाश्रममार्गेऽपि न कमप्यपरिचितं प्रवेशयन् सदाऽऽयुधं गृहीत्वा जपव्रतयज्ञस्नानादिभिर्योगियोग्याचरणमाचरेति॥ २८॥

भावार्थः—इस (मेरे कहे हुए) योग से अपने प्रभाव को बढ़ाकर, अपने आश्रम का रास्ता भी दूसरे को न दिखाते हुए, हरवक्त हथियारबन्द रह कर जप-व्रत, यज्ञ-स्नानादि क्रियाओं से मुनियों का आचरण करो॥ २८॥

क्षेत्रविशेषे तपःसिद्धिरित्याशयेन तं निदर्शयन्नाह—

**करिष्यसे यत्र सुदुश्चराणि प्रसत्तये गोत्रभिदस्तपांसि।**
**शिलोच्चयं चारुशिलोच्चयं तमेष क्षणान्नेष्यति गुह्यकस्त्वाम्॥२९॥**

करिष्यस इति॥ यत्र शिलोच्चये गोत्रभिद इन्द्रस्य प्रसत्तये प्रसादाय सुदुश्चराणि तपांसि करिष्यसे। चारुशिलोच्चयं रम्यशिखरं तं शिलोच्चयं गिरिमिन्द्रकीलरूपम्। 'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः' इत्यमरः। त्वामेष गुह्यको यक्षः अनन्तरमेवास्य पुरः प्रादुर्भावादेष इति निर्देशः। क्षणान्नेष्यति प्रापयिष्यति॥ २९॥

अन्वयः—अत्र, गोत्रभिदः, प्रसत्तये, सुदुश्चराणि, तपांसि, करिष्यसे, तं, चारुशिलोच्चयं, शिलोच्चयम् एष, गुह्यकः, त्वां, क्षणात्, नेष्यति॥ २९॥

व्याख्या—यत्र=यस्मिन्, पर्वत इति शेषः। गोत्रभिदः=इन्द्रस्य, प्रसत्तये=हर्षाय, प्रसन्नतायै इत्यर्थः। सुदुश्चराणि=अतिकष्टसाध्यानि, तपांसि=योगाचारात्मकानि, करिष्यसे=आचारयिष्यसि, त्वमिति शेषः। तं=तथोक्तं, चारुशिलोच्चयं=रम्यप्रस्तरसकलसमूहं. शिलोच्चयम्=पर्वतम्, इन्द्रकीलसंज्ञकमित्यर्थः। एषः=अयं, वर्तमान इत्यर्थः। गुह्यकः=यक्षः, (कर्ता), त्वाम्=अर्जुनं, क्षणात्=सत्वरमेव, नेष्यति=प्रापयिष्यति॥ २१॥

समासः—गोत्रान् पर्वतान् भिनत्तीति गोत्रभित्, तस्य गोत्रभिदः। शिलानामुच्चयो यत्र स शिलोच्चयस्तं शिलोच्चयम्। चारवः शिलोच्चया यस्मिन् स चारुशिलोच्चयस्तं चारुशिलोच्चयम्॥ २९॥

व्याकरणम्—करिष्यसे=कृ+लृट्। नेष्यति=नी+लृट्॥ २९॥

वाच्यान्तरम्—यत्र गोत्रभिदः प्रसत्तये सुदुश्चराणि तपांसि, त्वया करिष्यसे। तं चारुशिलोच्चयं शिलोच्चयम्, एतेन त्वं क्षणान्नेष्यसे॥ २९॥

कोषः—'सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा' इत्यमरः। अद्रिगोत्रगिरि-ग्रावाचलशैल-शिलोच्चया' इत्यमरः। 'पिशाचो गुह्यकः सिद्धोः भूतोऽमी देव-योनय' इत्यमरः॥ २९॥

सारार्थः—यस्मिन् पर्वते तव तपःकरणं मया निश्चितं तत्रायं यक्षस्त्वां झटित्येवालौकिकगत्या प्रापयिष्यति। दुर्गपर्वतारोहणश्रमो न कोऽपि ते भविष्येति॥

भाषाऽर्थः—जहाँ ( पर्वत पर ) इन्द्र को खुश करने के लिए तुम कठिन तपस्या करोगे, उस सुन्दर शिखरवाले पर्वत पर तुझे यह यक्ष तुरत ले जायगा॥२९॥

**इति ब्रुवाणेन महेन्द्रसूनुं महर्षिणा तेन तिरोबभूवे।**
**त राजराजानुचरोऽस्य साक्षात्प्रदेशमादेशमिवाधितष्ठौ॥ ३०॥**

इतीति॥ इतीत्थं महेन्द्रसूनुमर्जुनं ब्रुवाणेनोक्तवता। 'वर्तमानसामीप्ये' इति भूते वर्तमानवत्प्रत्ययस्तिरोधानस्याविलम्बसूचनार्थः। तेन महर्षिणा व्यासेन तिरोबभूवेऽन्तर्दधे। भावे लिट्। राजराजो यक्षराजः। 'राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः' इति विश्वः। तस्यानुचरः पूर्वोक्तयक्षोऽस्य मुनेरादेशं साक्षादिव प्रदेशमर्जुनाधिष्ठितस्थानमधितष्ठौ। प्राप्त इत्यर्थः। 'स्थादिष्वभ्यासे चाभ्यासस्य' इति षत्वम्॥ ३०॥

अन्वयः—महेन्द्रसूनुम्, इति, ब्रुवाणेन, तेन, महर्षिणा, तिरोबभूवे। राजराजानुचरः, अस्य ( मुनेः, ), साक्षाद् आदेशम्, इव, तं, प्रदेशम्, अधितष्ठौ॥३०॥

व्याख्या—महेन्द्रसूनुम् = अर्जुनम्, इति = एवं, ब्रुवाणेन = कथितवता, तेन = प्रसिद्धेन, महर्षिणा = महायोगिना, व्यासनेति शेषः। तिरोबभूवे = अन्तर्दधे। व्यासः स्वस्थानं प्रस्थित इत्याशयः। अथ तदानीं राजराजानुचरः = कुबेरभृत्यः, यक्ष इत्यर्थः। अस्य = व्यासस्य, मुनेः, साक्षात् = देहवान्, आदेशमिव = अनुशासनमिव, तम् = अर्जुनाध्युषितम्, प्रदेशं = स्थलविशेषम्, अधितष्ठौ=प्राप्तः, न विलम्बो जात इति॥ ३०॥

सारार्थः—महांश्चासाविन्द्रो महेन्द्रस्तस्य महेन्द्रस्य सूनुर्महेन्द्रसूनुस्तं महेन्द्रसूनुम्। महांश्चासावृषिर्महर्षिस्तेन महर्षिणा राज्ञां राजा राजराजः, तस्य राजराजस्यानुचरः राजराजानुचरः॥ ३०॥

व्याकरणम्—ब्रुवाणेन = ब्रू + लट् + शानच्। तिरोबभूवे = तिरस + भू + भावे लिट्। अधितष्ठौ = अधि + ष्ठा + लिट्॥ ३०॥

वाच्यान्तरम्—महेन्द्रसुनुमिति ब्रुवाणः स महर्षिस्तिरोबभूव। अस्य साक्षादादेश इव स च प्रदेशः राजराजानुचरेण सोऽधितष्ठे॥ ३०॥

कोषः—'आत्मजस्तनयः सूनुः सुतः पुत्र' इत्यमरः। मनुष्यधर्मा धनदो राजराजो धनाधिप' इत्यमरः। 'अनुप्लवः सहायश्चानुचरोऽभिसरः समाः' इत्यमरः॥

सारार्थः—अर्जुनं प्रतियोगानुशासनं, तस्साहायकसाधनश्चादिश्यगते व्यासे, व्यासप्रयुक्तो यक्षस्तमर्जुनाधिष्ठितं प्रदेशं व्यासमुनेर्मूर्त्तिधर आदेश इव क्षदित्येव प्राप्तः॥

भाषार्थः—अर्जुन के प्रति ऐसे बोलते हुए व्यास, वहाँ से चल दिये। बाद में यक्ष खासकर जैसे स्वरूपधारी व्यास का आदेश ही हो, वैसे अर्जुन जहाँ पर स्थित थे; उस स्थान पर आ पहुँचा॥ ३०॥

**कृतानतिर्व्याहृतसान्त्ववादे जातस्पृहः पुण्यजनः स जिष्णौ।**
**इयाय सख्याविव सम्प्रसादं विश्वासयत्याशु सतां हि योगः॥ ३१॥**

कृतेति॥ स पुण्यजनो यक्षः कृतानतिः कृतप्रणामः सन् व्याहृतसान्त्ववादे उक्तप्रियवचने। 'व्याहार उक्तिर्लपितम्' इत्यमरः। जिष्णावर्जुने जातस्पृहो जातानुरागः सन्। सख्यौ सुहृदीव। 'अथ मित्रं सखा सुहृद्' इत्यमरः। सम्प्रसादं विश्रम्भमियाय प्राप। तथा हि। सतां साधूनां योगः सङ्गतिराशु विश्वासयति विश्वासं जनयति हि। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ ३१॥

अन्वयः—कृतानतिः, व्याहृतसान्त्ववादे, जिष्णौ, जातस्पृहः, सः, पुण्यजनः, सख्यौ, इव, सम्प्रसादम्, इयाय। हि, सतां, योगः, आशु, विश्वासयति॥ ३१॥

व्याख्या—कृतानतिः = कृतनमस्कारः, व्याहृतसान्त्ववादे = उक्तप्रियवचने, मृदुकथनशीले—इत्यर्थः। जिष्णौ = जयनशीले, अर्जुने, जातस्पृहः = उत्पन्नानुरागः, सः = अर्जुनमार्गदर्शकः, पुण्यजनः = यक्षः, सख्यौ = मित्रे, इव, सम्प्रसादं = विश्वासम्, इयाय = प्राप, हि = यतः, सतां=सज्जनानां, योगः = सङ्गतिः, आशु=शीघ्रं विश्वासयति = विश्वासं जनयति॥ ३१॥

समासः—कृता आनतिर्येन सः कृतानतिः। सान्त्वस्य वादः सान्त्ववादः व्याहृतः सान्त्ववादो येन स व्याहृतसान्त्ववादस्तस्मिन् व्याहृतसान्त्ववादे। जाता स्पृहा यस्य स जातस्पृहः॥ ३१॥

व्या०—इयाय = इण् + लिट्। विश्वासयति = वि + श्वस् + णिच् + लट्॥ ३१॥

वाच्यान्तरम्—कृतानतिना, व्याहृतसान्त्ववादे जिष्णौ जातस्पृहेण तेन पुण्यजनेन सख्याविव सम्प्रसादम् ईये। सतां योगेनाशु विश्वास्यते॥ ३१॥

कोषः—'साम सान्त्वमुभे समे' इत्यमरः। 'स्पृहाऽभिलाषा वाञ्छा च' इति कोषः। 'यक्षैकपिङ्गलविलश्रीदपुन्यजनेश्वरा' इत्यमरः। 'अथ मित्रं सखा सुहृद्' इत्यमरः॥ ३१॥

सारार्थः—महर्षिव्यासादेशात्समागतः स यक्षोऽर्जुनं प्रणम्य तदीयमधुरालापेनोत्पन्नानुरागः सन् प्रीतिविश्वासपात्रमेकान्तमित्रमिव तं मेने, यतः सज्जनानां सङ्गतिर्झटित्येव विश्वासमुत्पादयति ॥ ३२ ॥

भाषाऽर्थः--उस यक्ष ने अर्जुन को प्रणाम करके मीठे बोलने वाले अर्जुन से मित्र के समान प्रेम किया। क्योंकि सज्जनों की सङ्गति जल्द विश्वास दिलाती है ॥

**अथोष्णभासेव सुमेरुकुञ्जान्विहीयमानानुदयाय तेन।**
**बृहद्द्युतीन्दुःखकृतात्मलाभं तमः शनैः पाण्डुसुतान्प्रपेदे ॥ ३२ ॥**

अथेति ॥ अथोष्णभासा सूर्येणोदयाय पुनरुद्गमाय विहीयमानांस्त्यज्यमानानिति तमःप्राप्तिकारणोक्तिः। बृहद्द्युतीन्। सौवर्णत्वाद्दीप्यमानानित्यर्थः। इति तमसः सङ्कोचकारणोक्तिः। सुमेरुकुञ्जानिव। अत्र सुमेरुग्रहणं कुञ्जानां सौवर्णत्वद्योतनार्थम्। तेनार्जुनेनोदयाय श्रेयसे विहीयमानान्बृहद्द्युतीननेकबुद्धिप्रकाशान्। पूर्ववद्विशेषणद्वयस्य प्रयोजनमनुसन्धेयम्। पाण्डुसुतान्। चतुर इति शेषः। दुःखेन कृच्छ्रेण कृत उपपादित आत्मलाभं उत्पत्तिर्यस्य तत्तथोक्तम्। तेषां विवेकित्वात्कथञ्चिल्लब्धोदयमित्यर्थः। तमः शोकोऽन्धकारश्च। 'तमोऽन्धकारे स्वर्भानौ तमः शोके गुणान्तरे' इत्युभयत्रापि विश्वः। शनैर्मन्दम्प्रपेदे। तेषां विवेकित्वाद्भीतभीतमिवेति भावः। अत्र तमःशब्दस्य श्लिष्टत्वाच्छ्लेषानुप्राणितेयमुपमा ॥ ३२ ॥

अन्वयः--अथ उष्णभासा, उदयाय, विहीयमानान्, बृहद्द्युतीन्, सुमेरुकुञ्जान्, इव, तेन, ( विहीयमानान् बृहद्द्युतीन् ) पाण्डुसुतान्, दुःखकृतात्मलाभं, तमः, शनैः प्रपेदे ॥ ३२ ॥

व्याख्या--अथ = युधिष्ठिरसमीपादर्जुनस्य गमनानन्तरम्, उष्णभासा = सूर्येण, उदयाय = समुदयलाभाय, विहीयमानान् = त्यज्यमानान्, बृहद्द्युतीन् = काञ्चनवर्णान्, अतितेजोवतः सुमेरुकुञ्जान् काञ्चनगिरिलतागुल्मान्, इव, तेन = अर्जुनेन, उदयाय = अभ्युदयाय, शत्रुपराजयार्थमित्यर्थः। विहीयमानान् = त्यज्यमानान्, बृहद्द्युतीन् = अतिविक्रमवतः, पाण्डुसुतान् = युधिष्ठिरभीमनकुलसहदेवानित्यर्थः। दुःखकृतात्मलाभं = क्लेशवशजनितं, तमः = अन्धकारः शोकश्च, शनैः = मन्द मन्दं, क्रमशः, प्रपेदे = प्राप। इति ॥ ३२ ॥

समासः—उष्णा भासो यस्य स उष्णभास्तेनोष्णभासा। सुमेरोः कुञ्जाः सुमेरुकुञ्जास्तान् सुमेरुकुञ्जान्। बृहती द्युतिर्येषां ते बृहद्द्युतयः, तान् बृहद्द्युतीन्। आत्मनो लाभः आत्मलाभः। दुःखेन कृत आत्मलाभो येन तद् दुःखकृतात्मलाभम्। पाण्डोः सुताः पाण्डुसुतास्तान् ॥ ३२ ॥

व्याकरणम्—प्रपेदे = प्र + पद + लिट् ॥ ३२ ॥

वाच्यान्तरम्—अथोष्णभासोदयाय विहीयमानाः सुमेरुकुञ्जा इव बृहद्द्युतयः पाण्डुसुता दुःखकृतात्मलाभेन तमसा प्रपेदिरे ॥ ३२ ॥

कोषः—'भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः' इत्यमरः। 'मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालय' इत्यमरः। 'निकुञ्जकुञ्जौ वा क्लीबे लताऽऽदिपिहितोदरे' इत्यमरः। 'तमोऽन्धकारे स्वर्भानो तमः शोके गुणान्तरे'—इत्यमरः ॥ ३२ ॥

सारार्थः—पुराणे तु सूर्यः सुमेरुं परितो भ्रमतीति कथाऽस्ति, तत्र यथा सूर्येण विरहितान् मेरुशिखराग्रान् ध्वान्तमभिभवति, तथैवार्जुनविरहितानपि युधिष्ठिरादीन् शोक आक्रमत्। सूर्येणैव प्रकाशितानि प्रकाशन्ते मेरुशिखराणि, तद्वत् अर्जुनेन सहिताः सन्त एव मुदितास्त आसन् ॥ ३२ ॥

भाषार्थः—'जैसे सूर्य से बिछुड़े हुए सुमेरुपर्वत के शिखर ( चोटियों ) को अन्धकार छा लेता है, वैसे ही अर्जुन से बिछुड़े हुए, पर तेजस्वी पाण्डवों को, दुःख के अधीन किया है आत्मा को जिसने ऐसा शोक ने घेर लिया ॥ ३२ ॥

**असंशयालोचितकार्यनुन्नः प्रेम्णा समानीय विभज्यमानः।**
**तुल्याद्विभागादिव तन्मनोभिर्दुःखातिभारोऽपि लघुः स मेने ॥ ३३ ॥**

असंशयेति ॥ असंशयमसंदिग्धं यथा तथाऽऽलोचितं विवेचितं यत्कार्यं तेन नुन्नो निरस्त इति लघुत्वहेतूक्तिः। 'नुदविदान्दत्राघ्रीह्रीभ्योऽन्यतरस्याम्' इति निष्ठानत्वम्। कार्यगौरवमालोच्य निरस्त इत्यर्थः। तथाऽपि प्रेम्णा भ्रातृवात्सल्येन कर्त्रा समानीय पुनराकृष्य विभज्यमानः समशोकभागीक्रियमाणः। तुल्येन प्रेम्णा तुल्यदुःखत्वं भवतीति भावः। स पूर्वोक्तो दुःखमेवातिभारोऽपि। अतिभारभूतमपि दुःखमित्यर्थः। तन्मनोभिस्तेषां चतुर्णां पार्थानां मनोभिस्तुल्याद्विभागादिव। पूर्वोक्तात्प्रेमकृतात्समविभागादिवेत्यर्थः वस्तुतस्तु विवेकादेवेति भावः। पुनर्विभागग्रहणं तस्य हेतुत्वोत्प्रेक्षार्थमनुवादाददोषः। लघुर्मेने मतः। यथैकोऽनेकधा विभज्य बहुभिरुह्यमानो महानपि भारो लघुर्मन्यते तद्वदित्यर्थः ॥ ३३ ॥

अन्वयः—असंशयालोचितकार्यनुन्नः, प्रेम्णा, समानीय, विभज्यमानाः, सः, दुःखातिभारः, अपि, तन्मनोभिः, तुल्याद्, विभागाद् इव, लघुः मेने ॥ ३३ ॥

व्याख्या—असंशयालोचितकार्यनुन्नः = निश्चयविचारितकृत्यवच्छिन्नः। अर्थादनेनार्जुनकृततपसा निश्चयं जयलाभो भविष्यतीति निसन्देहालोचितकार्यरूपास्त्रेण खण्डितो दुःखपिण्ड इति भावः। प्रेम्णा = प्रियतया भ्रातृसौहार्देनेत्यर्थः। समानीय = गृहीत्वा, विभज्यमानः = विभागीकृतः, सः = अर्जुनविरहजातः, दुःखातिभारः = शोकातिभारः, अपि, तन्मनोभिः = युधिष्ठिरप्रभृतिचित्तैः, तुल्यात् = समानात्, विभागात् = खण्डाद्, इव, लघुः, स्वल्पः, मेने। यथा किमपि गुरु वस्तु

केनचिदस्त्रेण वाहकजनसङ्ख्यासमं खण्डं कृत्वा, प्रत्येकजनेभ्यो दत्तं सद्वहनयोग्यं जायते । तद्वद् अर्जुनविच्छेदजन्यदुःखराशि ध्रुवसम्भावितजयफलेन तपोऽस्त्रेण विभज्य, युधिष्ठिरप्रभृतिभ्रातृचतुष्टयस्य मनोभिर्गृहीतमत एवासह्यं नाभूदित्यर्थः ॥

समासः—न संशयो विद्यते यत्र तदसंशयम्, असंशयम् आलोचितं यत् कार्यं तदसंशयालोचितकार्यं, तेनासंशयालोचितकार्येण नुन्न इत्यसंशयालोचितकार्यनुन्नः । तेषां मनांसि तन्मनांसि तैस्तन्मनोभिः । दुःखस्यातिभारो दुःखातिभारः ॥

व्याकरणम्—विभज्यमानः = वि + भज् + यक् + लट् + शानच् । समानीय = सम् + आ + नी + ल्यप् । मेने = मन् + लिट् ॥ ३३ ॥

वाच्यान्तरम्—असंशयालोचितकार्यनुन्नः, प्रेम्णा समानीय विभज्यमानं, दुःखातिभारं तन्मनांसि, तुल्याद्विभागादिव लघुं मेनिरे ॥ ३३ ॥

कोषः—'ध्रुवो भभेदे, क्लीबं तु निश्चिते शाश्वते त्रिषु' इत्यमरः । 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदम्' इत्यमरः । 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः ॥ ३३ ॥

सारार्थः—व्यासोपदिष्टतपः सम्पादनार्थं प्रस्थितेऽर्जुने, तद्विरहजनितक्लेशं सर्वे भ्रातरः सहवासितया विभज्य गृहीतवान्, अतः स महान् दुर्वहोऽपि लघुः सह्ययोग्यो जातः ॥ ३३ ॥

भाषार्थः—निश्चय करके सोचा हुआ जो काम उससे टुकड़े किये हुये और प्रेमरूप तराजू से विभाग किये ( तोले ) गये, ऐसे अर्जुन के विरह से हुए दुःख के परम भार भी, जैसे बराबर ही बराबर हिस्सा हो ऐसे उन ( युधिष्ठिर, भीम, नकुल, सहदेव ) लोगों के मन से हलका ( सहने योग्य ) माना गया ॥ ३३ ॥

अथैवं प्रेम्णाऽऽकृष्यमाणमपि शोकं विवेको निजिगायेत्याह—

**धैर्येण विश्वास्यतया महर्षेस्तीव्रादरातिप्रभवाच्च मन्योः ।**
**वीर्यं च विद्वत्सु सुते मघोनः स तेषु न स्थानमवाप शोकः ॥३४॥**

धैर्येणेति ॥ धैर्येण तेषां निसर्गतो निर्विकारचित्तत्वेन तथा महर्षेर्व्यासस्य प्रवर्तकस्येति शेषः । विश्वास्यतया । श्रद्धेयवचनत्वेनेत्यर्थः । अरातिप्रभवादरातिहेतुकात्तीव्राद् दुःसहान्मन्योः क्रोधाद्धेतोस्तथाऽर्जुनप्रभावपरिज्ञानाच्चेति । हेत्वन्तरं विशेषणमुखेनाह—मघोनः सुतेऽर्जुने वीर्यं च । 'न लोक—' इत्यादिना षष्ठीप्रतिषेधः । विद्वत्सु । ज्ञातवत्स्विति यावत् । 'विदेः शतुर्वसुः,' इति वैकल्पिको वस्वादेशः । तेषु पार्थेषु स शोकः स्थानं स्थितिं नावाप न प्राप ॥ ३४ ॥

अन्वयः—धैर्येण, महर्षेः, विश्वास्यतया, अरातिप्रभवाद्, तीव्राद् मन्योः, (हेतोः) मघोनः, सुते, वीर्यं, विद्वत्सु, तेषु, सः, शोकः, स्थानं, न, अवाप ॥ ३४ ॥

व्याख्या—धैर्येण = चित्तस्थैर्येण, हेतुनेति शेषः। इदं महतां लक्षणं, तथोक्तं नीतौ—'विपदि धैर्यमथाभ्युदये क्षमा' इत्यादि। धैर्यवतां लक्षणन्तु कुमारसम्भवे—विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः।' इति। महर्षेः = व्यासस्य, विश्वास्यतया = श्रद्धेयवाक्यतया, न कदाऽपि व्यासोद्योगो विफलो भवतीति हेतोर्ममानेनोद्योगेन ध्रुवं जयलाभो भविष्यतीति हेतोः। अरातिप्रभवाद् = शत्रुजनिताव्, तीव्राद् = दारुणाद्, अतिदुःसहादित्यर्थः। मन्योः = क्रोधाद्, वा, दैन्यात्, कारणाद्, मघोनः = इन्द्रस्य, सुते = पुत्रे, अर्जुन इत्यर्थः। वीर्य = विक्रमं, विद्वत्सु = ज्ञातवत्सु, तेषु = युधिष्ठिरप्रभृतिभ्रातृषु, सः=अर्जुनविरहोत्पन्नः, शोकः= दुःखं, स्थानं = स्थित्यर्थं स्थलं, न, अवाप = न प्राप, भाविशुभफललाभमनोरथेन शोकमग्नास्ते न बभूवुरिति भावः॥ ३४॥

समासः—अरातिः प्रभव उत्पत्तिस्थानं यस्य सः अरातिप्रभवः तस्मादराति-प्रभवात्॥ ३४॥

व्याकरणम्—विद्वत्सु = विद् + लट् + शतृ, तस्य वस्वादेशः। अवाप = अव + आप् + लिट्॥ ३४॥

वाच्यान्तरम्—धैर्येण हेतुना महर्षेर्विश्वास्यतयाऽरातिप्रभवात्तीव्रान्मन्योश्च हेतो-स्तथा चार्जुनविक्रमज्ञानात्, तेन शोकेन तेषु स्थानं नावापे॥ ३४॥

कोपः—'चित्तस्थैर्यं धृतिर्धैर्यं तुष्टिस्तोष इति स्मृत' इति कोषः। 'तीव्रैकान्त-नितान्तानि गाढबाढदृढानि च' इत्यमरः। 'अभिघाति–परारातिप्रत्यर्थि–परि-पन्थिन' इत्यमरः। 'आत्मजस्तनयःसूनुः सुतः पुत्र' इत्यमरः। 'इन्द्रो मरुत्वान्म-घवा बिडौजाः पाकशासनः' इत्यमरः॥ ३४॥

सारार्थः—यतस्ते प्रकृत्या विपदि धैर्यवन्त आसन्, तथा च व्यासप्रयासः सफल एव भविष्यति, नियतमनेनास्माकं झटित्येवाभ्युदयो भविष्यति, एवं विश्वा-सतः, अथ च दुष्टशत्रुकृतापमानजनितदुःखाद्, अर्जुनस्य लोकातिशायिशौर्यप्रतीत्या च, अर्जुनविरहजन्यशोकः पाण्डवेषु न वासमकरोत्॥ ३४॥

भाषाऽर्थः—स्वभावतः उन लोगों को धीरता से और व्यास के विश्वास से और बड़े दारुण दुःसह, शत्रुओं से पैदा हुए क्रोध के कारण, पाण्डवों से अर्जुन के विरह का दुःख नहीं ठहर सका॥ ३४॥

**तान्भूरिधाम्नश्चतुरोऽपि दूरं विहाय यामानिव वासरस्य।**
**एकौघभूतं तदशर्म कृष्णां विभावरीं ध्वान्तमिव प्रपेदे॥ ३५॥**

तानिति॥ तान्पार्थास्त्यक्त्वव्। शर्म सुखम्। 'शर्मशातसुखानि च' इत्यमरः। तद्विरुद्धमशर्म दुःखम्। 'नञ्' इति नञ्समासः। भूरिधाम्नोऽतिजोतस्विन इति

हानिहेतुत्वोक्तिः। चतुरस्तान्पार्थानपि वासरस्य भूरिधाम्नश्चतुरो यामान्प्रहरानिव। दूरं विहाय त्यक्त्वैकौघभूतमेकराशिभूतंसत्। 'श्रेण्यादयः कृतादिभिः' इत्यर्थे कर्मधारयः। 'श्रेण्यादिराकृतिगणः' इति शाकटायनः। कृष्णां विभावरीं कृष्णपक्षरात्रिं ध्वान्तमिव। कृष्णां द्रौपदीं प्रपेदे प्राप ॥ ३५ ॥

अन्वयः—एकौघभूतं, तद्, अशर्म, भूरिधाम्नः चतुरः, अपि, तान्, वासरस्य यामान्, इव, दूरं, विहाय, ध्वान्तं, विभावरीम्, इव, कृष्णां, प्रपेदे ॥ ३५ ॥

व्याख्या—एकौघभूतम् = एकत्रीभूतं, तद् = अर्जुनविरहजातम्, अशर्म = अकल्याणं, दुःखमित्यर्थः ( कर्तृ )। भूरिधाम्नः = अतितेजसः, चतुरः = चतुःसङ्ख्याकान्, युधिष्ठिरभीमनकुलसहदेवान् इत्यर्थः। तान् = पाण्डवान्, भूरिधाम्नः = परमप्रकाशान्, वासरस्य = दिनस्य, यामान् = प्रहरान्, इव, दूरं विहाय = दूरं त्यक्त्वा, ध्वान्तम् = अन्धकारः, विभावरीं = रजनीं, रात्रिमित्यर्थः। इव, कृष्णां = द्रौपदीम्, प्रपेदे = प्राप। तत्र यथा दिनप्रथमयामः शान्तस्तथैव युधिष्ठिरः, यथा द्वितीयतृतीयौ दुःसहौ तथैव भीमनकुलौ मल्लौ, चतुर्थ इव शान्तः सहदेव आसीत्, सर्वेभ्यः शान्ता घोरदुःखान्धकारवती रात्रिरूपा द्रौपदी, वर्णेन कृष्णवर्णाऽऽसीत् ॥

समासः—भूरि धाम येषां ते भूरिधामानस्तान् भूरिधाम्नः। एक ओघ एकौघः, अनेकौघ एकौघीभूतं तदेकौघभूतम्। न शर्म अशर्म ॥ ३५ ॥

व्याकरणम्—विहाय = वि + हा + क्त्वा + ल्यप्। प्रपेदे = प्र + पा + लिट् ॥

वाच्यान्तरम्—वासरस्य यामानिव तांश्चतुरः पाण्डवान् दूरं विहाय, एकौघभूतेन तेनाशर्मण, ध्वान्तेन विभावरीव कृष्णा प्रपेदे ॥ ३५ ॥

कोषः—'धाम रश्मौ गृहे वित्ते' इति कोषः। 'द्वौ यामप्रहरौ समौ' इत्यमरः। 'घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ' इत्यमरः। 'शर्म–शात–सुखानि च' इत्यमरः। 'विभावरीतमस्विन्यौ रजनी यामिनी तमो' इत्यमरः। 'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तम' इत्यमरः ॥ ३५ ॥

सारार्थः—सर्वोऽर्जुनविरहशोको द्रौपद्या एवाभवत्। यथा दिने दिवसस्य चतुरः प्रहरांस्त्यक्त्वा, रात्रावेव तमस्तिष्ठति, तथैव, पाण्वाश्चतुरो विहाय द्रौपद्यामेवार्जुनविच्छेदखेदो गतवानित्यर्थः ॥ ३५ ॥

भाषाऽर्थः—बड़े प्रकाशवान दिन के चारों प्रहरों के समान, चारों पाण्डवों को छोड़ रात्रि के सदृश द्रौपदी को, अर्जुन के बिछुड़ते ही शोकरूपी अन्धकार ने घेर लिया ॥ ३५ ॥

तुषारलेखाऽऽकुलितोत्पलाभे पर्यश्रुणी मङ्गलभङ्गभीरुः।
अगूढभावाऽपि विलोकने सा न लोचने मीलयितुं विषेहे ॥३६॥

तुषारेति ॥ सा द्रौपदी विलोकनेऽर्जुनावलोकनेऽगूढभावाऽगूढाभिप्रायाऽपि । स्फुटाभिलाषिणीति यावत् । 'भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु' इति वैजयन्ती । मङ्गलभङ्गभीरुर्मङ्गलहानेर्भीता सती । पर्यश्रुणी परिगताश्रुके । बाष्पावृते-इत्यर्थः । अत एव तुषारलेखाऽऽकुलितोत्पलाभे हिमबिन्दुसहितेन्दीवरसन्निभे इत्युपमाऽलङ्कारः । लोचने मीलयितुं न विषेहे न शशाक । अश्रुणोर्दृष्ट्यावरकत्वेऽपि तन्निपातस्यामङ्गलत्वात्तन्निर्वर्त्तकं सा न चकारेत्यर्थः ॥ ३६ ॥

अन्वयः—अगूढभावा अपि, मङ्गलभङ्गभीरुः सा, ( द्रौपदी ) विलोकने, तुषारलेखाऽऽकुलितोत्पलाभे, पर्यश्रुणी, लोचने मीलयितुं न विषेहे ॥ ३६ ॥

व्याख्या—अगूढभावाऽपि = व्यक्ताशयाऽपि, मुखदर्शनेनैव हृद्गतातिविरहव्यथा लभ्यत इत्यर्थः । मङ्गलभङ्गभीरुः = सिद्धिविघ्नभीता, यात्रासमये चेत्सुप्रसन्नया रमण्या जनो विलोक्यते तदा यात्राफलं सफलमेव भवति । यदि च विलपन्त्या दृश्यते तदा ध्रुवं यात्रा विफलैवातोऽतिविरहव्यथया जर्जरिताऽपि शोकवेगं धैर्येणाच्छाद्य बहिर्व्याजप्रसादमेव दर्शितवतीति भावः । सा = द्रौपदी, विलोकने = अर्जुनावलोकने, तुषारलेखाऽऽकुलितोत्पलाभे = हिमकणपूर्णकमलोपमे, पर्यश्रुणी = वाष्पपूरिते, लोचने, मीलयितुं = सङ्कोचयितुं, न विषेहे = न शशाक, नेत्रपुटसम्पुटीकरणेनाश्रुपातस्य नियतत्वाद्विकसित एव नयने रक्षिते द्रौपद्यति भावः ॥ ३६ ॥

समासः—तुषारस्य लेखास्तुषारलेखास्ताभिराकुलिते च उत्पले, ते तुषारलेखाऽऽकुलितोत्पले तयोराभा इव आभा ययोस्ते तुषारलेखाऽऽकुलितोत्पलाभे । परिगते अश्रुणी ययोस्ते पर्यश्रुणी । मङ्गलस्य भङ्गो मङ्गलभङ्गस्तस्माद्भीरुर्मङ्गलभङ्गभीरुः । न गूढः इत्यगूढः अगूढे भावो यस्याः साऽगूढभावा ॥ ३६ ॥

व्याकरणम्—मीलयितुं = मील् + णिच् + तुमन् । विषेहे = वि + षह = लिट् ॥

वाच्यान्तरम्—मङ्गलभङ्गभीर्वा, अगूढभावयाऽपि तया लोचने मीलयितुं न विषेहे ॥ ३६ ॥

कोषः—'भावो लीला क्रिया-चेष्टा-भूत्यभिप्रायजन्तुषु-इति वैजयन्ती । 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्' इत्यमरः । 'वीथ्यालिरावलिः पङ्क्तिः-श्रेणीलेखास्तु राजय' इत्यमरः । 'स्यादुत्पलं कुवलयम्' इत्यमरः । 'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः । 'लोचनं नयनं नेत्रम्' इत्यमरः ॥ ३६ ॥

सारार्थः—यदाऽर्जुनो व्यासोपदिष्टतपः सम्पादनाय गन्तुं प्रवृत्तस्तदानीं तद्विरहव्यथया दीनाया द्रौपद्याः सवाष्पे नयने, गद्गदं च करणं जातम् । परन्तु यात्रासमयेऽश्रुनिपातो रोदनञ्च यात्राफलव्यर्थकरमिति धिया तया शीतबिन्दुभरितकमल इव निजनयने विकसित एव रक्षिते ॥ ३६ ॥

भाषाऽर्थः—स्पष्ट अभिप्राय दिखाने वाली भी द्रौपदी, अमङ्गल ( असगुन ) होने के डर से अर्जुन को देखने के समय, पाला के बिन्दुओं से भरे हुए कमल के समान, आँसू से डबडबायी आँखें न मिला सकीं ॥ ३६ ॥

अकृत्रिमप्रेमरसाभिरामं रामाऽर्पितं दृष्टिविलोभि दृष्टम् ।
मनःप्रसादाञ्जलिना निकामं जग्राह पाथेयमिवेन्द्रसूनुः ॥ ३७ ॥

अकृत्रिमेति ॥ इन्द्रसूनुरर्जुनः । क्रियया निर्वृत्तः कृत्रिमः । 'ड्वितः क्त्रिः' इति क्त्रिः । 'क्त्रेर्मम्नित्यम्' इति मम् प्रत्ययः । तद्विरुद्धम् । प्रेमैव रसः । अकृत्रिमेण प्रेमरसेनाभिरामम् । अन्यत्र प्रेमरसेन मधुरादिना चाभिरामम् । रामया रमण्याऽर्पितम् । दृष्टिं विलोभयतीति दृष्टिविलोभि दृष्टिप्रियमित्यर्थः । दृष्टं दर्शनं । 'नपुंसके भावे क्तः' । मनःप्रसादः । प्रसन्नं मन इत्यर्थः । सोऽञ्जलिरिवेत्युपमितसमासः । तेन मनःप्रसादाञ्जलिना । पथि साधु पाथेयं शम्बलमिव । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' निकाममतिशयेन जग्राह । रामाऽर्पितं पाथेयं पथि क्षेमाय भवतीत्यागमः ॥ ३७ ॥

अन्वयः—इन्द्रसूनुः मनःप्रसादाञ्जलिना, अकृत्रिमप्रेमरसाभिरामं, रामाऽर्पितं दृष्टिविलोभि, दृष्टं, पाथेयम्, इव, निकामं, जग्राह ॥ ३७ ॥

व्याख्या—इन्द्रसूनुः = अर्जुनः, मनःप्रसादाञ्जलिना = चिदानन्दाञ्जलिना, अकृत्रिमप्रेमरसाभिरामं = स्वाभाविकस्नेहरसरमणीयं, न कपटप्रेमसुन्दरमित्यर्थः । रामाऽर्पितं = रमणीदत्तं, द्रौपदीवितीर्णमित्यर्थः । दृष्टिविलोभि = नयनाधीनकरं, नेत्राह्लादकमित्यर्थः । दृष्टं = दर्शनं, द्रौपद्या इति शेषः । पाथेयम् = मार्गोपयोगिवस्तुजातं, निकामं = यथेष्टं, जग्राह = गृहीतवान् । यात्रासमये श्रीदत्तं पाथेयं, शुभोदर्काय भवति ॥ ३७ ॥

समासः—क्रियया निर्वृत्तः कृत्रिमः, न कृत्रिमः, अकृत्रिमः, अकृत्रिमो यः प्रेमा, स अकृत्रिमप्रेमा तस्य यो रसः स अकृत्रिमप्रेमरसस्तेनाभिरामं यत् तदकृत्रिमप्रेमरसाभिरामम् । रामयाऽर्पितं रामाऽर्पितम् । दृष्टिं विलोभयतीति दृष्टिविलोभि । मनसः प्रसादो मनःप्रसादः स एवाञ्जलिरिति मनःप्रसादाञ्जलिः तेन मनःप्रसादाञ्जलिना ॥

व्याकरणम्—जग्राह = ग्रह + लिट् ॥ ३७ ॥

वाच्यान्तरम्—इन्द्रसूनुनाऽकृत्रिमप्रेमरसाभिरामं रामाऽर्पितं दृष्टिविलोभि दृष्टं मनःप्रसादाञ्जलिना पाथेयमिव निकामं जगृहे ॥ ३७ ॥

कोषः—'प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदम्' इत्यमरः । 'दृग्दृष्टी चक्षुर्नेत्राम्बु' इत्यमरः । 'तौ युतावञ्जलिः पुमान्' इत्यमरः । 'पाथेयं शम्बलं मार्गे भोग्यपेयादिकञ्च यत्–' इति कोषः ॥ ३७ ॥

सारार्थः—यथा कश्चित्पथिकः प्रस्थानसमये स्वरमण्याः करात्पाथेयं गृहीत्वा व्रजति, तथैवार्जुनस्तपोऽर्थं वनं गन्तुमुद्यतो द्रौपद्या नयनग्राहि दर्शनं पाथेयवद् गृहीतवान् ॥ ३७ ॥

भाषाऽर्थः—अर्जुन ने अपने दिल को खुशी रूप अञ्जलि से बिना बनावट प्रेमरस से सुन्दर आँख को लुभाने वाले द्रौपदी के लिए हुए दर्शन को पाथेय के समान ग्रहण किया ॥ ३७ ॥

**धैर्यावसादेन हृतप्रसादा वन्यद्विपेनेव निदाघसिन्धुः ।**
**निरुद्धबाष्पोदयसन्नकण्ठमुवाच कृच्छ्रादिति राजपुत्री ॥ ३८ ॥**

धैर्येति ॥ वन्यद्विपेन । वन्यग्रहणमुच्छृङ्खलत्वद्योतनार्थम् । निदाघसिन्धुर्ग्रीष्मनदीव । निदाघग्रहणं दौर्बल्यद्योतनार्थम् । धैर्यावसादेन धैर्यभ्रंशेन कर्त्रा, हृतप्रसादा हृतनैर्मल्या । क्षोभं गमितेत्यर्थः । राजपुत्री क्षत्रियसुता द्रौपदी । अतः क्षात्त्रयुक्तमेव वक्ष्यतीति भावः । निरुद्धबाष्पोदयं संरुद्धरोदनं सन्नकण्ठं हीनस्वरम् । अथ तयोरुभयोः कृतबहुव्रीह्योः क्रियाविशेषणयोर्विशेषणसमासः । कृच्छ्रात्कथञ्चिदिति वक्ष्यमाणमुवाच ॥ ३८ ॥

अन्वयः—वन्यद्विपेन, निदाघसिन्धुः, इव, धैर्यावसादेन, हृतप्रसादा, राजपुत्री, निरुद्धबाष्पोदयसन्नकण्ठं ( यथा स्यात्तथा ), कृच्छ्राद्, इति उवाच ॥ ३८ ॥

व्याख्या—वन्यद्विपेन = आरण्यकगजेन, अशिक्षितेनापालकतयेत्यर्थः । निदाघसिन्धुः = ग्रीष्मनदी, इव, धैर्यावसादेन = धृतिध्वंसेन, हेतुना, हृतप्रसादा = दूरीकृतानन्दा, वा नदीपक्षे, अपगतनैर्मल्या, उन्मथितेति यावत् । राजपुत्री = द्रुपदनृपसुता, द्रौपदीति शेषः । निरुद्धबाष्पोदयसन्नकण्ठम् = अन्तर्गताश्रुपूरव्याप्तगलविवरं, यथा स्यात्तथा, कृच्छ्रात् = कष्टात्, कथं कथमपीत्यर्थः । इति = वक्ष्यमाणं वचः, उवाच = उक्तवतीति ॥ ३८ ॥

समासः—धैर्यस्यावसादो धैर्यावसादस्तेन धैर्यावसादेन । हृतः प्रसादो यस्याः सा हृतप्रसादा । वने भवो वन्यः वन्यश्चासौ द्विपो वन्यद्विपस्तेन वन्यद्विपेन । निदाघस्य सिन्धुर्निदाघसिन्धुः । निरुद्धाश्च ते बाष्पा निरुद्धबाष्पास्तेषामुदयो निरुद्धबाष्पोदयः, तेन सन्नः कण्ठो यस्मिंस्तद् निरुद्धबाष्पोदयसन्नकण्ठम् । राज्ञः पुत्री राजपुत्री ॥३८॥

व्याकरणम्—उवाच = वच + लिट् ॥ ३८ ॥

वाच्यान्तरम्—वन्यद्विपेन निदाघसिन्ध्वा, इव, धैर्यावसादेन हृतप्रसादया राजपुत्र्या निरुद्धबाष्पोदयसन्नकण्ठं यथा स्यात्तथा ऊचे ॥ ३८ ॥

कोषः—'प्रसादस्तु प्रसन्नता' इत्यमरः । 'दन्ती दन्तावलो हस्ती द्विरदोनेकपो द्विप' इत्यमरः । 'ग्रीष्म ऊष्मकः । निदाघ उष्णोपगम'—इत्यमरः । 'देशे, नद-

विशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः। 'कण्ठो गलोऽथ ग्रीवायाम्' इत्यमरः॥

सारार्थः—यथा ग्रीष्मे ( ज्येष्ठाषाढयोः ) प्रकृत्याऽपि स्वल्पप्रदेशा नदी वन्यहस्तिना मलिनीक्रियते, तथैवार्जुनविच्छेदखेदेन विमनायमाना, पूर्वतोऽपि कृशाङ्गी द्रौपदी बाष्पगद्गदकण्ठेन कथं कथमर्जुनं प्रत्युवाचेति ॥ ३८ ॥

भाषार्थः—बनैले हाथी से ग्रीष्म की नदी की भाँति, धैर्य के नाश से दूर हो गई है प्रसन्नता जिसकी ऐसी द्रौपदी रोके हुए रोदना के आँसुओं से बैठे गले से किसी तरह बोली ॥ ३८ ॥

**मग्नां द्विषच्छद्मनि पङ्कभूते सम्भावनां भूतिमिवोद्धरिष्यन् ।**
**आधिद्विषां मा तपसां प्रसिद्धेरस्मद्विना मा भृशमुन्मनीभूः ॥ ३९॥**

मग्नामिति ॥ पङ्कभूते पङ्कोपमिते। 'भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयो' इति विश्वः। द्विषच्छद्मनि शत्रुकपटे मग्नाम्। दुरुद्धरामित्यर्थः। सम्भावनां योग्यताम्। गौरवमिति यावत्। भूतिं सम्पदमिव। 'भूतिर्भस्मनि सम्पदि' इत्यमरः। उद्धरिष्यन्। उद्धारकत्वमिति शेषः। आधिद्विषां दुःखच्छिदां तपसां मा प्रसिद्धेः सम्यक्सिद्धिपर्यन्तमस्मद्विना। अस्माभिर्विनेत्यर्थः। 'पृथग्विना—' इत्यादिना विकल्पात्पञ्चमी। भृशं मोन्मनोभूः अस्मद्विरहाद् दुर्मना मा भूरित्यर्थः। दौर्मनस्यस्य तपःपरिपन्थित्वादिति भावः। 'माङि'—इत्याशीरर्थे लुङ्। 'न माङ्योगे' इत्यडागमप्रतिषेधः। अनुन्मना उन्मनाः सम्पद्यमान उन्मनी। अभूततद्भावे च्विः। 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च' इति सकारलोपः। 'अस्य च्वौ' इतिकारः ॥ ३९ ॥

अन्वयः—पङ्कभूते, द्विषच्छद्मनि, मग्नां, सम्भावनां, भूतिम्, इव, उद्धरिष्यन् ( त्वम् ) आधिद्विषां, तपसाम्, आप्रसिद्धेः, अस्मद्विना, भृशम्, मा, उन्मनीभूः ॥ ३९ ॥

व्याख्या—पङ्कभूते = कर्दमोपमे द्विषच्छद्मनि = शत्रुकृतकपटजाले, मग्नां = निमग्नां, सम्भावनां = योग्यतां, जनानुमानितां भाविनीमित्यर्थः। भूतिम् = ऐश्वर्यमिव, निधिमिवेत्यर्थः। उद्धरिष्यन् = उद्धारं कर्तुमभिलषन्, निधिपक्षे, उत्पाटयितुमिच्छन्। त्वमर्जुन इति शेषः। आधिद्विषां = मनोव्यथाहारकाणां, तपसां = तपोऽनुष्ठानानाम्, आप्रसिद्धेः = सर्वथा सिद्धिपर्यन्तम्, अस्मद्विना = अस्मान् ( द्रौपदीं ) विना, मा = नहि, भृशम् = अत्यर्थम्, उन्मनीभूः = विकलचेता उत्कण्ठितचित्तो नहि भव। तपसि ह्यत्यर्थोत्कण्ठितस्य सिद्धिबाधा भवतीत्यतस्तपःसम्पन्नतायै एवोत्कण्ठितेन भवता भाव्यमिति भावः ॥ ३९ ॥

समासः—द्विषतां छद्म द्विषच्छद्म, तस्मिन् द्विषच्छद्मनि। अधेर्द्विषो ये तेषामाधिद्विषाम् ॥ ३९ ॥

व्याकरणम्—उद्धरिष्यन् = उद + हृ + लृट् + शतृ। उन्मनीभूः = उन्मनी + भू + लुङ् ॥ ३९ ॥

वाच्यान्तरम्—पङ्कभूते द्विषच्छद्मनि मग्नां सम्भावनां भूतिमिवोद्धरिष्यता त्वया, आधिद्विषां तपसामाप्रसिद्धेरस्मद्विना भृशं मा, उन्मनीभावि ॥ ३९ ॥

कोषः—'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः। 'कपटोऽस्त्रीव्याजदम्भोपधयश्छद्मकैतवे'—इत्यमरः। 'निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ—इत्यमरः। 'भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्यापमानयोः' इत्यमरः। 'भूतिर्भस्मनि सम्पदि'—इत्यमरः। पुंस्याधिर्मानसी व्यथा' इत्यमरः। 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्' इत्यमरः ॥ ३९ ॥

सारार्थः—शत्रुकपटप्रपञ्चेन हृतराज्यः प्राप्तपरमक्लेशो भवाँस्तत्प्रशमाय तपः कर्त्तुं गच्छति, परतन्त्रे तपसि प्रवृत्तेन त्वया यावत्तपःसिद्धिर्न लभ्यते, तावदस्माकं स्मरणं न कदाऽपि विधेयमिति ॥ ३९ ॥

भाषाऽर्थः—शत्रु के कपट-कीचड़ में फँसी हुई अपनी योग्यता की गाड़ी हुई सम्पत्ति के समान उसे उद्धार करने की इच्छा रखते हुए मन की दर्द को हटाने वाली तपस्या की सिद्धि तक मेरे बिना अत्यन्त उत्कण्ठित ( व्यग्र ) नहीं होना ॥

अथानौत्सुक्यदार्ढ्यार्थं तस्य सर्वार्थसिद्धिनिदानत्वमाह—

**यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसङ्ख्यामतिवर्तितुं वा।**
**निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥४०॥**

यश इति ॥ यशोऽधिगन्तुम्। कीर्तिं लब्धुमित्यर्थः। सुखस्य लिप्सया लब्धुमिच्छया वा। मनुष्यसङ्ख्यां मनुष्यगणनामतिवर्तितुमतिक्रमितुं वा। अमानुषं कर्म कर्तुं वेत्यर्थः। अभियोगभाजामभिनिवेशवतां निरुत्सुकानामनुत्सुकानाम्। अदुर्मनायमानानामित्यर्थः। सिद्धिः पूर्वोक्तं यशः सुखाद्यर्थसिद्धिश्च। समुत्सुकेवानुरक्तकान्तेवाङ्कमुत्सुङ्गमन्तिकं चोपैति। तस्मादस्मद्विरहदुःखमातपःसिद्धेः सोढव्यमिति भावः ॥ ४० ॥

अन्वयः—यशः अधिगन्तुं, वा, सुखलिप्सया, वा, मनुष्यसङ्ख्याम्, अतिवर्तितुं, निरुत्सुकानाम्, अभियोगभाजां, सिद्धिः, समुत्सुका, इव अङ्कम् उपैति ॥ ४० ॥

व्याख्या—यशः = ख्यातिम्, अधिगन्तुम् = प्राप्तुम्, मम यशो भवत्वित्याशयेत्यर्थः। वा, सुखलिप्सया = कल्याणकाङ्क्षया, वा, मङ्गललाभाशया, वा मनुष्य-

सङ्ख्याम् = मानवगणनाम् , अतिक्रमितुं, सकलनरातिशायि-कर्म-करणाय, निरुत्सुकानाम् = औत्सुक्यहीनानाम् , अभियोगभाजाम् = अभिनिवेशवतां, कर्मण्यासक्तानामित्यर्थः। जनानामिति शेषः। सिद्धिः = क्रियासिद्धिः, समुत्सुका = समुत्कण्ठिता, स्त्री, इव, अङ्कं = क्रोडम्, उपैति = प्राप्नोति ॥ ४० ॥

समासः—सुखस्य लिप्सा लब्धुमिच्छा या सा सुखलिप्सा, तया सुखलिप्सया मनुष्याणां सङ्ख्या मनुष्यसङ्ख्या तां मनुष्यसङ्ख्याम्। निर्गता उत्सुकाः निरुत्सुकास्तेषां निरुत्सुकानाम् । अभियोगं भजन्ते ये तेऽभियोगभाजस्तेषामभियोगभाजाम् ॥ ४० ॥

व्याकरणम्—अधिगन्तुम् = अधि + गम् + तुमुन्। अतिवर्त्तितुम् = अति + वृ + तुमुन्। उपैति = उप + इण् + लट् ॥ ४० ॥

वाच्यान्तरम्—निरुत्सुकानामभियोगभाजां समुत्सुकया कान्तयेव सिद्ध्या, अङ्क उपेयते ॥ ४० ॥

कोषः—'यशः कीर्त्तिः समज्ञा च' इत्यमरः। 'स्यादानन्दथुरानन्दः शर्मशातसुखानि च' इत्यमरः। 'इच्छाऽऽकाङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः' इत्यमरः। 'अभियोगस्तु शपथे स्यादार्द्रे च पराभवे'-इति विश्वः ॥ ४० ॥

सारार्थः—कीर्तिर्मे भवतु सुखं मे भवतु। मनुष्याणां गणनाया अवसरेऽहं सर्वप्रथमो भवामि, एवं मनोरथशालिभिर्जनैरुत्कण्ठां सर्वथा परित्यज्येव कर्म कर्त्तव्यं तदा स्वयं परमानुरागेणोत्कण्ठिता कामिनीव तत्कार्यसिद्धिस्तत्सकाशमागच्छति ॥

भाषार्थः—यश मिलने की इच्छा से, या सुख की चाह से, या मनुष्य की गिनती को अतिक्रमण (सब से असाधारण होना) करने की इच्छा से जो उद्योगी लोग उत्कण्ठा को दूर छोड़ कर काम करते हैं, उत्कण्ठिता स्त्री की नाईं कार्यसिद्धि उनकी गोद में दौड़कर पहुँचती है ॥ ४० ॥

अथास्य मन्यूद्दीपनद्वारा तपःप्रवृत्तिं प्रथयितुमरिनिकारं तावच्चतुर्भिरुद्धाटयति—

**लोकं विधात्रा विहितस्य गोप्तुं क्षत्रस्य मुष्णन्वसु जैत्रमोजः।**
**तेजस्वितायाः विजयैकवृत्तेर्निघ्नन्प्रियं प्राणमिवाभिमानम् ॥ ४१ ॥**

लोकमिति ॥ विधात्रा ब्रह्मणा लोकं गोप्तुं विहितस्य सृष्टस्य क्षत्रस्य क्षत्रियजातेः सम्बन्धि। जयनशीलं जेतृ तदेव जैत्रम्। जेतृशब्दात्तृन्नन्तात् 'प्रज्ञादिभ्यश्च' इति स्वार्थेऽण्प्रत्ययः। ओजो बलं च दीप्तिर्वा। 'ओजो बले च दीप्तौ च—' इति विश्वः। तदेव वसु धनमिति रूपकालङ्कारः। मुष्णन्नपहरन्। अरिनिकृतस्य कुतः क्षात्रं तेज इति भावः। किञ्च विजयैकवृत्तेर्विजयैकजीवितायाः। 'क्षत्रियस्य विजितव्यम्' इति स्मरणादिति भावः। 'वृत्तिर्वर्तनजीवने' इत्यमरः। तेजस्वितायास्तेजस्विनामित्यर्थः। तेजःप्राधान्यद्योतनार्थं भावप्रधानो निर्देशः। प्रियं प्राणमिव। प्राण-

सममित्यर्थः । अभिमानमहङ्कारं निघ्नन् खण्डयन् । तेजस्विनां प्राणहानिप्राया मानहानिरिति भावः ॥ ४१ ॥

अन्वयः—विधात्रा, लोकं गोप्तुं, विहितस्य, क्षत्रस्य, जैत्रम्, ओजः, वसु, मुष्णन्, विजयैकवृत्तेः, तेजस्वितायाः, प्रियं, प्राणम्, इव, अभिमानं, निघ्नन् ( निकारः, त्वद्विना मे उपशुष्यद् हृदयं नवीकरिष्यति ) ॥ ४१ ॥

व्याख्या—विधात्रा = ब्रह्मणा, लोकम् = भुवनं, गोप्तुं = रक्षितुं, जगद्रक्षाकरणायेत्यर्थः । विहितस्य=उत्पादितस्य, क्षत्रस्य=क्षत्रियवर्णस्य, जैत्रं=जयनशीलम्, ओजः = तेजः, प्रभाव इत्यर्थः । तदेव, वसु = धनम्, मुष्णन् = चोरयन्, विजयैकवृत्तेः = विजयप्रधानव्यापारायाः, तेजस्वितायाः, ओजस्वितायाः, मनस्वितायाः इत्यर्थः । प्रियम् = प्रेमपूर्णम्, प्राणमिव = असुमिव, अभिमानं = जातिकुलगौरवं, निघ्नन् = नाशयन्, निकारः, त्वद्विना मे उपशुष्यद् हृदयं नवीकरिष्यतीति ४४ तमश्लोकात्संयोज्यम् । अर्थात्तेजस्विनां मानहानिः प्राणहरणसमैवेति भावः ॥ ४१ ॥

समासः—तेजोऽस्यास्तीति तेजस्वी, तस्य भावस्तत्ता तेजस्विता, तस्याः तेजस्वितायाः । विजय एवैका वृत्तिर्यस्याः सा विजयैकवृत्तिस्तस्याः ॥ ४१ ॥

व्याकरणम्—गोप्तुं = गुप् + तुमुन् । जैत्रं-जि + त्रन् । मुष्णन् = मुष् = लट् + शतृ । निघ्नन् = नि + हन् + लट् + शतृ । विहितस्य = वि + धा = क्तः ॥ ४१ ॥

वाच्यान्तरम्—विधात्रा लोकं गोप्तुं विहितस्य क्षत्रस्य जैत्रमोजो वसु मुष्णता विजयैकवृत्तेस्तेजस्वितायाः प्रियं प्राणमिवाभिमानं निघ्नता ( निकारेण मे हृदयं नवीकरिष्यते ) ॥ ४१ ॥

कोषः—'लोकस्तु भुवने जने'–इत्यमरः । 'विधाता विश्वसृड्विधिः' इत्यमरः । 'ओजो बले च दीप्तौ चेति' विश्वः । 'वृत्तिर्वर्त्तनजीवने'–इत्यमरः । 'द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु'–इत्यमरः । 'पुंसिभूम्न्यसवः प्राणाः' इत्यमरः ॥ ४१ ॥

सारार्थः—सकललोकरक्षणायैव ब्रह्मणा क्षत्रियजातिः सृष्टा । तस्या बलं चोरयन्, तथा च, मनस्वितायाः प्राणमिव गौरवं ध्वंसयन् मे शत्रुविहितापमानः पूर्व-दुःखं शुष्कमतिसरसं करोति ॥ ४१ ॥

भाषार्थः—ब्रह्मा से लोगों की रक्षा के लिये पैदा की गई क्षत्रिय जाति के तेजोबल रूपी धन को चुराता हुआ और विजय ही मुख्य है लक्ष्य जिसका, ऐसी मनस्विता के प्रिय प्राण समान गौरव का नाश करता हुआ मेरा दुःख तुम्हारे बिना फिर नया होगा ॥ ४१ ॥

अधिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपि न त्याज्यमित्याह—

**व्रीडानतैराप्तजनोपनीतः संशय्य कृच्छ्रेण नृपैः प्रपन्नः ।**
**वितानभूतं विततं पृथिव्यां यशः समूहन्निव दिग्विकीर्णम् ॥ ४२ ॥**

व्रीडेति ॥ पुनश्च । आप्तजनेनोपनीतः साधितः । प्रापित इत्यर्थः । तथापि संशय्य सन्दिह्य । असम्भावितबुद्धयेति भावः । व्रीडानतैः । जुगुप्सितवृत्तान्तश्रवणादिति भावः । नृपैर्देशान्तरस्थैः कृच्छ्रेण प्रपन्नः । आप्तोक्तत्वात्कथञ्चिद्विश्वस्त इत्यर्थः । यः शृण्वतामपि दुःसहः किमुतानुभवतामिति भावः । इत्येषा पूर्वेषां व्याख्या । अन्यथा च व्याख्यायते—व्याप्तजनोपनीतो ज्ञातिकृतः संशय्य कथमिदमन्याय्यमुपेक्ष्यमिति विचार्य व्रीडानतैः । जुगुप्सितकर्मदर्शनादिति भावः । नृपैस्तत्रत्यैः कृच्छ्रेण प्रपन्नोऽङ्गीकृतः । गोत्रकलहेषु मध्यस्थैरुदासितव्यमिति बुद्धयोपेक्षित इत्यर्थः । पक्षद्वयेऽपि प्रपन्न इत्यत्राप्तजनोपनीतत्वस्य पदार्थभूतस्य विशेषणगत्या हेतुत्वोक्त्या काव्यलिङ्गमलङ्कारः । पृथिव्यां वितानभूतमुल्लोचोपमितम् । यद्वा—वितानभूतं वितानसमम् । उल्लोचतुल्यमिति यावत् । 'युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु' इत्यमरः । 'अस्त्री वितानमुल्लोचः' इत्यमरः । दिग्विकीर्णं दिगन्तलग्नमिति भावः । वितानमपि दिगन्तलग्नमिति भावः । विततं प्रथितं यशः समूहन्निव सङ्कोचयन्निवेत्युत्प्रेक्षा । अरातिपरिभूतस्य कुतः कीर्तिरिति भावः ॥४२॥

अन्वयः—आप्तजनोपनीतः, व्रीडानतैः, नृपैः, संशय्य, कृच्छ्रेण प्रपन्नः ( निकारः ) पृथिव्यां, वितानभूतं, विततं दिग्विकीर्णं, यशः समूहन्, इव, ( सनिकारः ) ॥

व्याख्या—आप्तजनोपनीतः=प्रत्ययितजनप्रापितः, विश्वासिजनप्रचारित एत्यर्थः। संशय्य=सन्दिह्य, अहो । पाण्डवानामपमानं दुर्योधन एवमकरोद्, न हि पाण्डवा अपमानयोग्याः, तत्कथमित्थमभूदिति सन्देहधिया पश्चात् विश्वस्ततया परिज्ञाय, व्रीडानतैः=लज्जाऽवनम्रमुखैः, नृपैः=भूपैः, कृच्छ्रेण=कथं कथमपि, प्रपन्नः=प्राप्तः, ज्ञात इत्यर्थः । पृथिव्यां=भूमौ, वितानभूतम्=उल्लोचोपमं, विततं=विस्तृतम्, प्रसृतमित्यर्थः । दिग्विकीर्णं=दिगन्तव्याप्तं, यशः=कीर्तिं, समूहन्=सङ्कोचयन्, इव, ( निकारो मे मनस्त्वह्निना खेदयति ) ॥ ४२ ॥

समासः—व्रीडया नता ये ते व्रीडानतास्तैर्व्रीडानतैः । आप्ता ये जनास्त आप्तजनाः, तैरुपनीत इत्याप्तजनोपनीतः । दिक्षु विकीर्णं दिग्विकीर्णम् ॥ ४२ ॥

व्याकरणम्—संशय्य = सम् + शीङ् + ल्यप् । समूहन् = सम् + ऊह + लट् + शतृ ॥ ४२ ॥

वाच्यान्तरम्—व्रीडानतैराप्तजनोपनीतेन, संशय्य कृच्छ्रेण नृपैः प्रपन्नेन पृथिव्यां वितानभूतं विततं दिग्विकीर्णं यशः समूहता निकारेणेति ॥ ४२ ॥

कोषः—'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा' इत्यमरः' । 'आप्तप्रत्ययितौ समौ' इत्यमरः । 'अस्त्री वितानमुल्लोचः' इत्यमरः । 'भूतं सत्योपमानयोः' इति विश्वः । 'विततं विस्तृतं व्याप्तम्' इति कोषः । यशः कीर्त्ति समज्ञा च' इत्यमरः ॥ ४२ ॥

सारार्थः—द्यूतक्रीडया सभायां मां जित्वा वस्त्रापकर्षणापमानो मम दुर्योधनेन यः कृतः स इतरस्ततो लोकमुखेन प्रचरितोऽपि मध्यस्थैः पूर्वमकर्सव्याहतयाऽविश्वसितः, पश्चाद्विश्वस्तजनद्वारा परिज्ञातो लज्जानतैर्भूपैः, तत एव दिगन्तव्याप्तकीर्त्तिवितानं सोऽपमानस्त्वां विना पुनर्नूतन इवाविर्भवति ॥ ४२ ॥

भावार्थः—विश्वासी लोगों के द्वारा ज्ञात, इसीलिये लज्जा ( शर्म ) से नीचे मुँह किये राजाओं से, किसी तरह विश्वास किया गया और दुनियाँ में चाँदनी के समान फैली हुई दिगन्तव्यापी कीर्त्ति को समझे हुये के समान मेरा अपमान आप के बिना फिर नया हो जायगा ॥ ४२ ॥

**वीर्यावदानेषु कृतावमर्षस्तन्वन्नभूतामिव सम्प्रतीतिम् ।**
**कुर्वन्प्रयामक्षयमायतीनामर्कत्विषामह्न इवावशेषः ॥ ४३ ॥**

वीर्येति ॥ पुनश्च । वीर्याण्येवादानानि तेषु कृतावमर्षः कृतास्कन्दनः । पुरा कृतपराक्रमजातान्यपि प्रमृजन्नित्यर्थः । 'अवदानं कर्म वृत्तम्' इत्यमरः । अत एव सम्प्रतीतिं ख्यातिम् । 'प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः' इत्यमरः । अभूतामविद्यमानामिवेत्युत्प्रेक्षा । सतोऽप्यसत्त्वमुत्प्रेक्ष्यते । तन्वन् कुर्वन् । पुनश्चाह्नोऽवशेषे दिनान्तोऽर्कत्विषामिवायतीनामुत्तरकालानां प्रयामक्षयं दैर्घ्यनाशं कुर्वन्निति श्रौती पूर्णयमुपमा । अरिनिराकृतस्य कुतश्चिरावस्थानमिति भावः ॥ ४३ ॥

अन्वयः—वीर्यावदानेषु, कृतावमर्षः, अभूताम् , इव, सम्प्रतीति, तन्वन् , आयतीनाम् , अर्कत्विषां, प्रयामक्षयं, कुर्वन् , अह्नः, अवशेषः, इव ॥ ४३ ॥

व्याख्या—वीर्यावदानेषु = शौर्यवृत्तिकर्मसु, पराक्रमसाध्येष्वित्यर्थः । कृतावमर्षः = विहिताक्षेपः, कृताक्रमण इत्यर्थः । अर्थाज्ञानादिभ्योऽप्येकत्रीकृतानामस्माकं राजसूयावसरिकधनानामात्मायत्तीकारक इत्यर्थः । अभूताम् = अजाताम् , इव यथा पाण्डवानां वीरत्वप्रकटनं कर्म मिथ्यैवेतिरूपामित्यर्थः । सम्प्रतीतिं = ख्यातिं, तन्वन् = विस्तारयन् , स्वमहात्म्येनेति शेषः । आयतीनाम् = उत्तरकालानाम् , भाविशुभसम्भावनामित्यर्थः । वा पक्षे, दिगन्तविस्तृतानाम्, अर्कत्विषां = सूर्यकान्तीनां, प्रयामक्षयम् = परिनाशं, सर्वथा संहारमित्यर्थः । कुर्वन् = विदधद्, निकार इति, अह्नः = दिनस्य, अवशेषः = दिनान्तभागः, इव ॥ ४३ ॥

समासः—वीर्याण्येवावदानानि वीर्यावदानानि तेषु वीर्यावदानेषु । कृतोऽवमर्षो येन सः कृतावमर्षः । अर्कस्य त्विषोऽर्कत्विषस्तासामर्कत्विषाम् ॥ ४३ ॥

व्याकरणम्—तन्वन् = तनु + लट् + शतृ । कुर्वन् = कृ + लट् = शतृ ॥ ४३ ॥

वाच्यान्तरम्—वीर्यावदानेषु कृतावमर्षेण, अभूतामिव सम्प्रतीतिं तन्वता, आयतीनामर्कत्विषां प्रयामक्षयं कुर्वता अर्कत्विषामह्नोऽवशेषेणेव ॥ ४३ ॥

हृदयम् = मनः, नवीकरिष्यति=पुनर्नवीनीकरिष्यति । यत्पुराऽतीतं क्लेशोपशुष्कं मनः, त्वद्विरहवेदनया पुनः, सव्रणमिव भविष्यतीति भावः ॥ ४४ ॥

समासः—त्वां विना, त्वद्विना ॥ ४४ ॥

व्याकरणम्—प्रयुक्त=प्र+युज्+क्त । स्मर्तुं=स्मृ+तुमुन् । अधिकर्तुम्=अधि+कृ+ तुमुन् । नवीकरिष्यति+नवी+कृ+लृट् । उपशुष्यत्=उप+शुष्+लट्+शतृ ॥ ४४ ॥

वाच्यान्तरम्—अस्मासु परैः प्रसह्य प्रयुक्तेन येन तेन निकारेण स्मर्तुं शक्येन न भूयते । अधिकर्तुं शक्येन किमुत । तद्विना, आर्द्रेण तेन निकारेण मे उपशुष्यद् हृदयं नवीकरिष्यते ॥ ४४ ॥

कोषः—'प्रसह्य तु हठार्थकम्' इत्यमरः । 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः । निकारो विप्रकारः स्यादकारः क्षतिः स्त्रियाम्' इति कोषः । पृथग्विनाऽन्तरेणर्ते,—इत्यमरः ॥ ४४ ॥

सारार्थः—शत्रुकृतापकारप्रहारघातजनितो व्रणश्चिरजातत्वाच्छुष्क इव जातः, किन्तु त्वां विना पुनः पट्टिकाविच्छेदतया पुनर्लग्नाघातेन यथा स नवो भूत्वा ततः पूयं निःसारयति, तथैव निरश्रु मे नयनं त्वद्विरहेण सजलं जायत ॥ ४४ ॥

भाषार्थः—जो कि हम लोगों का जबरदस्ती अपकार किया गया, वह याद भी करने योग्य नहीं है, अनुभव करने की बात ही क्या ? पर अब वह आप के न रहने पर, फिर नया ( गीला ) होकर, सूखे हुए भी मेरे दिल को दुःख से पिघलावेगा । अर्थात् उस अपमान से जो मेरे दिल में घाव हुआ था, सो धीरे-धीरे संसार को देखते-सुनते सूख गया था, पर अब आपकोविरह-वेदना की चोट से फिर ताजा बन कर आँसू निकालेगा ॥ ४४ ॥

पुनः प्रकारान्तरेण मन्युमुद्दीपयति 'प्राप्त' इत्यादिभिस्त्रिभिः तत्र वक्ष्यमाणप्रत्यभिज्ञानहेतुभिर्धनञ्जयं विशिनष्टि—

**प्राप्तेऽभिमानव्यसनादसह्यं दन्तीव दन्तव्यसनाद्विकारम् ।**
**द्विषत्प्रतापान्तरितोरुतेजाः शरद्घनाकीर्ण इवादिरह्नः ॥ ४५ ॥**

प्राप्त इति ॥ अभिमानस्य व्यसनाद् भ्रंशाद् । 'व्यसनं विपदि भ्रंशे दोषे कामजकोपजे' इत्यमरः । दन्तव्यसनाद्दन्तभङ्गाद्दन्तीवासह्यं विकारं वैरूप्यं प्राप्तः । अतो न प्रत्यभिज्ञायत इति भावः । एवमुत्तरत्राप्यनुसन्धेयम् । पुनश्च । द्विषत्प्रतापेन शत्रुतेजसाऽन्तरितं तिरस्कृतमुरुतेजः प्रतापो यस्य स यथोक्तः । अत एव शरद्घनाकीर्णः शरन्मेघच्छन्नोऽह्न आदिः प्रत्यूष इव स्थितः । तद्वदेवाप्रत्यभिज्ञायमान इत्यर्थः । मध्याह्नस्तु मेघावरणेऽपि कथञ्चित्प्रत्यभिज्ञायत पूर्वेत्याशयेनोक्तमादिरिति ॥

अन्वयः—अभिमानव्यसनात् , दन्तव्यसनाद्, दन्ती, इव, असह्यं, विकारं, प्राप्तः, द्विषत्प्रतापान्तरितोरुतेजाः, ( त्वं ) शरद्घनाकीर्णः, अह्नः, आदिः, इव ( जातः ) ॥ ४५ ॥

व्याख्या—अभिमानव्यसनात् = स्वकुलोचितसम्माननाशाद्, वा, वंशगौरवभ्रंशाद् ( हेतोः ), ( त्वं ) दन्तव्यसनाद् = दशनोत्पाटनाद्, दन्ती = गजः, इव, असह्यं॥ सोढुमशक्यं, विकारं = चित्तक्षोभं, दुःखमिति यावत् । प्राप्तः = आप्तः। द्विषत्प्रतापान्तरितोरुतेजाः = अरिविक्रमपिहितमहौजाः त्वमर्जुनः, शरद्घनाकीर्णः—शरदृतुमेघाच्छादितः, अह्नः = दिनस्य, आदिः = आरम्भः अर्थाद् मेघाच्छादितोदयकालिकसूर्य इव जातः। त्वम् अन्यमाकारमाभिपन्न इव जात इत्यग्रिमश्लोकादानेतव्यम् ॥ ४५ ॥

समासः—अभिमानस्य व्यसनम्, अभिमानव्यसनं, तस्मादभिमानव्यसनात्। दन्तयोर्व्यसनं दन्तव्यसनं, तस्माद् दन्तव्यसनाद्, द्विषतः प्रतापो द्विषत्प्रतापस्तेनान्तरितम् उरु तेजो यस्यासौ द्विषत्प्रतापान्तरितोरुतेजाः । शरदि घन शरद्घनः, शरद्घनेनाकीर्णः शरद्घनाकीर्णः ॥ ४५ ॥

व्याकरणम्—प्राप्तः = प्र + आप् + क्तः ॥ ४५ ॥

वाच्यान्तरम्—दन्तव्यसनाद् दन्तिनेव, अभिमानव्यसनादसह्यं विकारं प्राप्तेन द्विषत्प्रतापान्तरितोरुतेजसा शरद्घनाकीर्णेनाह्न आदिनेव 'त्वया भूयते' ॥ ४५ ॥

कोषः—'अभिमानं त्वहङ्कारे स्वकुलस्य च गौरवे'-इति कोषः । 'व्यसनं विपदि भ्रंशे दोषे कामजकोपजे'—इत्यमरः। 'दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विप, इत्यमरः। 'प्रकृतेरन्यथात्वे तु विकारः परिणामकः' इत्यमरः। 'घनजीमूतमुदिरजलमुग्धूमयोनय' इत्यमरः। 'घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ' इत्यमरः ॥ ४५ ॥

सारार्थः—यथा हस्तिनो दन्तनाशाद्वैरूप्यं भवति, तथा तवापि कुलोचितगौरवभ्रंशादनिर्वचनीयं दुःखजालमुपस्थितम्। एवं च मेघाच्छादितः प्रभातभानुर्यथा तथैवाधुना वैरिपराक्रमाच्छादितभवत्परमप्रतापभानुर्न राजत इत्यर्थः॥

भाषार्थः—जैसे दाँत के नष्ट हो जाने से हाथी, वैसे अपने सब गौरव के नाश होने से आप भी सहन योग्य नहीं हैं, ऐसे भिन्न रूप में बन गये हैं। और जैसे आश्विन-कार्तिक के बादलों से सुबह के सूर्य ढके रहने पर तेजहीन जान पड़ते हैं वैसे शत्रु के प्रताप से ढके हुये विशेष तेज वाले आप भी शोभा नहीं पाते ॥ ४५ ॥

**सव्रीडमन्दैरिव निष्क्रियत्वान्नात्यर्थमस्त्रैरवभासमानः।**
**यशःक्षयात् क्षीणजलार्णवाभस्त्वमन्यमाकारमिवाभिपन्नः ॥ ४६ ॥**

सव्रीडेति ॥ पुनश्च निष्क्रियत्वादर्थक्रियाशून्यत्वात्सव्रीडमन्दैरिव सव्रीडैरत एव मन्दैरपटुभिरिव स्थितैरित्युत्प्रेक्षा । 'मूढाल्पापटुनिर्भाग्या मन्दाः' इत्यमरः । अस्त्रैरत्यर्थं नावभासमानो न प्रकाशमानः । पूर्वं तु नैवमिति भावः । किंतु यशःक्षयाद्धेतोः क्षीणजलो योऽर्णवस्तदाभस्तत्सदृशस्त्वमन्यमाकारमभिपन्नः प्राप्त इव स्थित इत्युत्प्रेक्षा । तस्य क्षीणजलार्णवाभ इत्युपमासंसृष्टिः ॥ ४६ ॥

अन्वयः—निष्क्रियत्वात् सव्रीडमन्दैः, इव, अस्त्रैः, अत्यर्थं, न, अवभासमानः, यशःक्षयात्, क्षीणजलार्णवाभः, त्वम्, अन्यम्, आकारम्, अभिपन्नः, इव (जातः) ॥ ४६ ॥

व्याख्या—निष्क्रियत्वात्=क्रियाव्यर्थत्वात्, केवलनाममात्रतयेत्यर्थः । सव्रीडमन्दैः=सलज्जकुण्ठितैः, इव अस्त्रैः=आयुधैः, अत्यर्थम्=अतिमात्रं, न, अवभासमनः=न, शोभमानः, (त्वं) यशःक्षयात्=कीर्त्तिनाशाद्, हेतोरिति शेषः । क्षीणजलार्णवाभः=शुष्कनीरसमुद्रसदृशः, त्वम्=अर्जुनः, अन्यम्=भिन्नम्, पृथगिवेत्यर्थः, आकारं=स्वरूपम्, अभिपन्नः=प्राप्तः, अर्थाद्यदाऽगस्त्येन मुनिना समुद्रः शोषितस्तदानीं समुद्रस्य यादृश आकारस्तादृश एव यशोरूपजलक्षयात्समुद्ररूपोऽपि भवान् जात इत्यर्थः ॥ ४६ ॥

समासः—व्रीडया सहितानि यान्यस्त्राणि, तानि सव्रीडानि, सव्रीडानि च मन्दानि च सव्रीडमन्दानि, तैः, सव्रीडमन्दैः । निर्गता क्रिया व्यापारो यस्मात्स निष्क्रियस्तस्य भावो निष्क्रियत्वं तस्माद् निष्क्रियत्वात । यशसः क्षयो यशःक्षयस्तस्माद् यशःक्षयात् । क्षीणानि जलानि यस्य स क्षीणजलः, स चार्णवः जलार्णवः, तस्याभा इव आभा विद्यते यस्य स क्षीणजलार्णवाभः ॥ ४६ ॥

व्याकरणम्—अवभासमानः=अव+भास्+लट्+शानच् । अभिपन्नः=अभि+पद्+क्तः ॥ ४६ ॥

वाच्यान्तरम्—निष्क्रियत्वात् सव्रीडमन्दैरिवास्त्रैरत्यर्थं नावभासमानेन, यशःक्षयात्क्षीणजलार्णवाभेन त्वयाऽन्यमाकारमभिपन्नेनेव ॥ ४६ ॥

कोषः—'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा' इत्यमरः । 'आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ' इत्यमरः । 'यशः कीर्तिः समज्ञा च' इत्यमरः । 'उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः' इत्यमरः ॥ ४६ ॥

सारार्थः—शस्त्रस्य धारणप्रयोजनं युद्धे प्रसरणं, न तु हस्तेन शोभार्थं ग्रहणम् । तन्मन्ये भवदीयान्यस्त्राणि, युद्धे विक्रमादर्शकत्वेन, लज्जया मन्दानि जातानि, तादृशैस्त्वं वस्तुतो न शोभसे । अथ यथा शुष्कः समुद्रो भवति, तथैव यशोहीनो भवानपीति ॥ ४६ ॥

भाषाऽर्थः—बेकार रहने के कारण शर्माये हुये और चौथे अस्त्रों ( हथियारों ) से आप नहीं शोभित होते। और यश की कमी हो जाने के कारण जैसे बिना जल का समुद्र हो वैसे आप दूसरे ( जुदा ) ही रूप में बन गये हैं ॥ ४६ ॥

**दुःशासनामर्षरजोविकीर्णैरेभिर्विनाथैरिव भाग्यनाथैः।**
**केशैः कदर्थीकृतवीर्यसारः कच्चित्स एवासि धनञ्जयस्त्वम् ॥ ४७ ॥**

दुःशासनेति ॥ पुनश्च। दुःशासनस्य कर्णरामर्ष आमर्षणमाकर्षणं स एव रजो धूलिः मालिन्यहेतुत्वादिति भावः तेन विकीर्णैर्विक्षिप्तैरत एव विनाथैरिव स्थितवतां युष्माकमसत्त्वप्रायत्वादनाथैरिव स्थितैरित्युत्प्रेक्षा। अन्यथा कथमियं दुर्दशेति भावः। किन्तु भाग्यनाथैर्दैवमात्रशरणैः। अन्यथा स्वरूपमपि लुप्येतेति भावः। एभिः परिदृश्यमानैः। असंयमितैरिति भावः। केशैः शिरोरुहैः कुत्सितोऽर्थो वस्तु कदर्थः। 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः। 'कोः कत्तत्पुरुषेऽचि' इति कुशब्दस्य कदादेशः। कदर्थीकृतौ गर्ह्यार्थीकृतो वीर्यसारौ शौर्यबले यस्य स तथोक्तः। इत्थं पूर्वविलक्षणस्त्वं स एव धनञ्जयोऽसि कच्चित्। 'कच्चित्कामप्रवेदने' इत्यमरः। स एव चेत्त्वं नैवमस्मानुपेक्षस इति भावः ॥ ४७ ॥

अन्वयः—दुःशासनामर्षरजोविकीर्णैः, विनाथैः, एभिः, केशैः, कदर्थीकृतवीर्यसारः, त्वं सः, एव, असि, कच्चित् ॥ ४७ ॥

व्याख्या—दुःशासनामर्षरजोविकीर्णैः = दुर्योधनानुजक्रोधधूलिव्याप्तैः, दुःशासननामा दुर्योधनस्य कनिष्ठभ्राताऽऽसीत्, स एव युवराजस्तस्मिन् समये दुर्योधनाज्ञया द्रौपद्याः केशानग्रहीत्, सभायां द्यूतेन पणीकृताया इत्यर्थः। अत एव विनाथैः = अनाथैः इव, भाग्यनाथैः = दैवमात्ररक्षकैः, एभिः = एतैः, शिरोलुलितैः, केशैः = शिरोरुहैः, मूर्धजैरित्यर्थः। कदर्थीकृतवीर्यसारः = धिक्कृतशौर्यबलः, त्वम् = प्रत्यक्षदृश्यः, पुरुषः, स एव = तादृश एव, धनञ्जयः = अर्जुनः, त्वम् असि, कच्चित् = किम् ? वा, अर्जुननामकोऽन्यः कश्चित् त्वमसि। तद्वदित्यर्थः अर्थाद्यदि स एवास्मद्दुर्दशादर्शकस्त्वं तदा तत्क्लेशसंहरणप्रतिकारं सत्वरं विधेहीति प्रोत्साहनार्थमित्युक्तिर्द्रौपद्या इति ॥ ४७ ॥

समासः—दुःशासनस्यामर्षा एव रजांसि तैर्ये विकीर्णास्ते दुःशासनामर्षरजोविकीर्णास्तैर्दुःशासनामर्षरजोविकीर्णैः। विगतो नाथो येषां ते विनाथास्तैर्विनाथैः। भाग्यमेव, नाथो येषां तैर्भाग्यनाथैः। कदर्थीकृतौ वीर्यसारौ यस्य सः कदर्थीकृतवीर्यसारः ॥ ४७ ॥

व्याकरणम्—कदर्थीकृतौ = न कदर्थौ कुत्सितार्थौ इत्यकदर्थौ अकदर्थौ कदर्थौ सम्पद्यमानौ कृतौ इति कदर्थीकृतौ, अभूततद्भावे च्विः। असि = अस + लट् ॥ ४७ ॥

कोषः—'कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ' इत्यमरः। 'रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः'—इत्यमरः। 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधि' इत्यमरः। 'चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः' इत्यमरः। 'सारो बले स्थिरांशे च' इत्यमरः। 'कच्चित्कामप्रवेदने'—इत्यमरः॥ ४७॥

सारार्थः—दुशासनकरग्रहेण दूषितैर्मदीयैः कुन्तलैर्निन्दितविक्रमोऽर्जुनः किं त्वमेवासि। यदा त्वमेव तदा तत्कलङ्कप्रक्षालनाय प्रयत्नः कर्त्तव्यस्त्वयेति ॥ ४७ ॥

भाषार्थः—दुःशासन के क्रोध रूपी धूरसे भरे हुए, अनाथ के समान केवल दैव ही नाथ है जिनके, ऐसे मेरे बालों से, घृणित है पराक्रम और बल जिसका ऐसे अर्जुन तुम ही हो क्या ? अगर हो तो उस कलङ्क को पखारो ॥ ४७ ॥

अथाप्युपेक्षणे दोषमाह—

**स क्षत्त्रियस्त्राणसहः सतां यस्तत्कार्मुकं कर्मसु यस्य शक्तिः।**
**वहन्द्वयीं यद्यफलेऽर्थजाते करोत्यसंस्कारहतामिवोक्तिम् ॥ ४८ ॥**

स इति ॥ क्षतास्त्रायत इति क्षत्त्रं क्षत्त्रियकुलम्। 'सुपि' इति योगविभागात्कप्रत्ययः। पृषोदरादित्वात्पूर्वपदस्यान्त्यलोपः। अथवा क्षदिति क्विबन्तोपपदात्कप्रत्ययः। क्षत्रे जातः क्षत्त्रियः। 'क्षत्त्राद्घः' इति घप्रत्ययः। कर्मणे प्रभवतीति कार्मुकम्। 'कर्मण उकञ्' इत्युकञ्प्रत्ययः। एवं स्थिते वाक्यार्थः कथ्यते यः सतां साधूनाम्। सहत इति सहः। पचाद्यच्। यस्त्राणस्य सहस्त्राणसहो रक्षणक्षमः स एव क्षत्त्रियशब्दवाच्यः। तथा यस्य कार्मुकस्य कर्मसु रणक्रियासु शक्तिः। अस्तीति शेषः तदेव कार्मुकशब्दवाच्यम्। अत्रैवैतौ शब्दौ मुख्यौ। नान्यत्रेत्यर्थः। एवं स्थिते द्वयीं द्विविधामुक्तिम्। द्वाविमौ क्षत्त्रियकार्मुकशब्दावित्यर्थः। अफले पूर्वोक्तावयवार्थशून्ये अर्थजाते। स्वाभिधेयसामान्यजातिमात्र इत्यर्थः। 'जातं जात्योघजन्मसु' इति विश्वः। वहन्वर्तयन्। संस्कारहतामव्युत्पत्तिदूषितामिव करोतीत्युत्प्रेक्षा। तस्मात्त्वमस्मद्रक्षणेनोक्तदोषादात्मानं मोचयस्वेत्यर्थः॥ ४८ ॥

अन्वयः—यः, सतां, त्राणसहः, क्षत्त्रियः, यस्य, कर्मसु, शक्तिः, तद् ( एव ) कार्मुकम्, अर्थजाते, अफले, यदि, द्वयीम्, उक्तिं, वहन् ( सन् ) असंस्कारहताम्, इव, ( तां ) करोति ॥ ४८ ॥

व्याख्या—यः = कश्चिद्, जन इति शेषः। सतां = सज्जनानां, गोब्राह्मणादीनामित्यर्थः। त्राणसहः = रक्षणक्षमः भवतीति शेषः। सः = सज्जनरक्षकः, क्षत्त्रियः उच्यत इति शेषः। तथा चोक्तं कविकुलशिरोमणिना कालिदासेन 'क्षतात्किल त्रायत इत्युदग्रः क्षत्त्रस्य शब्दो भुवनेषु रूढः' इति। यस्य = धनुषः, कर्मसु = संग्रामकृत्येषु, शक्तिः = विक्रमः, तदेव, कार्मुकं = धनुः। अर्थात्क्षत्त्रियोऽपि यः साधु-

संरक्षणासमर्थः स न क्षत्रियः। यस्य कार्मुकस्य रण उपयोगी नहि तत् कार्मुकमपि नेति भावः। अनयोः सार्थकता तदैव, यदा शब्दाविमौ स्वार्थं भजत इतोऽन्यथा 'विद्याधरो यथा मूर्खो जन्मान्धस्तु दिवाकरः। लक्ष्मीपतिर्दरिद्रश्चाप्येतन्नाम निरर्थकम्' इतिवदेवेति। अथ, अर्थजाते = अभिप्रायजातौ, अफले = व्यर्थे, सत्यपि, यदि, द्वयीं=द्विविधां, क्षत्रिकार्मुकरूपामित्यर्थः। वहन् = धारयन्, जनः असंस्कारहततां = व्याकरणानुशासनवर्जिताम्, उक्तिम् = वाचं, वचनमिति यावद्, इव, करोति। तस्मात्वमधुना स्वजातिस्वायुधानि सार्थकानि कुरुष्वेति भावः॥

समासः—त्राणस्य सहस्त्राणसहः। अर्थानां जातमर्थजातं, तस्मिन्नर्थजाते। न संस्कारोऽसंस्कारः, असंस्कारेण हता, असंस्कारहता, ताम् असंस्कारहताम्

व्याकरणम्—वहन् = वह् + लट् + शतृ। करोति = कृ + लट्॥ ४८॥

वाच्यान्तरम्—येन सतां त्राणसहेन भूयते, तेन क्षत्रियेण भूयते। यस्य कर्मसु शक्तिस्तेन कार्मुकेण भूयते। अर्थजाते विफलेऽपि यदि द्वयीं वहताऽसंस्कारहतोक्तिः क्रियते॥ ४८॥

कोषः—'मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्'—इत्यमरः। 'त्रातं त्राणं रक्षितमवितं गोपायितं च गुप्तश्च' इत्यमरः। 'धनुश्चापौ धन्व-शरासन-कोदण्ड-कार्मुकम्'—इत्यमरः। 'शक्तिः पराक्रमः प्राण' इत्यमरः। 'जातिर्जातं च सामान्यम्' इत्यमरः। 'व्याहार उक्तिर्लपितं भाषितं वचनं वचः ) इत्यमरः॥ ४८॥

सारार्थः—यः साधुरक्षणदक्षो न, स क्षत्रियशब्देन न व्यवहर्तव्यः। येन शत्रुर्न हन्यते, न तत् कार्मुकम्, इति ज्ञात्वा स्वजात्यस्त्रे निरर्थके, तयोः सदर्थकरणाय सत्वरं प्रयासस्त्वया कर्तव्यः। न चिरमेवं नपुंसकेनेव त्वया स्थातव्यमिति॥ ४८॥

भाषार्थः—जो सज्जनों की रक्षा करने में समर्थ है, वही क्षत्रिय है। जिसकी संग्राम के कार्मों में शक्ति है, वही धनुष है। इन दोनों के अर्थ-निरर्थ हो जाने पर भी धारण किये हुए लोग, व्याकरण के नियम से विरुद्ध बात के समान, उन दोनों को व्यर्थ ( अर्थशून्य ) करते हैं॥ ४८॥

अथ त्वद्गुणा अपि नोज्जीवयेयुरित्याह—

**वीतौजसः सन्निधिमात्रशेषा भवत्कृतां भूतिमपेक्षमाणाः।**
**समानदुःखा इव नस्त्वदीयाः सरूपतां पार्थ! गुणा भजन्ते॥ ४९॥**

वीतेति॥ हे पार्थ! वीतौजसो निष्प्रभाः सन्निधिमात्रशेषाः सत्तामात्रावशिष्टा भवत्कृतां भवता करिष्यमाणाम्। 'आशंसायां भूतवच्च' इति भूतवत्प्रत्ययः। भूतमभ्युदयमपेक्षमाणास्त्वदीया गुणाः समानदुःखाः समदुःखभाज इव नोऽस्माकं

सरूपतां वीतौजस्त्वादिसाधर्म्यं भजन्त इत्युपमा। सा च समानदुःखा इवेत्युत्प्रेक्षा वीतौजस्त्वादिसम्भावितयाऽनुप्राणितेत्यनुसन्धेयम् ॥ ४९ ॥

अन्वयः—हे पार्थ !, वितौजसः, सन्निधिमात्रशेषाः भवत्कृतां, भूतिम् अपेक्षमाणाः त्वदीयाः, गुणाः, नः, समानदुखाः, इव, सरूपतां, भजन्ते ॥ ४९ ॥

व्याख्या—हे पार्थ ! = हे अर्जुन !, वीतौजसः = गततेजसः, प्रभावहीना इत्यर्थः। सन्निधिमात्रशेषाः = समीपवासमात्रावशेषाः, सत्तामात्रावशिष्टा इत्यर्थः। भवत्कृताम् = पाण्डवविहितां, त्वदाचरितामित्यर्थः। मूर्तिं = विभूतिम्, अभ्युदयम्, अपेक्षमाणाः = अपेक्षां कुर्वाणाः। त्वदीयाः = भवदीयाः, तावका इत्यर्थः गुणाः= शौर्यादयाः, नः = अस्माकं, समानदुःखा = तुल्यखेदवन्त इव, सरूपताम् = एकरूपतां, सादृश्यमित्यर्थः भजन्ते = आश्रयन्ति ॥ ४९ ॥

समासः—वीतमोजो येषां ते वीतौजसः। सन्निधिरेव सन्निधिमात्रं तद् शेषो येषां ते सन्निधिमात्रशेषाः। भवता कृता भवत्कृता तां भवत्कृताम्। समानं दुःखं येषां ते समानदुःखाः। समानं रूपं इति सरूपं, तस्य भावः सरूता, तां सरूपताम् ॥४९॥

व्याकरणम्—भजन्ते = भज् + लट् ॥ ४९ ॥

वाच्यान्तरम्—वीतौजोभिः सन्निधिमात्रशेषैर्भवत्कृतां भूतिमपेक्षमाणैस्त्वदीयैर्गुणैर्न समानदुखैरिव सरूपता भज्यते ॥ ४९ ॥

कोषः—'वर्जितं विगतं वीतम्' इति कोषः। 'ओजो दीप्तौ बले स्रोत इन्द्रिये निम्नगारये' इत्यमरः। 'सन्निधिः सन्निकरणम्' इत्यमरः 'विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा' इत्यमरः ॥ ४९ ॥

सारार्थः—यथा वय कान्तिहीनाः समीपमात्रवर्तिनः, भवता करिष्यमाणमभ्युदयं प्रतीक्षन्तः स्मः। तथैवास्माकं गुणा अपि विगतप्रभावाः, सत्तामात्रावशेषाः, भवत्कृतां भूतिमपेक्षन्ते। अतो भवताऽतिसत्वरं समभ्युदयार्थं प्रयत्नः कर्त्तव्य इति ॥ ४९ ॥

भाषार्थ—नष्ट तेज वाले और सिर्फ पास में ही रहने वाले आप के सब गुण, आपसे किये अभ्युदय ( तरक्की ) अपेक्षा करते हुए, मेरे समान दुःख वाले की तरह मेरे स्वरूप की बराबरी करते हैं ॥ ४९ ॥

तथाऽपि ममैव कोऽयं भार इत्यत आह—

**आक्षिप्यमाणं रिपुभिः प्रमादान्नागैरिवालूनसटं मृगेन्द्रम्।**
**त्वां धूरियं योग्यतयाऽधिरूढा दीप्त्या दिनश्रीरिव तिग्मरश्मिम् ॥५०॥**

आक्षिप्येति ॥ प्रमादात्प्रज्ञाहीनत्वाद्। न तु दौर्बल्यादिति भावः। रिपुभिराक्षिप्यमाणमधिक्षिप्यमाणमत एव प्रमादात्। नागैर्गजैः। 'प्रहेभाहिगजा नागाः'

इति वैजयन्ती। आलूनसटमाक्षिप्तकेसरम्। 'सटा जटाकेसरयोः' इत्यमरः। मृगेन्द्रं सिंहमिव स्थितम्। त्वामियं धूः कार्यभारः। तिग्मरश्मिं सूर्यं दीप्त्या दिनश्रीरिव योग्यतया निर्वाहकतयाऽधिरूढाऽऽरूढवती। कर्तरि क्तः। त्वदधीनेत्यर्थः॥ ५०॥

अन्वयः—प्रमादाद्, रिपुभिः, आक्षिप्यमाणं, नागैः, आलूनसटं, मृगेन्द्रम्, इव त्वाम्, इयं, धूः, तिग्मरश्मिं, दीप्त्या, दिनश्रीः, इव, योग्यतया, अधिरूढा॥ ५०॥

व्याख्या—प्रमादाद् = अनवधानतया, बुद्धिविभ्रमतयेत्यर्थः। न तु आयोग्यतयेत्यर्थः रिपुभिः = वैरिभिः, आक्षिप्यमाणम् = अधिक्षिप्यमाणम्, अपमानितप्रायमिति यवत्। प्रमादाद् = भ्रमाद्, नागैः = हस्तिभिः, आलूनसटम् = परिलुञ्चितकेसरम्, मृगेन्द्रं = सिंहम्, इव त्वाम् = भवन्तम्, अर्जुनमित्यर्थः। इयम्=एषा। धूः = भारः। ईदृक्शत्रुकृततापनिवृत्त्यै तपःकरणरूपः कार्यभारः इत्यर्थः। तिग्मरश्मि = सूर्यं, दीप्त्या = कान्त्या, दिनश्रीः = वासरशोभा, इव, अर्थाद्, दिनशोभा यथा दीप्तिमन्तं सूर्यमेवाश्रयति, तथैवायं कार्यभारः, योग्यतमं त्वां प्रत्येति, यथा ज्योतिषां मध्ये सूर्यस्तथैव भ्रातृणां मध्ये भवानिति निष्कर्षोऽर्थः। योग्यतया = अधिकगुणवत्तया, अधिरूढा = आरूढवती। न त्वदन्योऽस्माकं दुःखोच्छेदकस्तेन सत्वरं विपदामुन्मूलनायायासः कर्त्तव्यस्त्वयैवेति॥ ५०॥

समासः—आ समन्ताद् लूना सटा यस्य स आलूनसटस्तमालूनसटम्। मृगेष्विन्द्रो मृगेन्द्रस्तं मृगेन्द्रम्। दिनस्य श्रीर्दिनश्रीः। तिग्मा रश्मयो यस्य स तिग्मरश्मिस्तं तिग्मरश्मिम्॥ ५०॥

व्याकरणम्—आक्षिप्यमाणम् = आ + क्षिप् + यक् + कर्मणि लट् + शानच्। अधिरूढा = अधि + रुह + क्तः + टाप्॥ ५०॥

वाच्यान्तरम्—प्रमादाद् रिपुभिराक्षिप्यमाणैः नागैरालूनसटो मृगेन्द्र इव त्वम्, अनया धुरा, तिग्मरश्मिर्दिनश्रियेवाधिरूढः॥ ५०॥

कोषः—'रिपौ वैरि-सपत्नारि-द्विषद्द्वेषण-दुर्हृदः' इत्यमरः। 'प्रमादोऽनवधानता' इत्यमरः। 'मतङ्गजो गजो नागः कुञ्जरो वारणः करी' इत्यमरः। 'छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम्' इत्यमरः। सटा जटाकेसरयोः' इति विश्वः। 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः' इत्यमरः। 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः' इत्यमरः॥ ५०॥

सारार्थः—यथाऽसावधानतया सिंहस्य केसराणि नागैश्छिन्नान्याश्चर्यकराणि, तथैव भवता तेजांसि शत्रुभिः क्षीणानि। अस्यां दशायां यथा तेजोवतां सूर्यमेव दिनशोभाऽश्रयति, तथाऽस्माकं दुःखनाशोपायो भवतां मध्ये भवन्तमेवाश्रयितुमिच्छतीति॥ ५०॥

भाषार्थः—जैसे धोखे से हाथियों से सिंह के कन्धे पर के बाल नोचे जायँ, वैसे शत्रुओं से आप भी अपमानित हुए। पर अब जैसे दिन की शोभा सूर्य ही का आश्रय करती है, वैसे यह कार्य का भार आप ही की तरफ दौड़ता है ॥ ५० ॥

पूर्वं निर्व्यवसायस्य 'स क्षत्रियः' इत्यादिना दोष उक्तः। सम्प्रति व्यवसायिनो गुणमाह—

**करोति योऽशेषजनातिरिक्तां सम्भावनामर्थवतीं क्रियाभिः।**
**संसत्सु जाते पुरुषाधिकारे न पूरणी तं समुपैति संख्या ॥ ५१ ॥**

करोतीति ॥ यः पुमानशेषजनादितरजनादतिरिक्तामधिकाम्। सर्वातिशायिनीमित्यर्थः। सम्भावनां योग्यतां क्रियाभिश्चरितैरर्थवतीं सफलां करोति। तं पुमांसं संसत्सु सभासु। 'सभासमितिसंसदः' इत्यमरः। पुरुषाधिकारे योग्यपुरुषगणनाप्रस्तावे जाते सति। पूर्यतेऽनयेति पूरणी सङ्ख्या, द्वित्वादिसङ्ख्या न समुपैति न गच्छति। अद्वितीयो भवतीत्यर्थः। तस्मादसाधारणतालाभाय त्वयाऽपि महानुत्साह आस्थेय इति भावः ॥ ५१ ॥

अन्वयः—यः, अशेषजनातिरिक्तां, सम्भावनां, क्रियाभिः, अर्थवतीः करोति, तं, संसत्सु, पुरुषाधिकारे, जाते, ( सति ) पूरणी, सङ्ख्या, न, उपैति ॥ ५१ ॥

व्याख्या—यः = कश्चित्, अध्यवसायी जनः। अशेषजनातिरिक्तां = सर्वलोकातिशायिनीं, सम्भवनां = योग्यतां, क्रियाभिः = आचरणैः, अर्थवतीं = फलवतीं, वा—सार्थकां, करोति = विदधाति, तं = तादृशं जनं सकललोकदुःसाध्यकर्मसाधकमित्यर्थः। संसत्सु = सभासु, पुरुषाधिकारे = सुयोग्यजनगणनाऽवसरे, पूरणी = पूरयित्री। सङ्ख्या = द्वित्वादिसङ्ख्या, न उपैति = न प्राप्नोति। अर्थात्स जनः सर्वप्रथम एव गण्यते लोकैः, अन्ये तदितराः सङ्ख्यापूरका इत्यर्थः ॥ ५१ ॥

समासः—न शेषा अशेषाः, अशेषाश्च ते जना अशेषजनाः, तेभ्योऽतिरिक्ता या साऽशेषजनातिरिक्ता, ताम् अशेषजनातिरिक्ताम्। अर्थः फलं विद्यते यस्यां साऽर्थवती ताम् अर्थवतीम्। पुरुषाणामधिकारः पुरुषाधिकारस्तस्मिन् पुरुषाधिकारे ॥ ५१ ॥

व्याकरणम्—करोति=कृ+लट्। समुपैति=सम्+उप+इण्+लट् ॥ ५१ ॥

वाच्यान्तरम्—येनाशेषजनातिरिक्ता सम्भावना क्रियाभिरर्थवती क्रियते, स संसत्सु पुरुषाधिकारे जाते पूरण्या सङ्ख्यया न समुपेयते ॥ ५१ ॥

कोषः—'सभासमितिसंसदः' इत्यमरः ॥ ५१ ॥

सारार्थ—यः कश्चित् सर्वैर्जनैरनुमितं सकललोकाधिकं बलं पौरुषञ्चाधिगत्य क्रियाभिस्तं सार्थकं करोति, सः सर्वप्रथम एव गण्यते लोकैः ॥ ५१ ॥

भाषार्थः—जो कोई सब लोगों से ज्यादे बल, पौरुष को पाकर क्रिया से उसको पूरा सार्थक करता है, जब किसी सभा में आदमियों की गिनती होने लगती है, उस वक्त उसकी पहली ही संख्या होती है। अर्थात् सबसे पहले वही गिना जाता है ॥ ५१ ॥

अथ द्वाभ्यां सुलभविपत्तस्य प्रोषितस्यार्जुनस्य कर्तव्यमुपदिशति—

**प्रियेषु यैः पार्थ ! विनोपपत्तेर्विचिन्त्यमानैः क्लममेति चेतः ।**
**तव प्रयातस्य जयाय तेषां क्रियादधानां मघवा विघातम् ॥ ५२ ॥**

प्रियेष्विति ॥ हे पार्थ !, प्रियेष्वस्मासु विषय उपपत्तेः कारणाद्विनैव विचिन्त्यमानैरकस्मादेवाशङ्क्यमानैर्यैरघैश्चेतः क्लमं खेदमेति। जयाय प्रयातस्य तव सम्बन्धिनां तेषामघानां व्यसनानाम्। 'दुःखैनोव्यसनेष्वघम्' इत्यमरः। मघवेन्द्रः। योऽस्माभिरुपास्यत इति भावः। विघातं निवारणं क्रियात्करोतु। आशिषि लिङ्। तस्मादस्मच्चिन्तया न चेतः खेदयितव्यं जयार्थिना त्वया। अन्यथा तद्सम्भवादिति भावः ॥ ५२ ॥

अन्वयः—हे पार्थ ! उपपत्तेः, विना, प्रियेषु, विचिन्त्यमानैः, यैः, चेतः, क्लमम्, एति, जयाय, प्रयातस्य, तव, तेषाम् अघानां विघातं मघवा, क्रियात् ॥ ५२ ॥

व्याख्या—हे पार्थ != पृथापुत्र अर्जुन ! इत्यर्थः। उपपत्तेः = युक्तेः, विना = अन्तरा, अकारणेनेत्यर्थः। प्रियेषु = इष्टवस्तुषु, अस्मासु विषयेष्वित्यर्थः। विचिन्त्यमानैः = सहसा शोच्यमानैः अहह !!! अस्मद्विना तत्र ते कथं वर्त्तन्ते ! कोऽस्मदितरस्तेषां दुःखत्रयं करिष्यत्यधुनेत्येवमाशङ्क्यमानैर्विषयैरित्यर्थः चेतः = चित्तं। क्लमं = खेदम्। एति = गच्छति तद्, जयाय = विजयकामाय, शत्रुपराजयहेतव इत्यर्थः। प्रयातस्य = प्रस्थितस्य, तव = भवतः, अर्जुनस्येति यावत्। तेषाम् = मनःखेदकराणाम्, अघानाम् = पापानां, विघातम् = उन्मूलनम्, मघवा = इन्द्रः, क्रियात् = करोतु। अर्थादधुना तदितरविषयेभ्यो मनः समाकृष्य सर्वथा शत्रुजयोपाय एव तद् योजनीयमिति भावः ॥ ५२ ॥

समासः—पृथायाः कुन्त्या अपत्यं पुमान् पार्थस्तत्सम्बुद्धौ हे पार्थ ! विशेषेण चिन्त्यन्त इति विचिन्त्यमानानि तैर्विचिन्त्यमानैः ॥ ५२ ॥

व्याकरणम्—इति = इण् = लट्। क्रियात्=कृ + आशिषि लिङ् ॥ ५२ ॥

वाच्यान्तरम्—हे पार्थ ! प्रियेषु विचिन्त्यमानै यैस्तव चेतसा क्लमम् ईयते। तेषां विघातो मघोना कृषीष्ट ॥ ५२ ॥

कोषः—'उपपत्तिः सुयुक्तिः स्याद्धेतुप्रतिपादनम्' इति कोषः। चित्तं तु चेतो

हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः। 'कलुषं वृजिनैनोऽघमंहोदुरितदुष्कृतम्' इत्यमरः। 'इन्द्रो मरुत्वान्मघवा विडौजाः पाकशासनः' इत्यमरः॥ ५२॥

सारार्थः—स्वाभाविकं वस्त्वेतद् यत्परदेशे निवसतो जनस्य, स्वगृहसम्बन्धि जनधनादि वस्तु स्मृत्वा स्नेहान्मनः खिद्यते। परन्तु भवता तत्र कर्त्तव्यं तथा कृते तव प्रस्तुततपःकरणे बाधा भविष्यति, अस्माकं दुःखानां नाशं तु स एवेन्द्रः करिष्यति, यत्प्रसङ्गतार्थं भवता तपो विधातुं वनं गम्यते। अर्थादिन्द्रस्य तपस्या निश्चिन्तचित्तेन कार्या, स एव भवदीयमत्रत्यमस्मदीयं च दुःखजातं दूरीकरिष्यतीति॥ ५२॥

भाषार्थः—हे अर्जुन! प्रियों में कारणों के बिना जिसको सोचने से तुम्हारा दिल घबड़ावे, जय के लिये जाते हुए तुम्हारी उस पाप-शंकाओं का नाश इन्द्र महाराज करें॥ ५२॥

**मा गाश्चिरायैकचरः प्रमादं वसन्नसम्बाधशिवेऽपि देशे।**
**मात्सर्यरागोपहतात्मनां हि स्खलन्ति साधुष्वपि मानसानि॥ ५३॥**

मा गा इति॥ असम्बाधोऽसङ्कटः। विजन इत्यर्थः। 'सङ्कटं ना तु सम्बाधः' इत्यमरः। शिवो निर्बाधः। द्वयोरन्यतरस्य विशेष्यत्वविवक्षायां विशेषणसमासः। अस्मिन्नसम्बाधशिवेऽपि देशे चिराय चिरमेकश्चासौ चरश्चेत्येकचर एकाकी वसन् प्रमादं दौर्बल्यं मा गाः। 'इणो गा लुङि' इति गाऽऽदेशः। ननु निःस्पृहस्य ममाकिञ्चित्करः प्रमाद इति वाच्यमित्याशङ्क्याह—मात्सर्येति। मत्सर एव मात्सर्यं द्वेषो रागः स्नेहस्ताभ्यामुपहतात्मनां रागद्वेषदूषितस्वभावानां मानसानि मनांसि साधुषु सज्जनेष्वपि विषये स्खलन्ति विकुर्वते हि। अत्र प्रमादनिषेधलब्धाप्रमादरूपकारणेनार्थप्राप्तिरूपकार्यस्य व्यतिरेककारणसमर्थनाद्वैधर्म्येण कार्यकारणसमर्थनरूपोऽर्थान्तरन्यासः॥ ५३॥

अन्वयः—असम्बाधशिवे, अपि, देशे, चिराय, एकचरः, वसन्, (त्वम्) प्रमादं, मा गाः, हि, मात्सर्यरागोपहतात्मनां, मानसानि, साधुषु, अपि, स्खलन्ति॥ ५३॥

व्याख्या—असम्बाधशिवे = असङ्कटे, शङ्काविहीन इत्यर्थः। देशे = प्रदेशे, अपि चिराय = चिरकालम्, एकचरः = एकाकी, वसन् = तिष्ठन्, सन् प्रमादम् = असावधानतां, मा गाः = नहि गच्छ। आः! कथमिह सज्जनमुनिजनसङ्कुले कानने लोककल्याणबाधका दुष्टाः केन कारणेन स्थास्यन्ति, नहि किमपि फलं तेषामत्र वासेन। अतो यत्र तत्रासावधानतयाऽपि वसतो न काऽपि मे हानिरित्येवं न कदापि भवताऽनुष्ठेयम्। सर्वत्र सर्वविधा जना वसन्त्येवातः सदा सर्वत्र सावधानेन

त्वया भाव्यमिति। हि = यस्मात्, मात्सर्यरागोपहतात्मनां = द्वेषप्रीतिदूषितचित्तानां जनानामिति शेषः। येषामकारणमेव परोत्कर्षविषये द्वेषकरणेऽनुरागो जायते, तादृशानामित्यर्थः। साधुषु = सज्जनेषु, शश्वत्परहिततत्परेषु, अपि मानसानि = मनांसि, स्खलन्ति = पतन्ति। साधूनामसाधवः प्रकृत्या वैरिणो भवन्तीति॥

समासः—एकश्चासौ चरश्च एकचरः। न सम्बाधम् असम्बाधम्, असम्बाधञ्च शिवम् असम्बाधशिवं, तस्मिन्नसम्बाधशिवे। मत्सरस्य भावो मात्सर्यम् मात्सर्यं च रागश्च मात्सर्यरागौ, ताभ्यां मात्सर्यरागाभ्यामुपहत आत्मा येषां तेषां मात्सर्यरागोपहतात्मनाम् ॥ ५३ ॥

व्याकरणम्—मा गाः = मा + इण् + लुङ्। इणो गाऽऽदेशो माङ्योगेऽडभावश्च। वसन् = वस + लट् + शतृ। स्खलन्ति = स्खल + लट् ॥ ५३ ॥

वाच्यान्तरम्—असम्बाधशिवेऽपि देशे एकचरेण चिराय वसता प्रमादो मा गायि। हि मात्सर्यरागोपहतात्मनां मानसैः साधुष्वपि स्खल्यते ॥ ५३ ॥

कोषः—'चिराय चिररात्राय चिरस्याद्याश्चिरार्थका' इत्यमरः। 'प्रमादोऽनवधानता' इत्यमरः। 'सङ्कटं ना तु सम्बाध' इत्यमरः। 'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः। 'अन्योत्कर्षं विलोक्याशु यः खिद्यति स मत्सरी' इति कोषः ॥ ५३ ॥

सारार्थः—यत्रापि कस्यापि बाधासम्भवो न, तत्रापि न हि भवताऽसावधानेन स्थातव्यम्। दुष्टा मत्सरिणः प्रकृत्या साधुविरोधिनो भवन्त्यतः सदैव सावधानेन वस्तव्यमिति ॥ ५३ ॥

भाषार्थः—जहाँ पर शंका की भी सम्भावना नहीं है, ऐसे स्थान में तुम अकेले देर तक रहते हुए असावधानता ( गफलत ) नहीं करना। क्योंकि राग और द्वेष से नष्ट है आत्मा ( दिमाग ) जिनका ऐसे दुष्टों का दिल सज्जनों के ऊपर भी अनिष्टकारक हो जाता है ॥ ४३ ॥

निगमयति—

**तदाशु कुर्वन्वचनं महर्षेर्मनोरथान्नः सफलीकुरुष्व।**
**प्रत्यागतं त्वाऽस्मि कृतार्थमेव स्तनोपपीडं परिरब्धुकामा ॥ ५४ ॥**

तदिति॥ तत्तस्मात्कारणात्। आशु शीघ्रं महर्षेर्वचनं कुर्वन् तपस्यन्नित्यर्थः। नोऽस्माकं मनोरथान्सफलीकुरुष्व ; अरिनिर्यातनेनास्मान्प्रतिष्ठापयेत्यर्थः। प्रार्थनायां लोट्। किञ्च कृतार्थं कृतकृत्यं प्रत्यागतमेव त्वा त्वाम्। 'त्वमौ द्वितीयाया' इति त्वाऽऽदेशः। स्तनयोरुपपीड्य स्तनोपपीडम्। 'सप्तम्यां चोपपीडरुधकर्षः,

इति णमुल्। परिरब्धुं कामो यस्याः सा परिरब्धुकामाऽस्मि। आलिङ्गितुमिच्छामीत्यर्थः। 'तुं काममनसोरपि' इति मकारलोपः। प्राकार्यसिद्धेः प्रमदाऽऽलिङ्गनमपि न प्रीतिदमिति भावः॥ ५४॥

अन्वयः—तद्, महर्षेः, वचनम्, आशु, कुर्वन्, नः, मनोरथान्, सफलीकुरुष्व, कृतार्थं, प्रत्यागतम्, एव, त्वां, स्तनोपपीडं, परिरब्धुकामा, अस्मि॥ ५४॥

व्याख्या—तत्=तस्मात् कारणात्, वा, तत्=पूर्वोक्तम्, आशु=सत्वरम्, महर्षेः=व्यासस्य, वचनं=वचः, कुर्वन्=प्रतिपालयन्, त्वमिति शेषः। नः=अस्माकं, स्वसकलपरिवाराणामित्यर्थः। मनोरथान्=अभिलाषान्=शत्रुपराजयपूर्वकस्वराज्यलाभरूपान्, सफलीकुरुष्व=साफल्यं गमयेत्यर्थः। अथ=ततः, कृतार्थं=कृतकृत्यं, साधितसाध्यमित्यर्थः। प्रत्यागतम्=पुनरागतम्, एव, त्वाम्—अर्जुनं, स्तनोपपीडं=कुचोपपीडं, स्तनयोरुपपीडयेत्यर्थः। परिरब्धुकामा=आलिङ्गितुकामा, (अहं द्रौपदी) अस्मि। यदा त्वं तपः सम्पाद्य सफलकामो भूत्वाऽऽगमिष्यसि, तदैव त्वां गाढालिङ्गनेन तोषयिष्यामि नहि तावत्त्वया कयाऽपि रन्तव्यं ब्रह्मचर्येण स्थातव्यं, तदा नियतं, तपसिद्धिर्भविष्यतीति॥ ५४॥

समासः—कृतोऽर्थो येन सः, कृतार्थस्तं कृतार्थम्। परिरब्धुं कामोऽभिलाषो यस्याः साः परिरब्धुकामा। 'तुं काममनसोरपी' त्यनेन 'म' कारलोपो जातः॥५४॥

व्याकरणम्—कुर्वन्=कृ+लट्+शतृ। सफलीकुरुष्व=सफली+कृ+लोट्। अस्मि=अस्+लट्। स्तनोपपीडं=स्तनयोरुपपीड्य, इत्यत्र 'सप्तम्यां चोपपीडरुधकर्षः' इति णमुल्। परिरब्धुकामा='तुं काममनसोरपि' अनेन 'म'—कारस्य लोपः। त्वा=त्वाम्, 'त्वमौ द्वितीयायाः' इति त्वाऽऽदेशः॥ ५४॥

वाच्यान्तरम्—तद् 'महर्षेर्वचनमाशु कुर्वता त्वया नो मनोरथाः सफलीक्रियन्ताम्, प्रत्यागतं कृतार्थमेव त्वां परिरब्धुकामया मया भूयते॥ ५४॥

कोषः—'सत्वरं चपलं पूर्णमविलम्बितमाशु च' इत्यमरः। 'व्याहार उक्तिर्लपितं भाषितं वचनं वच' इत्यमरः। 'इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथ' इत्यमरः। स्तनौ कुचावुरोजौ च वक्षोजावपि तौ मताविति कोषः॥ ५४॥

सारार्थ—तस्मात्कारणाद् व्यासोपदेशं पालयन्नस्माकमभिलाषपूर्त्तिं कृत्वा यदा त्वमागमिष्यसि, तदैव प्रसभमुत्थाय, चिरप्रोषितं त्वां बाहुभ्यां परिपीड्यालिङ्गनं करिष्यामि। तदैव तत्सुखानुभवः सम्यक्तया भविष्यति। अधुना तु कार्यान्तरविचलितचित्तस्य तव, वैरिकृतापकृतिविकृतया मयाऽऽलिङ्गितस्य न किमपि सुरतस्वादानुभवः स्यादिति॥ ५४॥

भावार्थः—इसलिये व्यास जी की बात मानते हुए हम लोगों के मनोरथों को पूरा करो। जब तुम अपने काम को करके लौटोगे, तब तुमसे जोर से स्तन दबाकर आलिङ्गन करूँगी ॥ ५४ ॥

**उदीरितां तामिति याज्ञसेन्या नवीकृतोद्ग्राहितविप्रकाराम्।**
**आसाद्य वाचं स भृशं दिदीपे काष्ठामुदीचीमिव तिग्मरश्मिः ॥ ५५ ॥**

उदीरितामिति ॥ सोऽर्जुन इतीत्थं यज्ञसेनस्यापत्येन स्त्रिया याज्ञसेन्या द्रौपद्योदीरितामुक्ताम्। नवीकृतः पुनरुद्घाटनेन तथा प्रत्यायितोऽत एवोद्ग्राहितो मनसि निधापितश्च विप्रकारः परिभवो यथा सा तां वाचमासाद्य। आकर्ण्येत्यर्थः। उदीचीं काष्ठां दिशम्। 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः। तिग्मरश्मिरिव। भृशं दीदीपे जज्वाल। चुक्रोधेत्यर्थः ॥ ५५ ॥

अन्वयः—सः, इति, याज्ञसेन्या, उदीरितां, नवीकृतोद्ग्राहितविप्रकारां, तां, वाचम्, आसाद्य तिग्मरश्मिः, उदीचीं, इव, भृशं, दिदीपे ॥ ५५ ॥

व्याख्या—सः = अर्जुनः, इति = इत्थममुना प्रकारेण, याज्ञसेन्या = द्रौपद्या, उदीरिताञ्च = उक्ताम्, प्रतिपादितामिति यावत्। नवीकृतोद्ग्राहितविप्रकाराम् = पुनरुद्घाटनस्मारितवैरिकृतापकारां, ताम् = इतः पूर्वोक्तां, वाचं = वाणीम्, आसाद्य = अधिगम्य, कर्णाभ्यामिति शेषः। द्रौपदीवाक्यं श्रुत्वेत्यर्थः। तिग्मरश्मिः = सूर्यः, उदीचीम् = उत्तरां, काष्ठां = दिशम्, इव, भृशम् = अतिमात्रं, दिदीपे = जज्वाल। यथोत्तरायणं ( मकरादितो मिथुनान्तं यावत् ) प्राप्य रविः प्रज्वलितो दुःसहो भवति, तथैवायमर्जुनोऽप्युत्तरदिग्गतं तद्व्यासोपदिष्टस्थानमासाद्य तपस्तेजसा वैरिभिर्दुःसहतेजोवान् बभूवेति भावः ॥ ५५ ॥

समासः—यज्ञसेनो द्रुपदस्तस्यापत्यं स्त्री याज्ञसेनी, तया याज्ञसेन्या। अनवो नवः सम्पद्यमान इति नवीकृतः, पुनरुद्घाटनेन नवीकृतः, अत एवोद्ग्राहितः, उपर्युत्थापितो विप्रकारः शत्रुकृतापकारो यथा वाचा, सा नवीकृतोद्ग्राहितविप्रकारा तां नवीकृतोद्ग्राहितविप्रकाराम्। तिग्माः खरा रश्मयो यस्य स तिग्मरश्मिः ॥५५॥

व्याकरणम्—आसाद्य = आ + षद् + क्त्वा = ल्यप्। दिदीपे = दीप् + लिट् ॥

वाच्यान्तरम्—याज्ञसेन्या वाचमासाद्य तेनार्जुनेन, तिग्मरश्मिनोदीची काष्ठेव, दिदीपे ॥ ५५ ॥

कोषः—'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती' इत्यमरः। 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्' इत्यमरः 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ता' इत्यमरः। 'भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मय' इत्यमरः ॥ ५५ ॥

सारार्थः—तपः कर्तुं प्रयातस्यर्जुनस्य, चेतसि लक्षणे द्रौपदीपूर्वोक्तवार्त्ताश्रयणेन चिरकृतोऽपि वैरिवर्गापकारः सद्यः सञ्जात इवाभवद्, तेनोद्भूतामर्षेण सोऽतिमात्रमुत्तेजितो भवंस्तपःस्थानमाप ॥ ५५ ॥

भाषाऽर्थः—जिसके स्मरण कराने से शत्रु का अपकार पुनः नवीन होकर उमड़ पड़ा है, ऐसी द्रौपदी की बात को सुनकर अर्जुन अत्यन्त प्रदीप्त हो उठे, जैसे उत्तर दिशा को पाकर सूर्य प्रज्वलित हो उठता है।

**अथाभिपश्यन्निव विद्विषः पुरः पुरोधसाऽऽरोपितहेतिसंहतिः।**
**बभार रम्योऽपि वपुः स भीषणं गतः क्रियां मन्त्र इवाभिचारिकीम्॥५६॥**

अथेति। अथ विद्विषः शत्रून्पुरोऽभिपन्यन्निव स्थितस्तथा पुरोधसा धौम्येनारोपिता समन्त्रमाहिता हेतिसंहतिरायुधकलापो यस्य स तथोक्तः। 'हेतिर्ज्वालाऽङ्कुरायुधे' इति वैजयन्ती। सोऽर्जुनो रम्यः सौम्यः सन्नपि। अभिचारः परहिंसाप्रयोजनं यस्याः साऽऽभिचारिकी। 'प्रयोजनम्' इति ठञ्। तां क्रियां गतः। अभिचारकर्मणि नियुक्त इत्यर्थः। मन्त्र इव रम्यः प्रकृत्या। रमणीयः। भीषयत इति भीषणम्। नन्द्यादित्वाल्ल्यु प्रत्ययः। वपुर्बभार। प्रशान्तो मन्त्रः प्रयोगभेदादिव। सोऽप्यवस्थाभेदाद्भीषणो बभूवेत्यर्थः ॥ ५६ ॥

अन्वयः—अथ, पुरः, विद्विषः, अभिपश्यन् इव, पुरोधसा, आरोपितहेतिसंहतिः, रम्यः, अपि, सः, आभिचारिकीं, क्रियां, गतः मन्त्र इव, भीषणं, वपुः, बभार ॥ ५६ ॥

व्याख्या—अथ = तपःस्थानोपवेशनान्तरम्, पुरः = अग्रे, विद्विषः = शत्रून्, दुर्योधनादीनिति शेषः। अर्थात्तथाऽधिकोत्तेजनासम्भवात्, तपसि सर्वतो भावेन प्रवृत्तिः सूचितेति भावः। अभिपश्यन् = आलोकयन्, इव स्थित इति शेषः। पुरोधसा = पुरोहितेन, धौम्येनेत्यर्थः। आरोपितहेतिसंहतिः = समन्त्रप्रयोगपूर्वकनिकटनिवेशितायुधसमूहः, सः = अर्जुनः, रम्यः = रमणीयकलेवरः अपि, प्रकृत्येति शेषः। तदानीम्, आभिचारिकीं = तन्त्रोक्तां मारणमोहनादिकां, क्रियां = विधानं, गतः = प्राप्तः, प्रयुक्त इत्यर्थः, मन्त्रः = अमुकं हन २ दह २ पच २ मारय २ शोषय २ इत्यादिरूप इव, भीषणम् = भयङ्करं, वपुः = शरीरं, बभार = धारयामास ॥ ५६ ॥

समासः—हेतीनां संहतिर्हेतिसंहतिः, आरोपिता हेतिसंहतिर्यस्मिन् स आरोपितहेतिसंहतिः ॥ ५६ ॥

व्याकरणम्—अभिपश्यन् + अभि + दृश् = लट् + शतृ। बभार=भृ + लिट् ॥५६॥

वाच्यान्तरम्—अथ पुरो विद्विषोऽभिपश्यता, आरोपितहेतिसंहतिना तेन रम्येणापि ( अर्जुनेन ) आभिचारिकीं क्रिया गतेन मन्त्रेणेव भीषणं वपुर्बभ्रे ॥ ५६ ॥

कोषः—'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृद' इत्यमरः। 'पुरः स्यात्पुरद्रोऽग्रत' इत्यमरः। 'पुरोधास्तु पुरोहित' इत्यमरः। 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रह' इत्यमरः। 'हिंसाकर्माभिचारः स्याद्' इत्यमरः। 'वेदभेदे गुप्तवादे मन्त्रः' इत्यमरः॥ ५६॥

सारार्थः—द्रौपदीवाक्यश्रवणोत्तेजितस्तथा, यथाऽग्रे विद्यमाना एव वैरिणो वर्त्तन्ते। तेन हेतुना धौम्येन तत्समीपं समन्त्रप्रयोगपूर्वकाणि शस्त्राणि निवेश्य गतम्। तदानीं प्रकृत्या रमणीयोऽप्यर्जुनो दर्शकानां भयङ्करो जातः। यथा मरणादिक्रियायां प्रयुक्तो मन्त्रो भाति; तद्वदिति॥ ५६॥

भाषार्थः—बाद उसके आगे ( सामने ) शत्रुओं के देखते हुए के ऐसे और पुरोहित से रख दिया गता है हथियारों का समूह जिसके आगे, अर्जुन सुन्दर रहने पर भी उस समय जैसे मारण आदि कर्मों का मन्त्र हो, वैसे भयङ्कर वेष को धारण किये॥ ५६॥

उक्तमायुधारोपणं विवृण्वन्प्रस्थानमाह त्रिभिः—

**अविलङ्घ्यविकर्षणं परैः प्रथितज्यारवकर्म कार्मुकम्।**
**अगतावरिदृष्टिगोचरं शितनिस्त्रिंशयुजौ महेषुधी॥ ५७॥**

अविलङ्घ्येति। परैः शत्रुभिरविलङ्घ्यमनतिक्रमणीयं विकर्षणं यस्य तद्। अमोघामर्षणमित्यर्थः। किञ्च प्रथितो ज्यारवो गुणध्वनिः कर्म बाणमोक्षणादिकं च यस्य तत्कार्मुकं चोद्वहन्नित्यन्वयः। तथाऽरीणां दृष्टिगोचरं दृष्टिपथमगतौ आहवेष्वनिर्वर्तित्वादास्येति भावः। निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः। डप्रत्यये सङ्ख्यायास्तत्पुरुषस्योपसङ्ख्यानात्समासान्तः। तेन शितेन तीक्ष्णेन युक्त इति शितनिस्त्रिंशयुजौ। 'सत्सूद्विष—' इत्यादिना क्विप्। महेषुधी महानिषङ्गौ। इषवो धीयन्तेऽनयोरिति विग्रहः। 'कर्मण्यधिकरणे च' इति क्विप्रत्ययः। 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः। तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः'। इत्यमरः॥ ५७॥

अन्वयः—परैः, अविलङ्घ्यविकर्षणं, प्रथितज्यारवकर्म, कार्मुकम्, अरिदृष्टिगोचरम्, अगतौ, शितनिस्त्रिंशयुजौ, महेषुधी, ( उद्वहन्, तपोभृतां हृदयानि समाविवेश, इति ५९ तमश्लोकेन सम्बन्धः )॥ ५७॥

व्याख्या—परैः = अन्यैः, शत्रुभिश्च, अविलङ्घ्यविकर्षणम् = अनतिक्रमणीयाकर्षणम्, प्रथितज्यारवकर्म = सुविदितमौर्वीशब्दविक्रमम्, एवम्भूतं कार्मुकं = धनुः, गाण्डीवसंज्ञमिति यावत्। तथा च, अरिदृष्टिगोचरं = शत्रुनयनपथम्, अगतौ = अप्राप्तौ, शितनिस्त्रिंशयुजौ = तीक्ष्णखड्गयुक्तौ, महेषुधि = महातूणीरौ, उद्वहंस्तपोभृतां हृदयानि समाविवेश—इति शेषः॥ ५७॥

समासः—न विलङ्घ्यम् अविलङ्घ्यं विकर्षणं यस्य तद् अविलङ्घ्यविकर्षणं, रवश्च कर्म च रवकर्मणी, ज्याया रवकर्मणी,ज्यारवकर्मणी प्रथिते ज्यारवकर्मणी यस्य तत् प्रथितज्यारवकर्म। अरीणां दृष्टयोऽरिदृष्टयस्तासां गोचर इत्यरिदृष्टिगोचरस्तमरिदृष्टिगोचरम्। शितश्च निस्त्रिंशः शितनिस्त्रिंशः, तेन युक्ताविति शितनिस्त्रिंशयुजौ। इषवो बाणा धीयन्ते ययोस्तौ इषुधी महान्ताविषुधी महेषुधी ॥ ५७ ॥

व्याकरणम्—कार्मुकं = कर्मन् + उकञ्। अगतौ = नञ् + गम् + क्तः ॥ ५७ ॥

वाच्यान्तरम्—यथावदेव ॥ ५७ ॥

कोषः—'मौर्वी-ज्या-शिञ्जिनी-गुण' इत्यमरः। 'शब्दे निनाद-निनद-ध्वनि-ध्वान-रव स्वना' इत्यमरः। 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इत्यमरः। रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृद' इत्यमरः। 'दृग्दृष्टी लोचनं नेत्रमीक्षणं चक्षुरक्षिणी' इत्यमरः। खड्गे तु निस्त्रिंशश्चन्द्रहासासिरिष्टय' इत्यमरः। तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः ॥ ५७ ॥

सारार्थः—यस्याकर्षणं न कदाऽपि शत्रुभिस्तिरस्कृतमर्थाद्यस्मिन्नाकृष्टे शत्रवः शमनभवनातिथयः सम्पन्ना एवं गाण्डीवसंज्ञं धनुः। तथा च तीक्ष्णकरवालयुक्तौ तूणीरौ च वहन्नर्जुनो 'वने अः कोऽयं वीरोऽत्र किमर्थमास्ते, अहह ! किमस्य कष्टमापतितं येन प्रायस्तपोभूमौ सुकुमारकलेवरोऽपि तपः कर्तुमागतः' एवं साश्रुनयनं मिथो वदतां मनः प्रवेशं कृतवान् ॥ ५७ ॥

भाषार्थः—शत्रुओं से नहीं आक्रमण किया हुआ है चढ़ाना जिसका, और जगद्विदित है ताँत का शब्द और काम जिसका, ऐसे गाण्डीव नाम के धनुष को और वैरियों की आँख के सामने नहीं पड़ा है जो, ऐसे तेज ( नोकीले ) बाण से युक्त तर्कश को धारण किये अर्जुन उस वन में कुछ देरतक योगियों के दिल में पैठे॥

यशसेव तिरोदधन्मुहुर्महसा गोत्रभिदायुधक्षतीः।
कवचं च सरत्नमुद्वहञ्ज्वलितज्योतिरिवान्तरं दिवः ॥ ५८ ॥

यशसेति। किञ्च। गोत्रभिद इन्द्रस्यायुधक्षतीर्वज्रप्रहाररन्ध्राणि। खाण्डवदाहसम्भवादिति भावः। महसा स्वकान्त्या यशसेव मूर्तया कीर्त्येव मुहुस्तिरोदधदाच्छादयन्। सरत्नं रत्नसहितमत एव ज्वलितज्योतिर्दीप्ततारकम्। 'ज्योतिस्ताराऽग्निभाज्वालादृक्पुत्रार्थधरात्मसु च' इति वैजयन्ती। दिवोऽन्तरं नभोमध्यमिवावस्थितम्। 'अन्तरं परिधानीये बाह्ये स्वीयेऽन्तरात्मनि। क्लीबे मध्ये प्रकाशे च' इति वैजयन्ती। कवचं चोद्वहन् ॥ ५८ ॥

अन्वयः—गोत्रभिदायुधक्षतीः यशसा, इव, महसा, तिरोदधद् सरत्नं, ज्वलितज्योतिः, दिवः, अन्तरम्, इव कवचं, च, उद्वहन् ॥ ५८ ॥

व्याख्या—गोत्रभिदायुधक्षतीः = इन्द्रास्त्राघातचिह्नानि, वज्रप्रहारलक्षणानीत्यर्थः। यशसा = कीर्त्या, इव, महसा = तेजसा, तिरोदधत् = आच्छादयन्, तथा च, सरत्नम् = मणिगणालङ्कृतं, ज्वलितज्योतिः = समुदितनक्षत्रं, दिवः = आकाशस्य, अन्तरम् = मध्यं, प्रकाशवन्नक्षत्रशोभिताकाशमिवेत्यर्थः। कवचं च = वर्म च, लोहनिर्मिताङ्गावरणमित्यर्थः। यत्परिधानेन परबाणादयो नान्तः प्रविशन्ति, तद् उद्वहन्=धारयन्, क्षणं तपोभृतां हृदयानि समाविवेशेति पुरः पद्येन सम्बन्धः ॥५८॥

समासः—गोत्रं पर्वतं भिनत्तीति गोत्रभिद् इन्द्रस्तस्य यदायुधं वज्रं, तद् गोत्रभिदायुधं तस्य याः क्षतयस्ता गोत्रभिदायुधक्षतीः। रत्नैः सहितं सरत्नम्। ज्वलितानि ज्योतींषि यस्मिंस्तद् ज्वलितज्योतिः। तद् ॥ ५७ ॥

व्याकरणम्—तिरोदधत् = तिरस् + धा + लट् + शतृ। उद्वहन् = उद् + वह् + लट् + शतृ ॥ ५८ ॥

वाच्यान्तरम्—गोत्रभिदायुधक्षतीर्यशसेव महसा तिरोदधता, सरत्नं ज्वलितज्योतिर्दिवोऽन्तरमिव कवचमुद्वहताऽर्जुनेन तपोभृतां हृदयानि समाविविशिरे ॥५८॥

कोषः—'सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा' इत्यमरः। 'आयुधं तु प्रहरणं शस्त्रमस्त्रम्' इत्यमरः। 'क्षतिः प्रहारे हानौ च' इति विश्वः। 'यशः कीर्तिः समज्ञा च' इत्यमरः। 'महस्तूत्सवतेजसोः' इत्यमरः। 'रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च' इत्यमरः। 'उरश्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियाम्' इत्यमरः। 'ज्योतिस्ताराग्निभाज्वालादृक्पुत्रात्मधरासु च' इति वैजयन्ती ॥ ५८ ॥

सारार्थः—खाण्डववनदाहावसरे इन्द्रार्जुनयोः समरमभूत् तत्रैवेन्द्रेणार्जुनं प्रति वज्रं प्रक्षिप्तं, तेन तस्य चिह्नं स्वदेहकान्त्याऽऽच्छादयन् ( अहो इन्द्रवज्रप्रहारोऽप्यस्मिन् वीरे व्यर्थो जातो धन्योऽयं वीरवर इत्येवम् ) अलौकिकयशसेव व्याप्तः। मणिगणखचितकवचं परिदधदर्जुनो मुनिवसतिसमीपवर्तिनि वने गत इति ॥ ५८ ॥

भाषाऽर्थः—इन्द्र के वज्र प्रहार के दागों को यशरूप अपने तेज से ढाँकते हुए, जैसे तारागण भूषित आकाश का बीच हो वैसे रत्नों सहित, कवच को धारण किये अर्जुन तपोवन में पहुँचे ॥ ५८ ॥

**अलकाऽधिपभृत्यदर्शितं शिवमुर्वीधरवर्त्म संप्रयान्।**
**हृदयानि समाविवेश स क्षणमुद्बाष्पदृशां तपोभृताम् ॥ ५९ ॥**

अलकेति। सोऽर्जुनोऽलकाऽधिपभृत्येन यक्षेण दर्शितमतः शिवं निर्बाधमुर्वीधरवर्त्म हिमवन्मार्गं प्रति सम्प्रयान् गच्छन्। क्षणमुद्बाष्पदृशां वियोगदुःखा-

त्साश्रुनेत्राणां तपोभृतां द्वैतवननिवासिनां तपस्विनां हृदयानि समाविवेश, खेद-यामासेत्यर्थः ॥ ५९ ॥

अन्वयः—अलकाऽधिपभृत्यदर्शितं, शिवम्, उर्वीधरवर्त्म, सम्प्रयान् सः, उद्बाष्पदृशां, तपोभृतां, हृदयानि, क्षणं समाविवेश ॥ ५९ ॥

व्याख्या—अलकाऽधिपभृत्यदर्शितं = यक्षोपदिष्टम्, अलका नाम पुरी तस्या अधिपः कुबेरस्तस्य भृत्योऽनुचरो यक्ष इति यावद् । शिवम् = मङ्गलम्, उर्वीधर-वर्त्म = पर्वतमार्गं, सम्प्रयान् = सङ्गच्छन्, सः = अर्जुनः, उद्बाष्पदृशाम् = उद्गता-श्रुनयनानां, तपोभृतां = तपस्विनां, हृदयानि = मनांसि, क्षणं = मुहूर्त्तं, समा-विवेश = प्रविष्टवान्, योगिनां मनांसि खेदान्वितानि चकारेत्यर्थः ॥ ५९ ॥

समासः—अलकाया अधिपोऽलकाऽधिपस्तस्यालकाऽधिपस्य भृत्य इत्यलका-ऽधिपभृत्यस्तेनालकाऽधिपभृत्येन दर्शित इत्यलकाऽधिपभृत्यदर्शितस्तमलका-ऽधिपभृत्यदर्शितम् । धरतीति धर उर्व्या धर उर्वीधरस्तस्य वर्त्म उर्वीधरवर्त्म । उद्गतानि बाष्पाणि याभ्यस्ता उद्बाष्पास्ताश्च दृशो येषां त उद्बाष्पदृशस्तेषाम् उद्बाष्पदृशाम् । तपांसि बिभ्रति ये ते तपोभृतः तेषां तपोभृताम् ॥ ५९ ॥

वाच्यान्तरम्—सम्प्रयान् + सम् + प्र + या + लट् + शतृ । समाविवेश = सम् + आ + विश् + लिट् ॥ ५९ ॥

वाच्यान्तरम्—अलकाऽधिपभृत्यदर्शितं शिवम्, उर्वीधरवर्त्म सम्प्रयाता तेन ( अर्जुनेन ) तपोभृतां हृदयानि समाविविशिरे ॥ ५९ ॥

कोषः—'कैलासः स्थानमलका पूः' इत्यमरः । 'भृत्ये दासेर-दासेय-दास-गोप्यक-चेटका' इत्यमरः । 'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः । 'सर्वसहा वसुमती वसुधोर्वी वसुन्धरा' इत्यमरः । 'महीध्रे 'शिखरिक्ष्माभृदहार्य-धरपर्वता'इत्यमरः । अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः' इत्यमरः । 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी' इत्यमरः । 'बाष्पमुष्णाश्रु कथ्यते' इति कोषः ॥ ५९ ॥

सारार्थः—अग्रेऽग्रे यक्षेण प्रदर्शिते पर्वतमार्गे गच्छन्तमर्जुनमवलोक्य तप-स्विनः सदयहृदयाः करुणासमाकुलश्च बभूवुः ॥ ५९ ॥

भाषार्थः—यक्ष से दिखाये ( बतलाये ) मङ्गलप्रद, पर्वत के रास्ते में जाते हुए अर्जुन, कुछ देर तक आंसू भरे आंखवाले मुनियों के दिल में पैठे। अर्थात् अर्जुन को देखकर करुणा से मुनियों की आँखों में आँसू भर आया और अर्जुन की तरफ मन खिंच गया ॥ ५९ ॥

अनुजगुरथ दिव्यं दुन्दुभिध्वानमाशाः
सुरकुसुमनिपातैर्व्योम्नि लक्ष्मीर्वितेने ।

प्रियमिव कथयिष्यन्नालिलिङ्ग स्फुरन्तीं
भुवमनिभृतवेलावीचिबाहुः पयोधिः ॥ ६० ॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये तृतीयः सर्गः ।

अनुजगुरिति । अथाशा दिशः दिवि भवं दिव्यम् । 'द्युप्रागपागुदक्प्रतीचो यत्' । दुन्दुभिध्वानमनुजगुरनुदध्वनुः । गायतेर्लिट् । व्योम्नि सुरकुसुमनिपातैर्लक्ष्मीर्वितेने । पुष्पवृष्टिश्चाजनिष्टेत्यर्थः । किञ्च । अनिभृताश्चञ्चला वेलायां कूले या वीचयस्ता एव बाहवो यस्य स तथोक्तः । 'वेला कूलविकारयोः' इति शाश्वतः । पयोधिः स्फुरन्तीमुल्लसन्तीं हर्षात्स्पन्दमानां च भुवं प्रियमिष्टं भारावतारणरूपं कथयिष्यन्निव । कथयितुमिवेत्यर्थः । 'लृट् शेषे च' इति चकारात्क्रियाऽर्थायां क्रियायां लृट् । आलिलिङ्ग । सर्वं चेदं शिवं दैवकार्यप्रवृत्तत्वादस्येति भावः । अत्र विशेषणमात्रसाम्यादप्रस्तुतस्य गम्यत्वात्समासोक्तिरलङ्कारः । तत्र चाप्रस्तुतयोर्भूमिसमुद्रयोः प्रतिपन्नाभ्यां नायकाभ्यां भेदेऽभेदलक्षणातिशयोक्तिवशादालिङ्गनोक्तिरिति रहस्यम् । एवमतिशयोक्त्यनुप्राणिता समासोक्तिः । प्रियकथनात्स्नेहमुज्जीवयन्ती तदङ्गभावं भजत इत्युभयोरङ्गाङ्गिभावेन सङ्कर इति विवेचनीयम् ॥ ६० ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां तृतीयः सर्गः समाप्तः ।

अन्वयः—अथ, आशाः, दिव्यं, दुन्दुभिध्वानम्, अनुजगुः, व्योम्नि, सुरकुसुमनिपातैः, लक्ष्मीः वितेने, अनिभृतवेलावीचिबाहुः, पयोधिः, प्रियं, कथयिष्यन्, इव, स्फुरन्तीं, भुवम्, आलिलिङ्ग ॥ ६० ॥

व्याख्या—अथ = अर्जुनप्रयाणोत्तरकाले, आशाः = दिशः, दिव्यं = स्वर्गसम्बन्धिनं, न तु लौकिकं, दुन्दुभिध्वानम् = भेरीशब्दम्, अनुजगुः = अनुदध्वनुः, दिक्षु भेरीशब्दोऽभूदित्यर्थः । तथा च आशा एव कन्याः, सुरकुसुमनिपातैः = देवपुष्पवर्षणैः, वा, सुरकुसुमानि पारिजातपुष्पाणि, तेषां निपातैः, व्योम्नि = गगने, लक्ष्मीः = श्रीः, वितेने = वितस्तरे । अर्थात्तदानीं खात्पुष्पवृष्टिर्जातेति भावः । तथा च, अनिभृतवेलावीचिबाहुः = चञ्चलतटलहरिभुजः, पयोधिः = समुद्रः, प्रियम् = प्रेमपूर्णं वच इति शेषः । कथयिष्यन् = कथयितुमिच्छन्, इव स्फुरन्तीम् = उल्लसन्तीम्, भुवन् = महीम, आलिलिङ्ग = परिषस्वजे, आलिङ्गितवानित्यर्थः ॥६०॥

समासः—दुन्दुभेर्ध्वानो दुन्दुभिध्वानस्तं दुन्दुभिध्वानम् । कुसुमानां निपाताः कुसुमनिपाताः सुराणां कुसुमनिपाताः सुरकुसुमनिपातास्तैः सुरकुसुमनिपातैः । वेलाया वीचयो वेलावीचयः, अनिभृता या वेलावीचयोऽनिभृतवेलावीचयः, ता एव बाहवो यस्य सोऽनिभृतवेलावीचिबाहुः ॥ ६० ॥

व्याकरणम्—अनुजगुः = अनु + गै + लिट् ।, वितेने = वि + तन् + लिट् कर्मणि । कथयिष्यन् = कथ + णिच् + लृट् + शतृ । आलिलिङ्गे = आ + लिगि + लिट् ॥

वाच्यान्तरम्—आशाभिर्दिव्यो दुन्दुभिध्वानोऽनुजगे । सुरकुसुमनिपाता व्योम्नि लक्ष्मीं वितेनुः । प्रियं कथयिष्यतेवानिंभृतवेलावीचिबाहुना पयोधिना स्फुरन्ती भूरालिलिङ्गे ॥ ६० ॥

कोषः—'स्याद्यशःपटहो ढक्का भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः । 'शब्दे निनाद-निनद-ध्वनि-ध्वान-रव-स्वाना' इत्यमरः । 'दिसस्तु ककुभः काष्ठा आशाश्च हरितश्च ता' इत्यमरः । 'अमरा निर्जरा देवास्त्रिदशा विबुधाः सुरा' इत्यमरः । 'प्रसूनं कुसुमं सुमम्' इत्यमरः । 'द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुस्कर-मम्बरम्' इत्यमरः । 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि' इत्यमर । 'भङ्ग-स्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु' इत्यमरः । 'भुजबाहु प्रवेष्टो दोः' इत्यमरः । 'पयोधिरब्धिः समुद्रः सागरोऽर्णव' ॥ ६० ॥

सारार्थः—अर्जुनस्य तपोऽर्थं प्रस्थानसमये देवदुन्दुभयो नेदुः । आकाशात् पुष्पवृष्टिरभूत् । हर्षेण शमुद्रोऽपि चञ्चलो बभूव । इत्थं शुभशकुनान्यभूवन् ॥ ६० ॥

भाषाऽर्थः—दिशाओं में देव-दुन्दुभी बजने लगी, आकाश में देवता लोगों के फूलों की वर्षा से शोभा होने लगी । चञ्चल किनारे की लहर रूप भुजा है, जिसकी ऐसा समुन्द्र जैसे कुछ मीठी बात या शुभसमाचार कहने की इच्छा करके चमकती हुई पृथ्वी का आलिङ्गन करने लगा ॥ ६० ॥

छन्दःरिचयः—इदं मालिनोनाम् वृत्तम् । तल्लक्षणञ्च—'ननमयययुतेयं मालिनी भोगिलोकैः' । अस्यार्थः—यस्मिन्श्लोकापादे नगणनगणमगणयगणयगणास्तथा चाष्टभिः-सप्तभिरक्षरैर्विश्रामोऽपि, तन्मालिनीनाम वृत्तम् । यथाऽत्र—

| न | न | म | य | य |
|---|---|---|---|---|
| । । । | । । । | ऽ ऽ ऽ | । ऽ ऽ | । ऽ ऽ |
| "अ नु ज | गु र ध | दि व्यं दु | न्दुभि ध्वा | नमाशाः" |

एवं चतुर्ष्वपि पादेषु सम-वृत्तत्वादूहनीयम् । तत्र समवृत्तलक्षणम् "अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षण-लक्षिताः । तच्छन्दःशास्त्रतत्त्वज्ञाः समवृत्तं प्रचक्षते ॥" एवमर्धसमवृत्तलक्षणम्—"प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत् । द्वितीयस्तुर्यवद्वृत्तं तदर्धसममुच्यते॥" अर्थात् पङ्क्तिद्वयेन प्रत्येकपद्यार्धे-ऊर्ध्वाधःक्रमेण लिखिते, प्रथमतृतीययोरेकलग्न-त्वात् समलक्षणत्वं, द्वितीयचतुर्थयोरेकत्रोर्ध्वाधोवर्त्तमानत्वाद् लक्षणसाम्यं भवतीति युक्तियुक्तमेव । एवं तदुदाहरणीभूतानि पद्यानि द्वितीयसर्गादिगतानि भीमवाक्यानि

'विहितां प्रियया मनःप्रियाम्' इत्यादिवाक्यानि। अस्मिन्नपि सर्गे 'अविलङ्घ्य-विकर्षणं परैः' इत्यादि त्रीणि पद्यान्यर्धसमान्येव। एवं यस्मिंश्च अपि भिन्नभिन्न-लक्षणास्तद्विषमवृत्तम्। तथा चोक्तं—'यस्य पादे चतुष्केऽपि लक्ष्म भिन्नं परस्प-रम्। तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः॥' तदुदाहरणमुद्गतादिकमस्यैव काव्यस्य द्वादशे सर्गे—'अथ वासवस्य वचनेन रुचिरवदनस्त्रिलोचनम्। क्लान्ति-रहितमभिराधयितुं विधिवत्तपांसि विदधे धनञ्जयः॥'

नवजलनिधिक्षितितुले ( १८४९ ) शाके तैषीयपूर्णिमामन्दे।
'गङ्गाधरेण' रचिता सार्गत्रयिकी 'सुधा' पूर्णा॥

इति मिथिलादेशान्तर्गत—भागलपुरमण्डलवर्त्ति—'चयनपुर' ग्रामनिवासिना विद्वद्वर'हंसराज'शर्मणस्तनयेन मिश्रोपनामकेन श्रीगङ्गाधरशर्मणा विरचि-तया सुधाऽभिधया टीकया विभूषितं किरातार्जुनीयकाव्यस्य सर्गत्रयं पूर्णतामगात्।

॥ श्रीः ॥

# किरातार्जुनीयम्

## 'सुधा' संस्कृत-हिन्दीव्याख्योपेतम्

### चतुर्थः सर्गः

ततः स कूजत्कलहंसमेखलां, सपाकसस्याहितपाण्डुतागुणाम् ।
उपाससादोपजनं जनप्रियः, प्रियामिवासादितयौवनां भुवम् ॥ १ ॥

शरदिन्दुनिभां शुभ्रां शुभ्रवस्त्रैरलङ्कृताम् ।
कलहंसकृतावासां, वरदां शारदां भजे ॥

अन्वयः—ततः जनप्रियः सः कूजत्कलहंसमेखलां सपाकसस्याहितपाण्डुतागुणाम् भुवम् आसादितयौवनां प्रियाम् इव उपजनम् उपाससाद ।

विग्रहः—जनानां प्रियः = जन-प्रियः । कलहंसा मेखला इव, अथवा कलहंसा इव मेखला यस्यास्ताम् = कलहंसमेखलाम्, कूजन्तीं कलहंसमेखलामिति = कूजत्कलहंसमेखलाम् । सह पाकेन वर्त्तन्त इति सपाकानि सस्यानि तैराहितः पाण्डुतागुणो यस्यास्ताम् = सपाकसस्याहितपाण्डुतागुणाम् । आसादितं यौवनं यया ताम् = आसादितयौवनाम् । जनस्य समीपमुपजनम् ।

अर्थः—ततः = प्रस्थानानन्तरम् । जनप्रियः = लोकप्रियः । स = अर्जुनः । कूजत्कलहंसमेखलाम् = कूजद्राजहंसमेखलाम् । सपाकसस्याहितपाण्डुतागुणाम् = पक्वान्नसम्पादितपाण्डुरङ्गयुक्ताम् । भुवम् = भूमिम् । आसादितयौवनाम् = प्राप्तयौवनाम् । प्रियां = प्रेयसीम् । इव । उपजनम् = जनसमीपे, सखीसमक्षं वा । उपाससाद = उपगतवान् । वंशस्थवृत्तम् । अत्रोपमालङ्कारः ।

कोषः—'कादम्बः कलहंसः स्यात्' इत्यमरः ।

हिन्दी—हिमालय को प्रस्थान के पश्चात् लोकप्रिय अर्जुन कलकूजन करते हुए राजहंस की भाँति ध्वनित मेखलायुक्त, फसलों के परिपाक से गौरवर्ण वाली

भूमि पर पहुँचे, जैसे कि कोई प्रियपुरुष बजती हुई करधनी पहने अपनी प्रेयसी के समक्ष पहुँचा हो ॥ १ ॥

विनम्रशालिप्रसवौघशालिनीरपेतपङ्काः ससरोरुहाम्भसः ।
ननन्द पश्यन्नुपसीम स स्थलीरुपायनीभूतशरद्गुणश्रियः ॥ २ ॥

अन्वयः—सः विनम्रशालिप्रसवौघशालिनीः अपेतपङ्काः ससरोरुहाम्भसः उपायनीभूतशरद्गुणश्रियः उपसीम स्थलीः पश्यन् ननन्द ।

विग्रहः—विनम्राणां शालीनां प्रसवः=विनम्रशालिप्रसवस्तेषामोघास्तैः शाल्यन्ते ताः=विनम्रशालिप्रसवौघशालिनीः । अपेतानि पङ्कानि याभिस्ताः=अपेतपङ्काः । सरोरुहैः सहितानि ससरोरुहाणि, अम्भांसि यासु ताः=ससरोरुहाम्भसः । शरदो गुणः=शरद् गुणः, तस्य श्रियस्ताः=शरद्गुणश्रियः । सीम्नः समीपम्=उपसीम ।

अर्थः—सः=अर्जुनः । विनम्रशालिप्रसवौघशालिनीः=अवनतशालिफलस्तोमशोभिनीः । अपेतपङ्काः=निष्पङ्काः । ससरोरुहाम्भसः=सकमलजलाः । उपायनीभूतशरद्गुणश्रियः=उपहारीभूतशरद्गुणसम्पतोः । उपसीम=सीम्नः समीपे । स्थलीः=भुवः । पश्यन्=अवलोकयन् । ननन्द=जहर्ष । अत्र परिणामालङ्कारः ।

कोषः—'स्थलं स्थली' इत्यमरः । 'अम्भोर्णस्तोयपानीयम्' इत्यमरः ।

हिन्दी—अर्जुन झुके हुए धान की बालियों से युक्त, कीचड़रहित, कमल तथा जलयुक्त उपहार रूप में प्राप्त, शरत्कालीन शोभावाली, ग्राम-सीमाओं में स्थित भूभागों को देखते हुए बहुत प्रसन्न हुए ॥ २ ॥

निरीक्ष्यमाणा इव विस्मयाकुलैः पयोभिरुन्मीलितपद्मलोचनैः ।
हृतप्रियादृष्टिविलासविभ्रमा मनोऽस्य जह्रुः शफरीविवृत्तयः ॥ ३ ॥

अन्वयः—विस्मयाकुलैः उन्मीलितपद्मलोचनैः पयोभिः निरीक्ष्यमाणा इव हृतप्रियादृष्टिविलासविभ्रमाः शफरीविवृत्तयः अस्य मनः जह्रुः ।

विग्रहः—विस्मयेनाकुलास्तैः=विस्मयाकुलैः । उन्मीलितानि पद्मानि=उन्मीलितपद्मानि । उन्मीलितपद्मानीव लोचनानि येषां तैः उन्मीलितपद्मलोचनैः । प्रियाणां दृष्टिः=प्रियादृष्टिः । तासां विलासास्तेषां विभ्रमाः, हृताश्चामी प्रियादृष्टिविलासविभ्रमाः=हृतप्रियादृष्टिविलासविभ्रमाः । शफरीणां विवृत्तयः=शफरीविवृत्तयः ।

अर्थः—विस्मयाकुलैः = आश्चर्यचकितैः। उन्मीलितपद्मलोचनैः = उत्फुल्लकमलनयनैः। पयोभिः = जलैः। निरीक्ष्यमाणा इव = अवलोकयन्त्य इव। हृतप्रियादृष्टिविलासविभ्रमाः = अपहृतयुवतीभ्रूविक्षेपादिभ्रमाः। शफरीविवृत्तयः = मत्स्यीस्फुरितानि। अस्य = अर्जुनस्य। मनः = चित्तम्। जह्रुः = आचकृषुः। अत्रोपमालङ्कारः।

कोषः—'विभ्रमः संशये भ्रान्तौ शोभायाञ्च' इति वैजयन्ती।

हिन्दी—आश्चर्यचकित तालाब जैसे अर्जुन को विकसित कमलरूपी नेत्रों से देख रहे थे। युवतियों के भ्रूविक्षेपादि विलासों का मानों तालाबों में उछलती हुई छोटी दो मछलियाँ अपहरण कर रही थीं। इस प्रकार इन सब वस्तुओं ने अर्जुन का मन अपनी ओर आकृष्ट कर लिया॥ ३॥

तुतोष पश्यन् कलमस्य सोऽधिकं सवारिजे वारिणि रामणीयकम्।
सुदुर्लभे नार्हति कोऽभिनन्दितुं प्रकर्षलक्ष्मीमनुरूपसङ्गमे॥ ४॥

अन्वयः—सः सवारिजे वारिणि कलमस्य रामणीयकं पश्यन् अधिकं तुतोष। सुदुर्लभे अनुरूपसङ्गमे प्रकर्षलक्ष्मीम् अभिनन्दितुं कः न अर्हति।

विग्रहः—वारिणि जातम् वारिजं = वारिजेन सह तस्मिन् = सवारिजे। रमणीयस्य भावो रामणीयकम्। अनुरूपः सङ्गमः = अनुरूपसङ्गमस्तस्मिन् = अनुरूपसङ्गमे। प्रकर्षस्य लक्ष्मीः = प्रकर्षलक्ष्मीस्ताम् = प्रकर्षलक्ष्मीम्।

अर्थः—सः = अर्जुनः। सवारिजे = सकमले। वारिणि = जले। कलमस्य = शालिविशेषस्य। रामणीयकम् = सौन्दर्यम्। पश्यन् = अवलोकयन्। अधिकम् = बहु। तुतोष = प्रीतो जातः। सुदुर्लभे = दुष्प्राप्ये। अनुरूपसङ्गमे = अनुकूलसमागमे। प्रकर्षलक्ष्मीम् = उत्कर्षसम्पदम्। अभिनन्दितुम् = स्तोतुम्। कः = कः पुरुषः। न अर्हति = नैव योग्यो भवति। अत्रार्थान्तरन्यासालङ्कारः।

कोषः—'शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी' इत्यमरः।

हिन्दी—अर्जुन कमलयुक्त जल में कलम नामक शालिविशेष के पौधों की सुन्दरता देखते हुए बहुत प्रसन्न हुए। दुष्प्राप्य एवं अनुकूल समागम होने पर कौन पुरुष उत्कृष्ट सम्पत्ति का अभिनन्दन नहीं करता है?॥ ४॥

नुनोद तस्य स्थलपद्मिनीगतं वितर्कमाविष्कृतफेनसन्तति।
अवाप्तकिञ्जल्कविभेदमुच्चकैर्विवृत्तपाठीनपराहतं पयः॥ ५॥

अन्वयः—आविष्कृतफेनसन्तति अवाप्तकिञ्जल्कविभेदम् उच्चकैः विवृत्तपाठीनपराहतम् पयः तस्य स्थलपद्मिनीगतं वितर्कं नुनोद ।

विग्रहः—फेनानां सन्ततिः=फेनसन्ततिः । आविष्कृता फेनसन्ततिर्यस्य तत् आविष्कृतफेनसन्तति । किञ्जल्कस्य विभेदः किञ्जल्कविभेदः । अवाप्तः किञ्जल्कविभेदः येन तत्=अवाप्तकिञ्जल्कविभेदम् । विवृत्तेन पाठीनेन पराहृतं तत्=विवृत्तपाठीनपराहतम् । स्थलस्य पद्मिनी=स्थलपद्मिनी, तस्यां गतं तत्=स्थलपद्मिनीगतम् ।

अर्थः—आविष्कृतसन्तति=प्रकटीकृतडिण्डीरसमूहम् । अवाप्तकिञ्जल्कविभेदम्=प्राप्तकेसरोपगमम् । उच्चकैः = उच्चैः । विवृत्तपाठीनपराहतम् = लुठितमत्स्यविशेषताडितम् । पयः = जलम् । तस्य = अर्जुनस्य । स्थलपद्मिनीगतम् = गुलाबाख्यपुष्पगतम् । वितर्कम् = संशयम् । नुनोद = विच्छेद । अत्र सन्देहालङ्कारः ।

कोष।--'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः ।

हिन्दी--सकमल सरोवरों में उठी हुई फेन, कमल-पराग के भेद तथा जोर से उछलते हुए पाठीन नामक मत्स्य-विशेषों से ताडित जल ने अर्जुन का 'कमलों में गुलाब' होने का संशय दूर कर दिया ।। ५ ।।

कृतोर्मिरेखं शिथिलत्वमायता शनैः शनैः शान्तरयेण वारिणा ।
निरीक्ष्य रेमे स समुद्रयोषितां तरङ्गितक्षौमविपाण्डु सैकतम् ।। ६ ।।

अन्वयः—सः शिथिलत्वम् आयता शनैः शनैः शान्तरयेण वारिणा कृतोर्मिरेखं तरङ्गितक्षौमविपाण्डु समुद्रयोषितां सैकतं निरीक्ष्य रेमे ।

विग्रहः—कृता ऊर्मय एव रेखाः यस्य तस्य तत्=कृतोर्मिरेखम् । तरङ्गा अस्य सञ्जातास्तरङ्गितम् । तरङ्गितं तत् क्षौमम्, तद्वद् विपाण्डु=तरङ्गितक्षौमविपाण्डु । समुद्राणां योषितस्तासाम्=समुद्रयोषिताम् । सिकता अस्यास्तीति ।

अर्थः—सः=अर्जुनः । शिथिलत्वम्=शैथिल्यम् । आयता=गच्छता । शनैः शनैः=मदं मन्दम् । शान्तरयेण=शान्तजवेन । वारिणा=जलेन कृतोर्मिरेखम्=कृततरङ्गराजि । तरङ्गितक्षौमविपाण्डु=भङ्गितदुकूलवच्छुभ्रम् । समुद्रयोषिताम्=नदीनाम् । सैकतम् = पुलिनम् । निरीक्ष्य=अवलोक्य । रेमे=तुतोष ।

कोष:—'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्' इत्यमरः ।

हिन्दी—अर्जुन प्रति-दिन क्षीण होने से धीमे बहाववाली, लहरों से रेखा बनानेवाली, नदियों के भङ्गितायुक्त क्षोमवस्त्र के समान उज्ज्वल रेतीले तट को देखकर अतीव प्रसन्न हुए ॥ ६ ॥

मनोरमं प्रापितमन्तरं भ्रुवोरलङ्कृतं केसररेणुनाऽणुना ।
अलक्तताम्राधरपल्लवश्रिया समानयन्तीमिव बन्धुजीवकम् ॥ ७ ॥

अन्वय:—अणुना केसररेणुना अलङ्कृतं मनोरमं भ्रुवोः अन्तरं प्रापितं बन्धुजीवकम् अलक्तताम्राधरपल्लवश्रिया समानयन्तीम् इव ।

विग्रह:—केसरस्य रेणुः केसररेणुस्तेन = केसररेणुना । अलक्तवत् ताम्रस्य अधरपल्लवस्य या श्रीस्तया = अलक्तताम्राधरपल्लवश्रिया ।

अर्थ:—अणुना = सूक्ष्मेण । केसररेणुना = किञ्जल्कपरागेण । अलङ्कृतम् = शोभितम् । मनोरमम् = सुन्दरम् । भ्रुवोः अन्तरम् = भ्रूमध्यम् । प्रापितम् = निवेशितम् । बन्धुजीवकम् = बन्धूकपुष्पम् । अलक्तताम्राधरपल्लवश्रिया = लाक्षारसरक्ताधरपल्लवकान्त्या समानयन्तीम् = समीकुर्वतीम् । इव = समम् । 'अत्रोत्प्रेक्षालंकारः ।

कोष:—'किञ्जल्कः केसरोऽस्त्रियाम्' इत्यमरः ।

हिन्दी—धान के खेत रखाती हुई स्त्रियों ने सूक्ष्म केसररेणु से अलङ्कृत मनोरम जवाकुसुम को भौहों के मध्य में लगा रखा था । इस प्रकार पुष्पयुक्त भौहें महावर की लालिमा से रञ्जित अधर पल्लवों की मानों बराबरी कर रही थी ॥ ७ ॥

नवातपालोहितमाहितं मुहुर्महानिवेशौ परितः पयोधरौ ।
चकासयन्तीमरविन्दजं रजः परिश्रमाम्भःपुलकेन सर्पता ॥ ८ ॥

अन्वय:—महानिवेशौ पयोधरौ परितः मुहुः आहितम् नवातपालोहितम् अरविन्दजं रजः सर्पता परिश्रमाम्भःपुलकेन चकासयन्तीम् ।

विग्रह:—महान् निवेशो ययोस्तौ = महानिवेशौ । पयसां धरौ तौ = पयोधरौ । नवेन आतपेन आलोहितं तत् = नवातपालोहितम् । अरविन्दाज्जातम् तत् = अरविन्दजम् । परिश्रमाज्जातमम्भः = परिश्रमाम्भः, तस्य पुलकस्तेन = परिश्रमाम्भःपुलकेन ।

अर्थः—महानिवेशौ=पीवरौ। पयोधरौ=स्तनौ। परितः=अभि... मुहुः=वारं वारम्। आहितं=प्राप्तम्। नवातपालोहितम्=बालातपताम्र... अरविन्दजं=कमलजम्। रजः=परागम्। सर्पता=प्रसरता। परिश्रमा... पुलकेन=श्रमस्वेदोद्भेदेन। चकासयन्तीम्=शोभयन्तीम्। (निरीक्ष्य कृतार्थं मेने)।

कोषः—'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः।

हिन्दी--धान के खेतों को रखाती हुई स्त्रियों ने अपने उन्नत उरोजों ... प्रातःकालीन धूप के समान रक्ताभ कमल-पराग लगाया था, वे स्त्रियाँ ... पराग रज को परिश्रम के कारण उत्पन्न हुए स्वेद-बिन्दुओं से शोभित ... रही थीं ॥ ८ ॥

कपोलसंश्लेषि विलोचनत्विषा विभूषयन्तीमवतंसकोत्पलम्।
सुतेन पाण्डोः कलमस्य गोपिकां निरीक्ष्य मेने शरदः कृतार्थता ॥९॥

अन्वयः--कपोलसंश्लेषि अवतंसकोत्पलं विलोचनत्विषा विभूषयन्तीं कलमस्य गोपिकां निरीक्ष्य पाण्डोः सुतेन शरदः कृतार्थता मेने।

विग्रहः--कपोलं संश्लेषयति तत्=कपोलसंश्लेषि। अवतंसकञ्चोत्पलं च=अवतंसकोत्पलम्। विलोचनयोः त्विट्=विलोचनत्विट् तया=विलोचनत्विषा। गाः पातीति गोपः, गोपस्य स्त्री गोपिका तां=गोपिकाम्। कृतार्थस्य भावः=कृतार्थता।

अर्थः—कपोलसंश्लेषि=कपोलचुम्बि। अवतंसकोत्पलम्=कर्णोत्पलम्। विलोचनत्विषा=नेत्रकान्त्या। विभूषयन्तीम्=अलंकुर्वतीम्। कलमस्य=शालि... विशेषस्य। गोपिकां=गोप्त्रीम्। निरीक्ष्य=दृष्ट्वा। पाण्डोः=एतन्नामकस्य राज्ञः... सुतेन=पुत्रेण अर्जुनेनेत्यर्थः। शरदः=शरदृतोः। कृतार्थता=साफल्यम्। मेने=अमानि।

कोषः--'गण्डौ कपोलौ' इत्यमरः।

हिन्दी--शालिगोप्त्रियों के कपोलों को छूते हुए कर्णफूल आभूषण लटक रहे थे। नेत्रों की कान्ति से अलंकृत इन धान की रखवाली करनेवाली स्त्रियों को देखकर अर्जुन ने शरदृतु की सफलता को माना ॥ ९ ॥

उपारताः पश्चिमरात्रिगोचरादपारयन्तः पतितुं जवेन गाम्।
तमुत्सुकाश्चक्रुरवेक्षणोत्सुकं गवां गणाः प्रस्नुतपीवरौधसः ॥ १०॥

अन्वयः—पश्चिमरात्रिगोचरात् उपारताः जवेन गाम् पतितुम् अपारयन्तः प्रस्नुतपीवरौधसः उत्सुकाः गवां गणाः तम् अवेक्षणोत्सुकं चक्रुः ।

विग्रहः—पश्चिमा रात्रिः=पश्चिमरात्रिस्तस्यां यो गोचरस्तस्मात्=पश्चिमरात्रिगोचरात् । प्रस्नुतानि पीवराणि ऊधांसि येषां ते=प्रस्नुतपीवरौधसः । अवेक्षणाय उत्सुकस्तम्=अवेक्षणोत्सुकम् ।

अर्थः—पश्चिमरात्रिगोचरात्=अपररात्रौ गोचरणभूमेः । उपारताः=सन्निवृत्ताः, जवेन=वेगेन । गाम्=भुवम् । पतितुम्=धावितुम् । अपारयन्तः=अशक्नुवन्तः । प्रस्नुतपीवरौधसः=स्रवत्पीनापीनाः । उत्सुकाः=उत्कण्ठिताः । गवां गणाः=धेनूनां समूहाः । तम्=अर्जुनम् । अवेक्षणोत्सुकम्=दर्शनोत्सुकम् । चक्रुः=कृतवन्तः ।

कोषः—'ऊधस्तु क्लीबमापीनम्' इत्यमरः । 'स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः' इत्युभयत्राप्यमरः ।

हिन्दी—सन्ध्याकाल में गोचर से लौटती हुई गायें थकी हुई होने के कारण ज़ोर से भागने में असमर्थ थीं । उनके स्तनों से दूध टपक रहा था ऐसी उन गायों के झुण्डों ने अर्जुन को देखने की उत्सुकता पैदा कर दी ॥ १० ॥

परीतमुक्षावजये जयश्रिया नदन्तमुच्चैः क्षतसिन्धुरोधसम् ।
ददर्श पुष्टिं दधतं स शारदीं सविग्रहं दर्पमिवाधिपं गवाम् ॥ ११ ॥

अन्वयः—सः उक्षावजये जयश्रिया परितम् उच्चैः नदन्तं क्षतसिन्धुरोधसम् शारदीं पुष्टिं दधतं गवाम् अधिपं सविग्रहं दर्पम् इव ददर्श ।

विग्रहः—उक्षस्यावजयस्तस्मिन् = उक्षावजये । जयस्य श्रीः जयश्रीस्तया = जयश्रिया । सिन्धोः रोधः = सिन्धुरोधः, क्षतं सिन्धुरोधो येन तम् = क्षतसिन्धुरोधसम् । शरदि भवां शारदीम् । विग्रहेण सहितस्तं = सविग्रहम् ।

अर्थः—सः=अर्जुनः । उक्षावजये=उक्षान्तरभङ्गे सति । जयश्रिया=विजयश्रिया, परीतं=वेष्टितम् । उच्चैः=उन्नतस्वरेण । नदन्तम्=गर्जन्तम् । क्षतसिन्धुरोधसम्=विक्षतसरित्तटम् । शारदीम्=शरदि भवाम् । पुष्टिम्=अवयवोपचयम् । दधतम्=धारयन्तम् । गवामधिपम्=वृषभम् ( अनड्वाहम् ) । सविग्रहम्=मूर्त्तिमन्तम् । दर्पम्=गर्वम् । इव । ददर्श=अपश्यत् । अत्रोत्प्रेक्षालंकारः ।

कोष:—'शरीरं वर्ष्म विग्रहः । कायो देहः क्लीबपुंसोः' इत्यमरः ।

हिन्दी—अर्जुन ने एक साँड़ से लड़कर एवं उसे पराजित कर, दूसरे साँड़ को विजयदर्प से नदीतट को गिराते हुए देखा। हृष्ट-पुष्ट होने के कारण वह साँड़ घमण्ड की साक्षात् मूर्ति सा दिखलाई पड़ता था ॥ ११ ॥

विमुच्यमानैरपि तस्य मन्थरं गवां हिमानीविशदैः कदम्बकैः ।
शरन्नदीनां पुलिनैः कुतूहलं गलद्दुकूलैर्जघनैरिवादधे ॥ १२ ॥

अन्वयः—हिमानीविशदैः गवां कदम्बकैः मन्थरं विमुच्यमानैः अपि शरन्नदीनां पुलिनैः गलद्दुकूलैः जघनैः इव तस्य कुतूहलम् आदधे ।

विग्रहः—शरदो नद्यः शरन्नद्यस्तासां=शरन्नदीनाम् । गलन्ति दुकूलानि=गलद्दुकूलानि तैः=गलद्दुकूलैः । हिमानीवद्विशदानि, तैः=हिमानीविशदैः ।

अर्थः—हिमानीविशदैः=हिमसंघातशुभ्रैः । गवाम्=धेनूनाम् । कदम्बकैः=समूहैः । मन्थरं=मन्दम् । विमुच्यमानैः=मुच्यमानैः । अपि । शरन्नदीनाम्=शरत्सरिताम् । पुलिनैः=तटैः । गलद्दुकूलैः=वस्त्ररहितैः । जघनैः=जघनस्थलैः । इव । तस्य=अर्जुनस्य । कुतूहलम्=आश्चर्यम् । आदधे=आहितम् ।

कोषः—'हिमानी हिमसंहतिः' इत्यमरः । 'कदम्बकं समूहे श्रीफले पुष्पविशेषके' इत्यमरः ।

हिन्दी—बर्फ की चट्टानों के समान श्वेत गायों के झुण्ड धीरे-धीरे शरत्कालीन नदियों के रेतीले तटों को छोड़ते हुए चले जा रहे थे जिन्हें देखकर अर्जुन उसी भाँति आश्चर्यचकित हुए जैसे कि कोई कामुक पुरुष रमणी के जघनस्थल से सरकती हुई सारी को देखकर होता है ॥ १२ ॥

गतान्पशूनां सहजन्मबन्धुतां गृहाश्रयं प्रेम वनेषु बिभ्रतः ।
ददर्श गोपानुपधेनु पाण्डवः कृतानुकारानिव गोभिरार्जवे ॥ १३ ॥

अन्वयः—पाण्डवः पशूनां सहजन्मबन्धुतां गतान् गृहाश्रयं प्रेम वनेषु बिभ्रतः आर्जवे गोभिः कृतानुकारान् इव गोपान् उपधेनु ददर्श ।

विग्रहः—सह जन्म येषां ते सहजन्मानः । सहजन्मान एव बान्धवास्तेषां भावः=सहजन्मबन्धुताम् । गृहमाश्रयो यस्य तत्=गृहाश्रयम् । अनुकुर्वन्तीत्यनुकाराः । कृता अनुकाराः यैस्तान्=कृतानुकारान् । गाः पान्तीति गोपास्तान्=गोपान् । धेनोः समीप उपधेनु ।

अर्थः—पाण्डवः = अर्जुनः । पशूनां = गवाम् । सहजन्मबन्धुताम् = सोदरबन्धुत्वम्, गतान् = प्राप्तान् । गृहाश्रयम् = गृहविषयम् । प्रेम = प्रीतिम् । वनेषु = काननेषु । बिभ्रतः = धारयतः । आर्जवे = विधेयत्वे । गोभिः = पशुभिः । कृतानुकारान् = अनुकृतान् । इव । गोपान् = गोपालान् । उपधेनु = धेनोः समीपे । ददर्श = अवलोकयामास । अत्रोत्प्रेक्षालङ्कारः ।

कोषः—'गहनं काननं वनमि'त्यमरः ।

हिन्दी—अर्जुन ने पशुओं के साथ रहने के कारण पशुओं के कुटुम्बी से बने हुए गोपों को देखा । उन ग्वालों को घर की अपेक्षा वन अधिक प्रिय था और सरलता तो मानो वे पशुओं से सीख रहे थे ॥ १३ ॥

परिभ्रमन्मूर्धजषट्पदाकुलैः स्मितोदयादर्शितदन्तकेसरैः ।
मुखैश्चलत्कुण्डलरश्मिरञ्जितैर्नवातपामृष्टसरोजचारुभिः ॥ १४ ॥

अन्वयः—परिभ्रमन्मूर्धजषट्पदाकुलैः स्मितोदयादर्शितदन्तकेसरैः चलत्कुण्डलरश्मिरञ्जितैः नवातपामृष्टसरोजचारुभिः मुखैः ।

विग्रहः—मूर्धजाः षट्पदा इव तैः = मूर्धजषट्पदैः । परिभ्रमद्भिः मूर्धजषट्पदैः आकुलानि तैः = परिभ्रमन्मूर्धजषट्पदाकुलैः । दन्ताः केसरा इव दन्तकेसराः । स्मितोदयेनादर्शिताः दन्तकेसरा येषां तैः = स्मितोदयादर्शितदन्तकेसरैः । चलन्ति कुण्डलानि = चलत्कुण्डलानि । तेषां रश्मिभिः रञ्जितानि, तैः = चलत्कुण्डलरश्मिरञ्जितैः । नवेनातपेनामृष्टम् = नवातपामृष्टम् । नवातपामृष्टं सरोजं तद्वच्चारूणि तैः = नवातपामृष्टसरोजचारुभिः ।

अर्थः—परिभ्रमन्मूर्धजषट्पदाकुलैः = चलच्छिरोरुहभ्रमराकुलैः । स्मितोदयादर्शितदन्तकेसरैः = ईषद्दर्शितदन्तकेसरैः । चलत्कुण्डलरश्मिरञ्जितैः = चलत्कर्णाभूषणप्रभाभासितैः । नवातपामृष्टसरोजचारुभिः = बालातपस्पृष्टकमलवत्सुन्दरैः । मुखैः = आननैः । उपलक्षिताः ।

कोषः—'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः' इत्यमरः ।

हिन्दी—अर्जुन ने नाचती हुई गोपबालाओं को देखा, जिनके मुख पर लटकते हुए बाल भौंरों के समान प्रतीत होते थे । मंदहास से प्रकटित दांत पुष्पपराग के समान लग रहे थे । गालों पर लटकते हुए कुण्डलों की दीप्ति से रंजित मुख प्रातःकालीन सूर्य की किरणों से विकसित कमल की भाँति शोभित थे ॥ १४ ॥

निबद्धनिःश्वासविकम्पिताधरा लता इव प्रस्फुरितैकपल्लवाः।
व्यपोढपार्श्वैरपवर्तितत्रिका विकर्षणैः पाणिविहारहारिभिः ॥ १५ ॥

अन्वयः—निबद्धनिश्वासविकम्पिताधराः प्रस्फुरितैकपल्लवाः लता इव व्यपोढपार्श्वैः पाणिविहारहारिभिः विकर्षणैः अपवर्तितत्रिकाः।

विग्रहः—निबद्धाः निश्वासाः = निबद्धनिःश्वासाः, तैः विकम्पिताः अधराः यासां ताः = निबद्धनिःश्वासविकम्पिताधराः। प्रस्फुरितमेकं पल्लवं यासां ताः = प्रस्फुरितैकपल्लवाः। व्यपोढानि पार्श्वानि येषु तैः व्यपोढपार्श्वैः। विहारं हरन्तीति तैः = विहारहारिभिः, पाणीनां विहारहारिभिरिति पाणिविहारहारिभिः। अपवर्त्तितानि त्रिकाणि यासां ताः = अपवर्त्तितत्रिकाः।

अर्थः—निबद्धनिःश्वासविकम्पिताधराः = अनुरुद्धप्रश्वासकम्पितोष्ठाः। प्रस्फुरितैकपल्लवाः = प्रचलितैकदलाः। लता इव = वल्लय इव स्थिताः। व्यपोढपार्श्वैः = विपरीतपार्श्वैः। पाणिविहारहारिभिः = हस्तविशेषमनोहरैः। विकर्षणैः = मन्थगुणाकर्षणैः। अपवर्तितत्रिकाः = सञ्चालितनितम्बाः।

कोषः—'अङ्गहारोऽङ्गविक्षेपः' इत्यमरः। 'पृष्ठवंशाधरे त्रिकम्' इत्यमरः।

हिन्दी—दही मथती हुई गोपस्त्रियों के ओष्ठ श्वास रुक जाने के कारण काँप रहे थे, इससे वे ऐसी लता के समान दिखलाई पड़तीं जिनका एकमात्र पत्ता ही हिल रहा हो। दधि मन्थन में हाथों के सुन्दर चालन से उनका पार्श्व भाग खुल जाता था। उनके नितम्ब भाग भी हिल रहे थे ॥ १५ ॥

व्रजाजिरेष्वम्बुदनादशङ्किनीः शिखण्डिनामुन्मदयत्सु योषितः।
मुहुः प्रणुन्नेषु मथां विवर्तनैर्नदत्सु कुम्भेषु मृदङ्गमन्थरम् ॥ १६ ॥

अन्वयः—व्रजाजिरेषु अम्बुदनादशङ्किनीः शिखण्डिनां योषितः उन्मदयत्सु मथां विवर्तनैः मुहुः प्रणुन्नेषु कुम्भेषु मृदङ्गमन्थरं नदत्सु।

विग्रहः—व्रानामजिराणि तेषु = व्रजाजिरेषु। अम्बुदानां नादोऽम्बुदनादः अम्बुदनादस्य शङ्का यासु ताः = अम्बुदनादशङ्किनीः, मृदङ्गवद् मन्थरं मृदङ्गमन्थरम्।

अर्थः—व्रजाजिरेषु = गोष्ठप्राङ्गणेषु। अम्बुदनादशङ्किनीः = घनगर्जितभ्रमवतीः। शिखण्डिनाम् = मयूराणाम्। योषितः = मयूरीः। उन्मदयत्सु = उन्मदाः कुर्वत्सु। मथां = मन्थनदण्डानाम्। विवर्तनैः = परिभ्रमणैः। मुहुः = बारं बारम्। प्रणु-

ल्लेषु = प्रकम्पितेषु । कुम्भेषु = कलशेषु । मृदङ्गमन्थरम् = मृदङ्गवन्मन्दम् । नदत्सु सत्सु, इति । अत्र भ्रान्तिमदलङ्कारः ।

कोषः—'व्रजो गोष्ठाध्ववृन्देषु' इति विश्वः । 'वैशाखमन्थमन्थानमन्थानो मन्थदण्डके' इत्यमरः ।

हिन्दी—ग्वालों के आँगनों में दधिमन्थन करते हुए दधिभाण्डों से मृदङ्ग के समान मन्द शब्द होने पर मयूरियों को बादल गर्जने का भ्रम हो रहा था । यह मेघगर्जन की भ्रान्ति उन मयूरियों को मतवाली बना रही थी ॥ १६ ॥

स मन्थरावल्गितपीवरस्तनीः परिश्रमक्लान्तविलोचनोत्पलाः ।
निरीक्षितुं नोपरराम बल्लवीरभिप्रनृत्ता इव वारयोषितः ॥ १७ ॥

अन्वयः—मन्थरावल्गितपीवरस्तनीः परिश्रमक्लान्तविलोचनोत्पलाः अभिप्रनृत्ता वारयोषित इव सः निरीक्षितुं न उपरराम ।

विग्रहः—मन्थरम् आवल्गिताः पीवराः स्तनाः यासां ताः = मन्थरावल्गितपीवरस्तनीः । परिश्रमेण क्लान्तानि विलोचनोत्पलानि यासां ताः = परिश्रमक्लान्तविलोचनोत्पलाः ।

अर्थः—मन्थरावल्गितपीवरस्तनीः = मन्दचञ्चलघनस्तनीः । परिश्रमक्लान्तविलोचनोत्पलाः = श्रमक्लान्तोन्मीलितकमललोचनाः । बल्लवीः = गोपीः । अभिप्रनृत्ताः = नृत्यन्तीः । वारयोषितः = वेश्याः इव । सः = अर्जुनः । निरीक्षितुम् = द्रष्टुम् । न उपरराम = न विरमति स्म । अत्र संसृष्टयलङ्कारः ।

कोषः—'गोपे गोपालगोसंख्यगोधुगाभीरबल्लवाः' । 'वारस्त्री गणिका वेश्या' इत्यमरः ।

हिन्दी—दधिमन्थन करती हुई गोपस्त्रियों के पीन स्तन मन्द, मन्द हिल रहे थे, परिश्रम से थकी होने के कारण उनके कमल जैसे नेत्र अलसा रहे थे । इस प्रकार नृत्तक्रिया में लीन वेश्याओं के समान उन गोपस्त्रियों को देखने से अर्जुन का मन नहीं हटा ॥ १७ ॥

पपात पूर्वां जहतो विजिह्मतां वृषोपभुक्तान्तिकसस्यसम्पदः ।
रथाङ्गसीमन्तितसान्द्रकर्दमान्प्रसक्तसम्पातपृथक्कृतान्पथः ॥ १८ ॥

अन्वयः—सः पूर्वां विजिह्मतां जहतः वृषोपभुक्तान्तिकसस्यसम्पदः रथाङ्गसीमन्तितसान्द्रकर्दमान् प्रसक्तसम्पातपृथक्कृतान् पथः पपात ।

विग्रहः—सस्यानां सम्पदः सस्यसम्पदः, वृषभैः उपभुक्ताः अन्ते भवाः सम्पदः=वृषभोपभुक्तान्तिकसस्यसम्पदः, तास्तथोक्ताः। सीमन्तवन्तः कृताः रथाङ्गैः सीमन्तिताः सान्द्राः कर्दमाः येषु तान्=रथाङ्गसीमन्तितसान्द्रकर्दमान्। प्रसक्तसन्तापेन पृथक् कृतान्=प्रसक्तसन्तापपृथक्कृतान्।

अर्थः—सः=अर्जुनः पूर्वाम्=प्रावृषेण्याम्। विजिह्मताम्=वक्रताम्। जहतः=त्यजतः। वृषोपभुक्तान्तिकसस्यसम्पदः=वृषभचर्वितप्रान्तसस्यसमृद्धीन्। रथाङ्गसीमन्तितसान्द्रकर्दमान्=चक्रसीमन्तितघनपङ्कान्। प्रसक्तसम्पातपृथक्कृतान्=सन्ततसञ्चारपृथक्कृतान् पथः=मार्गान्। पपात=जगाम। अत्र स्वभावोक्त्यलङ्कारः।

कोषः—'सुकृते वृषभे वृषः' इत्यमरः।

हिन्दी—अर्जुन जिन मार्गों से होकर जा रहे थे, वर्षा से टेढ़े-मेढ़े बने हुए वे मार्ग अब सीधे एवं सरल बन चुके थे। उन मार्गों के दोनों ओर खड़ी हुई फसलों को बैलों (साँड़ों) ने चर लिया था। रथों के पहियों द्वारा उन मार्गों में घनी कोचड़ बन गई थी और लोगों के निरन्तर आवागमन से सब मार्ग स्पष्ट दिखलाई पड़ते थे॥ १८॥

जनैरुपग्राममनिन्द्यकर्मभिर्विविक्तभावेङ्गितभूषणैर्वृता।।
भृशं ददर्शाश्रममण्डपोपमाः सपुष्पहासाः स निवेशवीरुधः॥ १९॥

अन्वयः—सः उपग्रामम् अनिन्द्यकर्मभिः विविक्तभावेङ्गितभूषणैः जनैः वृताः आश्रममण्डपोपमाः सपुष्पहासाः निवेशवीरुधः भृशं ददर्श।

विग्रहः—अनिन्द्यानि कर्माणि, तैरनिन्द्यकर्मभिः। विविक्तानि च भावाश्च इङ्गितञ्च भूषणं येषां तैः=विविक्तभावेङ्गितभूषणैः। आश्रमेषु ये मंडपाः=आश्रममण्डपास्ते उपमा यासां ताः=आश्रममण्डपोपमाः। पुष्पाण्येव हासः=पुष्पहासः, पुष्पहासेन सहिताः सपुष्पहासाः। निवेशानां वीरुधः=निवेशवीरुधः, ताः=निवेशवीरुधः।

अर्थः—सः=अर्जुनः। उपग्रामम्=ग्रामसमीपे। अनिन्द्यकर्मभिः=अनिषिद्धवृत्तिभिः। विविक्तभावेङ्गितभूषणैः=एकाग्रत्वभावेङ्गितालङ्कारैः। जनैः=लोकैः। वृताः=अधिष्ठिताः। आश्रममण्डपोपमाः=मुनिस्थानमण्डपतुल्याः। सपुष्पहासाः=

पुष्पविकाससहिताः । निवेशवीरुधः=गृहगुल्मिनीः । भृशम्=अत्यन्तम् । ददर्श= अवलोकयामास । अत्रोपमालङ्कारः ।

कोष:—'मण्डपोऽस्त्री जनाश्रयः' इत्यमरः । 'वीरुधौ वल्लिगुल्मिन्यौ' इति वैजयन्ती ।

हिन्दी—अर्जुन ने मार्ग में पड़नेवाले, विकसित फूलों से युक्त लता-गुल्मों को सादर देखा । उन ग्रामों में रहनेवाले लोग कृष्यादि कर्मों में लगे हुए एवं एकाग्रता, भाव इंगित ( चेष्टादि ) से युक्त थे । इस प्रकार के ग्रामवासियों से अधिष्ठित उन ग्रामों की शोभा आश्रम-मण्डपों सी प्रतीत होती थी ॥ १९ ॥

ततः स संप्रेक्ष्य शरद्गुणश्रियं शरद्गुणालोकनलोलचक्षुषम् ।
उवाच यक्षस्तमचोदितोऽपि गां न हीङ्गितज्ञोऽवसरेऽवसीदति ॥२०॥

अन्वयः—ततः सः यक्षः शरद्गुणश्रियं संप्रेक्ष्य शरद्गुणालोकनलोलचक्षुषम् तम् अचोदितः अपि गाम् उवाच । हि इंगितज्ञः अवसरे न अवसीदति ।

विग्रहः—शरदः गुणः शरद्गुणस्तस्य श्रीस्ताम्=शरद्गुणश्रियम् । शरद्-गुणस्य आलोकनं=शरद्गुणालोकनं तस्मिन्, शरद्गुणालोकने लोले चक्षुषी यस्य तम्=शरद्गुणालोकनलोलचक्षुषम् । न चोदितः=अचोदितः । इंगितं जानातीति= इंगितज्ञः ।

अर्थः—ततः=तदनन्तरम् । सः=पूर्वोक्तः । यक्षः । शरद्गुणश्रियं= शरच्छोभां संप्रेक्ष्य=दृष्ट्वा ! शरद्गुणालोकनलोलचक्षुषम्=शरच्छोभावलोकने सतृष्णनेत्रम् । तम्=अर्जुनम् । अचोदितः=अपृष्टः । अपि । गाम् = वाचम् । उवाच = प्रह । हि = यतः । 'इंगितज्ञः = भावज्ञः' अवसरे काले । न अवसीदति = नैव वाचं यच्छति । अत्रार्थान्तरन्यासालंकारः ।

कोष:—'लोलश्चलसतृष्णयोः' इत्यमरः । 'इङ्गितं हृद्गतो भावः' इति विश्वः ।

हिन्दी—तदनन्तर उस यक्ष ने शरत्कालीन शोभा को देखकर, शारदी-शोभा देखने में उत्सुक बने हुए अर्जुन से बिना पूछे ही कहना आरम्भ किया; क्योंकि अभिप्रायों को जाननेवाला व्यक्ति समय ( अवसर ) को नहीं चूकता है ॥ २० ॥

इयं शिवाया नियतेरिवायतिः कृतार्थयन्ती जगतः फलैः क्रियाः ।
जयश्रियं पार्थ ! पृथूकरोतु ते शरत्प्रसन्नाम्बुरनम्बुवारिदा ॥२१॥

अन्वयः—हे पार्थ, शिवायाः नियतेः आयतिः इव जगतः क्रियाः फलैः कृतार्थयन्ती प्रसन्नाम्बुः अनम्बुवारिदा इयं शरत् ते जयश्रियं पृथूकरोतु ।

विग्रहः—प्रसन्नानि अम्बूनि यस्यां सा = प्रसन्नाम्बुः । न सन्ति अम्बूनि येषु अनम्बवः, अनम्बवो वारिदा यस्यां सा = अनम्बुवारिदा । जयस्य श्रीः = जयश्रीस्तां = जयश्रियम् ।

अर्थः—पार्थ ! हे कुन्तीपुत्र ! शिवायाः=कल्याणकारिण्याः । नियतेः= प्रकृतेः । आयतिः=फलदानकालः । इव । जगतः=विश्वस्य । क्रियाः=कृष्यादि-कर्माणि । फलैः=लाभैः । कृतार्थयन्ती=सफलयन्ती प्रसन्नाम्बुः=निर्मलोदका । अनम्बुवारिदा=शुष्कमेघा इयं दृश्यमाना । शरत्=शरदृतुः । ते=तव । जय-श्रियम् = विजयलक्ष्मीम् । पृथूकरोतु=पृथुभावयुक्तां विदधातु । विस्तारयतु ।

कोषः—'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः । 'लाभो निष्पत्तियोगेषु बीजभावे घने फलम्' इति वैजयन्ती ।

हिन्दी—हे पार्थ ! यह शरदृतु कल्याणकारिणी प्रकृति के फलदान का समय है । यह संसार की सम्पूर्ण क्रियाओं को फल प्रदान करके सफल बनाते हैं । इसमें जल निर्मल एवं बादल जलहीन ( शुष्क ) होते हैं । यह शरदृतु आपको विजयश्री से शोभित करे ॥ २१ ॥

उपैति सस्यं परिणामरम्यतां नदीरनौद्धत्यमपङ्कतां मही ।
नवैर्गुणैः सम्प्रति संस्तवस्थिरं तिरोहितं प्रेम घनागमश्रियः ॥ २२ ॥

अन्वयः—सस्यं परिणामरम्यताम्, अनौद्धत्यम् नदीः, मही अपङ्कताम् उपैति । सम्प्रति नवैः गुणैः संस्तवस्थिरं घनागमश्रियः प्रेम तिरोहितम् ।

विग्रहः—परिणामेन या रम्यता, ताम्=परिणामरम्यताम् । उद्धतस्य भाव औद्धत्यम् । न औद्धत्यम्=अनौद्धत्यम् । पङ्कस्य भावः पङ्कता, नास्ति पङ्कता=अपङ्कता ताम्=अपङ्कताम् । संस्तवेन स्थिरं=संस्तवस्थिरम् । घनागमस्य श्रीस्तस्याः = घनागमश्रियः ।

अर्थः—सस्यम् = व्रीह्यादिकम् । परिणामरम्यताम् = परिपाकरमणीयताम् ( उपैति ) अनौद्धत्यम् = रम्यरूपत्वम् नदीः = सरितः । ( उपैति ) । मही = पृथ्वी । अपङ्कताम् = निष्पङ्कत्वम् । उपैति । सम्प्रति = इदानीम् । नवैः गुणैः =

पूर्वोक्तैः शरद्गुणैः। संस्तवस्थिरम्=परिचयेन दृढम्। घनागमश्रियः=प्रावृड्लक्ष्म्या। प्रेम। तिरोहितम्=निरर्थकं कृतम्। अत्र वास्तवालंकारः।

कोषः—'जम्बालः पंकोऽस्त्री शादकर्दमौ' इत्यमरः।

हिन्दी—शरदृतु में पकी हुई फसलें सुन्दर लगने लगती हैं, नदियाँ अपनी उच्छृङ्खलता ( विनाश कार्य को ) छोड़ देती हैं तथा भूमि कीचड़ रहित हो जाती है। इस समय शरत्कालीन गुणों से परिचित लोगों के परिचय से दृढ़ बना हुआ वर्षाकालीन शोभा-सम्बन्धी प्रेम तिरोहित हो जाता है ॥ २२ ॥

पतन्ति नास्मिन्विशदाः पतत्रिणो धृतेन्द्रचापा न पयोदपङ्क्तयः।
तथापि पुष्णाति नभः श्रियं परां न रम्यमाहार्यमपेक्षते गुणम् ॥ २३ ॥

अन्वयः—अस्मिन् विशदाः पतत्रिणः न पतन्ति, धृतेन्द्रचापाः पयोदपङ्क्तयः न ( पतन्ति )। तथापि नभः परां श्रियं पुष्णाति। रम्यम् आहार्यम् गुणम् न अपेक्षते।

विग्रहः—धृतम् इन्द्रचापं याभिस्ताः धृतेन्द्रचापः। पयोदानां पंक्तयः = पयोदपंक्तयः।

अर्थः—अस्मिन् = नभसि। विशदः=शुभ्राः। पतत्रिणः=पक्षिणः (बलाकाः) न पतन्ति = न प्रसरन्ति। धृतेन्द्रचापाः = इन्द्रचापयुताः। पयोदपंक्तयः = घनपंक्तयः। न ( पतन्ति =प्रसरन्ति )। तथापि=श्रीकारणाभावेऽपि। नभः = गगनम्। परां=महतीम्। श्रियम् = शोभाम् पुष्णाति। रम्यम् = रमणीयं वस्तु। आहार्यम् = आरोप्यमाणम्। गुणम्। नापेक्षते = नैवापेक्षां करोति। अत्रार्थान्तर-न्यासालङ्कारः।

कोषः—'नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम्' इत्यमरः।

हिन्दी—शरदृतु में आकाश में न तो विशदपक्षी ( बगुला ) उड़ते दिखलाई पड़ते हैं और न मेघमालाएँ ही इन्द्रधनुष से शोभित होती हैं। तथापि शरत्काल में आकाश बड़ा सुन्दर लगता है। स्वभावतः सुन्दर वस्तु आलङ्कारिक सामग्रियों की अपेक्षा नहीं करती है ॥ २३ ॥

विपाण्डुभिर्म्लानतया पयोधरैश्च्युताचिराभागुणहेमदामभिः।
इयं कदम्बानिलभर्तुरत्यये न दिग्वधूनां कृशता न राजते ॥ २४ ॥

अन्वयः—कदम्बानिलभर्तुः अत्यये म्लानतया विपाण्डुभिः च्युताचिराभागुण-

हेमदामभिः पयोधरैः दिग्वधूनाम् इयं कृशता न राजते ( इति ) न।

विग्रहः—कदम्बानिल एव भर्त्ता, तस्य = कदम्बानिलभर्त्तुः। अचिराभागुण एव दामानि = अचिराभागुणदामानि। च्युतान्यचिराभागुणदामानि येभ्यस्तैः = च्युताचिराभागुणहेमदामभिः। दिश एव वध्वस्तासां = दिग्वधूनाम्।

अर्थ— कदम्बानिलभर्त्तुः=वर्षर्तोः। अत्यये=विरहे। म्लानतया = निर्जलतया दुर्बलतया च। विपाण्डुभिः = विशदैः। च्युताचिराभागुणहेमदामभिः = च्युतविद्युल्लतागुणसुवर्णसूत्रालंकारैः। पयोधरैः=मेघैः स्तनैर्वा। दिग्वधूनाम् = दिशासुन्दरीणाम्। इयम् = एतादृशी। कृशता = क्षीणता। न राजते = न शोभते इति न। अर्थात् राजत एव। अत्र रूपकालंकारः।

कोषः—'स्तनाम्भोदौ पयोधरौ' इति वैजयन्ती।

हिन्दी—वर्षा ऋतु रूपी पति के चले जाने पर दिग्वधुओं की कृशता, निर्जलता रूपी खिन्नता से विद्युल्लता रूप सुवर्णसूत्राभरण से रहित होकर भी मेघरूपी स्तनमण्डल से क्यों शोभित नहीं होती है ? अर्थात् अवश्यमेव सुशोभित होती है॥ २४॥

विहाय वाञ्छामुदिते मदात्ययादरक्तकण्ठस्य रुते शिखण्डिनः।
श्रुतिः श्रयत्युन्मदहंसनिःस्वनं गुणाः प्रियत्वेऽधिकृता न संस्तवः॥२५॥

अन्वयः—मदात्ययात् अरक्तकण्ठस्य शिखण्डिनः उदिते रुते वाञ्छां विहाय श्रुतिः उन्मदहंसनिःस्वनं श्रयति। प्रियत्वे गुणाः अधिकृताः, न संस्तवः।

विग्रहः—मदस्य अत्ययः = मदात्ययः, तस्मात् = मदात्ययात्। अरक्तः कण्ठो यस्य सः अरक्तकण्ठस्तस्य अरक्तकण्ठस्य। उन्मदाश्च ते हंसाः = उन्मदहंसास्तेषां निःस्वनम् = उन्मदहंसनिःस्वनम्।

अर्थः—मदात्ययात् = मदक्षयात्। अरक्तकण्ठस्य = अश्राव्यस्वरस्य। शिखण्डिनः = मयूरस्य। उदिते = उच्चकैः। रुते = कूजिते। वाञ्छाम् = अभिलाषम्। विहाय = त्यक्त्वा। श्रुतिः = श्रोत्रम्। उन्मदहंसनिःस्वनम् = मत्तमरालकूजितम्। श्रयति = भजते। प्रियत्वे = प्रीतिकरत्वे। गुणाः अधिकृताः = नियुक्ताः। संस्तवः= परिचयः। नाधिकृतः। अत्रार्थान्तरन्यासालंकारः।

कोषः—'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः।

हिन्दी—शरदृतु में मद नष्ट हो जाने से कर्णकटुध्वनिवाले मयूर के उच्च

स्वर से कूजन को सुनने की इच्छा छोड़कर कान मदोन्मत्त हंसों की ध्वनि श्रवण करते हैं। प्रियता में गुण ही कारण होते हैं, चिरकालीन परिचय नहीं ॥ २५ ॥

अमी पृथुस्तम्बभृतः पिशङ्गतां गता विपाकेन फलस्य शालयः।
विकासि वप्राम्भसि गन्धसूचितं नमन्ति निघ्रातुमिवासितोत्पलम् ।२६।

अन्वयः—अमी पृथुस्तम्बभृतः फलस्य विपाकेन पिशङ्गतां गताः शालयः वप्राम्भसि विकासि गन्धसूचितम् असितोत्पलं निघ्रातुम् इव नयन्ति।

विग्रहः—पृथून् स्तम्बान् बिभर्त्तीति पृथुस्तम्बभृत्, तस्य=पृथुस्तम्बभृतः। वप्रस्याम्भः वप्राम्भस्तस्मिन् वप्राम्भसि। गन्धेन सूचितम् गन्धसूचितम्। असितम् च तत् उत्पलम्=असितोत्पलम्।

अर्थः—अमी=इमे। पृथुस्तम्बभृतः=पृथुगुच्छभृतः। फलस्य=प्रसवस्य विपाकेन=परिणामेन। पिशङ्गताम् गताः=पिशङ्गत्वं प्रापिताः। शालयः=व्रीहिविशेषाः। वप्राम्भसि=केदारजले। विकासि=विकसितम्। गन्धसूचितम्=गन्धज्ञापितम्। असितोत्पलम्=नीलोत्पलम्। निघ्रातुम्=आघ्रातुम्। इव। नमन्ति=नम्रतां यान्ति। अत्रोत्प्रेक्षालङ्कारः।

कोषः—'स्तम्बो गुच्छस्तृणादिनः' इत्यमरः। 'पुंनपुंसकयोर्वप्रः केदारः क्षेत्रम्' इत्यमरः। 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः।

हिन्दी—फसल के पकने के कारण पीले बने हुए ये लच्छेदार धान के पौधे पानी से भरे हुए खेतों में खिले हुए एवं सुगन्धित नील कमलों को सूंघने के लिए मानो झुक रहे हैं ॥ २६ ॥

मृणालिनीनामनुरञ्जितं त्विषा विभिन्नमम्भोजपलाशशोभया।
पयः स्फुरच्छालिशिखापिशङ्गितं द्रुतं धनुष्खण्डमिवाहिविद्विषः ॥२७॥

अन्वयः—मृणालिनीनां त्विषा अनुरञ्जितम् अम्भोजपलाशशोभया विभिन्नम् स्फुरच्छालिशिखापिशङ्गितम् द्रुतम् अहिविद्विषः धनुष्खण्डम् इव पयः।

विग्रहः—अम्भोजानां पलाशानाञ्च या शोभा, तया=अम्भोजपलाशशोभया। स्फुरद्भिः शालिशिखाभिः पिशङ्गितम्=स्फुरच्छालिशिखापिशङ्गितम्। अहिं विद्वेष्टीति अहिविद्विट्, तस्य=अहिविद्विषः। धनुषः खण्डं=धनुष्खण्डम्।

अर्थ:—मृणालिनीनां = कमलिनीनाम् । त्विषा = कान्त्या । अनुरञ्जितम् = तद्वर्णतामापादितम् । अम्भोजपलाशशोभया = पद्मपलाशकान्त्या । विभिन्नम् = मिश्रितम् । स्फुरच्छालिशिखापिशङ्गितम् = स्फुरत्कलमाग्रपिङ्गलीकृतम् । द्रुतं = पलायितम् । अहिविद्विष: = इन्द्रस्य । धनुष्खण्डम् इव = चापखण्डम् इव । पय: = वप्राम्भ: । अत्र उत्प्रेक्षालङ्कार: ।

कोष:—'सर्पे वृत्रासुरेऽप्यहि:' इति वैजयन्ती ।

हिन्दी—धान के खेतों में भरा हुआ जल कमल-लताओं की कान्ति से शोभित, कमल दल की शोभा से मिश्रित तथा झूमते हुए धानों की बालियों से पीला मालूम पड़ता था । हरे, लाल एवं पीले आदि अनेक वर्णों से युक्त वह जल इस प्रकार इन्द्र धनुष की शोभा धारण करता था ।। २७ ।।

विपाण्डु संव्यानमिवानिलोद्धतं निरुन्धती: सप्तपलाशजं रज: ।
अनाविलोन्मीलितबाणचक्षुष: सपुष्पहासा: वनराजियोषित: ।। २८ ।।

अन्वय:—विपाण्डु अनिलोद्धतम् सप्तपलाशजं रज: संव्यानम् इव निरुन्धती: अनाविलोन्मीलितबाणचक्षुष: सपुष्पहासा: वनराजियोषित: ।

विग्रह:—अनिलेन उद्धतम् = अनिलोद्धतम् । सप्त पलाशानि येषां ते = सप्तपलाशा: । तेषां पुष्पाणि = सप्तपलाशानि, तेषु जातं = सप्तपलाशजम् । अनाविलानि उन्मीलितानि च बाणानि चक्षूंषि इव यासां ता: = अनाविलोन्मीलितबाणचक्षुष: । पुष्पाणि हासा इव तै: सह वर्त्तन्त इति सपुष्पहासा: वनराजय: योषित इव = वनराजियोषित: ।

अर्थ:—विपाण्डु = शुभ्रम् । अनिलोद्धतम् = पवनोत्क्षिप्तम् । सप्तपलाशजम् = सप्तपलाशजातं । रज: = परागम् । संव्यानम् = उत्तरीयम् इव । निरुन्धती: = निवारयन्ती: । अनाविलोन्मीलितबाणचक्षुष: = अकलुषोन्मीलितनीलसैरेयकचक्षुष: । सपुष्पहासा: = विकसितकुसुमा: । वनराजियोषित: = वनराजिवध्व: ।

कोष:—'संव्यानमुत्तरीयञ्च' इत्यमर: । 'नीलस्त्वर्थगलो दासी बाण ओदन' इति धन्वन्तरि: ।

हिन्दी—वनराजियाँ कामिनियों के समान हैं, उनके पुष्प हास के समान तथा बाणवृक्ष ( कटैया ) निर्मल, खुली हुई आँखों के सदृश है । वायु के द्वारा

उड़ाया हुआ छितौन का पीला पराग उनके पीले वस्त्रों सा है। मानों उस पीत रजरूपी वस्त्र को वायु द्वारा उड़ाये जाने पर वे वनराजि-वधुएँ उसे रोक सी रही हैं ॥ २८ ॥

अदीपितं वैद्युतजातवेदसा सिताम्बुदच्छेदतिरोहितातपम् ।
ततान्तरं सान्तरवारिसीकरैः शिवं नभोवर्त्म सरोजवायुभिः ॥ २९ ॥

अन्वयः—वैद्युतजातवेदसा अदीपितम् सिताम्बुदच्छेदतिरोहितातपम् सान्तरवारिसीकरैः ततान्तरं सरोजवायुभिः शिवं नभोवर्त्मं ।

विग्रहः—विद्युति भवः जातवेदाः वैद्युतजातवेदास्तेन वैद्युतजातवेदसा । सिताम्बुदानां छेदैः तिरोहितम् आतपम्=सिताम्बुदच्छेदतिरोहितातपम् । वारीणां सीकराः वारिसीकराः । अन्तरेण सहिताः वारिसीकराः, तैः सान्तरवारिसीकरैः । ततम् अन्तरं यस्मिन् तत् ततान्तरम् । सरोजानां वायुभिः सरोजवायुभिः । नभसो वर्त्म=नभोवर्त्म ।

अर्थ - वैद्युतजातवेदसा=वैद्युताग्निना । अदीपितम्=अप्रकाशितम् । सिताम्बुदच्छेदतिरोहितातपम्=शुभ्राम्भोदखण्डैस्तिरोहितघर्मम् । सान्तरवारिसीकरैः=विरलाम्बुकणैः । ततान्तरम्=व्याप्तमध्यम् । सरोजवायुभिः=कमलगन्धयुक्तपवनैः । शिवम्=रम्यम् । नभोवर्त्म=आकाशमार्गम् । अत्र स्वभावोक्तिरलङ्कारः ।

कोषः—'प्रकाशो द्योत आतपः' इत्यमरः । 'नभोऽन्तरिक्षं गगनम्' इत्यमरः ।

हिन्दी – आकाशमार्ग विद्युत्प्रकाश से प्रकाशित नहीं हो रहा था, शुभ्र-बादलों से सूर्य की धूप भी छिप गई थी। जलकणों से युक्त तथा कमल-सुरभि से सुगन्धित वायु के द्वारा वह (आकाशमार्ग) अतीव रमणीय बन गया था ॥ २९ ॥

सितच्छदानामपदिश्य धावतां रुतैरमीषां प्रथिताः पतत्रिणाम् ।
प्रकुर्वते वारिदरोधनिर्गताः परस्परालापमिवामला दिशः ॥ ३० ॥

अन्वयः—अपदिश्य धावताम् अमीषां सितच्छदानां प्रथिताः पतत्रिणां रुतैः वारिदरोधनिर्गताः अमलाः दिशः परस्परम् आलापम् इव प्रकुर्वते ।

विग्रहः—सिताः छदाः सन्ति येषां ते तेषाम्=सितच्छदानाम् । वारिदानां रोधः=वारिदरोधः । वारिदरोधेन निर्गताः=वारिदरोधनिर्गताः ।

अर्थः--अपदिश्य धावताम् = गच्छताम् । अमीषाम् । सितच्छदानाम् = हंसानाम् । पतत्रिणाम् = पक्षिणाम् । रुतैः = कूजनैः । प्रथिताः वारिदरोध-निर्गताः = मेघोपरोधनिर्मुक्ताः । अमलाः = मलरहिताः । दिशः = ककुभः । परस्परम् = अन्योन्यम् । आलापम् = वार्ताम् इव । प्रकुर्वते = कुर्वन्ति । अत्रोत्प्रेक्षालङ्कारः ।

कोषः--'हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः' इत्यमरः ।

हिन्दी—( उपर्युक्त वस्तुओं के कारण ) आकाशमार्ग में दौड़ते (उड़ते) हुए श्वेत पंखों वाले पक्षियों ( हंसों ) के कलकूजन से युक्त दिशायें बादलों के अवरोध से मुक्त होकर निर्मल हो गई थीं । ऐसा ज्ञात होता था जैसे दिशायें आपस में वार्त्तालाप कर रही हों ॥ ३० ॥

विहारभूमेरभिघोषमुत्सुकाः शरीरजेभ्यश्च्युतयूथपंक्तयः ।
असक्तमूधांसि पयः क्षरन्त्यमूरुपायनानीव नयन्ति धेनवः ॥ ३१ ॥

अन्वयः—विहारभूमेः अभिघोषम् उत्सुकाः च्युतयूथपंक्तयः अमूः धेनवः असक्तम् पयः क्षरन्ति । ऊधांसि शरीरजेभ्यः उपायनानीव नयन्ति ।

विग्रहः—विहारभूमेः = विहारस्य भूमिस्तस्याः । च्युताः यूथानां पंक्तयः यासु ताः च्युतयूथपंक्तयः । शरीरेभ्यः जाताः = शरीरजाः, तेभ्यः = शरीरजेभ्यः ।

अर्थः—विहारभूमेः = गोचरात् । अभिघोषम् = व्रजम् । उत्सुकाः = उत्कण्ठिताः । च्युतयूथपंक्तयः = त्रुटितश्रेणीबन्धाः । अमूः धेनवः = गावः । असक्तम् = अप्रतिबन्धम् । पयः = क्षीरम् । क्षरन्ति = स्रवन्ति । ऊधांसि = पयोधरोर्ध्वभागाः । शरीरजेभ्यः = अपत्येभ्यः । उपायनानि इव अतितोषकारीणि इव नयन्ति = प्रापयन्ति । अत्रोत्प्रेक्षालंकारः ।

कोषः—'घोषः आभीरपल्ली स्यात्' इत्यमरः । 'सजातीयैः कुलं यूथम्' इत्यमरः ।

हिन्दी—चरागाहों से निवासस्थान की ओर लौटती हुई गाएँ अपने बछड़ों को देखने के लिए उत्सुक हो रहीं थीं । अतएव दौड़-दौड़ कर उन्होंने अपनी पंक्तियाँ तोड़ डालीं थीं । वे अपने बच्चों का स्मरण कर लगातार दूध टपका रही थी । दूध से भरे हुए स्तन मानों वे गाएँ अपने बच्चों को भेंट में देने के लिए ला रही थीं ॥ ३१ ॥

जगत्प्रसूतिर्जगदेकपावनी व्रजोपकण्ठं तनयैरुपेयुषी ।
द्युतिं समग्रां समितिर्गवामसावुपैति मन्त्रैरिव संहिताहुतिः ॥ ३२ ॥

अन्वयः—जगत्प्रसूतिः जगदेकपावनी व्रजोपकण्ठं तनयैः उपेयुषी, असौ गवां समितिः मन्त्रैः संहिताहुतिः इव समग्रां द्युतिम् उपैति ।

विग्रहः—जगतः प्रसूतिः=जगत्प्रसूतिः । जगताम् एकपावनी=जगदेकपावनी । व्रजस्योपकण्ठम्=व्रजोपकण्ठम् । संहिता आहुतिरिव=संहिताहुतिः ।

अर्थः—जगत्प्रसूतिः=जगत्कारणम् । जगदेकपावनी=जगतां मुख्यशोधनी । व्रजोपकण्ठम्=गोष्ठान्तिकम् । तनयैः=वत्सैः । उपेयुषी=संगता असौ । गवां=धेनूनां । समितिः=संहतिः । मन्त्रैः = ऋग्यजुरादिभिः । संहिताहुतिः=योजिताहुतिः । इव, समग्रां = सम्पूर्णाम् । द्युतिम्=कान्तिम् । उपैति = गच्छति ।

कोषः—'उपकण्ठान्तिकाभ्यर्णाभ्यग्राः' इत्यमरः । 'मन्त्रो ऋगादिगुह्योक्तिः' इति वैजयन्ती ।

हिन्दी – संसार की रक्षा करने में समर्थ, संसार को एकमात्र पावन करने वाली गायें अपने बछड़ों के संग गोशालाओं में खड़ी थीं । गायों का यह समूह ऋग्यजुरादि मन्त्रों से युक्त हव्यादि के समान रक्षाकार्य एवं पवित्र बनाने का कार्य करता हुआ अपनी सम्पूर्ण शोभा को प्राप्त हो रहा था ॥ ३२ ॥

कृतावधानं जितबर्हिणध्वनौ सुरक्तगोपीजनगीतनिःस्वने ।
इदं जिघत्सामपहाय भूयसीं न सस्यमभ्येति मृगीकदम्बकम् ॥ ३३ ॥

अन्वयः—जितबर्हिणध्वनौ सुरक्तगोपीजनगीतनिःस्वने कृतावधानम् इदम् मृगीकदम्बकं भूयसीं जिघत्साम् अपहाय सस्यं नाभ्येति ।

विग्रहः—बर्हिणानां ध्वनिः बर्हिणध्वनिः । जितो बर्हिणध्वनिः येन तस्मिन् = जितबर्हिणध्वनौ । गीतस्य निःस्वनो गीतनिस्वनः, सुरक्तः यः गोपीजनः=सुरक्तगोपीजनस्तस्य गीतनिःस्वनस्तस्मिन्=सुरक्तगोपीजनगीतनिःस्वने । कृतम् अवधानम् येन तत्=कृतावधानम् । मृगीणां कदम्बकं=मृगीकदम्बकम् । अत्तुमिच्छा जिघत्सा ताम्=जिघत्साम् ।

अर्थः—जितबर्हिणध्वनौ=केकानुकारिणि । सुरक्तगोपीजनगीतनिःस्वने = कलकण्ठवल्लवीजनगाने । कृतावधानम् = दत्तैकाग्रचित्तम् । इदम् = पुरोवर्ति । मृगीकदम्बकम् = मृगीयूथम् । भूयसीं=महतीम् । जिघत्साम्=अत्तुमिच्छाम् ।

अपहाय = विहाय । सस्यं = धान्यादिकम् । न अभ्येति = नोपैति ।

कोषः—'मृगे कुरंगवातायुहरिणाजिनयोनयः' इत्यमरः ।

हिन्दी—अर्जुन ने देखा—मयूरों की ध्वनि को जीतनेवाली कलकण्ठवाली गोप-कामिनियों के गान में दत्तचित्त होकर मृगीसमूह ने प्रबल चरने की इच्छा को ही छोड़ दिया अर्थात् गीतासक्ति से हरिणियाँ भूख-प्यास भी भूल गईं ॥ ३३ ॥

असावनास्थापरयाऽवधीरितः सरोरुहिण्या शिरसा नमन्नपि ।
उपैति शुष्यन्कलमः सहाम्भसा मनोभुवा तप्त इवाभिपाण्डुताम् ॥ ३४ ॥

अन्वयः—शिरसा नमन् अपि अनास्थापरया सरोरुहिण्या अवधीरितः अम्भसा सह शुष्यन् असौ कलमः मनोभुवा तप्त इव अभिपाण्डुताम् उपैति ।

विग्रहः—अनास्थायां परा तया = अनास्थापरया । मनसा भवतीति मनोभूः तेन = मनोभुवा ।

अर्थः—शिरसा = मूर्ध्ना । नमन् = प्रणमन् । अपि । अनास्थापरया = अनादरपरया । सरोरुहिण्या = कमलिन्या । अवधीरितः = अवज्ञातः । अम्भसा = जलेन । सह । शुष्यन् असौ कलमः = शालिविशेषः । मनोभुवा = मदनेन । तप्त इव = कामार्त्त इव । अभिपाण्डुताम् = पाण्डुवर्णत्वम् । उपैति = गच्छति । अत्र समासोक्त्युपमयोः अङ्गाङ्गिभावेन संकरालङ्कारः ।

कोषः—'शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी' इत्यमरः ।

हिन्दी—लटकती हुई बालियों वाला कलम नामक विशेष धान अनादरकारिणी कमलिनी से तिरस्कृत होकर, जल के साथ-साथ स्वयं सूखा जा रहा है तथा कामार्त होकर दिन-प्रतिदिन पीला सा पड़ता जा रहा है ॥ ३४ ॥

अमी समुद्धूतसरोजरेणुना हृता हृतासारकणेन वायुना ।
उपागमे दुश्चरिता इवापदां गतिं न निश्चेतुमलं शिलीमुखाः ॥ ३५ ॥

अन्वयः—समुद्धूतसरोजरेणुना हृतासारकणेन वायुना हृताः अमी शिलीमुखाः आपदाम् उपागमे दुश्चरिताः इव गतिं निश्चेतुं न अलम् ।

विग्रहः—सरोजानां रेणुः = सरोजरेणुः = समुद्धूता सरोजरेणुः येन, तेन = समुद्धूतसरोजरेणुना । हृता आसारकणाः येन तेन = हृतासारकणेन ।

अर्थः—समुद्धूतसरोजरेणुना = उद्धूतकमलकेसरेण । हृतासारकणेन =

उपात्ताम्बुकणेन। वायुना=पवनेन। हृताः=आकृष्टाः। अमी शिलीमुखाः=भ्रमराः। आपदाम्=आपत्तीनाम्। उपागमे=प्राप्ते, दुश्चरिताः=चोरादय इव, गतिम्=उपायं। निश्चेतुं=निश्चयं कर्त्तुं। न अलम्=न समर्थाः।

कोषः—'धारासम्पात आसारः' इत्यमरः। 'देशोपायगमे गतिः।' इति वैजयन्ती।

हिन्दी—उड़ती हुई सरोजरेणु (कमल-केसर) वाली तथा वर्षा के जलकणों से युक्त वायु द्वारा उड़ाये गये ये भौंरे, आपत्ति में पड़े हुए चोरादि दुष्टों के समान अपने रक्षोपाय का कोई निर्णय नहीं कर पा रहे थे॥ ३५॥

मुखैरसौ विद्रुमभङ्गलोहितैः शिखाः पिशङ्गीः कलमस्य बिभ्रती।
शुकावलिर्व्यक्तशिरीषकोमला धनुःश्रियं गोत्रभिदोऽनुगच्छति॥ ३६॥

अन्वयः—विद्रुमभङ्गलोहितैः मुखैः पिशङ्गीः कलमस्य शिखाः बिभ्रती व्यक्तशिरीषकोमला असौ शुकावलिः गोत्रभिदः धनुःश्रियम् अनुगच्छति।

विग्रहः—विद्रुमस्य भङ्गः विद्रुमभङ्गः। विद्रुमभङ्गवल्लोहितानि तैः=विद्रुमभङ्गलोहितैः। व्यक्तशिरीषवत् कोमला=व्यक्तशिरीषकोमला। धनुषः श्रीः=धनुःश्रीस्ताम्=धनुःश्रियम्। शुकानामवलिः=शुकावलिः।

अर्थः—विद्रुमभङ्गलोहितैः=विद्रुमखण्डवद्रक्तैः। मुखैः=आननैः। पिशङ्गीः=पिशङ्गवर्णाः। कलमस्य=शालिविशेषस्य। शिखाः=शाखाग्राणि। बिभ्रती=धारयन्ती। व्यक्तशिरीषकोमला=विकसितशिरीषसवर्णा, असौ शुकावलिः=शुकपंक्तिः। गोत्रभिदः=इन्द्रस्य। धनुःश्रियं=धनुषः शोभाम्। अनुगच्छति=अनुकरोति। अत्रोपमालङ्कारः।

कोषः—'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इत्यमरः।

हिन्दी—प्रवाल के टुकड़ों के समान अरुण मुखों (चञ्चुओं) से पीले रंग की धान की पकी हुई बालियों को धारण करते हुए विकसित शिरीष कुसुम के समान शुकों की पंक्ति इन्द्रधनुष की शोभा को धारण कर रही थी॥ ३६॥

इति कथयति तत्र नातिदूरादथ ददृशे पिहितोष्णरश्मिबिम्बः।
विगलितजलभारशुक्लभासां निचय इवाम्बुमुचां नगाधिराजः॥३७॥

अन्वयः—अथ तत्र इति कथयति नातिदूरात् पिहितोष्णरश्मिबिम्बः नगाधिराजः विगलितजलभारशुक्लभासाम् अम्बुमुचाम् निचयः इव ददृशे।

विग्रहः—उष्णरश्मेः बिम्बः उष्णरश्मिबिम्बः । पिहितः उष्णरश्मिबिम्बो येन सः पिहितोष्णरश्मिबिम्बः । नगानामधिराजः = नगाधिराजः । विगलितः जलभारः येषां ते = विगलितजलभाराः, अतएव शुक्लभासः, तेषां = विगलितजलभारशुक्लभासाम् । अम्बु मुञ्चन्तीत्यम्बुमुचः, तेषामम्बुमुचाम् ।

अर्थः—अथ = अनन्तरम् । तत्र = तस्मिन् पूर्वोक्ते यक्षे, इति = इत्थं । कथयति = भणति सति । नातिदूरात् = अनतिदूरात् । पिहितोष्णरश्मिबिम्बः = तिरोहितसूर्यबिम्बः । नगाधिराजः = हिमालयः । विगलितजलभारशुक्लभासाम् = त्यक्ताम्बुभारशुभ्रभासाम् । अम्बुमुचाम् = मेघानाम् । निचयः = समूह इव ददृशे = दृष्टः ।

कोषः—'भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः' इत्यमरः ।

हिन्दी—इस प्रकार वार्तालाप करते हुए यक्ष ने निकट ही भगवान् भुवनभास्कर के मण्डल को तिरोहित कर देनेवाले नगाधिराज हिमालय को देखा। वह हिमालय जलभार से रहित, शुभ्र कान्तिवाले बादलों के समूह के समान दिखलाई पड़ा ॥ ३७ ॥

तमतनुवनराजिश्यामितोपत्यकान्तं नगमुपरि हिमानीगौरमासाद्य जिष्णुः।
व्यपगतमदरागस्यानुसस्मार लक्ष्मीमसितमधरवासो बिभ्रतः सीरपाणेः॥

अन्वयः—जिष्णुः अतनुवनराजिश्यामितोपत्यकान्तम् उपरि हिमानीगौरम् तं नगम् आसाद्य व्यपगतमदरागस्य असितम् अधरवासः बिभ्रतः सीरपाणेः लक्ष्मीम् अनुसस्मार ।

विग्रहः—अतनुभिः वनराजिभिः श्यामिताः उपत्यकान्ता यस्य तम् अतनुवनराजिश्यामितोपत्यकान्तम् । हिमानीवद् गौरस्तम् = हिमानीगौरम् । व्यपगतो मदरागो यस्य तस्य व्यपगतमदरागस्य । सीरः पाणौ यस्य तस्य = सीरपाणेः ।

अर्थः—जिष्णुः = अर्जुनः । अतनुवनराजिश्यामितोपत्यकान्तम् = महद्वनश्रीश्यामलासन्नभूमिप्रदेशम् । उपरि । हिमानीगौरम् = हिमसंघातशुभ्रम् । तं पूर्वोक्तम् । नगम् = पर्वतम् (हिमालयम्) । आसाद्य = प्राप्य । व्यपगतमदरागस्य = निवृत्तमदरागस्य । असितं = नीलम् । अधरवासः = उत्तरीयवस्त्रम् । बिभ्रतः = धारयतः । सीरपाणेः = हलायुधस्य । लक्ष्मीं = शोभाम् । अनुसस्मार = स्मृतवान् । अत्र स्मरणालङ्कारः ।

कोष:—'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका ।' इत्यमरः । 'हलायुधः, नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली । संकर्षणः सीरपाणि' इत्यमरः ।

हिन्दी—विस्तृत वनपंक्तियों से नाली बनी उपत्यकाओं ( पर्वत का निचला भाग ) से घिरे हुए, बर्फ की चट्टानों से ढके शुभ्र वर्ण के हिमालय पर्वत पर पहुँचकर अर्जुन ने हाला के राग से मुक्त, नील वस्त्र पहने हुए सीरपाणि बलराम की शोभा का स्मरण किया ॥ ३८ ॥

इति भारविकृतौ सुधाटीकासंवलिते किरातार्जुनीये चतुर्थः सर्गः ।

—: ० :—

## पञ्चमः सर्गः

अथ हिमवद्वर्णनमारभते। तत्र पञ्चदशभिः कुलकमाह—

अथ जयाय नु मेरुमहीभृतो रभसया नु दिगन्तदिदृक्षया।
अभिययौ स हिमाचलमुच्छ्रितं समुदितं नु विलंघयितुं नभः ॥ १ ॥

अन्वयः—अथ सः मेरुमहीभृतः जयाय नु, रभसया दिगन्तदिदृक्षया नु, नभः विलंघयितुं नु समुदितम् उच्छ्रितं हिमाचलम् अभिययौ।

विग्रहः—महीं बिभर्तीति महीभृत् तस्य = महीभृतः। द्रष्टुमिच्छा दिदृक्षा, दिगन्तानां दिदृक्षा तया = दिगन्तदिदृक्षया।

अर्थः—अथ = अनन्तरम्। सः = अर्जुनः। मेरुमहीभृतः = सुमेरुपर्वतस्य। जयाय = जयार्थम्। नु (इति वितर्के) रभसया = उत्कण्ठया। दिगन्तदिदृक्षया नु = दिशावलोकनेच्छया वा। नभः = आकाशम्। विलंघयितुम् नु = लंघयितुम् वा। समुदितम् = समुत्पतितमिव। उच्छ्रितम् = अत्युन्नतम्। हिमाचलम् = एतन्नामकपर्वतम्। अभिययौ = ययौ। द्रुतविलम्बितवृत्तम्। अत्रोत्प्रेक्षालङ्कारः ॥ १ ॥

कोषः—'नु पृच्छायां वितर्के च' इत्यमरः। 'रभसो वेगहर्षयोः' इति वैजयन्ती।

हिन्दी—(शरद ऋतु की शोभा देखने के पश्चात्) अर्जुन कदाचित् हिमालय को देखने के लिए हिमालय पर्वत पर गये। यह हिमालय इतना ऊँचा था मानो वह सुमेरु पर्वत को अपनी उच्चता से जीतना चाहता हो! अथवा वह दिशाओं के अवसान अपनी इस उच्चता से देखने को उत्कण्ठित हो रहा हो! अथवा वह आकाश को पार करना चाहता हो! ॥ १ ॥

तपनमण्डलदीपितमेकतः सततनैशतमोवृतमन्यतः।
हसितभिन्नतमिस्रचयं पुरः शिवमिवानुगतं गजचर्मणा ॥ २ ॥

अन्वयः—एकतः तपनमण्डलदीपितम् अन्यतः सततनैशतमोवृतम् पुरः हसितभिन्नतमिस्रचयम् गजचर्मणा अनुगतं शिवम् इव।

विग्रहः—तपनमण्डलेन दीपितम् = तपनमण्डलदीपितम्। सततेन नैशेन

तमसा वृतम् = सततनैशतमोवृतम् । हसितेन भिन्नः तमिस्रचयः यस्य तम् = हसित-भिन्नतमिस्रचयम् । गजस्य चर्म = गजचर्म, तेन गजचर्मणा ।

अर्थः—एकतः = एकस्मिन्भागे । तपनमण्डलदीपितम् = सूर्यमण्डलप्रकाशितम् । अन्यतः = अन्यस्मिन्भागे । सततनैशतमोवृतम् = अनवरतनिशातमसाच्छन्नम् । पुरः = अग्रे । हसितभिन्नतमिस्रचयम् = अट्टहासनिरस्ततमस्तोमम् । गजचर्मणा = हस्तिचर्मणा । अनुगतं = पश्चाद्व्याप्तम् । शिवम् = शङ्करम् । इव स्थितम् । अत्रातिशयोक्तिरलङ्कारः ।

कोषः—'पश्चात्सादृश्ययोरनु' इत्यमरः ।

हिन्दी—इस ( हिमालय ) की उच्चता के कारण सूर्यमण्डल के सामने वाला भाग सदेव दीपित रहता है और उसका विपरीत भाग घने अन्धकार से आवृत रहता है अर्थात् एक भाग में आकाश होता है तो दूसरे में घोर अन्धकार । इससे प्रतीत होता है कि हाथी की खाल ओढ़े हुए, अट्टहास से अन्धकार को फाड़ते हुए यह साक्षात् शिव हों ।। २ ।।

क्षितिनभःसुरलोकनिवासिभिः कृतनिकेतमदृष्टपरस्परैः ।
प्रथयितुं विभुतामभिनिर्मितं प्रतिनिधिं जगतामिव शम्भुना ।। ३ ।।

अन्वयः—अदृष्टपरस्परैः क्षितिनभःसुरलोकनिवासिभिः कृतनिकेतम् शम्भुना विभुतां प्रथयितुम् अभिनिर्मितं जगतां प्रतिनिधिमिव ।

विग्रहः—अदृष्टाः परस्परे यैस्ते = अदृष्टपरस्परास्तैः तथोक्तैः । क्षितौ नभसि सुरलोके च निवसन्तीति, तैः = क्षितिनभःसुरलोकनिवासिभिः । कृतं निकेतं येन तम् = कृतनिकेतम् ।

अर्थः—अदृष्टपरस्परैः = अदृष्टान्योन्यैः । क्षितिनभःसुरलोकनिवासिभिः = भूर्भुवःस्वर्लोकवासिभिः । कृतनिकेतं = कृतावासम् । शम्भुना = शिवेन । विभुतां = स्वसामर्थ्यम् । प्रथयितुम् = प्रस्तारयितुम् । अभिनिर्मितम् = निर्मितम् । जगतां = लोकानां । प्रतिनिधिम् = प्रतिकृतिम् इव स्थितम् । अत्रोत्प्रेक्षालङ्कारः ।

कोषः—'प्रतिकृतिरर्चा पुंसि, प्रतिनिधिरुपमोपमानं स्यात्' इत्यमरः ।

हिन्दी—पृथ्वी, आकाश तथा सुरलोक वासी परस्पर में अदृष्ट होकर ( एक दूसरे को न देखते हुए ) हिमालय पर्वत पर रहते हैं अत एव प्रतीत होता है कि भगवान् शङ्कर ने अपने यश का प्रचार करने के लिए इस हिमालय को विश्व के प्रतिनिधि रूप में बनाया है ।। ३ ।।

भुजगराजसितेन नभःश्रिता कनकराजिविराजितसानुना ।
समुदितं निचयेन तडित्वतीं लघयता शरदम्बुदसंहतिम् ॥ ४ ॥

अन्वयः—भुजगराजसितेन नभःश्रिता कनकराजिविराजितसानुना तडित्वतीम् शरदम्बुदसंहतिं लघयता निचयेन समुदितम् ।

विग्रहः—भुजगानां राजा भुजगराजः । भुजगराजवदसौ सितस्तेन=भुजगराजसितेन । नभः श्रयतीति तेन=नभःश्रिता । कनकस्य राजयः कनकराजयः, ताभिः विराजिताः सानवः यस्य तेन=कनकराजिविराजितसानुना । शरदः अम्बुदाः शरदम्बुदाः, तेषां संहतिस्ताम् = शरदम्बुदसंहतिम् ।

अर्थः—भुजगराजसितेन=शेषाहिधवलेन । नभःश्रिता=गगनस्पृशा । कनकराजिविराजितसानुना=स्वर्णरेखाशोभितसानुना । तडित्वतीं=विद्युद्युक्ताम् । शरदम्बुदसंहतिम्=शरन्मेघचयम् । लघयता=लघूकुर्वता । निचयेन=समूहेन । समुदितम् = समुद्गतम् । अत्रोपमालङ्कारः ।

कोषः—'कूटोऽस्त्री शिखरं शृङ्गम्' इत्यत्र निचयशब्दः शृङ्गवाची भवितुमर्हति ।

हिन्दी—शेषनाग के समान श्वेत तथा स्वर्ण रेखाओं से सुशोभित हिमालय का शिखरसमूह इतना ऊँचा है कि वह विद्युद्-युक्त, शरत्कालीन मेघमालाओं को तिरस्कृत कर रहा है ॥ ४ ॥

मणिमयूखचयांशुकभासुराः सुरवधूपरिभुक्तलतागृहाः ।
दधतमुच्चशिलान्तरगोपुराः पुर इवोदितपुष्पवना भुवः ॥ ५ ॥

अन्वयः—मणिमयूखचयांशुकभासुराः सुरवधूपरिभुक्तलतागृहाः उच्चशिलान्तरगोपुराः उदितपुष्पवनाः भुवः पुर इव दधतम् ।

विग्रहः—मणिमयूखानां चयः अंशुकानीव, तैः भासुराः=मणिमयूखचयांशुकभासुराः । सुरवधूभिः परिभुक्ताः लताः गृहा इव=सुरवधूपरिभुक्तलतागृहाः । उच्चानि शिलान्तराणि गोपुराणीव यासु ताः=उच्चशिलान्तरगोपुराः । पुष्पाणां वनानि पुष्पवनानि, उदितानि पुष्पवनानि यासु ताः=उदितपुष्पवनाः ।

अर्थः—मणिमयूखचयांशुकभासुराः=मणिकिरणसमूहवस्त्रभासुराः । सुरवधूपरिभुक्तलतागृहाः=सुराङ्गनोपभुक्तलतागृहाः । उच्चशिलान्तरगोपुराः=उच्चशिलामध्यपुरद्वाराः । उदितपुष्पवनाः=अर्जितकुसुमकाननाः । भुवः=पृथिवीः । पुरः=नगराणि । इव=सदृशम् । दधतम्=धारयन्तम् । अत्रोपमालङ्कारः ।

कोषः—'किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः' इत्यमरः।

हिन्दी—इस हिमालय के भूभाग नगर के समान हैं। ये नगर विविध रत्नों की किरणों से भासित तथा देवाङ्गनाओं द्वारा उपभुक्त लतागृहों वाले हैं। ऊँची-ऊँची शिलाओं के बीच के रिक्त स्थान उसके गोपुर ( पुर द्वार ) हैं और उनमें सुन्दर पुष्पवाटिकाएँ भी हैं ॥ ५ ॥

अविरतोज्झितवारिविपाण्डुभिर्विरहितैरचिरद्युतितेजसा।
उदितपक्षमिवारतनिःस्वनैः पृथुनितम्बविलम्बिभिरम्बुदैः ॥ ६ ॥

अन्वयः—अविरतोज्झितवारिविपाण्डुभिः अचिरद्युतितेजसा विरहितैः आरत-निःस्वनैः पृथुनितम्बविलम्बिभिः अम्बुदैः उदितपक्षम् इव।

विग्रहः—अविरतम् उज्झितवारयः, अत एव विपाण्डवश्च, तैः अविरतोज्झित-वारिविपाण्डुभिः। अचिरद्युतेस्तेजस्तेन=अचिरद्युतितेजसा। आरतं निःस्वनं येषां तैः=आरतनिःस्वनैः। पृथुभिः नितम्बविलम्बिभिः=पृथुनितम्बविलम्बिभिः। उदितानि पक्षाणि यस्य तम् उदितपक्षम्।

अर्थः—अविरतोज्झितवारिविपाण्डुभिः = अविच्छिन्नोज्झितजलपाण्डुभिः। अचिरद्युतितेजसा = विद्युत्तेजसा। विरहितैः = रहितैः। आरतनिःस्वनैः = प्रशान्त-गर्जितैः। पृथुनितम्बविलम्बिभिः = महाकटकसङ्गिभिः। अम्बुदैः = घनैः। उदित-पक्षम् इव = सञ्जातपक्षमिव। स्थितम्। अत्रोत्प्रेक्षालङ्कारः।

कोषः—'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः।

हिन्दी—इस हिमालय के विपुल नितम्बभाग के समान भूभाग पर बादल उठते रहते हैं। ये उठे हुए बादल अविरल वर्षा करते रहने के कारण भूरे रंग के हो गये हैं। बिजली की चमक समाप्त हो जाने पर भी वे गम्भीर गर्जन कर रहें हैं। वे बादल हिमालय के नये उत्पन्न हुए पंखों के समान दिखलाई पड़ रहे हैं ॥ ६ ॥

दधतमाकरिभिः करिभिः क्षतैः समवतारसमैरसमैस्तटैः।
विविधकामहिता महिताम्भसः स्फुटसरोजवना जवना नदीः ॥ ७ ॥

अन्वयः—आकरिभिः करिभिः क्षतैः समवतारसमैः असमैः तटैः महिताम्भसः विविधकामहिताः स्फुटसरोजवनाः जवनाः नदीः दधतम्।

विग्रहः—समवतारेषु समाः तैः समवतारसमैः। महितानि अम्भांसि यासु

ता:=महिताम्भस: । विविधेभ्य: कामेभ्य: हिता:=विविधकामहिता: । स्फुटानि सरोजानां वनानि यासु ता:=स्फुटसरोजवना: ।

अर्थ:—आकरिभि:=आकरजै: । करिभि:=गजै: । क्षतै:=नष्टै: । नमद्-तारसमै:=तीर्थसमै: । असमै:=असदृशै: । तटै:=रोधोभि: । महिताम्भस:=श्लाघ्यजला: । विविधकामहिता:=अनेककामानुकूला: । स्फुटसरोजवना:=विकसितकमलकानना: । जवना:=वेगवती: । नदी:=सरित: । दधतम्=धारयन्तम् । अत्र यमकालङ्कार: ।

कोष:—'खनि: स्त्रियामाकर: स्यात्' इत्यमर: ।

हिन्दी—इस हिमालय पर बहुत सी तेज बहनेवाली नदियाँ हैं । उनके तट अनेकों रत्नों की खानि तथा वे हाथियों के द्वारा नष्ट करके बराबर कर दिये गये हैं जो बड़े सुन्दर लगते हैं । हिमालय पर तीव्रता से बहने वाली नदियाँ पवित्र जलवाली एवं अनेकों कामों में हितकर हैं जिनमें खिले हुए कमलदलों के वन हैं ॥ ७ ॥

नवविनिद्रजपाकुसुमत्विषां द्युतिमता निकरेण महाश्मनाम् ।
विहितसान्ध्यमयूखमिव क्वचिन्निचितकाञ्चनभित्तिषु सानुषु ॥ ८ ॥

अन्वय:—नवविनिद्रजपाकुसुमत्विषाम् महाश्मना द्युतिमता निकरेण क्वचित् निचितकाञ्चनभित्तिषु सानुषु विहितसान्ध्यमयूखमिव ।

विग्रह:—नवानि विनिद्राणि जपाकुसुमानि=नवविनिद्रजपाकुसुमानि तेषां त्विष इव त्विषो येषां ते तेषाम्=नवविनिद्रजपाकुसुमत्विषाम् । निचिता: काञ्चन-भित्तयो येषु, तेषु=निचितकाञ्चनभित्तिषु । सन्ध्यायां भवा: सान्ध्या: । विहिता: सान्ध्या: मयूखा: यस्मिन् तम्=विहितसान्ध्यमयूखम् ।

अर्थ:—नवविनिद्रजपाकुसुमत्विषम् = नूतनविकसितजपापुष्पकान्तीनाम् । महाश्मनाम्=मणीनाम् । द्युतिमता=कान्तिमता । निकरेण=समूहेन क्वचित्=कुत्रचित् । निचितकाञ्चनभित्तिषु=संघटितस्वर्णभित्तिषु । सानुषु=श्रेणीषु । विहितसान्ध्यमयूखम्=कृतसान्ध्यकिरणम्, इव स्थितम् । अत्रोत्प्रेक्षालङ्कार: ।

कोष:—'ओण्ड्रपुष्पं जपापुष्पं रूपिका ताम्रपुष्पिका' इति वाग्भट: ।

हिन्दी—इस हिमालय पर नवीन ( ताजे ) खिले हुए जपापुष्प ( गुड़हल )

के समान कान्तिवाली मणियाँ शोभित हो रही हैं। इस प्रकार मणिसमूह के प्रकाश से युक्त, हेमयुक्त चोटियों पर कहीं-कहीं सन्ध्याकालीन किरणें सी दिखलाई पड़ती हैं ॥ ८ ॥

पृथुकदम्बकदम्बकराजितं ग्रथितमालतमालवनाकुलम् ।
लघुतुषारतुषारजलश्च्युतं धृतसदानसदाननदन्तिनम् ॥ ९ ॥

अन्वयः—पृथुकदम्बकदम्बकराजितम् ग्रथितमालतमालवनाकुलम् लघुतुषारतुषारजलश्च्युतं धृतसदानसदाननदन्तिनम् ।

विग्रहः—कदम्बवत् कदम्बकानि, तैः कदम्बकदम्बकैः। पृथुभिः कदम्बकदम्बकैः राजितम्=पृथुकदम्बकदम्बकराजितम् । ग्रथितमालैः तमालवनैः आकुलम्= ग्रथितमालतमालवनाकुलम् । लघुतुषारं यत्तुषारजलम्=लघुतुषारतुषारजलम् । लघुतुषारतुषारजलं श्च्योतति यः, तम्=लघुतुषारतुषारजलश्च्युतम् । सदाननाः दन्तिनः=सदाननदन्तिनः । सदानाः ये सदाननदन्तिनः सदानसदाननदन्तिनः । धृताः सदानसदाननदन्तिनः येन तम् धृतसदानसदाननदन्तिनम् ।

अर्थः—पृथुकदम्बकदम्बकराजितम्=बृहत्स्तबकनीपकुसुमराजितम् । ग्रथितमालतमालवनाकुलम्=पंक्तिबद्धतमालवनाकीर्णम् । लघुतुषारतुषारजलश्च्युतम्= अल्पसीकरहिमोदकवर्षम् । धृतसदानसदाननदन्तिनम्=धृतसमदशोभनाननगजम् ।

कोषः—'कदम्बमाहुः सिद्धार्थे नीपे च निकुरम्बके' इति विश्वः। 'कालस्कन्धस्तमालः स्यात् तापिच्छोऽपि' इत्यमरः। 'तुषारो हिमसीकरो' इति शाश्वतः।

हिन्दी—यह हिमालय बड़े-बड़े कदम्बपुष्पों से युक्त, पुष्पमाला के सदृश तमालवन से पूर्ण, बिन्दु-बिन्दु तुषार-कणों को टपकाता हुआ तथा मतवाले सुन्दर सूड़ों वाले हाथियों से परिपूर्ण है ॥ ९ ॥

रहितरत्नचयान्न शिलोच्चयानपलताभवना न दरीभुवः ।
विपुलिनाम्बुरुहा न सरिद्वधूरकुसुमान्दधतं न महीरुहः ॥ १० ॥

अन्वयः—रहितरत्नचयान् शिलोच्चयान् न दधतम्, अपलताभवनाः दरीभुवः न ( दधतम् ), विपुलिनाम्बुरुहाः सरिद्वधूः न ( दधतम् ) अकुसुमान् महीरुहः न दधतम् ।

विग्रहः—रत्नचयैः रहिताः तान् । अपगतानि लताभवनानि यासुता-स्तथोक्ताः । विगतानि पुलिनानि अम्बुरुहाणि च यासां ताः=विपुलिनाम्बुरुहाः । सरितः वध्व इव ताः=सरिद्वधूः ।

अर्थः—रहितरत्नचयान् =त्यक्तरत्नसमूहान् । शिलोच्चयान्=शिखराणि न दधतम् । अपलताभवनाः=लतागृहरहिताः । दरीभुवः=गुहाप्रदेशान् न दधतम् । विपुलिनाम्बुरुहाः=विगतपुलिनजलरुहाः । सरिद्वधूः=सरिताबालाः=न दधतम् । अकुसुमान्=पुष्परहितान् । महीरुहः=वृक्षान् न दधतम् ।

कोषः—'दरी तु कन्दरो वा स्त्री देवखातविले गुहा' इत्यमरः ।

हिन्दी—इस हिमालय के शिखर रत्नराशियों से रिक्त नहीं है । इसकी कन्दरायें लताभवनों से हीन नहीं हैं । इसमें बहनेवाली वधूरूपी नदियाँ पुलिनों तथा कमल पुष्पों से रहित नहीं हैं और न इसमें फल-फूलरहित वृक्ष ही हैं ॥ १० ॥

व्यथितसिन्धुमनीरशनैः शनैरमरलोकवधूजघनैर्घनैः ।
फणभृतामभितो विततं ततं दयितरम्यलताबकुलैः कुलैः ॥ ११ ॥

अन्वयः—अनीरशनैः घनैः अमरलोकवधूजघनैः शनैः व्यथितसिन्धुं दयित-रम्यलताबकुलैः फणभृतां कुलैः अभितः ततं विततम् ।

विग्रहः—निर्गताः रशनाः येभ्यस्तैः=नीरशनैः, न नीरशनैरनीरशनैः । अमरलोकानां बध्वः, तासां जघनैः=अमरलोकवधूजघनैः । व्यथिताः सिन्धवः यस्मिस्तम्=व्यथितसिन्धुम् । दयिताः रम्याः लताबकुलाः=दयितरम्य-लताबकुलास्तैः दयितरम्यलताबकुलैः । फणानि बिभ्रतीति फणभृतः, तेषां=फणभृताम् ।

अर्थः—अनीरशनैः=अनिर्मेखलैः । घनैः=निबिडैः । अमरलोकवधूजघनैः=देवाङ्गनाजघनैः । शनैः=मन्दम् । व्यथितसिन्धुम्=क्षोभितनदीकम् । दयितरम्य-लताबकुलैः=प्रियरम्यलताकेसरैः । फणभृतां=सर्पाणां, कुलैः=समूहैः । अभितः=परितः । ततम्=व्याप्तम् । विततम्=विस्तृतम् ।

कोषः—'विशारदो मद्यगन्धो बकुलः स च केसरः' इति वैद्यके ।

हिन्दी—इस हिमालय के प्रदेश में बहनेवाली नदियाँ देवाङ्गनाओं के

मेखलायुक्त स्थूल जघनों के द्वारा मन्द-मन्द आकुलित रहती हैं अर्थात् उनमें सुरसुन्दिरियाँ जलक्रीड़ा करती हैं। चन्दनादि की प्रिय लताओं और केसर के लिए मतवाले बने हुए साँप झुण्ड के झुण्ड हिमालय के वन में रहते हैं। इस प्रकार यह हिमालय चारो ओर फैला हुआ है ॥ ११ ॥

ससुरचापमनेकमणिप्रभैरपपयोविशदं हिमपाण्डुभिः ।
अविचलं शिखरैरुपबिभ्रतं ध्वनितसूचितमम्बुमुचां चयः ॥ १२ ॥

अन्वयः—अनेकमणिप्रभैः हिमपाण्डुभिः शिखरैः ससुरचापम् अपपयोविशदम् अविचलं ध्वनिसूचितम् अम्बुमुचां चयम् उपबिभ्रतम् ।

विग्रहः—अनेकाः मणिप्रभाः येषां तैः अनेकमणिप्रभैः । हिमेन पाण्डुभिः= हिमपाण्डुभिः । सुरचापेन सहितस्तम्=ससुरचापम् । अपगतं पयः यस्मात् सः=अपपयाः । अपपयाः अत एव विशदश्च तम् = अपपयोविशदम् । ध्वनितेन सूचितम् = ध्वनितसूचितम् । अम्बूनि मुञ्चन्तीत्यम्बुमुचस्तेषाम् = अम्बुमुचाम् ।

अर्थः—अनेकमणिप्रभैः = बहुमणिप्रभैः । हिमपाण्डुभिः = हिमपीतैः । शिखरैः=सानुभिः । ससुरचापम् = सेन्द्रचापम् । अपपयोविशदम् = निर्जल-विशदम् । अविचलम्=निश्चलम् । ध्वनितसूचितम् = गर्जितज्ञापितम् । अम्बु-मुचाम् = मेघानाम् । चयम् = राशिम् । उपबिभ्रतम् = धारयन्तम् । अत्र सन्देहालङ्कारः ।

कोषः—'प्रभारुग्रुचिस्त्विड्भाभाश्छेविद्युतिदीप्तयः' इत्यमरः ।

हिन्दी—हिमालय के शिखर अनेकों मणियों की कान्ति से युक्त तथा बर्फ के कारण शुभ्रवर्णवाले हैं। उस पर इन्द्रधनुषयुक्त, जल से रिक्त होने के कारण शुभ्रवर्णवाली मेघमालाएँ बकी रहती हैं। वे मेघमालाएँ गर्ज-गर्ज कर अपना परिचय देती हैं ॥ १२ ॥

विकचवारिरुहं दधतं सरः सकलहंसगणं शुचि मानसम् ।
शिवमगात्मजया च कृतेर्ष्यया सकलहं सगणं शुचिमानसम् ॥ १३ ॥

अन्वयः—विकचवारिरुहं सकलहंसगणं शुचि मानसं सरः ( दधतम् ) कृतेर्ष्यया अगात्मजया सकलहं सगणं शुचिमानसं शिवं च दधतम् ।

विग्रहः— विकचानि वारिरुहाणि सन्ति यस्मिन् तत् = विकचवारिरुहम् ।

कलहंसानां गणाः कलहंसगणास्तैः सहितम् = सकलहंसगणम् । कृता ईर्ष्या यया तया = कृतेर्ष्यया । अगस्य आत्मजा, तया = अगात्मजया । कलहेन सहितं = सकलहम् । गणैः सहितम् = सगणं । शुचि मानसं यस्य तम् = शुचिमानसम् ।

**अर्थः**—विकचवारिरुहम् = विकसितकमलम् । सकलहंसगणम् = कलहंस-युतम् । शुचि = पवित्रम् । मानसं सरः = मानसरोवरं सरः ( दधतम् ) कृतेर्ष्यया = विहितेर्ष्यया । अगात्मजया = पार्वत्या । सकलहं = सविवादम् । सगणम् = सप्रमथम् । शुचिमानसं = पूतमानसम् । शिवम् = शङ्करम् । च दधतम् = धारयन्तम् । अत्र यमकालङ्कारः ।

**कोषः**—'कदम्बः कलहंसः स्यात्' इत्यमरः ।

**हिन्दी**—यह हिमालय पर्वत खिले हुए कमल तथा अनेक प्रकार के हंस-पक्षियों से युक्त मानसरोवर झील को धारण किये हुए हैं । ईर्ष्या-युक्त ( कुपित ) पार्वती जी व भूत-प्रेतादिकों के सहित विशुद्ध मनवाले शङ्कर जी यहाँ निवास करते हैं ॥ १३ ॥

ग्रहविमानगणानभीतो दिवं ज्वलयतौषधिजेन कृशानुना ।
मुहुरनुस्मरयन्तमनुक्षपं त्रिपुरदाहमुमापतिसेविनः ॥ १४ ॥

**अन्वयः**—दिवम् अभितः ग्रहविमानगणान् ज्वलयता ओषधिजेन कृशानुना अनुक्षपम् उमापतिसेविनः त्रिपुरदाहम् मुहुः अनुस्मरयन्तम् ।

**विग्रहः**—ग्रहाः च विमानानि च ग्रहविमानानि, तेषां गणास्तान् = ग्रह-विमानगणान् । ओषधिभ्यः जातस्तेन = ओषधिजेन । क्षपा क्षपा = अनुक्षपम् । उमायाः पतिः = उमापतिः, तं सेवन्ते ये तान् = उमापतिसेविनः । त्रयाणां पुराणां समाहारस्त्रिपुरम्, तस्य दाहस्तम् = त्रिपुरदाहम् ।

**अर्थः**—दिवम् अभितः = दिवोऽभिमुखम् । ग्रहविमानगणान् = चन्द्रादि-देवयानान् । ज्वलयता = प्रदीपयता । ओषधिजेन = तृणविशेषजन्येन, कृशानुना = अग्निना । अनुक्षपम् = प्रतिक्षपम् । उमापतिसेविनः = प्रमथादीन् । त्रिपुरदाहम् = त्रिपुरज्वालनम् । मुहुः = वारंवारम्, अनुस्मरयन्तम् = स्मरयन्तम् । अत्र स्मरणालंकारः ।

**कोषः**—'व्योमयानं विमानोऽस्त्री' इत्यमरः ।

**हिन्दी**—इस हिमालय पर चारो ओर चन्द्रादिग्रहों के विमानों का प्रकाश

तृणविशेष से उत्पन्न अग्नि से शिव के प्रमथादिगणों को त्रिपुरदाह का बारम्बार स्मरण कराता है। अर्थात् यहाँ वनौषधियों का भण्डार है॥ १४॥

विततशीकरराशिभिरुच्छ्रितैरुपलरोधविवर्तिभिरम्बुभिः ।
दधतमुन्नतसानुसमुद्धतां धृतसितव्यजनामिव जाह्नवीम् ॥ १५ ॥

अन्वयः—विततशीकरराशिभिः उच्छ्रितैः उपलरोधविवर्तिभिः अम्बुभिः धृतसितव्यजनाम् इव उन्नतसानुसमुद्धता जाह्नवीम् दधतम् ।

विग्रहः—विततैः शीकराणां राशिभिः = वितशीकरराशिभिः । उपलानां रोधः, उपलरोधः, तेन विवर्तिभिः = उपलरोधविवर्तिभिः । धृतम् सितं व्यजनं यया ताम् = धृतसितव्यजनाम् । उन्नताः सानवः = उन्नतसानवस्तेषु समुद्धता ताम् = उन्नतसानुसमुद्धताम् ।

अर्थः—वितशीकरराशिभिः=विस्तृतशीकरपुञ्जैः । उच्छ्रितैः=उत्पतितैः । उपलरोधविवर्तिभिः=प्रस्तररोधविवर्तिभिः । अम्बुभिः=जलैः । धृतसितव्यजनाम्=गृहीतशुभ्रचामराम् । इव । उन्नतसानुसमुद्धताम्=उच्चपर्वतश्रेणिभागे वहन्तीम् । जाह्नवीम्=जह्नुकन्यां गङ्गाम् । दधतम्=धारयन्तम् । अत्रोत्प्रेक्षालंकारः ।

कोषः—'प्रस्थः सानुरस्त्रियाम्' इत्यमरः ।

हिन्दी—इस हिमालय पर जाह्नवी गंगा बहती है। गङ्गा के प्रवाह में पत्थरों के पड़ जाने से जल टकरा कर विशाल जलकणों के द्वारा झरने फव्वारे के समान ऊर्ध्वगति से बहते लगते हैं। इस प्रकार हिमालय की ऊँची चोटियों पर बहती हुई गङ्गा शुभ्र चामर धारण किये हुए प्रतीत होती है॥ १५॥

अनुचरेण धनाधिपतेरथो नगविलोकनविस्मितमानसः ।
स जगदे वचनं प्रियमादरान्मुखरताऽवसरे हि विराजते ॥ १६ ॥

अन्वयः—अथो धनाधिपतेः अनुचरेण नगविलोकनविस्मितमानसः सः आदरात् प्रियं वचनं जगदे । हि मुखरता अवसरे विराजते ।

विग्रहः—धनानामधिपतिस्तस्य=धनाधिपतेः । अनुचरतीत्यनुचरस्तेन अनुचरेण । नगस्य विलोकनं=नगविलोकनम्, तेन=नगविलोकनेन । विस्मितं मानसं यस्य सः=विस्मितमानसः ।

**अर्थः—अथो=अनन्तरम् । धनाधिपतेः=कुबेरस्य । अनुचरेण=यक्षेण ।**

नगाविलोकनेन=पर्वतदर्शनेन। विस्मितमानसः=चकितचेताः। सः=अर्जुनः। आदरात्=सम्मानात्, प्रियं=प्रियकरं, वचनं=वाक्यम्। जगदे=कथितः। हि=यतः। मुखरता=अपृष्टभाषित्वम्। अवसरे=उचितकाले। विराजते=शोभते। अत्रार्थान्तरन्यासालङ्कारः।

कोषः—'मङ्गलानन्तरारम्भप्रश्नकात्स्न्येंष्वथो अथ' इत्यमरः।

हिन्दी—तदनन्तर कुबेर के सेवक 'यक्ष' ने पर्वत-शोभा देखने के कारण आश्चर्य-चकित-मन अर्जुन से सादर प्रिय वचनों में कहना आरम्भ किया। क्योंकि अवसर पर बिना पूछे कुछ कहना भी शोभा ही देता है ॥ १६ ॥

**अलमेष विलोकितः प्रजानां सहसा संहतिमंहसा विहन्तुम्।**
**घनवर्त्म सहस्रधेव कुर्वन् हिमगौरैरचलाधिपः शिरोभिः ॥ १७॥**

अन्वयः—हिमगौरैः शिरोभिः घनवर्त्म सहस्रधा कुर्वन् इव एषः अचलाधिपः विलोकितः प्रजानाम् अंहसां संहतिम् सहसा विहन्तुम् अलम्।

विग्रहः--हिमेन गौराणि हिमगौराणि तैः=हिमगौरैः। घनानां वर्त्म=घनवर्त्म। अचलानामधिपः=अचलाधिपः (हिमालयः)। विशिष्टतया लोकितः = विलोकितः।

अर्थः—हिमगौरैः = हिमशुभ्रैः। शिरोभिः=सानुभिः। घनवर्त्म = मेघमार्गम्। सहस्रधा=सहस्रसंख्यकं। कुर्वन्=विदधत्। इव=समः। एषः=निर्दिष्टः। अचलाधिपः=नगाधिराजः। विलोकितः=दृष्टः। प्रजानां=जनानाम्। अंहसाम्=पापानाम्। संहतिं=समूहम्। सहसा विहन्तुं=दूरीकर्तुम्। अलम्=समर्थः। अत्रोत्प्रेक्षालङ्कारः।

कोषः—'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः' । इत्यमरः।

हिन्दी—हिम-शुभ्र शिखरों से मेघमार्ग को सहस्रधा (हजारों खण्ड) करता हुआ यह हिमालय दर्शनमात्र से ही लोगों के समस्त पापों को सहसा दूर कर देता है ॥ १७ ॥

**इह दुरधिगमैः किञ्चिदेवागमैः सततमसुतरं वर्णयन्त्यन्तरम्।**
**अमुमतिविपिनं वेद दिग्व्यापिनं पुरुषमिव परं पद्मयोनिः परम् ॥ १८॥**

अन्वयः—इह असुतरम् अन्तरम् दुरधिगमैः आगमैः किञ्चिद् एव सततं वर्णयन्ति अतिविपिनं दिग्व्यापिनम् अमुम् परं पुरुषम् इव परं पद्मयोनिं वेद।

विग्रहः—सुतरं न भवतीत्यसुतरम् । दुःखेन अधिगमैः=दुरधिगमैः । अत्यंत विपिनम्=अतिविपिनम् । पद्मं योनिः यस्य सः=पद्मयोनिः । दिक्षुव्यापिनम्= दिग्व्यापिनम् ।

अर्थः—इह=अस्मिन् पर्वते । असुतरम्=दुस्तरम् । अन्तरम्=मध्यम्, तत्त्वं वा । दुराधिगमैः=दुरारोहैः, दुर्ग्रहैर्वा । आगमैः=शास्त्रैः । किञ्चिद् एव सततं=निरन्तरम् । वर्णयन्ति=कथयन्ति । अतिविपिनम्=अतिगहनम् । दिग्व्यापिनम्=दिक्षु व्याप्तम् । अमुम्=पर्वतम् । परं पुरुषं=परमात्मानम् । इव । परम्=अव्ययम् । पद्मयोनिः=ब्रह्मा । वेद=जानाति । नान्य इति । अत्रोपमायमकयोः संसृष्टिः । क्षमावृत्तम् ।

कोषः—'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः ।

हिन्दी—इस हिमालय पर इसके आन्तरिक तत्त्व का दुर्गम्य पुराणादिकों द्वारा कुछ ही ( सीमित ) वर्णन किया जाता है । अतिगहन एवं दिशाओं में फैले हुए ( व्याप्त ) परम पुरुष ( ब्रह्म ) के समान इस पर्वत को ब्रह्मा जी ही जान सकते हैं, अन्य कोई नहीं ॥ १८ ॥

रुचिरपल्लवपुष्पलतागृहैरुपलसज्जलजैर्जलराशिभिः ।
नयति सन्ततमुत्सुकतामयं धृतिमतीरुपकान्तमपि स्त्रियः ॥ १९ ॥

अन्वयः—अयं रुचिरपल्लवपुष्पलतागृहैः उपलसज्जलजैः जलराशिभिः उपकान्तं धृतिमतीः अपि स्त्रियः सन्ततम् उत्सुकतां नयति ।

विग्रहः—रुचिराणि पल्लवाणि पुष्पाणि लतागृहाणि च=रुचिरपल्लवपुष्पलतागृहाणि तैः । उपलसद्भिः जलजैः=उपलसज्जलजैः । जलानां राशयस्तैः जलराशिभिः । कान्तस्य समीपे=उपकान्तम् ।

अर्थः—अयम्=हिमालयः । रुचिरपल्लवपुष्पलतागृहैः=मनोज्ञदलकुसुमलताभवनैः । उपलसज्जलजैः=शोभितकमलैः । जलराशिभिः=सरोवरादिभिः । उपकान्तं=प्रियपार्श्वे । धृतिमतीः=धैर्यवतीः । अपि । स्त्रियः=नारीः । सततं= निरन्तरम् । उत्सुकताम्=औत्सुक्यम् । नयति=प्रापयति । अत्रातिशयोक्तिरलङ्कारः । द्रुतविलम्बितवृत्तम् ।

कोषः—'पल्लवोऽस्त्री किसलयम्' इत्यमरः ।

हिन्दी—रुचिर पल्लवों, पुष्पों एवं लतागृहों से तथा कमल से सुशोभित

तड़ागों द्वारा यह हिमालय पर्वत, प्रियतम के पास मानिनी स्त्रियों को भी सदैव उत्सुक बना देता है अर्थात् यथा मानिनी स्त्रियाँ भी अपने प्रियतम के पास पहुँचने पर मान को खोकर प्रिय-मिलन के लिये उत्कण्ठित हो जाती हैं तथैव विरक्त पुरुष भी हिमालय के सौन्दर्य को देख कर अनुरक्त हो जाता है ॥ १९ ॥

सुलभैः सदा नयवताऽयवता निधिगुह्यकाधिपरमैः परमैः।
अमुना धनैः क्षितिभृतातिभृता समतीत्य भाति जगती जगती ॥२०॥

**अन्वयः**—नयवता अयवता सदा सुलभैः निधिगुह्यकाधिपरमैः परमैः धनैः अमुना क्षितिभृता अतिभृता जगती जगती समतीत्य भाति।

**विग्रहः**—निधिनां गुह्यकानां च अधिपः=निधिगुह्यकाधिपः, तं रमयन्तीति तैः=निधिगुह्यकाधिपरमैः।

**अर्थः**—नयवता=नीतिमता। अयवता=भाग्यवता। सदा=सर्वदा। सुलभैः=सुप्राप्यैः। निधिगुह्यकाधिपरमैः=नवनिधि-कुबेररमैः। परमैः=महद्भिः। धनैः=वित्तैः। अमुना=अनेन। क्षितिभृता=हिमालयपर्वतेन। अतिभृता=पूर्णा सती। जगती=पृथ्वी। जगती=स्वर्गपाताललोकौ। समतीत्य=अतिक्रम्य। भाति=शोभते। अत्र काव्यलिङ्गस्य यमकेन संसृष्टिः। प्रमिताक्षरावृत्तम्।

**कोषः**—'अयः शुभावहो विधिः' इत्यमरः। 'अस्त्री पद्मो महापद्मः शंखो मकरकच्छपौ। मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव' इत्यमरः।

**हिन्दी**—नीतिमान् व भाग्यवान् पुरुषों से सदैव सुलभ, नवनिधियों और यक्षाधिप कुबेर के सर्वोत्तम धनों से पूर्ण इस हिमालय के द्वारा पृथ्वी, स्वर्ग तथा पाताल लोकों को भी जीत कर शोभित हो रही है ॥ २० ॥

अखिलमिदममुष्य गौरीगुरोस्त्रिभुवनमपि नैति मन्ये तुलाम्।
अधिवसति सदा यदेनं जनैरविदितविभवो भवानीपतिः ॥ २१ ॥

**अन्वयः**—अमुष्य गौरिगुरोः इदम् अखिलं त्रिभुवनम् अपि तुलां न एति मन्ये। यद् एनं जनैः अविदितविभवः भवानीपतिः सदा अधिवसति ॥ २१ ॥

**विग्रहः**—गौर्याः गुरुः=गौरीगुरुः, तस्य=गौरीगुरोः। त्रयाणां भुवनानां

समाहार इति त्रिभुवनम्। अविदितो विभवो यस्य सः=अविदितविभवः। भवान्याः पतिः=भवानीपतिः।

अर्थः—अमुष्य=अस्य। गोरीगुरोः=गौरीपितुर्हिमालयस्य। इदम्=निर्दिष्टम्। अखिलं=निखिलं। त्रिभुवनम्=स्वर्गभूपातालत्रिलोकम्। अपि। तुलां=समतां। न एति=न गच्छति। इति मन्ये। यद=यत.। एनम्=हिमवन्तम्। जनैः=लोकैः। अविदितविभवः=अज्ञातविभवः। भवानीपतिः=शिवः। सदा=सर्वदा। अधिवसति=निवसति। अत्र प्रभावृतम्॥ २१॥

कोषः—उमा कात्यायनी गौरी काली हैमवतीश्वरी' इत्यमरः।

हिन्दी—इस गोरीगुरु ( पार्वती जी के पिता ) हिमालय की तुलना में यह सम्पूर्ण त्रिभुवन भी नहीं टिक सकता है क्योंकि इसपर भवानीपति शङ्कर जी का निवास है जिनकी महिमा लोग नहीं जान पाते हैं॥ २२॥

वीतजन्यजरसं परं शुचि ब्रह्मणः पदमुपेतुमिच्छताम्।
आगमादिव तमोपहादितः सम्भवन्ति मतयो भवच्छिदः॥ २२॥

अन्वयः—वीतजन्मजरसं ब्रह्मणः परं शुचि पदम् उप एतुम् इच्छताम् आगमाद् इव तमोपहात् इतः भवच्छिदः मतयः सम्भवन्ति।

विग्रहः—वीते जन्मजरसो यस्य तद्=वीतजन्मजरसम्। तमः अपहन्तीति तमोपहस्तस्मात्=तमोपहात्। भवं छिन्दन्तीति भवच्छिदः।

अर्थः—वीतजन्मजरसम् = निवृत्तजन्मजरसम्। ब्रह्मणः = परमात्मनः। परम्=उत्कृष्टम्। शुचि=पवित्रम्। पदम्=स्थानम्। उपैतुम्=प्राप्तुम्। इच्छताम्=अभिलषताम्। आगमात्=शास्त्राद् इव। तमोपहात्=अज्ञाननिवर्त्तकात्। इतः=हिमाद्रेः। भवच्छिदः=संसारनिवर्तिकाः। मतयः=बुद्धयः। संभवन्ति = जायन्ते। अत्र रथोद्धतावृत्तम्।

कोषः—'ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः' इत्यमरः।

हिन्दी—जन्म तथा जरा ( बुढ़ापा ) से रहित ब्रह्म के परम पवित्र पद को प्राप्त करने ( मोक्ष ) की अभिलाषावाले पुरुषों के लिये अज्ञाननिवृत्ति करने वाले शास्त्र के समान इस हिमालय पर्वत से ही भवबन्धन से मुक्त होने वाली बुद्धियाँ उत्पन्न होती हैं अर्थात् मुमुक्षुओं को तत्त्वज्ञान की प्राप्ति इस हिमालय से ही होती है॥ २२॥

दिव्यस्त्रीणां सचरणलाक्षारागा रागापाते निपतितपुष्पापीडाः।
पीडाभाजः कुसुमचिताः साशंसं शंसन्त्यस्मिन्सुरतविशेषं शय्या ॥२३॥

अन्वयः—अस्मिन् सचरणलाक्षारागाः निपतितपुष्पापीडाः पीडाभाजः कुसुमचिताः दिव्यस्त्रीणां शय्याः रागापाते साशंसं सुरतविशेषं शंसन्ति।

विग्रहः—चरणलाक्षारागैः सः वर्त्तन्त इति ताः सचरणलाक्षारागाः। निपतिताः पुष्पापीडाः यासु ताः=निपतितपुष्पापीडाः। पीडां भजन्तीति ताः पीडाभाजः। कुसुमैश्चिताः=कुसुमचिताः। आशंसेन सहितं=साशंसम्। दिव्याः स्त्रियः=दिव्यस्त्रियस्तासां=दिव्यस्त्रीणाम्।

अर्थः—अस्मिन्=अत्र हिमालये। सचरणलाक्षारागाः=सपदलाक्षारसाः। निपतितपुष्पापीडाः=भ्रष्टकुसुमशेखराः। पीडाभाजः=विमर्दभाजः, कुसुमचिताः=पुष्पव्याप्ताः। दीव्यस्त्रीणाम्=देवाङ्गनानाम्। शय्याः=तल्पानि। रागापाते=रागोद्रेके सति। साशंसम्=सतृष्णम्। सुरतविशेषम्=सुरतवैशिष्ट्यम्। शंसन्ति=सूचयन्ति। अत्र संसृष्टिरलङ्कारः, जलधरमालावृत्तञ्च।

कोषः—'शिखास्वापीडशेखरौ' इत्यमरः।

हिन्दी—इस हिमालय पर चरणों में लगाये हुए महावर से रञ्जित मुर्झाये हुए फूलोंवाली, विमर्दित तथा फूलों से व्याप्त ( युक्त ) देवाङ्गनाओं की शय्याएं ( तल्प ) रागोद्रेक होने पर ललचाती हुई रति के विशिष्ट आनन्द को सूचित करती हैं ॥ २३ ॥

गुणसम्पदा समधिगम्य परं महिमानमत्र महिते जगताम्।
नयशालिनि श्रिय इवाधिपतौ विरमन्ति न ज्वलितुमोषधयः ॥ २४ ॥

अन्वयः—जगतां महिते अत्र ओषधयः नयशालिनि अधिपतौ श्रिय इव गुणसम्पदा परं महिमानं समधिगम्य ज्वलितुं न विरमन्ति।

विग्रहः—नयः शीलम् अस्येति तस्मिन्=नयशालिनि। गुणानां सम्पत्, तया=गुणसम्पदा।

अर्थः—जगतां महिते=जगद्भिः पूजिते। अत्र=अस्मिन् हिमालये। ओषधयः=तृणज्योतींषि। नयशालिनि=नीतिसम्पन्ने। अधिपतौ=राज्ञि। श्रियः=सम्पदः। इव=सदृशम्। गुणसम्पदा=क्षेत्रगुणसम्पत्या। परं महिमानम्=प्रकाशसामर्थ्यम्। समधिगम्य=प्राप्य। ज्वलितुम्=प्रकाशितुम्। न विरमन्ति=न विरामं कुर्वन्ति। अविरामं ज्वलन्तीत्यर्थः।

कोष:—'ओषध्यः फलपाकान्ताः स्युः' इत्यमरः ।

हिन्दी—लोकपूज्य इस हिमालय पर्वत पर औषधियाँ क्षेत्र-सम्पत्ति से सदैव परम शक्ति प्राप्त करके उसी प्रकार प्रकाशित होती रहती हैं यथा नीति-सम्पन्न राजा में सम्पदाएँ सन्ध्यावन्दन-पूजन-तर्पणादि गुणों से विकसित होती हैं ॥ २४ ॥

कुररीगणः कृतरवस्तरवः कुसुमानताः सकमलं कमलम् ।
इह सिन्धवश्च वरणावरणाः करिणां मुदे सनलदानलदाः ॥ २५ ॥

अन्वयः—इह कुररीगणः कृतरवः, तरवः कुसुमानताः, कमलं, सकमलम्, वरणावरणाः सनलदानलदाः सिन्धवश्च करिणां मुदे ।

विग्रहः—कुररीणां गणः =कुररीगणः । कुसुमैः आनताः =कुसुमानताः । कमलैः सहितम् =सकमलम् । वरणा आवरणं यासां ताः =वरणावरणाः । अनलं घ्नन्तीति =अनलदाः, सनलदाश्च ताः अनलदाः =सनलदानलदाः ।

अर्थः—इह =अस्मिन् हिमालये । कुररीगणः =कुररीपक्षिसमूहः कृतरवः = विहितकूजितः । तरवः =द्रुमाः । कुसुमानताः =पुष्पावनताः । कमलं =जलम् । सकमलम् =सजलजम् । वरणावरणाः=वरुणवृक्षावरणाः । सनलदानलदाः=सोशीरसन्तापच्छिदः । सिन्धवः =नद्यः । करिणां=गजानाम् । मुदे =हर्षाय । भवन्तीति शेषः ।

कोषः—'कमलं जलपद्मयोः' इति विश्वः । 'वरणो वरुणः सेतुः तिक्तशाकः कुमारकः' इत्यमरः ।

हिन्दी—इस हिमालय पर पक्षिगण कलरव करते रहते हैं, वृक्ष पुष्पभार से झुके रहते हैं और जल अथवा जलाशय कमलों से आच्छन्न रहते हैं। यहाँ वृक्षों से घिरी हुई, उशीर-युक्त तथा सन्ताप मिटा कर शान्ति देनेवाली सरिताएँ हाथियों को प्रसन्न बनाती हैं अर्थात् इन नदियों में हाथी जल-क्रीडाएँ करते हैं ॥ २५ ॥

सादृश्यं गतमपनिद्रचूतगन्धैरामोदं मदजलसेकजं दधानः ।
एतस्मिन् मदयति कोकिलानकाले लीनालिः सुरकरिणां कपोलकाषः ॥

अन्वयः—एतस्मिन् अपनिद्रचूतगन्धैः सादृश्यं गतं मदजलसेकजम् आमोदं दधानः लीनालिः सुरकरिणां कपोलकाषः अकाले कोकिलान् मदयति ।

विग्रहः—अपनिद्राणां चूतानां गन्धास्तैः =अपनिद्रचूतगन्धैः । मदजलस्य

सेचनं=मदजलसेचनं, तस्माज्जातं=मदजलसेकजम्। लीनाः अलयः यस्मिन् स=लीनालिः। सुराणां करिणस्तेषाम्=सुरकरिणाम्। कष्यते अनेन इति काषः। कपोलानां काषः=कपोलकाषः।

अर्थः--एतस्मिन्=अस्मिन् हिमालये। अपनिद्रचूतगन्धैः=फुल्लाम्रपुष्पगन्धैः। सादृश्यम्=साम्यम्। गतं=प्राप्तम्। मदजलसेकजम्=मदजलसेचनजातम्। आमोदं=परिमलं। दधानः=बिभ्राणः। लीनालिः=संसक्तभृङ्गः। सुरकरिणां=देवनागागानाम्। कपोलकाषः=कपोलकषणस्थानं, द्रुमस्कन्धादिः। अकाले=वसन्तातिरिक्ते कालेऽपि। कोकिलान्=पिकान्। मदयति=मत्ततां नयति। अत्र विभावनालङ्कारः।

कोषः---आम्रश्चूतो रसालोऽसौ सहकार' इत्यमरः।

हिन्दी—इस हिमालय पर फूली हुई आम्रमञ्जरियों की गन्ध के सदृश मदजल बहने से उत्पन्न सुरभित पवनयुक्त, भौरों से व्याप्त तथा सुरगजों के कपोलों से घर्षित वृक्षादि स्थान वसन्त काल न होने पर भी कोयलों को मतवाली बना देते हैं। अर्थात् उपर्युक्त सुगन्ध से प्रभावित होकर अकाल में ही कोयलें कूकने लगती हैं॥ २६॥

सनाकवनितं नितम्बरुचिरं चिरं सुनिनदैर्नदैर्वृतममुम्।
मता फणवतोऽवतो रसपरापरास्तवसुधा सुधाधिवसति॥ २७॥

अन्वयः—सनाकवनितं नितम्बरुचिरं सुनिनदैः नदैः वृतम् अमुम् अवतः फणवतः मता रसपरापरास्तवसुधा सुधा चिरम् अधिवसति।

विग्रहः—नाकस्य वनिताः=नाकवनिताः। नाकवनिताभिः सहितस्तं=सनाकवनितम्। नितम्बैः रुचिरम्=नितम्बरुचिरम्। सुन्दरैः निनदैः=सुनिनदैः। रसेन परा परास्ता वसुधा=रसपरापरास्तवसुधा।

अर्थः—सनाकवनितं=साप्सरस्कम्। नितम्बरुचिरं=कटकरुचिरम्। सुनिनदैः=सुघोषैः। नदैः=सरिद्भिः। वृतम्=युक्तम्। अमुम्=इमं हिमालयम्। अवतः=अधोलोकरक्षकस्य। फणवतः=नागराजस्य वासुकेः। मता=इष्टा। रसपरा=स्वादोत्कृष्टा। परास्तवसुधा=त्यक्तभूलोका। सुधा=अमृतम्। चिरम् अधिवसति=वसति। अत्र समासोक्तिरलङ्कारः, जलोद्धतगतिर्वृतञ्च।

कोषः—'विहायसोऽपि नाकोऽपि द्युरपि स्यात्तदव्ययम्'। इत्यमरः।

हिन्दी—इस हिमालय पर अप्सराओं का निवास है, इसका मध्य भाग नितम्ब के समान रुचिर है, यहाँ कल-कल निनादिनी नदियाँ बहती हैं। पाताल लोक के रक्षक नागराज वासुकी की प्रिय, समस्त स्वादों को फीका बनानेवाली भूलोक को त्याग की हुई सुधा भी यहीं प्राप्त होती है, अन्यत्र नहीं ॥ २७ ॥

श्रीमल्लताभवनमोषधयः प्रदीपाः
शय्या नवानि हरिचन्दनपल्लवानि ।
अस्मिन्रतिश्रमनुदश्च सरोजवाताः
स्मर्तुं दिशन्ति न दिवः सुरसुन्दरीभ्यः ॥ २८ ॥

अन्वयः—अस्मिन् श्रीमल्लताभवनम् ओषधयः प्रदीपाः नवानि हरिचन्दन-पल्लवानि शय्याः रतिश्रमनुदः सरोजवाताः च सुरसुन्दरीभ्यः दिवः स्मर्तुं न दिशन्ति ।

विग्रहः—श्रीमल्लता एव भवनम् = श्रीमल्लताभवनम् । हरिचन्दनानां पल्लवानि = हरिचन्दनपल्लवानि । रतिजातः श्रमः = रतिश्रमः = तं नुदन्तीति रतिश्रमनुदः । सरोजानां वाताः = सरोजवाताः । सुराणां सुन्दर्यस्ताभ्यः = सुरसुन्दरीभ्यः ।

अर्थः—अस्मिन् = हिमाद्रौ । श्रीमल्लताभवनम् = समृद्धिमल्लतागृहम् । ओषधयः = तृणज्योतींषि एव । प्रदीपाः = दीपाः । नवानि = नूतनानि । हरि-चन्दनपल्लवानि = चन्दनदलानि । एव शय्याः = तल्पानि । रतिश्रमनुदः = सुरतश्रमच्छेदकाः । सरोजवाताः = कमलगंधपवनाः च । सुरसुन्दरीभ्यः = देवाङ्ग-नाभ्यः । दिवः = स्वर्गम् । स्मर्त्तुम् = स्मरणं कर्त्तुम् । न दिशन्ति । अर्थात् न विस्मारयन्ति ।

कोषः—'हरिचन्दनमाख्यातं गोशीर्षे सुरपादपे' इति विश्वः ।

हिन्दी—इस हिमालय पर सुन्दर लताकुंज ही भवन हैं, ओषधियाँ ही दीपक हैं, चन्दन वृक्ष के नूतन पल्लव ही शय्याएँ हैं, रतिश्रम को दूर करनेवाला कमलगन्धयुक्त वायु प्रवाहित होता रहता है। इस प्रकार सौन्दर्य युक्त हिमालय सुराङ्गनाओं को स्वर्ग तक भुला देता है ॥ २८ ॥

ईशार्थमम्भसि चिराय तपश्चरन्त्या यादोविलंघनविलोलविलोचनायाः ।
आलम्बनाग्रकरमत्र भवो भवान्याः श्च्योतन्निदाघसलिलाङ्गुलिना करेण ॥

सेचनं=मदजलसेचनं, तस्माज्जातं=मदजलसेकजम्। लीनाः अलयः यस्मिन् स=लीनालिः। सुराणां करिणस्तेषाम्=सुरकरिणाम्। कष्यते अनेन इति काषः। कपोलानां काषः=कपोलकाषः।

अर्थः--एतस्मिन्=अस्मिन् हिमालये। अपनिद्रचूतगन्धैः=फुल्लाम्रपुष्पगन्धैः। सादृश्यम्=साम्यम्। गतं=प्राप्तम्। मदजलसेकजम्=मदजलसेचनजातम्। आमोदं=परिमलं। दधानः = बिभ्राणः। लीनालिः = संसक्तभृङ्गः। सुरकरिणां=देवनागानाम्। कपोलकाषः=कपोलकषणस्थानं, द्रुमस्कन्धादिः। अकाले=वसन्तातिरिक्ते कालेऽपि। कोकिलान्=पिकान्। मदयति=मत्ततां नयति। अत्र विभावनालङ्कारः।

कोषः---आम्रश्चूतो रसालोऽसौ सहकार' इत्यमरः।

हिन्दी—इस हिमालय पर फूली हुई आम्रमञ्जरियों की गन्ध के सदृश मदजल बहने से उत्पन्न सुरभित पवनयुक्त, भौरों से व्याप्त तथा सुरगजों के कपोलों से घर्षित वृक्षादि स्थान वसन्त काल न होने पर भी कोयलों को मतवाली बना देते हैं। अर्थात् उपर्युक्त सुगन्ध से प्रभावित होकर अकाल में ही कोयलें कूकने लगती हैं॥ २६॥

सनाकवनितं नितम्बरुचिरं चिरं सुनिनदैर्नदैर्वृतममुम्।
मता फणवतोऽवतो रसपरापरास्तवसुधा सुधाधिवसति॥ २७॥

अन्वयः—सनाकवनितं नितम्बरुचिरं सुनिनदैः नदैः वृतम् अमुम् अवतः फणवतः मता रसपरापरास्तवसुधा सुधा चिरम् अधिवसति।

विग्रहः—नाकस्य वनिताः=नाकवनिताः। नाकवनिताभिः सहितस्तं=सनाकवनितम्। नितम्बैः रुचिरम्=नितम्बरुचिरम्। सुन्दरैः निनदैः=सुनिनदैः। रसेन परा परास्ता वसुधा=रसपरापरास्तवसुधा।

अर्थः—सनाकवनितं=साप्सरस्कम्। नितम्बरुचिरं=कटकरुचिरम्। सुनिनदैः=सुघोषैः। नदैः=सरिद्भिः। वृतम्=युक्तम्। अमुम्=इमं हिमालयम्। अवतः=अधोलोकरक्षकस्य। फणवतः=नागराजस्य वासुकेः। मता=इष्टा। रसपरा=स्वादोत्कृष्टा। परास्तवसुधा=त्यक्तभूलोका। सुधा=अमृतम्। चिरम् अधिवसति=वसति। अत्र समासोक्तिरलङ्कारः, जलोद्धतगतिर्वृत्तञ्च।

कोषः—'विहायसोऽपि नाकोऽपि द्युरपि स्यात्तदव्ययम्'। इत्यमरः।

हिन्दी—इस हिमालय पर अप्सराओं का निवास है, इसका मध्य भाग नितम्ब के समान रुचिर है, यहाँ कल-कल निनादिनी नदियाँ बहती हैं। पाताल लोक के रक्षक नागराज वासुकी की प्रिय, समस्त स्वादों को फीका बनानेवाली भूलोक को त्याग की हुई सुधा भी यहीं प्राप्त होती है, अन्यत्र नहीं ॥ २७ ॥

श्रीमल्लताभवनमोषधयः प्रदीपाः
शय्या नवानि हरिचन्दनपल्लवानि।
अस्मिन्रतिश्रमनुदश्च सरोजवाताः
स्मर्तुं दिशन्ति न दिवः सुरसुन्दरीभ्यः ॥ २८ ॥

अन्वयः—अस्मिन् श्रीमल्लताभवनम् ओषधयः प्रदीपाः नवानि हरिचन्दन-पल्लवानि शय्याः रतिश्रमनुदः सरोजवाताः च सुरसुन्दरीभ्यः दिवः स्मर्तुं न दिशन्ति।

विग्रहः—श्रीमल्लता एव भवनम् = श्रीमल्लताभवनम्। हरिचन्दनानां पल्लवानि = हरिचन्दनपल्लवानि। रतिजातः श्रमः = रतिश्रमः = तं नुदन्तीति रतिश्रमनुदः। सरोजाना वाताः = सरोजवाताः। सुराणा सुन्दर्यस्ताभ्यः = सुरसुन्दरीभ्यः।

अर्थः—अस्मिन् = हिमाद्रौ। श्रीमल्लताभवनम् = समृद्धिमल्लतागृहम्। ओषधयः = तृणज्योतींषि एव। प्रदीपाः = दीपाः। नवानि = नूतनानि। हरि-चन्दनपल्लवानि = चन्दनदलानि। एव शय्याः = तल्पानि। रतिश्रमनुदः = सुरतश्रमच्छेदकाः। सरोजवाताः = कमलगंधपवनाः च। सुरसुन्दरीभ्यः = देवाङ्ग-नाभ्यः। दिवः = स्वर्गम्। स्मर्त्तुम् = स्मरणं कर्त्तुम्। न दिशन्ति। अर्थात् न विस्मारयन्ति।

कोषः—'हरिचन्दनमाख्यातं गोशीर्षे सुरपादपे' इति विश्वः।

हिन्दी—इस हिमालय पर सुन्दर लताकुंज ही भवन हैं, औषधियाँ ही दीपक हैं, चन्दन वृक्ष के नूतन पल्लव ही शय्याएँ हैं, रतिश्रम को दूर करनेवाला कमलगन्धयुक्त वायु प्रवाहित होता रहता है। इस प्रकार सौन्दर्य युक्त हिमालय सुराङ्गनाओं को स्वर्ग तक भुला देता है ॥ २८ ॥

ईशार्थमम्भसि चिराय तपश्चरन्त्या यादोविलंघनविलोलविलोचनायाः।
आलम्बनाग्रकरमत्र भवो भवान्याः श्च्योतन्निदाघसलिलाङ्गुलिना करेण ॥

**अन्वयः**—ईशार्थं चिराय अम्भसि तपश्चरन्त्याः यादोविलंघनविलोल-विलोचनायाः भवान्याः अग्रकरं भवः श्च्योतन्निदाघसलिलाङ्गुलिना करेण अत्र आलम्बत ।

**विग्रहः**—यादसां विलंघनानि = यादोविलंघनानि, तैः विलोले विलोचने यस्याः तस्याः यादोविलंघनविलोलविलोचनायाः । श्च्योतन्त्यः निदाघसलिलाः अङ्गुलयः यस्य तेन = श्च्योतन्निदाघसलिलाङ्गुलिना ।

**अर्थः**—ईशार्थम् = ईशाय । चिराय = चिरकालम् । अम्भसि = जले । तपश्चरन्त्याः = तपः कुर्वत्याः । यादोविलंघनविलोलविलोचनायाः = जलजन्तु-विघट्टितचकितेक्षणायाः । भवान्याः = पार्वत्याः । अग्रकरं = कराग्रभागं । भवः = शङ्करः । श्च्योतन्निदाघसलिलाङ्गुलिना = स्रवत्स्वेदाङ्गुलिना । करेण = हस्तेन । अत्र = अस्मिन् हिमालये । आलम्बत = गृहीतवान् । अत्र वसन्त-तिलकावृत्तम् ।

**कोषः**—'यादांसि जलजन्तवः' इत्यमरः ।

**हिन्दी**—भगवान् शिव को पति रूप में प्राप्त करने के लिये पर्याप्त काल तक जल में तपस्या करती हुई, जलजन्तुओं के परिस्फुरण ( उछाल ) से चकित नेत्रों वाली पार्वती जी का हाथ इसी हिमालय पर्वत पर शिवजी ने पकड़ा था । शिवजी के उक्त हाथ की अङ्गुलियों से स्वेद टपक रहा था ॥ २९ ॥

येनापविद्धसलिलः स्फुटनागसद्मा
देवासुरैरमृतमम्बुनिधिर्ममन्थे ।
व्यावर्तनैरहिपतेरयमाहिताङ्कः
खं व्यालिखन्निव विभाति स मन्दराद्रिः ॥ ३० ॥

**अन्वयः**—देवासुरैः येन अपविद्धसलिलः स्फुटनागसद्मा अम्बुनिधिः अमृतं ममन्थे । अहिपतेः व्यावर्तनैः अहिताङ्कः अयं सः मन्दराद्रिः खं व्यालिखन् इव विभाति ।

**विग्रहः**—देवाश्च सुराश्च तैः = देवासुरैः । अपविद्धं सलिलं यस्य सः = अपविद्धसलिलः । स्फुटं नागसद्म यस्मिन् सः = स्फुटनागसद्मा । अम्बूनां निधिः = अम्बुनिधिः । अहीनां पतिस्तस्य = अहिपतेः । आहितः अङ्कः यस्मिन् सः = आहिताङ्कः ।

अर्थः—देवासुरैः=सुरासुरैः। येन=मन्दराद्रिणा। अपविद्धसलिलः=क्षिप्तजलः। स्फुटनागसद्मा=स्फुटपाताललोकः। अम्बुनिधिः=सागरः। अमृतं ममन्थे=मथितम्। अहिपतेः=वासुकेः। व्यावर्तनैः=वेष्टनैः। आहिताङ्कः=कृतचिह्नः। अयम्=निर्दिष्टः। सः=पूर्वोक्तः। मन्दराद्रिः=मन्दराचलः। खम्=आकाशम्। व्यालिखन्=व्यापारयन्। इव विभाति=शोभते। अत्रोत्प्रेक्षालङ्कारः।

कोषः—'सलिलं कमल जलम्' इत्यमरः।

हिन्दी—जिस मन्दराचल से सुरों तथा असुरों ने अमृत प्राप्त करने के लिए सागर मन्थन किया था। मन्थन करते समय जल के उछलने से पाताल लोक दिखलाई देने लगता था। वह मन्दराचल वासुकि के विवर्तन से चिह्नित होकर मानो आकाशमण्डल का भेदन कर रहा है॥ ३०॥

नीतोच्छ्रायं मुहुरशिशिररश्मेरुस्रै-
रानीलाभैर्विरचितपरभागा रत्नैः।
ज्योत्स्नाशङ्कामिह वितरति हंसश्येनी
मध्येऽप्यह्नः स्फटिकरजतभित्तिच्छाया॥ ३१॥

अन्वयः—इह अशिशिररश्मेः उस्रैः उच्छ्रायं नीता, आनीलाभैः रत्नैः विरचितपरभागा हंसश्येनी स्फटिकरजतभित्तिच्छाया अह्नः मध्ये अपि मुहुः ज्योत्स्नाशङ्कां वितरति।

विग्रहः—अशिशिराः रश्मयः यस्य, तस्य=अशिशिररश्मेः। आनीला आभा येषां तैः=आनीलाभैः। विरचितः परभागो यथा सा=विरचितपरभागा। हंस इव श्येनी हंसश्येनी। स्फटिकानां रजतानाञ्च भित्तयः तासां छाया=स्फटिकरजतभित्तिच्छाया। ज्योत्स्नायाः शङ्का, तां=ज्योत्स्नाशङ्काम्।

अर्थः—इह=अस्मिन्मन्दराद्रौ। अशिशिररश्मेः=सूर्यस्य। उस्रैः=किरणैः। उच्छ्रायम्=महत्त्वम्। नीता=प्रापिता। आनीलाभैः=असितप्रभैः, रत्नैः=मणिभिः। विरचितपरभागा=रचितापरभागा। हंसश्येनी=हंसश्वेतवर्णा। स्फटिकरजतभित्तिच्छाया=स्फटिकरजतभित्तिकान्तिः। अह्नः मध्ये=मध्याह्ने, अपि। मुहुः=भूयः। ज्योत्स्नाशङ्कां=चन्द्रिकाशङ्काम्। वितरति=जनयति। अत्र भ्रान्तिमदलङ्कारः।

कोषः—'विशदश्वेतपाण्डराः' इत्यमरः।

हिन्दी—इस मन्दराचल पर सूर्य की किरणों द्वारा ऊँची उठी हुई, इन्द्र नील मणियों की प्रभा से प्रतिबिम्बित, स्फटिक पत्थरों व रजत से बनी हुई दीवार की छाया मध्याह्न काल में भी बारम्बार चाँदनी की शङ्का उत्पन्न कर देती है ॥ ३१ ॥

दधत इव विलासशालि नृत्यं मृदु पतता पवनेन कम्पितानि ।
इह ललितविलासिनीजनभ्रूगतिकुटिलेषु पयःसु पङ्कजानि ॥ ३२ ॥

अन्वयः—इह मृदु पतता पवनेन कम्पितानि पङ्कजानि ललितविलासिनीजनभ्रूगतिकुटिलेषु पयःसु विलासशालि नृत्यं दधत इव ।

विग्रहः—ललितस्य विलासिनीजनस्य भ्रूगतिवत्कुटिलेषु=ललितविलासिनीजनभ्रूगतिकुटिलेषु । विलासं शीलमस्तीति तत्=विलासशालि ।

अर्थः—इह=अस्मिन् पर्वते । मृदु=मन्दं । पतता=वहता । पवनेन=वायुना । कम्पितानि=तरङ्गितानि । पङ्कजानि=कमलानि । ललितविलासिनीजनभ्रूगतिकुटिलेषु=सुन्दरीभ्रूगतिवत्कुटिलेषु, 'ईषत्तरंगितेषु' इत्यर्थः । पयःसु=जलेषु । विलासशालि नृत्यम्=सविलासनृत्यम् । दधत इव=धारयन्ति इव, सविलासं नृत्यन्तीवम् इत्यर्थः । अत्रोत्प्रेक्षालङ्कारः, पुष्पिताग्रावृत्तञ्च ।

कोषः—'लास्यं नृत्यं च नर्तने' इत्यमरः ।

हिन्दी—इस हिमालय पर सुन्दरियों की भौंहों के समान कुटिल गतियुक्त जल में धीरे-धीरे चलते हुए पवन के द्वारा कमल हिल रहे हैं । जैसे कि वे कम्पित कमल हाव-भाव सहित नृत्य कर रहे हों ॥ ३२ ॥

अस्मिन्नगृह्यत पिनाकभृता सलीलमाबद्धवेपथुरधीरविलोचनायाः ।
विन्यस्तमङ्गलमहौषधिरीश्वरायाः स्रस्तोरगप्रतिसरेण करेण पाणिः ॥३३॥

अन्वयः—अस्मिन् पिनाकभृता अधीरविलोचनायाः ईश्वरायाः आबद्धवेपथुः विन्यस्तमङ्गलमहौषधिः पाणिः स्रस्तोरगप्रतिसरेण करेण सलीलम् अगृह्यत ।

विग्रहः—पिनाकं बिभर्तीति पिनाकभृत् तेन=पिनाकभृता । अधीरे विलोचने यस्यास्तस्याः अधीरविलोचनायाः । आबद्धः वेपथुः यस्मिन् सः=आबद्धवेपथुः । विन्यस्तमङ्गलमहौषधिः यस्मिन् सः=विन्यस्तमङ्गलमहौषधिः । स्रस्तः उरग एव प्रतिसरः यस्य तेन=स्रस्तोरगप्रतिसरेण । लीलया सहितं सलीलम् ।

अर्थः—अस्मिन्=हिमालये । पिनाकभृता=शिवेन । अधीरविलोचनायाः=

चकितदृष्टेः । ईश्वरायाः=पार्वत्याः । आवद्धवेपथुः=प्राप्तकम्पः । विन्यस्तमङ्गल-महौषधिः=धृतशुभयवाङ्कुराद्योषधिः । पाणिः=करः । स्रस्तोरगप्रतिसरेण=गलितोरगहस्तसूत्रेण । करेण=हस्तेन । सलीलम्=सकौतुकम् । अगृह्यत=गृहीतः ।

कोषः—'आहुः प्रतिसरो हस्तसूत्रे माल्ये च मण्डने' इति विश्वः ।

हिन्दी—इसी पर्वत पर पिनाकपाणि भगवान् शिव ने अघोर नेत्रोंवाली पार्वतीजी का काँपता हुआ यवाङ्कुरादि शुभ लक्षणोंवाला हाथ अपने उरग के समान खिसकते हुए हस्तसूत्रवाले हाथ से सकौतुक पकड़ा था अर्थात् शिवजी ने यहीं पार्वतीजी के साथ विवाह किया था ॥ ३३ ॥

क्रामद्भिर्घनपदवीमनेकसंख्यैस्तेजोभिः शुचिमणिजन्मभिर्विभिन्नः ।
उस्राणां व्यभिचरतीव सप्तसप्तेः पर्यस्यन्निह निचयः सहस्रसंख्याम् । ३४ ।

अन्वयः—घनपदवीं क्रामद्भिः अनेकसंख्यैः शुचिमणिजन्मभिः तेजोभिः विभिन्नः पर्यस्यन् इह सप्तसप्तेः उस्राणां निचयः सहस्रसंख्याम् व्यभिचरति इव ।

विग्रहः—घनानां पदवी, तां घनपदवीम् । शुचिमणिभ्यः जन्म येषां तैः शुचिमणिजन्मभिः । सहस्रमिति संख्या=सहस्रसंख्या तां=सहस्रसंख्याम् ।

अर्थः—घनपदवीम्=आकाशम् । क्रामद्भिः=व्यश्नुवानैः । अनेकसंख्यैः=बहुसंख्यैः । शुचिमणिजन्मभिः=पूतस्फटिकजातैः । तेजोभिः=प्रकाशैः । विभिन्नः=मिश्रः । (अत एव) पर्यस्यन्=प्रसर्पन् । इह=पर्वते । सप्तसप्तेः=सूर्यस्य । उस्राणां=किरणानाम् । निचयः=निकरः । सहस्रसंख्याम्=दशशतसंख्याम् । व्यभिचरति इव=अतिक्रामतीव । अत्रोत्प्रेक्षालङ्कारः ।

कोषः—'घनजीमूतमुदिरजलमुग्धूमयोनयः' इत्यमरः ।

हिन्दी—आकाशमार्ग को पार करनेवाले बहुसंख्यक पवित्र मणियों द्वारा उत्पन्न तेजों से मिला हुआ सूर्य की किरणों का समूह इस पर्वत पर अपनी 'सहस्रसंख्या' को भी पार सा कर रहा है ॥ ३४ ॥

व्यधत्त यस्मिन् पुरमुच्चगोपुरं पुरां विजेतुर्धृतये धनाधिपः ।
स एष कैलास उपान्तसर्पिणः करोत्यकालास्तमयं विवस्वतः ॥ ३५ ॥

अन्वयः—यस्मिन् धनाधिपः पुरां विजेतुः धृतये उच्चगोपुरं पुरं व्यधत्त । स एष कैलासः उपान्तसर्पिणः विवस्वतः अकालास्तमयं करोति ।

विग्रहः--धनानामधिपः = धनाधिपः। उच्चं गोपुरम् = उच्चगोपुरम्। उपान्ते सर्पतीत्युपान्तसर्पी तस्य = उपान्तसर्पिणः।

अर्थः--यस्मिन् = यत्र कैलासे। धनाधिपः = कुबेरः। पुरां विजेतुः = त्रिपुरजेतुः, शिवस्य। धृतये = संतोषाय। उच्चगोपुरम् = उन्नतपुरद्वारम्, पुरम् = अलकाख्यां पुरीम्। व्यधत्त = निर्मितवान्। स एषः = ईदृशः। कैलास = कैलासपर्वतः। उपान्तसर्पिणः = प्रान्तचारिणः। विवस्वतः = रवेः। अकालास्तमयम् = असमयास्तमयम्। करोति = विदधाति।

कोषः--'पुरद्वारं तु गोपुरम्' इत्यमरः।

हिन्दी--जिस पर्वत पर कुबेर ने त्रिपुरविजेता भगवान् शिव के सन्तोष के लिए ऊँचे-ऊँचे गोपुरों ( फाटकों ) वाला नगर निर्मित ( स्थापित ) किया था। इस प्रकार का यह कैलास पर्वत समीप में पहुँचे हुए सूर्य भगवान् को समय के पूर्व ही अस्त सा कर देता है ।। ३५ ।।

नानारत्नज्योतिषां सन्निपातैश्छन्नेष्वन्तःसानु वप्रान्तरेषु।
बद्धां बद्धां भित्तिशङ्काममुष्मिन्नावानावान्मातरिश्वा निहन्ति ॥ ३६ ॥

अन्वयः—अमुष्मिन् अन्तःसानु नानारत्नज्योतिषां सन्निपातैः छन्नेषु वप्रान्तरेषु बद्धां बद्धां भित्तिशङ्काम् आवानावान् मातरिश्वा निहन्ति।

विग्रहः—नानारत्नानां ज्योतींषि = नानारत्नज्योतींषि, तासां = नानारत्नज्योतिषाम्। भित्तेः शङ्का ताम् = भित्तिशङ्काम्।

अर्थः—अमुष्मिन् = अस्मिन् कैलासे। अन्तःसानुः = शिखरेषु। नानारत्नज्योतिषाम् = अनेकमणिकान्तीनाम्। सन्निपातैः = व्यतिकरैः। छन्नेषु = छादितेषु। वप्रान्तरेषु = कटकान्तरेषु। बद्धां बद्धाम् = अभीक्ष्णबद्धाम्। भित्तिशङ्काम् = 'भित्तिः' इति सन्देहम्। आवानावान् = अभीक्ष्णमापतन्। मातरिश्वा = पवनः। निहन्ति = निवर्त्तयति। अत्र सन्देहालङ्कारः।

कोषः—'प्रस्थः सानुरस्त्रियाम्'। इत्यमरः।

हिन्दी—इस कैलास के शिखरों पर विविध रत्नों के प्रभापुञ्ज से ढूहों के अन्तराल आच्छादित होने पर सुदृढ़ दीवार की शङ्का उत्पन्न करते हैं। किन्तु मातरिश्वा ( पवन ) बार-बार सञ्चरित होकर इस दीवार की शङ्का को दूर कर देता है ।। ३६ ।।

रम्या नवद्युतिरपैति न शाद्वलेभ्यः
श्यामीभवन्त्यनुदिनं नलिनीवनानि ।
अस्मिन् विचित्रकुसुमस्तवकाचितानां
शाखाभृतां परिणमन्ति न पल्लवानि ।। ३७ ।।

अन्वयः—अस्मिन् शाद्वलेभ्यः रम्याः नवद्युतिः न अपैति । नलिनीवनानि अनुदिनं श्यामीभवन्ति । विचित्रकुसुमस्तवकाचितानां शाखाभृतां पल्लवानि न परिणमन्ति ।

विग्रहः—शादाः सन्त्येष्विति=शाद्वलाः, तेभ्यः=शाद्वलेभ्यः । नवा द्युतिः= नवद्युतिः । नलिनीनां वनानि=नलिनीवनानि । दिनंदिनम्=अनुदिनम् । विचित्राणां कुसुमानां स्तवकानि, तैः आचिता विचित्रकुसुमस्तवकाचिताः, तेषां = विचित्रकुसुमस्तवकाचितानाम् । शाखाः बिभ्रतीति शाखाभृतः तेषां= शाखाभृताम् ।

अर्थः—अस्मिन्=अत्र कैलासे । शाद्वलेभ्यः=शष्पेभ्यः । रम्या=रमणीया । नवद्युतिः=नूतनकान्तिः । न अपैति=नापगच्छति । अनुदिनं = दिनंदिनम् । नलिनीवनानि=कमलवनानि । श्यामीभवन्ति न तु शीर्यन्ति पाण्डुरतां वा यान्ति । विचित्रकुसुमस्तवकाचितानां=चित्रितपुष्पस्तवकव्याप्तानाम् । शाखा-भृतां=पादपानाम् । पल्लवानि=दलानि । न परिणमन्ति=नैव पीतानि भवन्ति पतन्ति च । अत्र । पर्यायोक्तिरलङ्कारः ।

कोषः—'शाद्वलः शादहरिते' इत्यमरः ।

हिन्दी—इस कैलास पर हरी घास की रम्य तथा नवद्युति नहीं मिटती है अर्थात् वह सदैव हरी बनी रहती है । यहाँ पुरैन सदैव हरी बनी रहती, पीत अथवा शीर्ण नहीं होती । रंग-बिरंगे फूलों के गुच्छोंवाले पादप कभी पतझड़ नहीं होते हैं । अर्थात् यहाँ सदैव 'बहार' ऋतु बनी रहती है ।। ३७ ।।

परिसरविषयेषु लीढमुक्ता हरिततृणोद्गमशङ्कया मृगीभिः ।
इह नवशुककोमला मणीनां रविकरसंवलिताः फलन्ति भासः ।। ३८ ।।

अन्वयः—इह परिसरविषयेषु मृगीभिः हरिततृणोद्गमशङ्कया लीढमुक्ताः नवशुककोमलाः मणीनां भासः रविकरसंवलिताः फलन्ति ।

विग्रहः—उद्गमस्य शङ्का=उद्गमशङ्का । हरितानां तृणानामुद्गमशङ्का,

तया=हरिततृणोद्गमशङ्कया। पूर्वं लीढाः पश्चान्मुक्ताः=लीढमुक्ताः। नवाश्च ते शुकास्तद्वत्कोमलाः=नवशुककोमलाः। रवेः कराः=रविकराः तैः संवलिताः=रविकरसंवलिताः।

अर्थः—इह=अस्मिन्नद्रौ। परिसरविषयेषु=पर्यन्तदेशेषु। मृगीभिः=हरिणीभिः। हरिततृणोद्गमशङ्कया=नीलतृणाङ्कुरभ्रान्त्या। लीढमुक्ताः=आस्वादितत्यक्ताः। नवशुककोमलाः=बालशुकमृदवः। मणीनां=मरकतमणीनाम्। भासः=प्रभाः। रविकरसंवलिताः=सूर्यकिरणमिश्रिताः। फलन्ति=वर्द्धन्ते। अत्र भ्रान्तिमदलङ्कारः।

कोषः—'रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च' इत्यमरः।

हिन्दी—इस पर्वत पर आस-पास की भूमि पर मृगियों द्वारा हरी घास की शंका से चरने को मुँह डालकर, त्यागी हुई (घास न होने से), शुकवद् गहरे हरे रंग की मणियों की दीप्ति सूर्य की किरणों से मिश्रित होकर और भी बढ़ जाती है ॥ ३८ ॥

**उत्फुल्लस्थलनलिनीवनादमुष्मादुद्धूतः सरसिजसम्भवः परागः।**
**वात्याभिर्वियति विवर्तितः समन्तादाधत्ते कनकमयातपत्रलक्ष्मीम् ॥३९॥**

अन्वयः—वात्याभिः अमुष्माद् उत्फुल्लस्थलनलिनीवनाद् उद्धूतः वियति समन्तात् विवर्तितः सरसिजसम्भवः परागः कनकमयातपत्रलक्ष्मीम् आधत्ते।

विग्रहः—उत्फुल्लानां स्थलनलिनीनां वनम्, तस्मात्=उत्फुल्लस्थलनलिनीवनात्। सरसि जातानि=सरसिजानि, तेभ्यः सम्भवो यस्य सः=सरसिजसम्भवः। कनकमयम् आतपत्रम्=कनकमयातपत्रम् तस्य या लक्ष्मीस्ताम्=कनकमयातपत्रलक्ष्मीम्।

अर्थः—(अस्मिन्नद्रौ) वात्याभिः=वातसमूहैः। अमुष्माद्=अस्मात्। उत्फुल्लस्थलनलिनीवनात्=फुल्लस्थलकमलिनीकाननात्। उद्धूतः=उत्थापितः। वियति=नभसि। समन्तात्=इतस्ततः। विवर्तितः=परिमण्डलितः। सरसिजसम्भवः=कमलजातः। परागः=केसरः। कनकमयातपत्रलक्ष्मीम्=सुवर्णमयच्छत्रशोभाम्। आधत्ते=दधाति। अत्र निदर्शनालङ्कारः।

कोषः—'परागः सुमनोरजः' इत्यमरः।

हिन्दी—वायु के झकोरों से इस पर्वत पर खिले हुए स्थलनलिनी (गुलाब)

के वन से उड़ाया हुआ, आकाश में चारों ओर छाया हुआ कमल-पराग सुनहली छतरी के समान सुन्दर लगता है ॥ ३९ ।

इह सनियमयोः सुरापगायामुषसि सयावकसव्यपादरेखा ।
कथयति शिवयोः शरीरयोगं विषमपदा पदवी विवर्तनेषु ॥ ४० ॥

अन्वयः—इह उषसि सुरापगायां सयावकसव्यपादरेखा विषमपदा विवर्तनेषु पदवी सनियमयोः शिवयोः शरीरयोगं कथयति ।

विग्रहः—सुराणामापगा=सुरापगा, तस्यां=सुरापगायाम् । सव्यपादस्य रेखा=सव्यपादरेखा, सयावका सव्यपादरेखा यस्यां सा=सयावकसव्यपादरेखा । विषमाणि पदानि यस्यां सा=विषमपदा । शिवा च शिवश्च तयोः=शिवयोः । शरीरस्य योगस्त=शरीरयोगम् ।

अर्थः—इह=अस्मिन् कैलासे । उषसि=प्रभाते । सुरापगायां=सुरनद्याम् । सयावकसव्यपादरेखा = सालक्तकवामचरणमुद्रा । विषमपदा = अत्यल्पपदा । विवर्तनेषु = प्रदक्षिणाक्रियासु । पदवी=पद्धतिः । सनियमयोः=नियमव्रतोः । शिवयोः = पार्वतीशङ्करयोः । शररीरयोगम्=अर्द्धाङ्गसंघटनारूपम् । कथयति= वर्णयति । अत्र काव्यलिङ्गालङ्कारः ।

कोषः—'यावोऽलक्तो द्रुमामयः' इत्यमरः ।

हिन्दी—इस कैलास पर प्रातःकाल गङ्गा के तट पर संध्या-वन्दनादि से सम्बन्धित प्रदक्षिणा करने से उमा और शिव के पदचिह्न दिखलाई पड़ते हैं । इनमें महावर लगे हुए बायें पैर की रेखा दाहिने पैर से छोटी है । इससे शिव और पार्वती का अर्द्धाङ्गी स्वरूप होना प्रकटित होता है ॥ ४० ॥

सम्मूर्च्छतां रजतभित्तिमयूखजालै-
रालोलपादपलतान्तरनिर्गतानाम् ।
घर्मद्युतेरिह मुहुः पटलानि धाम्ना-
मादर्शमण्डलनिभानि समुल्लसन्ति ॥ ४१ ॥

अन्वयः—इह रजतभित्तिमयूखजालैः सम्मूर्च्छताम् आलोलपादपलतान्तर-निर्गतानाम् घर्मद्युतेः धाम्नाम् आदर्शमण्डलनिभानि पटलानि मुहुः समुल्लसन्ति ।

विग्रहः--रजतभित्तीनां मयूखजालानि = रजतभित्तिमयूखजालानि, तैः=

रजतभित्तिमयूखजालैः। आलोलानां पादपलतानाम् अन्तराणि = आलोलपादपलतान्तराणि तेभ्यः निर्गतानाम् = आलोलपादपलतान्तरनिर्गतानाम्। आदर्शस्य मण्डलनिभानि = आदर्शमण्डलनिभानि।

अर्थः—इह = अस्मिन् कैलासे। रजतभित्तिमयूखजालैः = रजतभित्तिकिरणनिकरैः। सम्मूर्च्छताम् = बहुलीभवताम्। आलोलपादपलतान्तरनिर्गतानाम् = कम्पिततरुशाखारन्ध्रप्रसृतानाम्। घर्मद्युतेः = सूर्यस्य। धाम्नाम् = तेजसाम्। आदर्शमण्डलनिभानि = दर्पणबिम्बसमानि। पटलानि = मण्डलानि। मुहुः = भूयो भूयः। समुल्लसन्ति = स्फुरन्ति न तु सातत्येन। अत्रोपमालङ्कारः।

कोषः—'किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः' इत्यमरः।

हिन्दी—इस कैलास पर चाँदी की दीवार की किरणों से उत्कर्षशाली, शनैः शनैः काँपती ( हिलती ) हुई वृक्ष-लताओं के बीच से निकलती हुई सूर्य-किरणों के समूह शीशे के प्रतिविम्बों के समान बारम्बार शोभित हो रहे हैं॥ ४१॥

शुक्लैर्मयूखनिचयैः परिवीतमूर्ति-
र्वप्राभिघातपरिमण्डलितोरुदेहः।
शृङ्गाण्यमुष्य भजते गणभर्तुरुक्षा
कुर्वन्वधूजनमनःसु शशाङ्कशङ्काम्॥ ४२॥

अन्वयः—शुक्लैः मयूखनिचयैः परिवीतमूर्त्तिः वप्राभिघातपरिमण्डलितोरुदेहः गणभर्त्तुः उक्षा वधूजनमनःसु शशाङ्कशङ्काम् कुर्वन् अमुष्य शृङ्गाणि भजते।

विग्रहः—मयूखानां निचयास्तैः = मयूखनिचयैः। परिवीता मूर्तिर्यस्य सः = परिवीतमूर्त्तिः। परिमण्डलितः उरुदेहः = परिमण्डलितोरुदेहः। वप्राभिघातेन परिमण्डलितोरुदेहः यस्य सः = वप्राभिघातपरिमण्डलितोरुदेहः। गणानां भर्ता, तस्य = गणभर्त्तुः। वधूजनानां मनःसु = वधूजनमनःसु। शशः अङ्के यस्य सः = शशाङ्कः, तस्य शङ्का, ताम् = शशाङ्कशङ्काम्।

अर्थः—शुक्लैः = शुभ्रैः। मयूखनिचयैः = किरणनिकरैः। परिवीतमूर्तिः = व्याप्तदेहः। वप्राभिघातपरिमण्डलितोरुदेहः = वप्रक्रीडावर्तुलीकृतबृहच्छरीरः।

गणभर्त्तुः=प्रमथनाथस्य। उक्षा=वृषभः। वधूजनमनःसु=युवतिमनःसु। शशांकशंकाम्=चन्द्रभ्रान्तिम्। कुर्वन्=सम्पादयन्। अमुष्य=अस्य कैलासस्य। शृङ्गाणि=शिखराणि। भजते=सेवते। अत्र भ्रान्तिमदलंकारः।

कोषः—'उक्षाऽड्वान् बलीवर्दं ऋषभो वृषभो वृषः' इत्यमरः।

हिन्दी—शुभ्र किरणों से धवलित, वप्रक्रीडाप्रसक्ति से वर्त्तुलाकार (झुका हुआ) शरीरवाला शिवजी का नादिया (बैल) युवतियों के मन में चन्द्रमा होवे का भ्रम उत्पन्न करता हुआ इसी हिमालय (कैलास) के शिखरों पर निवास करता है॥ ४२॥

सम्प्रति लब्धजन्म शनकैः कथमपि लघुनि
क्षीणपयस्युपेयुषि भिदां जलधरपटले।
खण्डितविग्रहं बलभिदो धनुरिह विविधाः,
पूरयितुं भवन्ति विभवः शिखरमणिरुचः॥ ४३॥

अन्वयः—इह विविधाः शिखरमणिरुचः सम्प्रति लघुनि क्षीणपयसि भिदाम् उपेयुषि जलधरपटले कथमपि शनकैः लब्धजन्म खण्डितविग्रहं बलभिदः धनुः पूरयितुं विभवः भवन्ति।

विग्रहः—शिखरेषु मणिरुचः=शिखरमणिरुचः। क्षीणं पयः=क्षीणपयस्त-स्मिन्=क्षीणपयसि। जलधराणां पटले=जलधरपटले। लब्धं जन्म येन तत्=लब्धजन्म। खण्डितो विग्रहो यस्य तत् खण्डितविग्रहम्।

अर्थः—इह=अस्मिन् पर्वते। विविधाः=नानावर्णाः। शिखरमणिरुचः=सानुमणिकान्तयः। सम्प्रति=शरदि। लघुनि=अगुरुणि। क्षीणपयसि=शुष्कजले। भिदां=भेदम्। उपेयुषि=गते। जलधरपटले=मेघमण्डले। कथमपि=केनापि प्रकारेण। लब्धजन्म=उत्पन्नं। खण्डितविग्रहम्=छिन्नस्वरूपम्। बलभिदः=शक्रस्य। धनुः=चापं। पूरयितुम्=पूर्णं कर्तुम्। विभवः=समर्थाः भवन्ति। अत्रातिशयोक्तिरलङ्कारो वंशपत्रपतितं वृत्तञ्च।

कोषः—'धाराधरो जलधरस्तडित्वान्वारिदोऽम्बुभृत्' इत्यमरः।

हिन्दी—इस कैलास पर विविध शिखर-मणियों की कान्ति, शरदृतु में छोटे-छोटे तथा जलरहित बादल बन जाने पर मेघमण्डल में जैसे-तैसे धीरे-धीरे सूक्ष्म या खण्डित रूप में निकले हुए इन्द्रधनुष को पूर्ण कर देती है॥ ४३॥

स्नपितनवलतातरुप्रवालैरमृतलवस्रुतिशालिभिर्मयूखैः ।
सततमसितयामिनीषु शम्भोरमलयतीह वनान्तमिन्दुलेखा ॥ ४४ ॥

अन्वयः—इह शम्भोः इन्दुलेखा स्न[illegible]नवलतातरुप्रवालैः अमृतलवस्रुति शालिभिः मयूखैः सततम् असितयामिनीषु वनान्तम् अमलयति ।

विग्रहः—इन्दोः लेखा=इन्दुलेखा । लतातरूणां प्रवालानि=लतातरुप्रवालानि । स्नपितानि नवानि लतातरुप्रवालानि यैस्तैः स्नपितनवलतातरुप्रवालैः । अमृतलवस्रुत्या शालन्ते ये, तैः अमृतलवस्रुतिशालिभिः । असिताः यामिन्यः=असितयामिन्यः तासु=असितयामिनीषु । वनस्यान्तस्तं=वनान्तम् ।

अर्थः—इह=अत्राद्रौ । शम्भोः=शिवस्य । इन्दुलेखा=चन्द्ररेखा । स्नपितनवलतातरुप्रवालैः=सिक्तनूतनशाखापादपप्रवालैः । अमृतलवस्रुतिशालिभिः=अमृतविन्दुनिष्यन्दशालिभिः । मयूखैः=किरणैः । सततम्=निरन्तरम् । असितयामिनीषु=कृष्णरात्रिषु । वनान्तं=वनान्तप्रदेशम् । अमलयति=धवलयति ।

कोषः—'विभावरीतमस्विन्यौ रजनी यामिनो तमी' इत्यमरः ।

हिन्दी—इस कैलास पर भगवान् शंकर की शिरःस्थित चन्द्रलेखा सदैव अमृत-बिन्दु टपकाने वाली किरणों से नवलतातरु को सींचती रहती है । तथा वह कृष्णपक्ष की अन्धेरी रात्रियों में वनान्त भाग को धवलित वना देती है ॥ ४४ ॥

क्षिपति योऽनुवनं विततां बृहद्बृहतिकामिव रौचनिकीं रुचम् ।
अयमनेकहिरण्मयकन्दरस्तव पितुर्दयितो जगतीधरः ॥ ४५ ॥

अन्वयः—यः अनुवनं विततां रौचनिकीं रुचम् बृहद्बृहतिकाम् इव क्षिपति । अनेकहिरण्मयकन्दरः अयम् तव पितुः दयितः जगतीधरः ।

विग्रहः—वनेवनेऽनुवनम् । रोचनया रक्तां=रौचनिकीम् । बृहती चासौ बृहतिका=बृहद्बृहतिका, ताम्=बृहद्बृहतिकाम् । अनेकाः हिरण्यमयकन्दराः सन्ति यस्मिन् सः=अनेकहिरण्मयकन्दरः । जगत्या धरः=जगतीधरः ।

अर्थः—यः=पुरोवर्त्ती । अनुवनं=वनेवने विततां=विस्तृताम् । रौचनिकीम् रुचम्=रुचिकरां कान्ति सौवर्णकान्तिमित्यर्थः । बृहद्बृहतिकाम्=महोत्तरासङ्गम् इव । क्षिपति=प्रसारयति । अनेकहिरण्यमयकन्दरः=बहुहिरण्मयकन्दरायुक्तः । अयम्=निर्दिष्टः । तव=ते । पितुः=इन्द्रस्य । दयितः=प्रियः । जगतीधरः=सर्वतः अस्तीति शेषः । द्रुतविलम्बितवृत्तमत्र ।

कोषः—'द्वौ प्रावारोत्तरासङ्गौ समौ वृहतिका तथा' इत्यमरः।

हिन्दी—अनेक स्वर्णकन्दराओं वाला यह इन्द्रनील पर्वत तुम्हारे पिता इन्द्रदेव का मित्र ( प्रिय ) है। यह चारों ओर वनों में अपनी रुचिकर स्वर्ण-कान्तिरूपी चादर को फैला-सा रहा है ॥ ४५ ॥

सक्ति जवादपनयत्यनिले लतानां
वैरोचनैर्द्विगुणिताः सहसा मयूखैः।
रोधोभुवां मुहुरमुत्र हिरण्मयीनां
भासस्तडिद्विलसितानि विडम्बयन्ति ॥ ४६ ॥

अन्वयः—अमुत्र अनिले जवाद् लतानां सक्तिम्। अपनयति सहसा वैरोचनैः मयूखैः द्विगुणिताः हिरण्मयीनां रोधोभुवां भासः मुहुः तडिद्विलसितानि विडम्बयन्ति।

विग्रहः—रोधसि भवन्ति, तासाम्=रोधोभुवाम्। तडितः विलसितानि= तडिद्विलसितानि।

अर्थः—अमुत्र=अस्मिन्नद्रौ। अनिले=वाते। जवाद्=वेगात्। लतानाम्= शाखानाम्। सक्तिम्=अन्योन्यसङ्गम्। नयति=दूरीकुर्वति सति। सहसा= हठात्। वैरोचनैः=सावित्रैः। मयूखैः=किरणैः। द्विगुणिताः=द्विगुणीकृताः। हिरण्मयीनां=हिरण्यविकाराणाम्, रोधोभुवाम्=तटभुवाम्। भासः=प्रभाः। मुहुः=पुनः, तडिद्विलसितानि=विद्युद्विलसितानि। विडम्बयन्ति=तिरस्कुर्वन्ति। अत्रोपमालङ्कारः।

कोषः—'गुणस्त्वावृत्तिशब्दादिष्विन्द्रियामुख्यतन्तुषु' इति वैजयन्ती।

हिन्दी—इस इन्द्रनील पर्वत पर वायु वेग से चलकर लताओं की परस्पर सक्ति ( आपस में मिलना ) को दूर कर देती है। अतः सूर्य की किरणों से द्विगुणित बनी हुई सुवर्णमयी तटभूमि की कान्ति बिजली की छटा को भी तिरस्कृत-सी करती है ॥ ४६ ॥

कषणकम्पनिरस्तमहाहिभिः क्षणविमत्तमतङ्गजवर्जितैः।
इह मदस्नपितैरनुमीयते सुरगजस्य गतं हरिचन्दनैः ॥ ४७ ॥

अन्वयः इह कषणकम्पनिरस्तमहाहिभिः क्षणविमत्तमतङ्गजवर्जितैः मदस्न-पितैः हरिचन्दनैः सुरगजस्य गतम् अनुमीयते।

विग्रहः—कषणेन यः कम्पस्तेन निरस्ताः महाहयः येभ्यस्तैः = कषण-कम्पनिरस्तमहाहिभिः। विमत्ता मतंगजाः विमत्तमतंगजास्तैः। क्षणं विमत्त-मतङ्गजैः वर्जितास्तैः = क्षणविमत्तमतङ्गजवर्जितैः। मदेन स्नपितास्तैः = मदस्नपितैः।

अर्थः—इह = अत्र पर्वते। कषणकम्पनिरस्तमहाहिभिः = कण्डूयनकम्पदूरी-कृतमहासर्पैः। क्षणविमत्तमतङ्गजवर्जितैः = क्षणं मत्तगजहीनैः। मदस्नपितैः = मदजलसिक्तैः। हरिचन्दनैः = चन्दनपादपैः। सुरगजस्य = ऐरावतस्य। गतं = गमनम्। अनुमीयते = कल्प्यते। अत्र हरिचन्दनविशेषणैः काव्यलिङ्गमुन्नेयम्।

कोषः—'सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्' इत्यमरः।

हिन्दी—इस पर्वत पर मतवाले हाथियों के ( खुजली मिटाने को ) रगड़ ( घर्षण ) से उत्पन्न कम्पन के द्वारा चन्दन पादपों से साँप पृथक् हो गये हैं तथा क्षण भर के लिए वे मतवाले हाथी भी वहाँ से अन्यत्र चले गये हैं। ऐसी दशा में उन हरिचन्दन पादपों से टपकते हुए मदजल को देखकर यह अनुमान हो रहा है कि यहाँ ऐरावत आया होगा॥ ४७॥

जलदजालघनैरसिताश्मनामुपहतप्रचयेह मरीचिभिः।
भवति दीप्तिरदीपितकन्दरा तिमिरसंवलितेव विवस्वतः॥ ४८॥

अन्वयः—इह जलदजालघनैः असिताश्मनाम् मरीचिभिः उपहतप्रचया अदीपितकन्दरा विवस्वतः दीप्तिः तिमिरसंवलिता इव भवति।

विग्रहः—जलदानां जालघनैः = जलदजालघनैः। असिताः अश्मानः = असिताश्मानस्तेषाम् = असिताश्मनाम्। उपहतः प्रचयः यया सा उपहतप्रचया। न दीपिताः कन्दराः यया सा = अदीपितकन्दरा। तिमिरेण संवलिता = तिमिर-संवलिता।

अर्थः—इह = अत्र पर्वते। जलदजालघनैः = सघनघनैः। असिताश्मनाम् = नीलमणीनाम्। मरीचिभिः = दीधितिभिः। उपहतप्रचया = विघटितसंघाता। अदीपितकन्दरा = अप्रकाशितगह्वरा। विवस्वतः = भानोः। दीप्तिः = प्रकाशः। तिमिरसंवलिता = तिमिराच्छन्ना इव भवति। अत्रोत्प्रेक्षालङ्कारः।

कोषः—'भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्' इत्यमरः।

हिन्दी—इस इन्द्रनील पर्वत पर घनी मेघमालाओं के समान नीलमणियों की किरणों द्वारा आपस में टकरा कर सूर्य की किरणें कन्दराओं को प्रकाशित नहीं कर पाती हैं। इस प्रकार वे सूर्य-किरणें तिमिराच्छन्न-सी हो जाती हैं ॥ ४८ ॥

भव्यो भवन्नपि मुनेरिह शासनेन,
क्षात्रे स्थितः पथि तपस्य हतप्रमादः।
प्रायेण सत्यपि हितार्थकरे विधौ हि,
श्रेयांसि लब्धुमसुखानि विनान्तरायैः ॥ ४९ ॥

अन्वयः—इह भव्यः भवन् अपि मुनेः शासनेन क्षात्रे पथि स्थितः हतप्रमादः तपस्य। हि प्रायेण हितार्थकरे विधौ सति अपि अन्तरायैः विना श्रेयांसि लब्धुम् असुखानि।

विग्रहः—हतः प्रमादः येन सः=हतप्रमादः। हितम् अर्थञ्च करोति यः तस्मिन्=हितार्थकरे। नास्ति सुखं येषु तानि=असुखानि।

अर्थः—इह=अस्मिन् पर्वते। भव्यः=शान्तः। भवन् अपि=सम्भवन्नपि। मुनेः=व्यासस्य। शासनेन=इन्द्राराधनरूपाज्ञया। क्षात्रे=क्षत्रियोचिते। पथि=मार्गे। स्थितः=वर्तमानः। हतप्रमादः=प्रमादरहितः। तपस्य=तपश्चर। हि=यतः। प्रायेण=प्रायः, हितार्थकरे=हितकरे। विधौ=व्यापारे। सत्यपि=भवत्यपि। अन्तरायैः विना=विघ्नैः विना। श्रेयांसि=कल्याणानि। लब्धुम्=प्राप्तुम्। असुखानि=अशक्यानि।

कोषः—'अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः' इत्यमरः।

हिन्दी—( यक्ष ने अर्जुन से कहा ) हे अर्जुन! भव्य होते हुए भी व्यास मुनि की आज्ञा के अनुसार क्षत्रिय धर्म का पालन करते हुए सावधान होकर इस इन्द्रनील पर्वत पर तुम तप करो। प्रायः कल्याण होने में अनेक विघ्न पड़ते ही हैं ॥ ४९ ॥

मा भूवन्नपथहृतस्तवेन्द्रियाश्वाः
सन्तापे दिशतु शिवः शिवां प्रसक्तिम्।
रक्षन्तस्तपसि बलं च लोकपालाः
कल्याणीमधिकफलां क्रियां क्रियासुः ॥ ५० ॥

अन्वयः—तव इन्द्रियाश्वाः अपथहृतः मा भूवन्, सन्तापे शिवः शिवां प्रसक्तिम् दिशतु। लोकपालाः तपसि बलं रक्षन्तः कल्याणीं क्रियाम् अधिकफलां क्रियासुः।

विग्रहः—इन्द्रियाण्येवाश्वाः = इन्द्रियाश्वाः। अपथेन हरन्तीत्यपथहृतः। लोकान् पालयन्तीति लोकपालाः। अधिकं फलं यस्यां ताम् = अधिकफलाम्।

अर्थः—तव = ते ( अर्जुनस्य ) इन्द्रियाश्वाः = इन्द्रियतुरगाः। अपथहृतः = अपथचालकाः। मा भूवन् = नैव भवन्तु। सन्तापे = तपःक्लेशे। शिवः = शङ्करः। शिवां = कल्याणिनीं। प्रसक्तिम् = प्रवृत्तिम्। दिशतु = प्रकाशयतु। लोकपालाः = इन्द्रादयः। तपसि = तपश्चरणे। बलं = शक्तिम्। रक्षन्तः = वर्द्धयन्तः सन्तः। कल्याणीं = साध्वीम्। क्रियाम् = अनुष्ठानम्। अधिकफलाम् = अधिकफलवन्तम्। क्रियासुः = कुर्वन्तु।

कोषः—'घोटको वीतितुरगतुरङ्गाश्वतुरङ्गमाः' इत्यमरः।

हिन्दी—आपकी इन्द्रियाँ घोड़ों के समान अपथगामिनी न बनें, तपःक्लेश में भगवान् आपको कल्याण में प्रवृत्त करें तथा इन्द्रादि लोकपाल तपस्या में आपकी शक्ति की रक्षा करते हुए कल्याणकारी कार्य ( तपस्या ) को सफल बनावें॥ ५० ॥

इत्युक्त्वा सपदि हितं प्रियं प्रियार्हे
धाम स्वं गतवति राजराजभृत्ये।
सोत्कण्ठं किमपि पृथासुतः प्रदध्यौ
सन्धत्ते भृशमरतिं हि सद्वियोगः॥ ५१ ॥

अन्वयः—प्रियार्हे राजराजभृत्ये इति प्रियं हितम् उक्त्वा सपदि स्वं धाम गतवति पृथासुतः सोत्कण्ठम् किम् अपि प्रदध्यौ। हि सद्वियोगः भृशम् अरतिं सन्धत्ते।

विग्रहः—प्रियस्यार्हः = प्रियार्हः तस्मिन् = प्रियार्हे। राज्ञां राजा = राजराजः तस्य भृत्यः, तस्मिन् = राजराजभृत्ये। पृथायाः सुतः = पृथासुतः। उत्कण्ठया सहितम् = सोत्कण्ठम्। सता वियोगः = सद्वियोगः। न रतिः = अरतिस्ताम् = अरतिम्।

अर्थः—प्रियार्हे=प्रिययोग्ये । राजराजभृत्ये=यक्षराजसेवके । इति=पूर्वोक्तम् । प्रियं=मधुरम् । हितं=हितकरम् । उक्त्वा=कथयित्वा । सपदि=द्रुतम् । स्वं=स्वकीयम् । धाम=स्थानं । गतवति=गते सति । पृथासुतः=अर्जुनः । सोत्कण्ठम्=सोत्सुकम् । किमपि प्रदध्यौ=चिन्तयामास । हि=यतः । सद्वियोगः=सतां वियोगः । भृशम् = अत्यन्तम् । अरतिम् = व्यथाम् । सन्धत्ते = करोति । अत्र अर्थान्तिरन्यासः ।

कोषः—'भृत्ये दासेरदासेयदासगोप्यकचेटकाः' इत्यमरः ।

हिन्दी—इस प्रकार प्रिय एवं हितकर वाक्य कहकर प्रिय यक्ष के अपने लोक ( स्थान ) को चले जाने पर पृथासुत अर्जुन उत्कण्ठित होकर कुछ सोचने लगे । वास्तव में प्रिय लोगों का वियोग व्यथित कर देता है ।। ५१ ।।

तमनतिशयनीयं सर्वतः सारयोगा-
दविरहितमनेकेनाङ्कभाजा फलेन ।
अकृशमकृशलक्ष्मीश्चेतसाशंसितं स
स्वमिव पुरुषकारं शैलमभ्याससाद ।। ५२ ।।

अन्वयः—अकृशलक्ष्मीः सः सर्वतः सारयोगात् अनतिशयनीयम् अनेकेन अङ्कभाजा फलेन अविरहितम् अकृशं चेतसाशंसितं तं शैलम् अभि स्वं पुरुषकारम् इव आससाद ।

विग्रहः—अकृशाः लक्ष्म्यः यस्य सः = अकृशलक्ष्मीः । सारस्य योगस्तस्मात्=सारयोगात् । न अतिशयनीयम्=अनतिशयनीयम् । अङ्कं भजतीति अङ्कभाक्, तेनाङ्कभाजा । नास्ति । विरहितम् = अविरहितम् । पुरुषस्य कारस्तं = पुरुषकारम् ।

अर्थः—अकृशलक्ष्मीः = विशाललक्ष्मीः । सः = अर्जुनः । सर्वतः = सर्वत्र । सारयोगात् = बलप्रयोगात् । अनतिशयनीयम् = अनतिक्रमणीयम् । अनेकेन = बहुना । अङ्कभाजा = समीपं गतेन । फलेन = कार्यसिद्ध्या । अविरहितम् = अशून्यम् । अकृशम् = अतनुं । चेतसाशंसितं = प्राप्तुम् इष्टम् । तं=पूर्वोक्तम् । शैलम् अभि = नीलमणिपर्वतम् प्रति । स्वं = निजम् । पुरुषकारम्=भाग्यम् इव । आससाद = प्राप्तवान् । अत्रोपमालङ्कारः । मालिनीवृत्तम् ।

कोषः--'सारो बले स्थिरांशे च न्यासे क्लीबं वरे त्रिषु' इत्यमरः।

हिन्दी—जिस प्रकार अर्जुन का भाग्य सर्वथा अनतिक्रमणीय, शीघ्र होने-वाला तथा अनेक फलों से युक्त महान् था उसी प्रकार नीलमणिपर्वत भी था। पूर्ण बल लगाकर भी उसे कोई पार नहीं कर सकता था। बहुत समय से अर्जुन इस विशाल पर्वत पर जाने के लिए इच्छुक थे। इस प्रकार इन्द्रनील पर्वत पर अर्जुन पहुँच गये ॥ ५२ ॥

इति भारविकृतौ सुधाटीका-संवलित-किरातार्जुनीये पञ्चमः सर्गः।

## षष्ठः सर्गः

रुचिराकृतिः कनकसानुमथो परमः पुमानिव पतिं पतताम् ।
धृतसत्पथस्त्रिपथगामभितः स तमारुरोह पुरुहूतसुतः ॥ १ ॥

अन्वयः—अथो रुचिराकृतिः धृतसत्पथः सः पुरुहूतसुतः कनकसानुं तम् परमः पुमान् पतताम् पतिम् इव त्रिपथगाम् अभितः आरुरोह ।

विग्रहः—रुचिरा आकृतिर्यस्य सः=रुचिराकृतिः । धृतः सतां पन्था येन सः=धृतसत्पथः । पुरुहूतस्य सुतः = पुरुहूतसुतः । कनकस्य सानवो यस्य तम् = कनकसानुम् । त्रिभिः पथिभिर्गच्छतीति त्रिपथगा, ताम्=त्रिपथगाम् ।

अर्थः—अथो=इन्द्रनीलासादनानन्तरम् । रुचिराकृतिः=सौम्यरूपः । धृतसत्पथः=गृहीतसन्मार्गः । सः=अर्जुनः । पुरुहूतसुतः=इन्द्रपुत्रः । कनकसानुं=सुवर्णशेखरम् । तम्=इन्द्रनीलाद्रिम् । परमः पुमान् = विष्णुः । पततां=पक्षिणाम् । पतिं=स्वामिनं, गरुडम् इव । त्रिपथगाम्=भागीरथीम् । अभितः=अभिमुखम् । आरुरोह=आरोहणं कृतवान् । अत्र प्रमिताक्षरावृत्तम् ।

कोषः—'समीपोभयतः शीघ्रसाकल्याभिमुखेऽभितः' इत्यमरः ।

हिन्दी—इन्द्रकील पर्वत पर पहुँचने के पश्चात् सुन्दर शरीरवाले, सन्मार्ग पर चलनेवाले इन्द्रपुत्र अर्जुन ने भागीरथी के सम्मुख से सुवर्ण-शिखरों वाले उस इन्द्रनील पर्वत पर इस प्रकार चढ़ना आरम्भ किया जैसे पुराणपुरुष ( विष्णु ) गरुड़ पर चढ़ते हैं ॥ १ ॥

अथास्य कार्यसिद्धिनिमित्तानि सूचयन् मार्गं वर्णयति :—

तमनिन्द्यवन्दिन इवेन्द्रसुतं विहितालिनिक्वणजयध्वनयः ।
पवनेरिताकुलविजिह्मशिखा जगतीरुहोऽवचकरुः कुसुमैः ॥ २ ॥

अन्वयः—विहितालिनिक्वणजयध्वनयः पवनेरिताकुलविजिह्मशिखाः जगतीरुहः अनिन्द्यवन्दिनः इव तम् इन्द्रसुतं कुसुमैः अवचकरुः ।

विग्रहः—विहिताः अलिनिक्वणा जयध्वनय इव यैस्ते=विहितालिनिक्वणजयध्वनयः । पवनेन ईरिताः अतएव, आकुलाः विजिह्मः शिखाः येषां ते=

पवनेरिताकुलविजिह्मशिखा: । अनिन्द्या: ये वन्दिनस्ते = अनिन्द्यवन्दिन: । इन्द्रस्य सुतस्तम् = इन्द्रसुतम् ।

अर्थ:—विहितालिनिक्वणजयध्वनय: = कृतभ्रमरविजयध्वनय: । पवनेरिता-कुलविजिह्मशिखा: = वायुप्रेरितलोलवक्रशाखाग्रा: । जगतीरुह: = भूरुह: । अनिन्द्य-वन्दिन इव = अनवद्यस्तुतिपाठका इव । तम् = उपर्युक्तम् । इन्द्रसुतम् = पुरुहूतपुत्रम् ( अर्जुनम् ) । कुसुमै: = पुष्पै: । अवचकरु: = अभिववृषु: । अत्र सङ्करालङ्कार: ।

कोष:—'शिखा ज्वाला केकिमौल्यो: शिखाशाखाग्रमौलिषु' इति वैजयन्ती ।

हिन्दी—जयध्वनि के रूप में भौंरों के मधुर गुञ्जन से युक्त, वायु के द्वारा झुकी हुई सुन्दर शाखाओं वाले वृक्षों ने प्रशस्त वन्दीजनों की भाँति इन्द्रसुत अर्जुन का पुष्पों के द्वारा अभिषेक किया अर्थात् अर्जुन के स्वागत में वृक्षों ने पुष्पवृष्टि की ।। २ ।।

**अवधूतपङ्कजपरागकणास्तनुजाह्नवीसलिलवीचिभिद: ।**
**परिरेभिरेऽभिमुखमेत्य सुखा: सुहृद: सखायमिव तं मरुत: ।। ३ ।।**

अन्वय:—अवधूतपङ्कजपरागकणा: तनुजाह्नवीसलिलवीचिभिद: सुखा: मरुत: सुहृद: सखायम् इव तम् अभिमुखम् एत्य परिरेभिरे ।

विग्रह:—पङ्कजानां पराग: पङ्कजपरागस्तस्य कणा:, अवधूता: पंकजपराग-कणा: यैस्ते—अवधूतपङ्कजपरागकणा: । तनुजाह्नव्या: सलिलम्, तस्य वीचय-स्ता: भिन्दन्तीति = तनुजाह्नवीसलिलवीचिभिद: । सुखयन्तीति सुखा: ।

अर्थ:—अवधूतपङ्कजपरागकणा: = उद्धूतकमलकेसरकणा: । तनुजाह्नवी-सलिलवीचिभिद: = क्षीणगङ्गाजलतरङ्गभिद: । सुखा: = सुखकरा: । मारुता = पवना: । सुहृद: = मित्ररूपा: । सखायम् = मित्रम्, इव, तम् = अर्जुनम् । अभिमुखम् = सम्मुखम् । एत्य = गत्वा । परिरेभिरे = आलिङ्गितवन्त: ।

कोष:—'भंगस्तरंग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु' इत्यमर: ।

हिन्दी:—पङ्कजपराग को बिखेरते हुए, छोटी-छोटी गंगाजल की लहरों को भेदते हुए चलनेवाले सुखदायी मित्र पवन ने उसी प्रकार अर्जुन का आलिंगन किया जैसे कोई मित्र अपने प्रियमित्र के मिलने पर करता है ।। ३ ।।

**उदितोपलस्खलनसंवलिता: स्फुटहंससारसविरावयुज: ।**
**मुदमस्य माङ्गलिकतूर्यकृतां ध्वनय: प्रतेनुरनुवप्रमपाम् ।। ४ ।।**

अन्वयः—उदितोपलस्खलनसंवलिताः स्फुटहंससारसविरावयुजः अनुवप्रम् अपाम् वलयः अस्य माङ्गलिकतूर्यकृताम् मुदम् प्रतेनुः ।

विग्रहः—उदितानि उपलानि = उदितोपलानि, तेषु, स्खलनम्, तेन संवलिताः = उदितोपलस्खलनसंवलिताः । हंसानां सारसानाञ्च विरावाः हंससारसविरावास्तैः । स्फुटैः हंससारसविरावैः युज्यन्ते इति स्फुटितहंससारसविरावयुजः । मङ्गलं प्रयोजनं येषां ते = माङ्गलिकास्तैः । तूर्यैः कृताम् = माङ्गलिकतूर्यकृताम् ।

अर्थः—उदितोपलस्खलनसंवलिताः = उन्नतपाषाणप्रतिघातचूर्णिताः । स्फुटहंससारसविरावयुजः = हंससारसपक्षिकूजनयुक्ताः । अनुवप्रम् = उच्चस्थानात्पतताम् । अपाम = जलानाम् । ध्वनयः = स्वराः । अस्य = अर्जुनस्य । माङ्गलिकतूर्यकृताम् = मङ्गलकाले तूर्यवाद्यकृताम्, मुदम् = मोदम् । प्रतेनुः = विस्तारयामासुः । अत्र निदर्शनालङ्कारः ।

कोषः—'पुष्कराह्वस्तु सारसः' इत्यमरः ।

हिन्दी—उन्नत पाषाणों से टकराकर छिन्न-भिन्न हुई, स्पष्ट हंसों और सारसों के कूजन से युक्त ऊँचे से नीचे की ओर गिरने वाले जल की कलकल ध्वनियों ने अर्जुन के माङ्गलिक काल में होनेवाले मृदङ्गादि वाद्य घोषों से जनित मोद की अभिवृद्धि की ॥ ४ ॥

**अवरुग्णतुङ्गसुरदारुतरौ निचये पुरः सुरसरित्पयसाम् ।**
**स ददर्श वेतसवनाचरितां प्रणतिं बलीयसि समृद्धिकरीम् ॥ ५ ॥**

अन्वयः—सः पुरः अवरुग्णतुङ्गसुरदारुतरौ बलीयसि सुरसरित्पयसां निचये वेतसवनाचरितां समृद्धिकरीं प्रणतिं ददर्श ।

विग्रहः—तुङ्गश्चासौ सुरदारुतरुस्तस्मिन्, अवरुग्णे तुङ्गसुरदारुतरौ इति = अवरुग्णतुङ्गसुरदारुतरौ । सुरसरितः पयांसि = सुरसरित्पयांसि, तेषां = सुरसरित्पयसाम् । वेतसवनेन आचरिता, ताम् = वेतसवनाचरिताम् । समृद्धिं करोतीति समृद्धिकरी ताम् = समृद्धिकरीम् ।

अर्थः—सः = अर्जुनः । पुरः = अग्रे । अवरुग्णतुंगसुरदारुतरौ = भग्नोन्नतदेवदारुवृक्षे । बलीयसि = बलवत्तरे । सुरसरित्पयसां = गङ्गाजलानाम् । निचये = राशौ । वेतसवनाचरिताम् = वानीरवनाचरिताम् । समृद्धिकरीम् = श्रेयस्करीम् । प्रणतिं = नतिम् । ददर्श अवलोकयामास ।

कोष:—'रथाभ्रपुष्पविदुलशीतवानीरवञ्जुला:' इत्यमर: ।

हिन्दी—अर्जुन ने सामने ही गङ्गाजल में ऊँचे-ऊँचे देवदारु वृक्षों की टूटी हुई शाखाओं को इस प्रकार उछलते-डूबते देखा जैसे कि वे झुकी हुई बेंतलताओं की भाँति कल्याणकारिणी प्रणतियाँ हों ॥ ५ ॥

प्रबभूव नालमवलोकयितुं परित: सरोजरजसारुणितम् ।
सरिदुत्तरीयमिव संहतिमत्स तरङ्गरङ्गि कलहंसकुलम् ॥ ६ ॥

अन्वय:—स: परित: सरोजरजसा अरुणितम् संहतिमत् तरङ्गरङ्गि सरिदुत्तरीयम् इव कलहंसकुलम् अवलोकयितुम् अलम् न प्रबभूव ।

विग्रह:—सरोजानां रजस्तेन=सरोजरजसा । तरङ्गैः रङ्गि=तरङ्गरङ्गि । कलहंसानां कुलम्=कलहंसकुलम् ।

अर्थ:—स:=अर्जुन: । परित:=अभित: । सरोजरजसा=कमलपरागेण । अरुणितम्=पाटलितम् । संहतिमत्=नीरन्ध्रम् । तरङ्गरङ्गि=उर्मिशोभि । सरिदुत्तरीयम् इव=नदीस्तनांशुकसदृशम् । कलहंसकुलम्=कादम्बकुलम् । अवलोकयितुम्=द्रष्टुम् । अलम्=अत्यर्थम् । न प्रबभूव=न शशाक ।

कोष—'कादम्ब: कलहंस: स्यात्' इत्यमर: ।

हिन्दी—वह (अर्जुन) चारों ओर कमलरज से रंगे हुए, अभिन्न तथा जलतरंगों से शोभित, गङ्गा के उत्तरीय के समान बने हुए हंससमूह को अधिक समय तक देखने में समर्थ नहीं हो सके ।

दधति क्षती: परिणतद्विरदे मुदितालियोषिति मदस्रुतिभि: ।
अधिकां स रोधसि बबन्ध धृतिं महते रुजन्नपि गुणाय महान् ॥ ७ ॥

अन्वय:—स: क्षती: दधति परिणतद्विरदे मदस्रुतिभि: मुदितालियोषिति रोधसि अधिकां धृतिं बबन्ध । महान् रुजन् अपि महते गुणाय ।

विग्रह:—परिणता: द्विरदा: यस्मिंस्तस्मिन्=परिणतद्विरदे । मदानां स्रुतय: ताभि:=मदस्रुतिभि: । मुदिता: अलियोषित: यस्मिंस्तस्मिन् मुदितालियोषिति ।

अर्थ:—स:=अर्जुन: । क्षती:=क्षतानि । दधति=धारयति । परिणतद्विरदे=तिर्यग्दन्तप्रहारिद्विरदे । मदस्रुतिभि:=मदस्रवणै: । मुदितालियोषिति=प्रसन्नभ्रमरस्त्रीजने । रोधसि=तटे । अधिकाम्=महतीं । धृतिम्=प्रीतिम् ।

बबन्ध = बद्धवान् । महान् = साधुः । रुजन् = पीडितो भवन् । अपि । महतेगुणाय = महोत्कर्षाय । भवति । अत्र अर्थान्तरन्यासालङ्कारः ।

कोषः— तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः' इति हलायुधः ।

हिन्दी—अर्जुन के लिए गङ्गा का तट अधिक प्रियकर बन गया । यह तट हाथियों की तिरछी दातों को चोटों से क्षत-विक्षत था । हाथियों के मदक्षरण से प्रसन्न भौंरे उसमें व्याप्त थे । महान् पुरुष पीड़ित होकर भी महान् उत्कर्ष के लिए प्रयत्नशील रहते हैं ॥ ७ ॥

अनुहेमवप्रमरुणैः समतां गतमूर्मिभिः सहचरं पृथुभिः ।
स रथाङ्गनामवनितां करुणैरनुबध्नतीमभिननन्द रुतैः ॥ ८ ॥

अन्वयः—सः अनुहेमवप्रम् अरुणैः पृथुभिः ऊर्मिभिः समतां गतम् सहचरं करुणैः रुतैः अनुबध्नती रथाङ्गनामवनिताम् अभिननन्द ।

विग्रहः—अनु ( पश्चात् ) हेमवप्रस्य समीपे = अनुहेमवप्रम् । सह भूतं चरं = सहचरम् । रथाङ्गनाम्वां वनिता, ताम् = रथाङ्गवनिताम् ।

अर्थः—सः = अर्जुन । अनुहेमवप्रम् = हेमसानुसमीपे । अरुणैः = पाटलैः । पृथुभिः = विस्तृतैः । ऊर्मिभिः = तरङ्गैः । समतां = समत्वम् । गतम् = प्राप्तम् । सहचरं = प्रियम् । करुणैः = दीनैः । रुतैः = कूजितैः । अनुबध्नतीम् = अन्विष्यन्तीम् । रथाङ्गनामवनिताम् = चक्रवाकीम् । अभिननन्द = अभिनन्दनंचकार । अत्र तद्गुणालकारः ।

कोषः—सुवर्ण विस्तौ हेम्नोऽक्षे' इत्यमरः । 'हिरण्यं हेम हाटकम्' इत्यमरः ।

हिन्दी—अर्जुन ने स्वर्ण-शिखर के निकट अरुण तथा विस्तृत तरङ्गों के द्वारा समता करनेवाले प्रिय सहचर (चक्रवाक) को करुण स्वर से कूजन करके ढूँढती हुइ चक्रवाकी को अभिनन्दित किया ॥ ८ ॥

सितवाजिने निजगदू रुचयश्चलवीचिरागरचनापटवः ।
मणिजालमम्भसि निमग्नमपि स्फुरितं मनोगतमिवाकृतयः ॥ ९ ॥

अन्वयः—चलवीचिरागरचनापटवः रुचयः अम्भसि निमग्नम् अपि मणिजालम् मनोगतम् स्फुरितम् आकृतयः इव सितवाजिने निजगदुः ।

विग्रहः—चलवीचिनां रागः = चलवीचिरागः, तस्य रचना = चलवीचिराग-

रचना, तस्यां पटवः = चलवीचिरागरचनापटवः। मणीनां जालम् = मणिजालम्। मनसि गतम् = मनोगतम्। सिताः वाजिनः यस्य, तस्मै = सितवाजिने।

अर्थः—चलवीचिरागरचनापटवः=चञ्चलतरङ्गरञ्जनरचनासमर्थाः। रुचयः= प्रभाः। अम्भसि = जले। निमग्नम् = निमज्जितम्। अपि मणिजालम् = मणिसमूहम्। मनोगतम् = चेतोगतम्। स्फुरितम् = रोषादिविकारम्। आकृतय इव = भ्रूभङ्गादिबाह्यविकारा इव। सितवाजिने = अर्जुनाय। निजगदुः = ज्ञापयामासुः।

कोषः–'मणिर्द्वयोरश्मजातौ रत्ने मुक्तादिकेऽपि च।' इत्यमरः।

हिन्दी—चञ्चल तरङ्गों के रंगों की रचना करने में कुशल, रत्नों की प्रभायें जल में डूबी हुई थीं, उन प्रभाओं ने जल में छिपे मणि-समूह की सूचना अर्जुन को उसी प्रकार दी जैसे कि मनोगत रोषादि विकार आकृतियों से ही प्रकाश ( ज्ञात ) हो जाते हैं॥ ९॥

**उपलाहतोद्धततरङ्गधृतं जविना विधूतविततं मरुता।**
**स ददर्श केतकशिखाविशदं सरितः प्रहासमिव फेनमपाम्॥१०॥**

**अन्वयः**—उपलाहतोद्धततरङ्गधृतम् जविना मरुता विधूतविततं केतकशिखाविशदम् अपां फेन सरितः प्रहासम् इव सः ददर्श।

**विग्रहः**—उपलैः आहताः उद्धताः तरङ्गाः = उपलाहतोद्धततरङ्गाः = तैः धृतम् = उपलाहतोद्धततरङ्गधृतम्। विधूतं च विततं च = विधूतविततम्। केतकस्य शिखः = केतकशिखा = तद्वद् विशदं = केतकशिखाविशदम्।

**अर्थः**—उपलाहतोद्धततरङ्गधृतम् = प्रस्तरताडनोद्धतवीचिधृतम्। जविना = वेगवता। मरुता = वायुना। विधूतविततम्=उद्धतविस्तृतम्। केतकशिखाविशदम्= केतकशाखाग्रधवलम्। अपाम् = अम्भसां फेनम् = अब्धिकफम्। सरितः = नद्याः। प्रहासम् = अट्टहासम्। इव = सदृशम्। सः = अर्जुनः। ददर्श—अवलोकयामास। अत्रोत्प्रेक्षालंकारः।

**कोषः**—'डिण्डीरोऽब्धिकफः फेन' इत्यमरः।

**हिन्दी**—अर्जुन ने केतकी पुष्प के समान श्वेत जल-फेन को नदी के अट्टहास के समान देखा। यह फेन पत्थरों से ताडित होकर उत्पन्न हुई तरंगों से युक्त था तथा तीव्र वायु उसे उछालकर फैला रही थी॥ १०॥

बहु बर्हिचन्द्रकनिभं विदधे धृतिमस्य दानपयसां पटलम् ।
अवगाढमीक्षितुमिवेभपतिं विकसद्विलोचनशतं सरितः ॥ ११ ॥

अन्वयः—बर्हिचन्द्रकनिभं बहु दानपयसां पटलम् अवगाढम् इभपतिम् ईक्षितुम् विकसत् सरितः विलोचनशतम्, अस्य धृतिम् विदधे ।

विग्रहः—बर्हिणः चन्द्रकंनिभम् = बर्हिचन्द्रकनिभम् । दानस्य पयस्तेषाम् = दानपयसाम् । इभानां पतिः, तम् = इभपतिम् । विलोचनानि च तानि शतानि तेषां समाहार इति विलोचनशतम् ।

अर्थः—बर्हिचन्द्रकनिभं = मयूरमेचकसदृशम् । बहु = अनेकधा । दानमदजलानाम् । पटलम् = बिन्दुसमूहम् । अवगाढम् = अन्तःप्रविष्टम् इभपतिम् = गजराजम् । ईक्षितुम् = द्रष्टुम् । विकसत् = उन्मिषत् । सरितः = नद्यः । विलोचनशतम् = नेत्रशतम् इव । अस्य = अर्जुनस्य । धृतिम् = प्रीतिम् । विदधे = चकार । अत्रोत्प्रेक्षालंकारः ।

कोषः—'समौ चन्द्रकमेचकौ' इत्यमरः

हिन्दी—मयूरपिच्छ के समान, प्रचुर मदजलबिन्दु जल में प्रविष्ट गजराज को देखने के लिए नदी के खुले हुए सैकड़ों नेत्रों के समान अर्जुन के प्रेम को बढाने में सहायक हुए ॥ ११ ॥

प्रतिबोधजृम्भणविभिन्नमुखी पुलिने सरोरुहदृशा ददृशे ।
पतदच्छमौक्तिकमणिप्रकरा गलदश्रुबिन्दुरिव शुक्तिवधूः ॥ १२ ॥

अन्वयः—प्रतिबोधजृम्भणविभिन्नमुखी पतदच्छमौक्तिकमणिप्रकरा गलदश्रुबिन्दु इव शुक्तिवधूः पुलिने सरोरुहदृशा ददृशे ।

विग्रहः—प्रतिबोधे जृम्भणम् = प्रतिबोधजृम्भणम्, तेन विभिन्नम् मुखम् यस्याः सा = प्रतिबोधजृम्भणविभिन्नमुखी । पतन् अच्छमौक्तिकमणीनां प्रकरः यस्याः सा = पतदच्छमौक्तिकमणिप्रकरा । गलन्तः अश्रुबिन्दवः यस्याः सा = गलदश्रुबिन्दुः । शुक्तिः वधूः इव सा = शुक्तिवधूः । सरोरुहम् इव दृक् यस्य तेन = सरोरुहदृशा ।

अर्थः—प्रतिबोधजृम्भणविभिन्नमुखी = उद्बोधोच्छूनविवृतास्या । पतदच्छमौक्तिकमणिप्रकरा = प्रसरदच्छमौक्तिकमणिस्तोमा । गलदश्रुबिन्दुः = पतदश्रुबिन्दुः ।

इव शुक्तिवधूः=शूक्तिकावधूः। पुलिने=सैकते। सरोरुहदृशा=कमलनेत्रेणार्जुनेन। ददृशे=दृष्टा। अत्र सन्देहालङ्कारः।

कोषः—'पुलिनं सैकतं सिकतामयम्' इत्यमरः।

हिन्दी:—कमल के समान नेत्रों वाले अर्जुन ने पुलिन-प्रदेश में आँसुओं की झड़ीसी लगाती हुई रमणी के समान शुक्तिका ( सीपी ) को देखा। यह सीपी इस प्रकार खुली हुई थी जैसे जगकर जम्भाई लेते हुए मुख खोले हुए रमणी होती है। इस सीप से मौलिक कांति फैल रही थी ॥ १२ ॥

शुचिरप्सु विद्रुमलताविटपस्तनुसान्द्रफेनलवसंवलितः।
स्मरदायिनः स्मरयतिस्म भृशं दयिताधरस्य दशनांशुभृतः॥ १३॥

अन्वयः—अप्सु शुचिः तनुसान्द्रफेनलवसंवलितः विद्रुमलताविटपः स्मरदायिनः दशनांशुभृतः दयिताधरस्य भृशं स्मरयतिस्म।

विग्रहः—तनुना सान्द्रेण च फेनस्य लवेन संवलितः=तनुसान्द्रफेनलवसंवलितः। विद्रुमलतायाः विटपः=विद्रुमलताविटपः। स्मरं दातुं शीलमस्य सः स्मरदायी, तस्य=स्मरदायिनः। दशनांशु बिभर्तीति तस्य=दशनांशुभृतः। दयितायाः अधरस्तस्य=दयिताधरस्य।

अर्थः—अप्सु=जलेषु। शुचिः=स्वच्छः। तनुसान्द्रफेनलवसंवलितः=क्षीणसघनफेनशीकरसङ्गतः। विद्रुमलताविटपः=विद्रुमलतापल्लवः। स्मरदायिनः=कामोद्दीपकस्य। दशनांशुभृतः=दन्तकान्तिकलितस्य। दयिताधरस्य=प्रियाधरस्य। भृशम्=अत्यन्तम्। स्मरयतिस्म=स्मरणं कारयति स्म। अत्र स्मरणालङ्कारः।

कोषः—'विटपः पल्लवे षिड्गे विस्तारे स्तम्बशाखयोः' इति विश्वः।

हिन्दी:—जल में स्वच्छ तथा छोटे व घने फेन-कणों ( बिन्दुओं ) से युक्त विद्रुमलता का पल्लव, कामोद्दीपक, दशनकान्तिकलित प्रियतमा के अधर का स्मरण करा देता था ॥ १३ ॥

उपलभ्य चञ्चलतरङ्गधृतं मदगन्धमुत्थितवतां पयसः।
प्रतिदन्तिनामिव स सम्बुबुधे करियादसामभिमुखान्करिणः॥ १४॥

अन्वयः—सः चञ्चलतरङ्गधृतं मदगन्धम् उपलभ्य पयसः उत्थितवतां करियादसां प्रतिदन्तिनाम् इव अभिमुखान् करिणः सम्बुबुधे।

विग्रहः—चञ्चलैः तरंगैः धृतम् चञ्चलतरङ्गधृतम् । मदस्य गन्धस्तं=मदगन्धम् । करिआकाराणां यादसाम्=करियादसाम् ।

अर्थः—सः=अर्जुनः । चचलतरङ्गधृतम्=चपलोर्मिधृतम् । मदगन्धम्=मदजलगन्धम् । उपलभ्य=अघ्राय । पयसः=अम्भसः । उत्थितवताम्=उद्भूतानाम् । करियादसाम्=गजाकाराणां जलजन्तूनाम् । प्रतिदन्तिनां=प्रतिगजानाम् इव । अभिमुखान्=अभियातान् । करिणः=गजान् । सम्बुबुधे=ददर्श ।

कोषः—'मतङ्गजो गजो नागः कुञ्जरो वारणः करो' इत्यमरः ।

हिन्दी—अर्जुन ने चंचल तरङ्गों से आवृत मदगन्ध को सूंघकर जल की सतह से उठे हुए हाथियों के आकार के जलजन्तु जो कि प्रतिदन्तियों के समान थे, उन्हें प्रतिदन्तियों के समान ही देखा ॥ १४ ॥

स जगाम विस्मयमुदीक्ष्य पुरः सहसा समुत्पिपतिषोः फणिनः ।
प्रहितं दिवि प्रजविभिः श्वसितैः शरदभ्रविभ्रममपां पटलम् ॥ १५ ॥

अन्वयः—सः पुरः सहसा समुत्पिपतिषोः फणिनः प्रजविभिः श्वसितैः दिवि प्रहितं शरदभ्रविभ्रमम् अपां पटलम् उदीक्ष्य विस्मयम् जगाम ।

विग्रहः—समुत्पतितुम् इच्छोः=समुत्पिपतिषोः । शरदभ्रस्य विभ्रम इव विभ्रमः यस्य तत्=शरदभ्रविभ्रमम् ।

अर्थः—सः=अर्जुनः । पुरः=अग्रे । सहसा=हठात् । समुत्पिपतिषोः=समुत्पतितुमिच्छोः । फणिनः=सर्पस्य । प्रजविभिः=वेगवद्भिः । श्वसितैः=फूत्कारैः । दिवि=आकाशे । प्रहितं=प्रेरितम् । शरदभ्रविभ्रमम्=शरन्मेघसुन्दरम् । अपाम्=अम्भसाम् । पटलम्=रम्यम् । उदीक्ष्य=दृष्ट्वा । विस्मयम्=आश्चर्यम् । जगाम=अगच्छत् । अत्र स्वभावोक्तिरलङ्कारः ।

कोषः—'द्योदिवौ द्वे स्त्रियामभ्रम्' इत्यमरः ।

हिन्दी—अर्जुन ने सामने सहसा उछलने को इच्छुक सर्प की वेगवती फुंकारों से आकाश में प्रक्षिप्त शरत्कालीन मेघों के समान सुन्दर जलसुषमा को देखकर बड़ा आश्चर्य किया ॥ १५ ॥

स ततार सैकतवतीरभितः शफरीपरिस्फुरितचारुदृशः ।
ललिताः सखीरिव बृहज्जघनाः सुरनिम्नगामुपयती सरितः ॥१६॥

अन्वयः—सः सैकतवतीः अभितः शफरीपरिस्फुरितचारुदृशः सुरनिम्नगाम् उपयतीः बृहज्जघनाः ललिताः सखीः इव सरितः ततार।

विग्रहः—सिकताः आसु सन्तीति ताः=सैकतवतीः। शफरीणां परिस्फुरि तानि एव चारुदृशो यासां ताः=शफरीपरिस्फुरितचारुदृशः। निम्नम् गच्छतीति निम्नगा। सुराणां निम्नगा, तां=सुरनिम्नगाम्। बृहत् जघनं यासां ताः= बृहज्जघनाः।

अर्थः—सः=अर्जुनः। सैकतवतीः=सिकतायुक्ताः अभितः=परितः शफरीपरिस्फुरितचारुदृशः=मत्स्योत्स्फुरितसुन्दरनयना। सुरनिम्नगाम्=गङ्गा नदीम्। उपयतीः=भजन्तीः। बृहज्जघनाः=स्थूलजघनाः। ललिताः= सुन्दरीः। सखीः=प्रियाः इव। सरितः=नदीः। ततार=अतिक्रमणं चकार।

कोषः—'प्रोष्ठी तु शफरी द्वयोः।' इत्यमरः।

हिन्दी—अर्जुन ने रेतीली और चारों ओर उछलती हुई मछलियों से यु नदियों को पार किया। यह कूदती हुई मछलियाँ मानो उन नदियों की सुन्दर आखें हों। गङ्गा नदी में मिलनेवाली वे नदियाँ सघनजघनों वाली गङ्गा की सहेलियों के समान थीं॥ १६॥

अधिरुह्य पुष्पभरनम्रशिखैः परितः परिष्कृततलां तरुभिः।
मनसः प्रसत्तिमिव मूर्ध्नि गिरेः शुचिमाससाद स वनान्तभुवम्॥१७॥

अन्वयः—सः अधिरुह्य पुष्पभरनम्रशिखैः तरुभिः परितः परिस्कृततलां शुचिं मनसः प्रसत्तिम् इव गिरेः मूर्ध्नि वनान्तभुवम् आससाद।

विग्रहः—पुष्पभरेण नम्राः शिखाः येषाम् तैः=पुष्पभरनम्रशिखैः। परिष्कृतं तलं यस्यास्ताम्=परिष्कृततलाम्। वनान्ता भूस्ताम्, वनान्तभुवम्।

अर्थः—सः=अर्जुनः अधिरुह्य=गिरिमारुह्य। पुष्पभरनम्रशिखैः=पुष्प भारावनतशिखैः। तरुभिः=पादपैः परितः=अभितः। परिष्कृततलाम्= शुद्धतलां भूषितस्वरूपां वा। शुचिम्=शुद्धाम्। मनसः=चेतसः। प्रसत्तिम्= प्रसादम्। इव। गिरेः=पर्वतस्य। मूर्ध्नि=शिखरे। वनान्तभुवम्=वनस्थलीम् आससाद=प्राप्तवानिति। अत्रोत्प्रेक्षालङ्कारः।

कोषः—'अथ स्वरूपयोरस्त्री तलम्' इत्यमरः। 'अन्तोऽव्यवसिते मृते स्वरूपे निश्चयेऽन्तिके' इति वैजयन्ती।

हिन्दी—अर्जुन ने इन्द्रनील पर्वत पर चढ़कर फलों के भार से झुके हुए वृक्षों के द्वारा शोभित चारों ओर स्वच्छ तलवाली वनस्थली को देखा। यह वनस्थली पर्वत के मस्तक पर मन को प्रसन्न करनेवाली साक्षात् मूर्त्ति के समान थी ॥ १७ ॥

अनुसानु पुष्पितलतावितति: फलितोरुभूरुहविविक्तवनः।
धृतिमाततान तनयस्य हरेस्तपसेऽधिवस्तुमचलामचलः ॥ १८ ॥

अन्वयः—अनुसानु पुष्पितलतावितति: फलितोरुभूरुहविविक्तवनः अचलः हरेः तनयस्य तपसे अधिवस्तुम् अचलाम् धृतिम् आततान।

विग्रहः—सानु सानु=अनुसानु। पुष्पिताः लतावितयः यस्मिन् सः=पुष्पितलतावितति:। फलिताः उरवः भूरुहाः येषु तानि विविक्तानि वनानि यस्मिन् सः=फलितोरुभूरुहविविक्तवनः। न चलतीत्यचलः।

अर्थः—अनुसानु=प्रतिसानु। पुष्पितलतावितति:=कुसुमितवल्लीवितति:। फलितोरुभूरुहविविक्तवनः=फलितबहुपादपविजनकाननः। अचलः=महीधरः इन्द्रकीलो नाम। हरेः=इन्द्रस्य। तनयस्य=सुतस्य, अर्जुनस्य। तपसे=तपश्चर्यायम्। अधिवस्तुम्=अधिष्ठातुम्। अचलाम्=स्थिराम्। धृतिम्=उत्साहम्। आततान=विस्तारयामास।

कोषः—विविक्तौ पूतविजनौ' इत्यमरः।

हिन्दी—इन्द्रनील पर्वत की प्रत्येक चोटी पर पुष्पित लताओं के वितान तने हुए थे। निर्जन वनों में उपजाऊ वृक्ष फल-फुलों से लदे थे। इस प्रकार इन्द्रनील पर्वत ने तपश्चरण के लिए अर्जुन की प्रीति को और भी बढ़ा दिया। ॥ १८ ॥

प्रणिधाय तत्र विधिनाऽथ धियं दधतः पुरातनमुनेर्मुनिताम्।
श्रममादधावसुकरं न तपः किमिवावसादकरमात्मवताम् ॥ १९ ॥

अन्वयः—अथ तत्र विधिना धियं प्रणिधाय मुनितां दधतः पुरातनमुनेः असुकरं तपः श्रमं न आदधौ। आत्मवताम् अवसादकरम् किम् इव।

विग्रहः—पुरातनः मुनिः, तस्य=पुरातनमुनेः। न सुकरमसुकरम्। अवसादं करोतीत्यवसादकरम्।

अर्थः—अथ=अनन्तरम्। तत्र=इन्द्रकीलपर्वते। विधिना=योगशास्त्रा-

नुसारेण धियं = चित्तवृत्तिम् । प्रणिधाय = नियम्य । मुनितां = मुनित्वम्। दधतः = धारयतः । पुरातनमुनेः = अर्जुनस्य । असुकरम् = दुष्करम् । तपःश्रमं = खेदम् । न आदधौ = न चकार । आत्मवताम् = मनस्विनाम् । अवसादकरं = खेदकरम् । किम् इव = नास्ति किञ्चिदपि । अत्रार्थान्तरालङ्कारः ।

कोषः—'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ।' इत्यमरः ।

हिन्दी—इसके बाद इन्द्रकील पर्वत पर योगशास्त्रानुकूल चित्तवृत्ति का नियमन ( निरोध ) करके अर्जुन को कठिन तप का श्रम नहीं हुआ । मनस्वी पुरुषों को दुःखदायी ( कष्टकर ) कुछ भी नहीं होता है ॥ १९ ॥

शमयन्धृतेन्द्रियशमैकसुखः शुचिभिर्गुणैरघमयं स तमः ।
प्रतिवासरं सुकृतिभिर्ववृधे विमलः कलाभिरिव शीतरुचिः ॥ २० ॥

अन्वयः—धृतेन्द्रियशमैकसुखः शुचिभिः गुणैः अघमयं तमः शमयन् विमलः प्रतिवासरं सुकृतिभिः कलाभिः शीतरुचिः इव ववृधे ।

विग्रहः—धृतमिन्द्रियशमः एव एकं सुखं येन सः = धृतेन्द्रियशमैकसुखः। वासरं वासरं = प्रतिवासरम् । शीताः रुचयः यस्य सः शीतरुचिः ।

अर्थः—धृतेन्द्रियशमैकसुखः = धृतविषयव्यावृत्त्येकसुखः । शुचिभिः = निर्मलैः । गुणैः = मैत्र्यादिगुणैः । अघमयम् = पापरूपम् । तमः = अज्ञानम्। शमयन् = निवर्तयन् । विमलः = अमलिनः । सः = अर्जुनः । प्रतिवासरं = प्रतिदिनम् । सुकृतिभिः = सुकृतैः, तपोभिरित्यर्थः । कलाभिः = किरणैः । शीतरुचिः = सुधांशुः । इव = समम् । ववृधे = वृद्धिं प्राप ।

कोषः—'कला तु षोडशो भागो बिम्बोऽस्त्री' इत्यमरः ।

हिन्दी—जिस प्रकार शुभ्र चन्द्रमा इन्द्रिय-ताप को मिटाकर, अपनी कलाओं से अन्धकार मिटाता हुआ बढ़ता रहता है उसी प्रकार अर्जुन ने अपनी इन्द्रियों को नियमित कर सुख प्राप्त किया और वह अपने मैत्री आदि गुणों के द्वारा पापरूप अज्ञान को नष्ट करते हुए अपने सुकर्मों से नित्य प्रति बढ़ने लगे ॥ २० ॥

अधरीचकार च विवेकगुणादगुणेषु तस्य धियमस्तवतः ।
प्रतिघातिनीं विषयसङ्गरतिं निरुपप्लवः शमसुखानुभवः ॥ २१ ॥

अन्वयः—विवेकगुणात् अगुणेषु धियम् अस्तवतः तस्य निरुपप्लवः शमसुखानुभवः च प्रतिघातिनीं विषयसङ्गरतिम् अधरीचकार ।

विग्रहः—विवेक एव गुणः, तस्मात्=विवेकगुणात्। निर्गतः उपप्लवः यस्मात् सः निरुपप्लवः। शम एव सुखम्=शमसुखम् तस्य अनुभवः=शमसुखानुभवः। विषयाणां सङ्गः=विषयसंगः=तस्मिन् रतिस्ताम्=विषयसङ्गरतिम्।

अर्थः—विवेकगुणात्=तत्वावधारणात्। अगुणेषु=कामक्रोधादिदुर्गुणेषु। धियम्=बुद्धिम्। अस्तवतः=निवारितवतः। तस्य=अर्जुनस्य। निरुपप्लवः=निर्बाधः। शमसुखानुभवः=शान्त्यानन्दानुभवः। च। प्रतिघातिनीं=सोपप्लवाम्। विषयसङ्गरतिम्=शब्दाद्युपयोगरुचिम्। अधरीचकार=विषयनिस्पृहम् चकार।

कोषः—'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमरः।

हिन्दीः—तत्वज्ञान के अवधारण से काम क्रोधादि दुर्गुणों में लगी हुई बुद्धि को उससे अलग करनेवाले अर्जुन के निर्बाध शम-सुखानुभव ने अपनी विरोधिनी विषय-सङ्गरति को नीचे कर दिया अर्थात् तपः-कर्म के द्वारा विषयादिरति को पराजित कर दिया॥ २१॥

मनसा जपैः प्रणतिभिः प्रयतः समुपेयिवानधिपतिं स दिवः।
सहजेतरौ जयशमौ दधती बिभराम्बभूव युगपन्महसी॥ २२॥

अन्वयः- प्रयतः मनसा जपैः प्रणतिभिः दिवः अधिपतिं समुपेयिवान् सः सहजेतरौ जयशमौ दधती महसी युगपद् बिभराम्बभूव।

विग्रहः—सहजः इतरश्च=सहजेतरौ। जीयते अनेन इति जयः। शम्यते अनेन इति शमः जयश्च शमश्च=जयशमौ।

अर्थः—प्रयतः=हिंसादिविरतः। मनसा=ध्यानेन। जपैः=विशिष्टमन्त्राभ्यासैः। प्रणतिभिः=नमस्कारैः। दिवः=स्वर्गस्य। अधिपतिम्=स्वामिनम् इन्द्रम्। समुपेयिवान्=उपसेदिवान्। सः=अर्जुनः। सहजेतरौ=प्राकृतिकागन्तुकौ। जयशमौ=वीरशान्तरसौ। दधती=पुष्णती। महसी=तेजसी, युगपद्=सहैव। बिभराम्बभूव=बभार।

कोषः—'शमथस्तु शमः शान्तिः' इत्यमरः।

हिन्दी—हिंसादि कार्यों से विरत अर्जुन ने स्वर्गाधिपति इन्द्र की प्राप्ति के लिए ध्यान से तथा जप व नमस्कारादि क्रियाओं से सहज और अर्जित वीर व

शान्त रसों को धारण किया। वीर और शान्तरस मय तेजों से युक्त होते हुए अर्जुन के द्वारा एक साथ ही शोभित हुए ॥ २२ ॥

शिरसा हरिन्मणिनिभः स वहन् कृतजन्मनोऽभिषवणेन जयः।
उपमां ययावरुणदीधितिभिः परिमृष्टमूर्द्धनि तमालतरौ ॥ २३ ॥

अन्वयः—हरिन्मणिनिभः अभिषवेण कृतजन्मनः जटाः शिरसा वहन् सः अरुणदीधितिभिः परिमृष्टमूर्द्धनि तमालतरौ उपमां ययौ।

विग्रहः—कृतानि जन्मानि याभिस्ताः=कृतजन्मनः। अरुणैः दीधितिभिः=अरुणदीधितिभिः। परिमृष्टा मूर्द्धा यस्य तस्मिन्=परिमृष्टमूर्द्धनि। तमालस्य तरुः तस्मिन्=तमालतरौ।

अर्थः—हरिन्मणिनिभः=मरकतमणिसदृशः। अभिषवेण=स्नानेन। कृतजन्मनः=उत्पन्नाः। जटाः=सटा। शिरसा=मूर्ध्ना। वहन्=धारयन्। सः=अर्जुनः। अरुणदीधितिभिः=अरुणकिरणैः। परिमृष्टमूर्द्धनि=व्याप्तशिरसि। तमालतरौ=तमालवृक्षे। उपमाम्=साम्यम्। ययौ=अगच्छत्।

कोषः—'भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्।' इत्यमरः।

हिन्दी—मरकतमणि के समान कान्तिमान, स्नान के द्वारा पिशङ्गी बनी हुई जटाओं को शिरपर धारण किये अर्जुन अरुण-किरणों से व्याप्त तमाल वृक्ष के समान दिखलाई पड़ रहे थे ॥ २३ ॥

धृतहेतिरप्यधृतजिह्ममतिश्चरितैर्मुनीनधरयञ्शुचिभिः।
रमयाञ्चकार विरजाः स मृगान् कमिवेशते रमयितुं न गुणाः ॥ २४ ॥

अन्वयः—धृतहेतिः अपि अधृतजिह्ममतिः शुचिभिः चरितैः मुनीन् अधरयन् विरजाः सः मृगान् रमयाञ्चकार। गुणाः कम् इव रमयितुम् नेशते।

विग्रहः—धृतः हेतिः येन सः=धृतहेतिः। न धृता=अधृता जिह्मा मतिः येन सः=अधृतजिह्ममतिः।

अर्थः—धृतहेतिः=धृतायुधः। अपि। अधृतजिह्ममतिः=कुटिलमतिरहितः। शुचिभिः=पवित्रैः। चरितैः=चरित्रैः। मुनीन्=महर्षीन्। अधरयन्=तिरस्कुर्वन्। विरजाः=रजोगुणरहितः सः=अर्जुनः। मृगान्=हरिणान्। रमयाञ्चकार=रमयामास। गुणाः=दयादिगुणाः। कमिव रमयितुं न ईशते=कं न वशीकुर्वन्ति। अत्रार्थान्तरालङ्कारः।

कोष:—'सोमो ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः।

हिन्दी—आयुध धारण किये होने पर भी सरलमति वाले, रजोगुण से रहित तथा पवित्र आचरणों से मुनियों को जीतते हुए अर्जुन ने हिरणों को प्रसन्न कर लिया। गुण किसे नहीं प्रसन्न कर लेते हैं॥ २४॥

अनुकूलपातिनमचण्डगतिं किरता सुगन्धिमभितः पवनम्।
अवधीरितार्तवगुणं सुखतां नयता रुचां निचयमंशुमतः॥२५॥

अन्वयः—अनुकूलपातिनम् अचण्डगतिं सुगन्धि पवनम् अभितः किरता अवधीरितार्तवगुणम् अंशुमतः रुचां निचय सुखता नयता।

विग्रहः—अनुकूल पततीति तम् = अनुकूलपातिनम्। नास्ति चण्डा गतिः यस्य तम् = अचण्डगतिम्। ऋतुरस्य प्राप्त आर्तवः। आर्तवश्चासौ गुणः = आतवगुणः। अवधीरितः आतवगुणः यस्य तम् = अवधीरितातंवगुणम्।

अर्थः— अनुकूलपातिनम् = अनुसारपातिनम्। अचण्डगतिम् = चण्डगतिरहितं, मन्दगामिनमित्यर्थः। सुगन्धिम् = सुरभियुक्तम्। पवनम् = वायुम्। अभितः = परितः। किरता = प्रवर्तयता। अवधीरितार्तवगुणम् = तिरस्कृतार्तवस्वरूपम्। अंशुमतः = सूर्यस्य। रुचां = किरणानाम्। निचयम् = राशिम्। सुखतां = सुखस्पर्शताम्। नयता = प्रापयता।

कोष—'इनो भगो धामनिधिश्चांशुमाल्यब्जिनीपतिः।' इत्यमरः।

हिन्दी:—अनुकूल चलती हुई मन्द सुगन्धित वायु को चारों ओर फैलाते हुए तपश्चरण (तपस्या) ने ग्रीष्मकालीन गर्मी को तिरस्कृत करके सूर्य की किरण-राशि को सुखकर बना दिया। २५॥

नवपल्लवाञ्जलिभृतः प्रचये बृहतस्तरून् गमयताऽवनतिम्।
स्तृणता तृणैः प्रतिनिशं मृदुभिः शयनीयतामुपयतीं वसुधाम्॥ २६॥

अन्वयः—प्रचये नवपल्लवाञ्जलिभृतः बृहतः तरून् अवनतिं गमयता प्रतिनिशं शयनीयताम् उपयतीं वसुधां मृदुभिः तृणैः स्तृणता।

विग्रहः—नवाः पल्लवाः एव अञ्जलयः, तान् बिभर्तीति तान् = नवपल्लवाञ्जलिभृतः। निशि निशि = प्रतिनिशम्।

अर्थः—प्रचये = पुष्पावचयप्रसङ्गे। नवपल्लवाञ्जलिभृतः = नूतनकुसुमाञ्जलिधारिणः। बृहतः = विस्तृतान्। तरून् = पादपान्। अवनतिम् = नम्रताम्।

गमयता=प्रापयता। प्रतिमिशं = निशिनिशि । शयनीयतां=तल्पत्वम् । उपयतीं= गतवतीं, वसुधां =भूमिम् । मृदुभिः=कोमलैः । तृणैः = घासादिभिः । स्तृणयता= आच्छादयता ।

कोषः—'वसुधोर्वी वसुन्धरा' इत्यमरः ।

हिन्दीः—तप के प्रभाव से अर्जुन के द्वारा ( पूजार्थ ) फूल चुनते समय ऊँचे-ऊँचे नवपल्लवों तथा फूलों से लदे हुए वृक्ष भी झुक जाते थे । शयनस्थली बनी हुई वसुधा प्रतिरात्रि कोमल घास से आच्छादित होकर अर्जुन के लिये आनन्ददायक पलंग के समान हो जाती थी ।। २६ ।।

पतितैरपेतजलदान्नभसः पृषतैरपां शमयता च रजः ।
स दयालुनेव परिगाढकृशः परिचर्ययानुऽजगृहे तपसा ।। २७ ।।

अन्वयः—अपेतजलदात् नभसः पतितैः अपां पृषतैः रजः च शमयता तपसा दयालुना इव परिगाढकृशः सः परिचर्यया अनुजगृहे ।

विग्रहः—अपेताः जलदाः यस्मात्, तस्मात्=अपेतजलदात् । दयते तच्छीलं= =दयालुः तेन=दयालुना । परिगाढः कृशः यः सः==परिगाढकृशः ।

अर्थः—अपेतजलदात् = निरभ्रात् । नभसः = आकाशात् । पतितैः= पतनशीलैः । अपां=जलानां । पृषतैः=बिन्दुभिः । रजः=धूलिम् । च । शमयता= शमनं कुर्वता । तपसा = तपश्चरणेन । दयालुना इव = कृपालुना सदृशः । परि- गाढकृशः = अतीक्षीणः । सः = अर्जुनः । परिचर्यया=शुश्रूषया । अनुजगृहे= अनुगृहीतः । अत्रोत्प्रेक्षालङ्कारः ।

हिन्दीः—अर्जुन की तपस्या ने निरभ्राकाश से जल की बूँदें टपका कर धूल को शान्त कर दिया था । इस प्रकार सेवा-शुश्रूषा के द्वारा दयालु पुरुष के समान अत्यन्त दुर्बल बने हुए अर्जुन को उसने अनुगृहीत कर दिया ।। २७ ।।

महते फलाय तदवेक्ष्य शिवं विकसन्निमित्तकुसुमं स पुरः ।
न जगाम विस्मयवशं वशिनां न निहन्ति धैर्यमनुभावगुणः ।। २८ ।।

अन्वयः—सः महते फलाय तत् शिवम् विकसन्निमित्तकुसुमं पुरः अवेक्ष्य विस्मयवशं न जगाम । वशिनाम् अनुभावगुणः धैर्यम् न निहन्ति ।

विग्रहः—विकसत् तन्निमित्तम् एव कुसुमम् तत्=विकसन्निमित्तकुसुमम् । विस्मयस्य वशं = विस्मयवशम् । अनुभाव एव गुणः=अनुभावगुणः ।

अर्थः--सः=अर्जुनः महते=बृहते। फलाय=श्रेयसे, सस्याय च। तत् =पूर्वोक्तम्। शिवम्=कल्लाणकारि। विकसन्निमित्तकुसुमम् = विकचन्निमित्तपुष्पम्। पुरः = अग्रे। अवेक्ष्य=दृष्ट्वा। विस्मयवशं=आश्चर्यवशम्। न जगाम = नागच्छत्। वशिनां=जितेन्द्रियाणाम्। अनुभावगुणः=अनुभावरूपो गुणः। धैर्यम्=धृतिम्। न निहन्ति = न नाशयति। अत्रार्थान्तरन्यासालङ्कारः।

कोषः--'विस्मयोऽद्भुतमाश्चर्यम्' इत्यमरः।

हिन्दीः—अर्जुन महान् फलरूपी सिद्धि प्राप्त करने को उद्यत थे तथापि विकसित होते हुए कार्यसिद्धि-निमित्तक कुसुम (चिह्न) को सामने देखकर विस्मित नहीं हुए। जितेन्द्रिय पुरुषों का अनुभाव गुण उन्हें धैर्यच्युत नहीं करता है ॥ २८ ॥

तदभूरिवासरकृतं सुकृतैरुपलभ्य वैभवमनन्यभवम्।
उपतस्थुरास्थितविषादधियः शतयज्वनो वनचरा वसतिम् ॥ २९ ॥

अन्वयः—सुकृतैः अभूरिवासरकृतं तद् वैभवम् अनन्यभवम् उपलभ्य आस्थितविषादधियः वनचराः शतयज्वनः वसतिम् उपतस्थुः।

विग्रहः—अभूरिभिः एव वासरैः कृतम्=अभूरिवासरकृतम्। अन्यस्य न भवतीत्यनन्यभवम्। आस्थितः विषादः यासु ताः=आस्थितविषादाः धियः येषां ते = आस्थितविषादधियः। वने चरन्तीति=वनचराः। शतस्य मखानां यज्वा, तस्य=शतयज्वनः।

अर्थः—सुकृतैः=तपोभिः करणैः। अभूरिवासरकृतम् = कतिपयदिनकृतम्। तत् =पूर्वोक्तम्। वैभवम् = ऐश्वर्यम्। अनन्यभवम् = अन्यस्यासम्भवम्। उपलभ्य = निश्चित्य। आस्थितविषादधियः = प्राप्तखेदबुद्धयः। वनचराः=काननचराः। शतयज्वनः = इन्द्रस्य। वसतिम् = वासम्। उपतस्थुः = प्रापुः।

कोषः—'यज्वा तु विधिनेष्टवान्' इत्यमरः।

हिन्दी— तपश्चरण आदि सुकृतों के द्वारा थोड़े ही दिनों में जो ऐश्वर्य प्राप्त कर लिया है वह दूसरों के लिए असम्भव है। यह बात सोच कर खिन्न होकर वनेचर शतक्रतु इन्द्र के लोक (अमरावती) को गये ॥ २९ ॥

विदिताः प्रविश्य विहितानतयः शिथिलीकृतेऽधिकृतकृत्यविधौ ।
अनपेतकालमभिरामकथाः कथयाम्बभूवुरिति गोत्रभिदे ॥ ३० ॥

अन्वयः—इति विदिताः प्रविश्य विहितानतयः अधिकृतकृत्यविधौ शिथिलीकृते अनपेतकालं गोत्रभिदे अभिरामकथाः कथयाम्बभूवुः ।

विग्रहः—विहिताः आनतयः यैस्ते = विहितानतयः । अधिकृतस्य कृत्यस्य विधौ=अधिकृतकृत्यविधौ । न अपेतः कालो यस्य तदनपेतकालम् । गोत्रं भिनत्तीति गोत्रभित्तस्मै = गोत्रभिदे । अभिरमन्ते जना यत्राभिरामाः याः कथास्ताः = अभिरामकथाः ।

अर्थः—इति=इत्थं, वनचराः । विदिताः=ज्ञाताः । प्रविश्य, अमरावत्यामिति शेषः । विहितानतयः = कृतप्रणतयः । अधिकृतकृत्यविधौ = नियुक्तमनुष्ठाने । शिथिलीकृते = शैथिल्यं याते सति । अनपेतकालम् = अनतिक्रान्तकालम् । गोत्रभिदे = इन्द्राय । अभिरामकथाः=भव्यवाचः । कथयाम्बभूवुः = कथयामासुः ।

कोषः—'सुत्रामा गोत्रभिद् वज्री वासवो वृत्रहा वृषा ।' इत्यमरः ।

हिन्दी—उन वनचरों ने आज्ञा लेकर अमरावती में प्रवेश किया । वे वनसुरक्षा कार्य को छोड़कर आये थे अतः व्यर्थ समय न गँवाकर इन्द्रको प्रणाम करके कर्णसुखद वचनों को कहने लगे ॥ ३० ॥

शुचिवल्कवीततनुरन्यतमस्तिमिरच्छिदामिव गिरौ भवतः ।
महते जयाय मघवन्ननघः पुरुषस्तपस्यति तपञ्जगतीम् ॥ ३१ ॥

अन्वयः—मघवन् शुचिवल्कवीततनुः तिमिरच्छिदाम् अन्यतमः इव अनघः पुरुषः भवतः गिरौ जगतीं तपन् महते जयाय तपस्यति ।

विग्रहः—शुचिना वल्केन वीता तनुः यस्य सः = शुचिवल्कवीततनुः । तिमिरं छिन्दन्तीति = तिमिरच्छिदस्तेषा = तिमिरच्छिदाम् । नास्ति अघः यस्मिन् सः = अनघः ।

अर्थः—मघवन् ! = अयि देवराज ! । शुचिवल्कवीततनुः = पूतवल्कलाच्छादितशरीरः = तिमिरच्छिदाम् = सूर्यादीनाम् । अन्यतमः = विशिष्टः । इव । अनघः पुरुषः = अपापो नरः । भवतः = श्रीमतः । गिरौ = पर्वते इन्द्रकीले । जगती = पृथ्वीम् । तपन् = तापयन् । महते जयाय = बृहते जयाय । तपस्यति= तपश्चरति । अत्रोत्प्रेक्षालङ्कारः ।

कोष:--'भूतधात्री रत्नगर्भा जगती सागराम्बरा'। इत्यमरः।

हिन्दी:—हे देवराज! स्वच्छवल्कल धारण किये हुए तिमिरनाशक सूर्यादिके समान ही कोई पवित्र पुरुष आके इन्द्रकील पर्वत पर पृथ्वी को तपाता हुआ महान् विजय के लिए तपस्या कर रहा है॥ ३१॥

### जयाय तपस्यति इत्युक्तम्। तत्र हेतुमाह—

स बिभर्ति भीषणभुजङ्गभुजः पृथु विद्विषां भयविधायि धनुः।
अमलेन तस्य धृतसच्चरिताश्चरितेन चातिशयिता मुनयः॥ ३२॥

अन्वय:—भीषणभुजङ्गभुजः सः विद्विषां भयविधायि पृथु धनुः बिभर्ति, अमलेन तस्य चरितेन धृतसच्चरिताः मुनयः अतिशयिता।

विग्रह:—भीषयते इति भीषणौ। तौ च तौ भुजङ्गौ च ताविव भुजौ यस्य सः भीषणभुजङ्गभुजः। भयं विधीयते अनेन तत् = भयविधायि। नास्ति मल यस्मिस्तेन = अमलेन। धृतानि सच्चरितानि यैस्ते = धृतसच्चरिताः।

अर्थ:—भीषणभुजङ्गभुजः = भयङ्करसर्पबाहुः। सः = तपस्वी। विद्विषां = शत्रूणाम्। भयविधायि = भयकारकम्। पृथु = विशालम्। धनुः = चापम्। बिभर्ति = धारयति। अमलेन = विशुद्धेन। तस्य = तपस्विनः। चरितेन = वृत्तेन, आचरणेन वा। धृतसच्चरिता = धृतसदाचाराः। मुनयः = महर्षयः। अतिशयिताः = अतिक्रान्ताः।

कोष:—'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्।' इत्यमरः।

हिन्दी:-भीषण सर्प के समान भुजाओं वाला वह तपस्वी शत्रुओं को डरानेवाले विशाल धनुष को भी धारण किये हुए हैं। उनके स्वच्छ, पवित्र आचरण से सच्चरित्रता को धारण करनेवाले महर्षि लोग भी पराभूत हो गये हैं॥ ३२॥

### अथास्य तपःसिद्धि वर्णयति—

मरुतः शिवा नवतृणा जगती विमलं नभो रजसि वृष्टिरपाम्।
गुणसम्पदाऽनुगुणतां गमितः कुरुतेऽस्य भक्तिमिव भूतगणः॥ ३३॥

अन्वय:—मरुतः शिवाः, जगति नवतृणा, नभः विमलं रजसि अपां वृष्टिः। अस्य गुणसम्पदा अनुगुणतां गमितः भूतगणः भक्तिम् इव कुरुते॥ ३३॥

विग्रह:—नवानि तृणानि सन्ति यस्यां सा नवतृणा। गुणानां सम्पद् तया गुणसम्पदा। भूतानां गणः = भूतगणः।

अर्थः—मरुतः=पवनः । शिवाः=कल्याणकराः, सुखकराश्च । जगती=पृथ्वी, नवतृणा=नूतनतृणसम्पन्ना । नभः=गगनम् । विमलम्=स्वच्छम् । रजांसि ( सति )= धूली । आ वृष्टिः ( भवतीति शेषः ) । अस्य = तपस्विनः । गुणसम्पदा = गुणसम्पत्त्या । अनुगुणता = अनुकूलगुणत्वम् । गमितः = प्रापितः । भूतगणः = पृथ्व्यप्तेजोवायुपञ्चकम् । भक्ति=सेवाम् । इव कुरुते=करोति । अत्रोत्प्रेक्षालङ्कारः ।

कोषः—'समीरमारुतमरुज्जगत्प्राणसमीरणाः ।' इत्यमरः ।

हिन्दी—उसके तप से प्रभावित होकर पृथ्व्यादि पञ्चभूत तो लगता है कि तपस्वी के सेवक बन गये हों । यथा—वायु सुखकर ही बहती है, पृथ्वी हरी घास से आच्छादित हो गई है, आकाश निर्मल रहता है और धूल उड़ने पर जलवृष्टि हो जाती है जिससे धूल भी बैठ जाती है । अर्थात् पञ्चभूत भी उसके तप में सहायक से बन गये हैं ॥ ३३ ॥

**इतरेतरानभिभवेन मृगास्तमुपासते गुरुमिवान्तसदः ।**
**विनयन्ति चास्य तरवः प्रचये परवान् स तेन भवतेव नगः ॥ ३४॥**

अन्वयः—मृगाः तम् अन्तसदः गुरुम् इव इतरेतरान् अभिभवेन उपासते । प्रचये तरवः अस्य विनयन्ति । सः नगः भवता इव तेन परवान् ।

विग्रहः—अन्ते सीदन्तीत्यन्तसदः । इतरान् इतरान् = इतरेतरान् ।

अर्थः—मृगाः = हरिणादयः । तम् = तपस्विनम् । अन्तसदः = अन्तेवासिनः शिष्याः । गुरुम् इव = गुरुसदृशम् । इतरेतरान् = अन्यान् अन्यान् । अभिभवेन् = अद्रोहेण । उपासते = सेवन्ते । प्रचये = पुष्पावचये । तरवः = वृक्षाः । अस्य = तपस्विनः । विनयन्ति = नम्रतां यान्ति, करप्रचेया भवन्ति इत्यर्थः । सः = इन्द्रकीलाख्यः । नगः = पर्वतः । भवता = श्रीमता, शक्रेण इव । तेन = पुरुषेण । परवान् = पराधीनः । बभूवेति शेषः ।

कोषः—'मृगे कुरङ्गवातायुहरिणाजिनयोनयः ।' इत्यमरः ।

हिन्दीः—हे महाराज ! हरिणादि पशु भी अपने आपसी वैरभावों को छोड़कर उसी प्रकार उस तपस्वी की सेवा करते हैं यथा विद्यार्थीगण गुरु की किया करते हैं । पूजार्थ फूल चुनते समय वृक्ष अपनी शाखाएँ झुका देते हैं जिससे कि फूल तोड़ने में उसे सरलता हो जावे । इन्द्रकील पर्वत को आपके समान ही उस तपस्वी ने भी स्वाधीन कर लिया है ॥ ३४ ॥

उरु सत्त्वमाह विपरिश्रमता परमं वपुः प्रथयतीव जयम् ।
शमिनोऽपि तस्य नवसङ्गमने विभुतानुषङ्गि भयमेति जनः ॥ ३५ ॥

अन्वयः—विपरिश्रमता उरु सत्त्वम् आह । परमं वपुः जयं प्रथयति इव शमिनः अपि तस्य नवसङ्गमने जनः विभुतानुषङ्गि भयम् एति ।

विग्रहः—परिश्रमस्य भावः परिश्रमिता । विगता परिश्रमता=विपरिश्रमता । नवं च तत् सङ्गमनं तस्मिन् = नवसङ्गमने । विभुतायाः अनुषङ्गि = विभुतानुषङ्गि ।

अर्थः—विपरिश्रमता = आयासेऽपि श्रमराहित्यम् । उरु = महत् । सत्त्वम् = अन्तःसारम् । आह = प्राह । परमं = विशालं । वपुः=शरीरम् । जयम् = विजयं । प्रथयति इव = प्रकटयतीव । शमिनः = जितेन्द्रियस्यापि । तस्य = तपस्विनः । नवसङ्गमने = अपूर्वप्राप्तौ । जनः = लोकः । विभुतानुषङ्गि = प्रभावव्यापकम् । भयम् = भीतम् । एति = गच्छति ॥ ३५ ॥

कोष—'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ।' इत्यमरः ।

हिन्दी—वह परिश्रम से थकता नहीं है अतएव वह बलिष्ठ है । उसके विशाल शरीर से ही यह प्रकट होता है कि विजयी पुरुष है । यद्यपि वह इन्द्रियों का शमन कर रहा है तथापि उससे प्रथम बार मिलने पर व्यक्ति उसके वैभव ( ऐश्वर्य ) से भयभीत हो जाता है । ३५ ॥

अथ इदृशोऽसौ कः इति चेतन्न विद्मः इत्याहुः—

ऋषिवंशजः स यदि दैत्यकुले यदि वाऽन्वये महति भूमिभृताम् ।
चरतस्तपस्तव वनेषु सहा न वयं निरूपयितुमस्य गतिम् ॥ ३६ ॥

अन्वयः—स ऋषिवंशजः, यदि वा दैत्यकुले, यदि वा भूमिभृतां महति अन्वये । तव वनेषु तपः चरतः अस्य गतिम् निरूपयितुम् वयम् न सहाः ।

विग्रहः—ऋषीणां वंशे जातः=ऋषिवंशजः । दैत्यानां कुलम् तस्मिन् = दैत्यकुले । भूमिं बिभ्रतीति तेषाम् = भूमिभृताम् ।

अर्थ—सः तपस्वी । ऋषिवंशजः = मुनिकुलोत्पन्नः । यदि वा = अथवा । दैत्यकुले = राक्षसवंशे । जातः इति शेषः । यदि वा = अथवा । भूमिभृताम् = राज्ञाम् । महति = विशाले । अन्वये=वंशे । जात इति शेषः । तव = शक्रस्य । वनेषु = काननेषु । तपश्चरतः = तपस्यां कुर्वतः । अस्य = तपस्विनः । गतिम् =

स्वरूपम् । वयम् = वनरक्षकाः । निरूपयितुम् = निरूपणं कर्तुम् । न सहाः = न समर्थाः स्मः ॥ ३६ ॥

कोष:—'राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः' इत्यमरः ।

हिन्दी—हे महाराज ! न जाने वह ऋषिकुल में उत्पन्न हुआ है अथवा दैत्यकुल में, अथवा राजाओं के किसी विशाल वंश में । आपके वनों में तपस्या करते हुए उस तपस्वी की गतिविधि जान पाने में हमलोग असमर्थ हैं ॥ ३६ ॥

अपृष्टपरिभाषणापराधं परिहरन्ति—

विगणय्य कारणमनेकगुणं निजयाऽथवा कथितमल्पतया ।
असदप्यदः सहितुमर्हसि नः क्व वनेचराः क्व निपुणा यतयः ॥ ३७ ॥

अन्वय:—अनेकगुणं कारणं विगणय्य अथवा निजया अल्पतया कथितं नः अदः असद् अपि सहितुम् अर्हसि । वनेचराः क्व ? निपुणाः यतयः क्व ?

विग्रह:—अनेक गुणाः यस्मिस्तत् = अनेकगुणम् । यतन्त इति = यतयः ।

अर्थ:—अनेकगुणम् = बहुफलम् । कारणम् = तपोरूपम् । विगणय्य = विचार्य । अथवा = वा । निजया = स्वीयया । अल्पतया = अल्पज्ञानत्वेन । कथितम् = भणितम् । नः = अस्माकम् । अदः = इदम् । असत् = असाधु । अपि । सहितुम् = सोढुम् । अर्हसि = समर्थोऽसि । वनेचराः = वन्याः क्व । (वयम्) निपुणाः=प्रवीणाः । यतयः=संन्यासिनः क्व । नोभयं सङ्गच्छत इत्यर्थः । अत्रार्थान्तरन्यासोऽलङ्कारः ॥ ३७ ॥

कोष—'ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते' इत्यमरः ।

हिन्दी—हे इन्द्रदेव ! उसके तप का क्या कारण है ? इस पर अपनी अल्प बुद्धि से अनेक प्रकार के अनुमान करके यदि हम लोगों ने कुछ अनुचित भी कह दिया हो तो आप उसे क्षमा करने में समर्थ हैं । कहाँ तो हम जङ्गली लोग ! और कहाँ वे ज्ञानी यति ? हम लोग यतियों का वर्णन करने में नितान्त अयोग्य हैं ॥ ३७ ॥

अधिगम्य गुह्यकगणादिति तन्मनसः प्रियं प्रियसुतस्य तपः ।
निजुगोप हर्षमुदितं मघवा नयवर्त्मगाः प्रभवतां हि धियः ॥ ३८ ॥

अन्वय:—मघवा इति गुह्यकगणात् तन्मनसः प्रियं प्रियसुतस्य तपः अधिगम्य उदितं हर्षं निजुगोप । हि प्रभवतां धियः नयवर्त्मगाः ।

विग्रहः—तस्य मनसः = तन्मनसः। प्रियश्चासौ सुतः, तस्य = प्रियसुतस्य। नयस्य वर्त्म, तस्मिन् गच्छन्तीति = नयवर्त्मगाः।

अर्थ—मघवा = इन्द्रः। इति = पूर्वोक्तम्। गुह्यकगणात् = यक्षसमूहात्। तन्मनसः = तच्चेतसः। प्रियं = प्रीतिकरम्। प्रियसुतस्य = अर्जुनस्य। तपः = तपश्चर्याम्। अधिगत्य = ज्ञात्वा। उदितं=प्रकटितं। हर्षं = मोदम्। निजुगोप= गोपयामास। हि = यतः। प्रभवताम् = प्रभूणाम्। धियः = बुद्धयः। नयवर्त्मगाः नयपथगाः। भवन्तीति शेषः। अत्रार्थान्तरन्यासालङ्कारः।

कोष:—'इन्द्रो मरुत्वान् मघवा विडौजाः पाकशासनः।' इत्यमरः।

हिन्दी—इन्द्र ने इस प्रकार वनेचरों के द्वारा मन को प्रिय लगनेवाली प्रियपुत्र अर्जुन के तप की बात सुनकर अपने मन में उत्पन्न हुए हर्ष को प्रकटित नहीं होने दिया क्योंकि महान् पुरुषों की बुद्धि न्यायपथावलम्बिनीहोती है। ३८।

प्रणिधाय चित्तमथ भक्ततया विदितेऽप्यपूर्व इव तत्र हरिः।
उपलब्धुमस्य नियमस्थिरतां सुरसुन्दरीरिति वचोऽभिदधे॥ ३९॥

अन्वयः—अथ हरिः चित्तं प्रणिधाय तत्र भक्ततया विदिते अपि अपूर्वः इव अस्य नियमस्थिरताम् उपलब्धुम् सुरसुन्दरीः इति वचः अभिदधे।

विग्रहः—नियमस्य स्थिरता ताम् = नियमस्थिरताम्।

अर्थः—अथ = अनन्तरं। हरिः = इन्द्रः। चित्तम् = मनः। प्रणिधाय = नियम्य। तत्र = तस्मिन् अर्जुने। भक्ततया = भक्तत्वेन। विदिते=ज्ञाते। अपि। अपूर्व इव = अज्ञात इव। अस्य = अर्जुनस्य। नियमस्थिरताम्=नियमदृढताम्। उपलब्धुम् = ज्ञातुम्। सुरसुन्दरीः = अप्सरसः। इति = एवं। वचः = वचनं। अभिदधे = कथितवान्।

कोष:—'व्याहार उक्तिर्लपितं भाषितं वचनं वचः।' इत्यमरः।

हिन्दी—तदनन्तर इन्द्रने ध्यान करके अर्जुन मे अपनी भक्ति जानकर भी अज्ञात के समान उनकी नियमस्थिरता को जानने के लिये सुरसुन्दरियों से इस प्रकार कहा॥ ३९॥

सुकुमारमेकमणु मर्मभिदामतिदूरगं युतममोघतया।
अवि पक्षमस्त्रमपरं कतमद्विजयाय यूयमिव चित्तभुवः॥ ४०॥

अन्वयः--मर्मभिदां यूयम् इव सुकुमारम् एकम् अणु अतिदूरगम् अमोघतया युतम् अविपक्षम् चित्तभुवः विजयाय कतमद् अपरम् अस्त्रम् ।

विग्रहः--मर्माणि भिन्दन्तीति तासाम् = मर्मभिदाम् । अतिदुरं गच्छतीति= अतिदूरगम् । नास्ति विशिष्टः पक्षः यस्य तत् = अविपक्षम् । चित्तम् एव भूः यस्य तस्य = चित्तभुवः ।

अर्थः—मर्मभिदाम् =मर्मच्छेदिनाम् । यूयम् इव =युष्मादृशम् । सुकुमारं = कोमलम् । एकम् = न त्वनेकम् । अणु = सूक्ष्मं न तु स्थूलम् । अतिदूरगम् = बहुदूरगामि । अमोघतया = अमोघत्वगुणेन । युतम् = युक्तम् । अविपक्षम् = असत्प्रतीकारं, चित्तभुवः = मनोजस्य । विजयाय = जयाय । कतमद् = अपरम् । अस्त्रम् = कतमदन्यदायुधम् । अस्तीति शेषः, न किञ्चिदस्तीत्यर्थः । अत्रोपमापरिकरयोः सङ्करः ।

कोषः--'मात्रा त्रुटिः पुंसि लवलेशकणाणवः ।' इत्यमरः

हिन्दी—हे सुरसुन्दरियों ! कामदेव का अस्त्र मर्मभेद करने में तुम्हारे समान सुकुमार एवं एकमात्र सूक्ष्म और बहुत दूर तक जानेवाला है उसी प्रकार तुम भी हो। एक प्रकार से काम का उपर्युक्त बाण ही हो । यह अस्त्र अचूक तथा पक्षत्वरहित है । कामदेव की जीत के लिये उनके इस बाण ( अप्सरासमूह ) से बढ़कर और क्या हो सकता है ? ॥ ४० ॥

असामर्थ्यशङ्कां परिहरति--

भववीतये हतबृहत्तमसामवबोधवारि रजसः शमनम् ।
परिपीयमाणमिव वोऽसकलैरवसादमेति नयनाञ्जलिभिः ॥ ४१ ॥

अन्वयः--भववीतये हतबृहत्तमसां रजसः शमनम् अवोधवारि वः असकलैः नयनाञ्जलिभिः परिपीयमाणम् इव अवसादम् एति ।

विग्रह—भवस्य वीतिस्तस्यै = भवतीतये । हतं बृहत् तपः यैस्तेषां = हतबृहत्तपसाम् । अवबोध एव वारि = अवबोधवारि । नयनान्येवाञ्जलयस्तैः = नयनाञ्जलिभिः ।

अथ:--भववीतये = संसारनिवृत्तये । हतबृहत्तमसां = निरस्तमहामोहानाम् । रजसः = रजोगुणस्य । शमनम् = निवर्तकम् । अवबोधवारि = ज्ञानजलम् । वः = युस्माकम् । असकलैः = असमग्रैः । नयनाञ्जलिभिः = नेत्राञ्जलिभिः ।

परिपीयमाणम् = पीयमानम् । इव । अवसादम् = क्षयम् । एति = गच्छति । अत्रोत्प्रेक्षारूपकयोः सङ्करः ।

कोषः—'शमथस्तु शमः शान्तिः' इत्यमरः ।

हिन्दी—संसार से छुटकारा ( मोक्ष ) पाने के लिए महामोह को मिटाये हुए योगियों के रजोगुण को शान्त करने वाला ज्ञानरूपी जल ( तत्त्वज्ञान ) तुम्हारी कुछ ही नयनाञ्जलियों द्वारा पिये जाने पर समाप्त हो जाता है। अर्थात् तुम्हारे कतिपय कटाक्षों से ही तत्त्वज्ञानियों का ज्ञान भी समाप्त हो जाता है ।। ४१ ।।

बहुधा गतां जगति भूतसृजा कमनीयतां समभिहृत्य पुरा ।
उपपादिता विदधता भवतीः सुरसद्मयानसुमुखी जनता ।। ४२ ।।

अन्वयः—पुरा जगति बहुधा गतां कमनीयतां समभिहृत्य भवतीः विदधता भूतसृजा जनता सुरसद्मयानसुमुखी उपपादिता ।

विग्रहः—भूतानि सृजतीति तेन = भूतसृजा । सुराणां सद्म = सुरसद्म, सुरसद्मनि यानाय सुमुखी = सुरसद्मयानसुमुखी ।

अर्थः—पुरा = प्राक्काले । जगति = लोके । बहुधा गतां = नानामुखेन विप्रकर्णाम् । कमनीयतां = लावण्यताम् । समभिहृत्य = संगृह्य । भवतीः = अप्सरसः । विदधता = सृजता । भूतसृजा = ब्रह्मणा । जनता = जनसमूहः प्रजा वा । सुरसद्मयानसुमुखी = स्वर्लोकयात्राप्रवणा । उपपादिता = कृता । अत्रातिशयोक्तिरलङ्कारः ।

कोषः—'जगती लोको विष्टपं भुवनं जगत्' इत्यमरः ।

हिन्दी—जगत् की रचना करते समय संसार में चंद्रमा तथा कमल आदि अन्यान्य वस्तुओं में बिखरी हुई कमनीयता को इकट्ठा करके आप सब अप्सराओं का निर्माण करते हुए ब्रह्मा जी ने ऐसी जनता उत्पन्न की जो कि सदैव स्वर्गलोक को जाने के लिए उत्सुक रहती है। अर्थात् आप सब सुन्दरियों के कारण ही जनता स्वर्गलोक पाने को लालायित रहती है ।। ४२ ।।

अथ कार्यांशमाह—

तदुपेत्य विघ्नयत तस्य तपः कृतिभिः कलासु सहिताः सचिवैः ।
हृतवीतरागमनसां ननु वः सुखसङ्गिनं प्रति सुखाऽवजितिः ।। ४३ ।।

अन्वयः—तत् कलासु कृतिभिः सचिवैः सहिताः उपेत्य तस्य तपः विघ्नयत। ननु हृतवीतरागमनसां वः सुखसङ्गिनं प्रति अवजितिः सुखा।

विग्रहः—वीतरागाणां मनांसि = वीतरागमनांसि। हृतानि वीतरागमनांसि याभिस्तासां = हृतवीतरागमनसां। सुखाय सङ्गच्छते यस्तम् = सुखसङ्गिनम्।

अर्थः—तत् = तस्मात्। कलासु = गीतवाद्यादिषु। कृतिभिः = कुशलैः। सचिवैः = गन्धर्वैः। सहिताः = युक्ताः। उपेत्य = गत्वा। तस्य = तपस्विनः। तपः = तपश्चरणम्। विघ्नयत = विघ्नवत्कुरुत। ननु = हे अप्सरसः! हृतवीतरागमनसां = वशीकृतनिःस्पृहचेतसाम्। वः = युष्माकम्। सुखसङ्गिनम् प्रति = सुखाभिलाषिणं पुरुषं प्रति। अवजितिः = विजयः। सुखा = सुखसाध्या। न तु दुष्करेति। अत्रार्थान्तरन्यासोऽलंकारः।

हिन्दी—अतएव गीतवाद्यादिकलाकुशल गन्धर्वों के सहित आप उसके (तपस्वी के) पास जाकर तप में विघ्न करें। हे अप्सराओ! निस्पृह पुरुषों के चित्त को अपहरण करनेवाली तुम सब (अप्सराओं) के लिए सुखाभिलाषी पुरुष को जीतना सरल ही है ॥ ४३ ॥

अथ सुखसङ्गित्वलिङ्गमाह—

अविमृष्यमेतदभिलष्यति स द्विषतां वधेन विषयाभिरतिम्।
भववीतये न हि तथा स विधिः क्व शरासनं क्व च विमुक्तिपथः ॥४४॥

अन्वयः—सः द्विषतां वधेन विषयाभिरतिम् अभिलष्यति एतत् अविमृष्यम् हि तथा स विधिः भववीतये न। शरासनं क्व, विमुक्तिपथः च क्व।

विग्रहः—विषयेषु अभिरतिस्तां विषयाभिरतिम्। भवस्य वीतये = भववीतये। विमुक्तेः पथः = विमुक्तिपथः।

अर्थः—सः = उपर्युक्तः। तपस्वी। द्विषतां = शत्रूणां। वधेन = नाशेन। विषयाभिरतिम् = विषयसुखम्। अभिलष्यति = वाञ्छति। एतत् = विषयासक्तत्वम्। अविमृष्यम् = अविचार्यम्। हि = यतः। तथा = पूर्वोक्तः। सः विधिः = सः अनुष्ठानप्रकारः। भववीतये = संसारमुक्त्यै। न नास्ति। शरासनं = धनुः क्व = कुत्र? विमुक्तिपथः = मोक्षमार्गः च क्व? द्वयं परस्परं विरुद्धमिति भावः। अत्रार्थान्तरन्यासोऽलङ्कारः।

कोष:—'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इत्यमरः।

हिन्दी—हे अप्सराओ! वह तपस्वी शत्रुओं का विनाश करके विषयसुख प्राप्त करना चाहता है यह बात बिल्कुल ठीक ही है। क्योंकि उसके तप की विधि संसार-मुक्ति के लिए नहीं हो सकती है। कहाँ धनुष और कहाँ मोक्षमार्ग। अर्थात् वह धनुष धारण किये हुए तप कर रहा है अतएव हिंसावृत्ति के रहते हुए मोक्ष का मार्ग मिलना असम्भव है॥ ४४॥

न च शापभयमपि सम्भाव्यं स्यात्—

पृथुधाम्नि तत्र परिबोधि च मा भवतोभिरन्यमुनिवद्विकृतिः।
स्वयशांसि विक्रमवतामवतां न वधूष्वघानि विमृशन्ति धियः॥ ४५॥

अन्वयः—पृथुधाम्नि तत्र अन्यमुनिवद् विकृतिः च भवतीभिः मा परिबोधि। स्वयशांसि अवतां विक्रमवतां धियः वधूषु अघानि च विमृशन्ति।

विग्रहः—पृथु धाम यस्मिन्, तस्मिन् पृथुधाम्नि। स्वस्य यशांसि= स्वयशांसि।

अर्थः—पृथुधाम्नि = पृथुतेजस्विनि। तत्र = तस्मिन् पुरुषे। अन्यमुनिवद् विकृतिः=अन्यमुनिसमकोपादिविकारः। च भवतीभिः=अप्सरोभिः। मा परिबोधि = मा विज्ञायि। स्वयशासि=आत्मकीर्तिः। अवतां=रक्षताम्। विक्रमवतां=पराक्रमशालिनाम्। धियः=बुद्धयः। वधूषु=स्त्रीषु। अघानि= पापानि, हिंसादिकृत्यानि। न विमृशन्ति = नैव परिमृशन्ति। अत्रार्थान्तरन्यासालङ्कारः।

कोष:—'दुःखैनो व्यसनेष्वघम्' इति वैजयन्ती।

हिन्दी—हे अप्सराओ! आप तेजस्वी उस तपस्वी में अन्य मुनियों की भाँति क्रोधादि विकारों की बात न सोचें। अपने यश की रक्षा करने वाले वीर पुरुष कभी स्त्रीजनों के हिंसादि पापकर्मों को करने की नहीं सोचते हैं॥ ४५॥

आशंसितापचितिचारु पुरःसुराणा-
मादेशमित्यभिमुखं समवाप्य भर्तुः।
लेभे परां द्युतिममर्त्यवधूसमूहः
सम्भावना ह्यधिकृतस्य तनोति तेजः॥ ४६॥

अन्वय:—अमर्त्यवधूसमूहः सुराणां पुरः आशंसितापचितिचारु अभिमुखं भर्तुः इति आदेशं समवाप्य परां द्युतिं लेभे। हि अधिकृतस्य सम्भावना तेजः तनोति।

विग्रह:—अमर्त्यवधूनां समूहः=अमर्त्यवधूसमूहः। आशंसिताभिः अपचितिभिः चारु यथा तथा=आशंसितापचितिचारु।

अर्थ:—अमर्त्यसमूहः=सुराङ्गनानिकरः। सुराणां=देवानां। पुरः=अग्रे। आशंसितापचितिचारु=अपेक्षितसम्भावनाचारु। अभिमुखम्=सम्मुखम्। भर्तुः = स्वामिनः, इन्द्रस्य। इति = पूर्वोक्तम्। आदेशं = निर्देशम्। समवाप्य = प्राप्य। परां = महतीम्। द्युतिं = कान्तिम्। लेभे=प्राप। हि = यतः। अधिकृतस्य = अधिकारे नियुक्तस्य। सम्भावना=स्वामिकृता पूजा। तेजः=कान्तिम्। तनोति = विस्तारयति।

कोष:—'आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः।' इत्यमरः।

हिन्दी—अप्सराओं का समूह देवताओं के समक्ष देवराज इन्द्र के आदेश को प्राप्त करके पूर्वोक्त प्रशंसा की अपेक्षा अधिक कान्ति को प्राप्त हुआ। क्योंकि किसी अधिकार में नियुक्त पुरुष की प्रशंसा करने पर उसके तेज की अभिवृद्धि होती है॥ ४६॥

प्रणतिमथ विधाय प्रस्थिताः सद्मनस्ताः<br>
स्तनभरनमिताङ्गीरङ्गनाः प्रीतिभाजः।<br>
अचलनलिनलक्ष्मीहारि नालं बभूव<br>
स्तिमितममरभर्त्तुर्द्रष्टुमक्ष्णां सहस्रम्॥ ४७॥

अन्वय:—अथ प्रणतिं विधाय सद्मनः प्रस्थिताः स्तनभरनमिताङ्गीः प्रीतिभाजः ताः अङ्गनाः अचलनलिनलक्ष्मीहारि स्तिमितम् अमरभर्त्तुः अक्ष्णां सहस्रं द्रष्टुम् अलम् न बभूव।

विग्रह:—स्तनभरैः नमितानि अङ्गानि यासां ताः=स्तनभरनमिताङ्गीः। प्रीतिं भजन्तीति ताः = प्रीतिभाजः। अचलनलिनानां लक्ष्म्यः, ताः हरतीति अचलनलिनलक्ष्मीहारि। अमराणां भर्त्ता, तस्य = अमरभर्त्तुः।

अर्थ:—अथ = अनन्तरम्। प्रणतिं = नमस्कृतिं। विधाय = कृत्वा। सद्मनः = इन्द्रभवनात्। प्रस्थिताः = प्रचलिताः। स्तनभरनमिताङ्गी = पयोधर-

भरानमितशरीरा:। प्रीतिभाज: = स्वामिसम्भावनया सन्तुष्टा: । ता: = पूर्वोक्ता: । अङ्गना: = अप्सरस: । अचलनलिनलक्ष्मीहारि = स्थलकमलिनीशोभाहारि, तद्वन्मनोहरमित्यर्थ: । स्तिमितम् = विस्मयनिश्चलम् । अमरभर्तु: = इन्द्रस्य । अक्ष्णां = नेत्राणां । सहस्रं = सहस्रसंख्यकं । द्रष्टुम् = निरीक्षितुम् । अलम् न बभूव = समर्थं नाभवत् । अत्रोपमालङ्कार: ।

कोष—'अमरा निर्जरा देवास्त्रिदशा विबुधा: सुरा:' इत्यमर: ।

हिन्दी--तदनन्तर इन्द्र को प्रणाम करके वे अप्सरायें इन्द्रभवन से चल दीं । स्थलकमल ( गुलाब ) की शोभा को तिरस्कृत करनेवाले इन्द्र के विस्मय-निश्चल हजारों नेत्र भी उन अप्सराओं की शोभा देखने में समर्थ न हो सके ॥ ४७ ॥

इति भारविकृतौ सुधाटीकासंवलिते किरातार्जुनीये षष्ठ: सर्ग:

## सप्तमः सर्गः

श्रीमद्भिः सरथगजैः सुराङ्गनानां
गुप्तानामथ सचिवैस्त्रिलोकभर्त्तुः ।
सम्मूर्च्छन्नलघु विमानरन्ध्रभिन्नः
प्रस्थानं समभिदधे मृदङ्गनादः ।। १ ।।

**अन्वयः**—अथ श्रीमद्भिः सरथगजैः त्रिलोकभर्त्तुः सचिवैः गुप्तानां सुराङ्गनानां प्रस्थानम् अलघुविमानरन्ध्रभिन्नः सम्मूर्च्छन् मृदङ्गनादः समभिदधे ।

**विग्रहः**— रथश्च गजश्च=रथगजौ, तयोः समाहारः रथगजम् । सह रथगजेन इति सरथगजास्तैः = सरथगजैः । त्रयाणां लोकानां भर्त्ता तस्य = त्रिलोकभर्त्तुः । सुराणामङ्गनास्तासाम् =सुराङ्गनानाम् । अलघुषु विमानरन्ध्रेषु भिन्न इति= अलघुविमानरन्ध्रभिन्नः । मृदङ्गानां नादः =मृदङ्गनादः ।

**अर्थः**—अथ = प्रस्थानानन्तरम् । श्रीमद्भिः = शोभावद्भिः । सरथगजैः = रथगजयुतैः । त्रिलोकभर्त्तुः = इन्द्रस्य । सचिवैः = गन्धर्वैः । गुप्तानाम् = रक्षितानाम् । सुराङ्गनानाम्=अप्सरसाम् । प्रस्थानम् = गमनम् । अलघुविमान-रन्ध्रभिन्नः= बृहद्विमानकुक्षिकुहरभिन्नः । सम्मूर्च्छन् =व्याप्नुवन् । मृदङ्गनादः= मृदङ्गवाद्यनादः । समभिदधे =आचख्यौ । अत्र प्रहर्षिणीवृत्तम् ।

**कोषः**--'मृदङ्गा मुरजाः' इत्यमरः । 'मतङ्गजो गजो नागः' इत्यमरः ।

**हिन्दी**--इसके बाद शोभायुक्त, रथ और गजों के सहित इन्द्र के सचिवों गन्धर्वों के साथ अप्सराओं ने प्रस्थान किया । इस बात की सूचना छोटे-छोटे विमान छिद्रों से निकलते हुए मृदङ्गनाद ने दी ।। १ ।।

सोत्कण्ठैरमरगणैरनुप्रकीर्णान्निर्याय ज्वलितरुचः पुरान्मघोनः ।
रामाणामुपरि विवस्वतः स्थितानां नासेदे चरितगुणत्वमातपत्रैः ।।२।।

**अन्वयः**—सोत्कण्ठैः अमरगणैः अनुप्रकीर्णान् ज्वलितरुचः मघोनः पुरात् निर्याय विवस्वतः उपरि स्थितानां रामाणाम् आतपत्रैः चरितगुणत्वम् न आसेदे ।

विग्रहः—उत्कण्ठाभिः सहिताः, तैः=सोत्कण्ठैः। अमराणां गणास्तैः=अमरगणैः। ज्वलिताः रुचः यस्य, तस्य=ज्वलितरुचः। आतपात् त्रायन्ते तैः=आतपत्रैः। गुणानां भावो गुणत्वम्। चरितानां गुणत्वम्=चरितगुणत्वम्।

अर्थः—सोत्कण्ठैः=उत्कण्ठायुक्तैः। अमरगणैः=देवसमूहैः। अनुप्रकीर्णात्=आकीर्णात्। ज्वलितरुचः=देदीप्यमानस्य। मघोनः=इन्द्रस्य। पुरात्=नगरात्, अमरवत्या इत्यर्थः। निर्याय=निर्गत्य। विवस्वतः=भानोः। उपरि=ऊर्ध्वम्। स्थितानाम्=अवस्थितानाम्। रामाणाम्=अप्सरसाम्। आतपत्रैः=छत्रैः। चरितगुणत्वम्=सच्चरितत्वम्। न आसेदे=न प्राप।

कोषः--'छत्रं त्वातपत्रम्' इत्यमरः।

हिन्दी—दीप्तिमान् इन्द्र के उत्कण्ठित देवगणों से परिपूर्ण अमरावती नगरी से निकलकर वे देवाङ्गनाएँ सूर्य-मण्डल के ऊपर पहुँच गईं। देवांगनाओं के सूर्य के ऊपर स्थित होने के कारण उनके ताने हुए आतपत्र ( छत्र ) धूप से उन्हें बचा नहीं सके ॥ २ ॥

धूतानामभिमुखपातिभिः समीरैरायासादविशदलोचनोत्पलानाम्।
आनिन्ये मदजनितां श्रियं वधूनामुष्णांशुद्युतिजनितः कपोलरागः ॥३॥

अन्वयः—अभिमुखपातिभिः समीरैः धूतानाम् आयासात् अविशदलोचनोत्पलानां वधूनाम् उष्णांशुद्युतिजनितः कपोलरागः मदजनितां श्रियम् आनिन्ये।

विग्रहः—अभिमुखं पतन्तीति तैः=अभिमुखपातिभिः। लोचनानि उत्पलानीव=लोचनोत्पलानि। अविशदानि लोचनोत्पलानि यासां तासां=अविशदलोचनोत्पलानाम्। उष्णांशोः द्युति=उष्णांशुद्युतिः, तया जनितः=उष्णांशुद्युतिजनितः। कपोलानाम् रागः=कपोलरागः। मदेन जनिता, ताम्=मदजनिताम्।

अर्थः—अभिमुखपातिभिः=प्रतिकूलगामिभिः। समीरैः=पवनैः। धूतानां=उद्धूतानाम्। आयासात्=गतिप्रयासात्। अविशदलोचनोत्पलानाम्=अनुन्मीलितकमलनेत्राणाम्। वधूनाम्=अप्सरसाम्। उष्णांशुद्युतिजनितः=सूर्यघर्मजातः। कपोलरागः=कपोलपाटलत्वम्। मदजनितं=मदजाताम्। श्रियम्=शोभाम्। आनिन्ये=आनीतवान्। अत्र निदर्शनालङ्कारः।

कोष:—'भास्वद्-विवस्वत्-सप्ताश्वहरिदश्वोष्णरश्मयः' इत्यमरः ।

हिन्दी—मार्ग में प्रतिकूल वायु से अप्सराओं के अङ्ग शिथिल हो गये थे। थक जाने के कारण उनके कमलनयन मुरझा गये थे और गालों की अरुणिमा भी मिट गई थी। धूप से व्याकुल होने के कारण उनके गाल पुनः लाल हो गये जिससे उनकी मदजनित शोभा फिर से वापस लौट आई ॥ ३ ॥

तिष्ठद्भिः कथमपि देवतानुभावादाकृष्टैः प्रजविभिरायतं तुरंगैः ।
नेमीनामसति विवर्तने रथौघैरासेदे वियति विमानवत्प्रवृत्तिः ॥ ४ ॥

अन्वयः—कथम् अपि देवतानुभावात् तिष्ठद्भिः प्रजविभिः तुरंगैः आयतम् आकृष्टैः रथौघैः वियति नेमीनां विवर्तने असति विमानवत् प्रवृत्तिः आसेदे ।

विग्रहः—देवतानां अनुभावस्तस्मात्=देवतानुभावात् । रथानाम् ओघाः, तैः=रथौघैः ।

अर्थ—कथम् अपि=बाढम् । देवतानुभावात्=देवप्रभावात् । तिष्ठद्भिः= स्थितैः । प्रजविभिः = वेगवद्भिः । तुरङ्गैः = अश्वैः । आयतम् = दूरम् । आकृष्टैः=नीतैः । रथौघैः = रथसमूहैः । वियति=आकाशे । नेमीनाम्=चक्र-धाराणाम् । विवर्तने = भ्रमणे । असति = न भवति सति । विमानवत् = विमान-सदृशम् । प्रवृत्तिः = गतिः । आसेदे = प्राप्ता । अत्रोपमालङ्कारः ।

कोष:—'कथमादि तथाप्यन्ते यत्ने गौरवबाढयोः' इति वैजयन्ती । 'चक्रधारा प्रधिर्नेमिः' इति यादवः ।

हिन्दी—देवताओं के प्रभाव से किसी प्रकार देवांगनाओं के रथ आकाश में टिक गये थे। द्रुतगामी अश्व उन रथों का संचालन कर रहे थे। इस प्रकार आकाश में ऊँचे जाते हुए रथसमूह रथनेमियों के न चलने पर साक्षात् विमान लगने लगे थे ॥ ४ ॥

कान्तानां कृतपुलकः स्तनांगरागे वक्त्रेषु च्युततिलकेषु मौक्तिकाभः ।
सम्पेदे श्रमसलिलोद्गमो विभूषां रम्याणां विकृतिरपि श्रियं तनोति ॥ ५ ॥

अन्वयः—कान्तानां स्तनांगरागे कृतपुलकः च्युततिलकेषु वक्त्रेषु मौक्तिकाभः श्रमसलिलोद्गमः विभूषां सम्पेदे । रम्याणां विकृतिः अपि श्रियम् तनोति ।

विग्रहः--स्तनानाम् अंगरागस्तस्मिन् = स्तनांगरागे। कृतः पुलकः = कृतपुलकः। च्युताः तिलकाः यैः तेषु = च्युततिलकेषु। मौक्तिकानाम् आभा इव आभा यस्य सः = मौक्तिकाभः। श्रमेण जातम् सलिलम् = श्रमसलिलं, तस्य उद्गमः = श्रमसलिलोद्गमः।

अर्थः--कान्तानाम् = अप्सरसाम्। स्तनांगरागे = पयोधरालक्तके। कृत· पुलकः = जनितोद्भेदः। च्युततिलकेषु = प्रमृष्टतिलकेषु। वक्त्रेषु = मुखेषु। मौक्तिकाभः = मुक्तादीप्तिः। श्रमसलिलोद्गमः = परिश्रमस्वेदोद्भेदः। विभू· षाम् = भूषणम्। सम्पेदे = सम्प्राप्तः। रम्याणाम् = रमणीयानाम्। विकृतिः = विकारः। अपि। श्रियम् = शोभाम। तनोति = विस्तारयति। अत्रार्थान्तर· न्यासालङ्कारः।

कोषः--'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इत्यमरः।

हिन्दी--देवाङ्गनाओं के स्तनाङ्ग स्वेदबिन्दुओं से रोमाञ्चित थे। ये स्वेद· कण उनके मुखों के तिलकों को मिटाकर मोतियों के समान भासित हो रहे थे। वास्तव में स्वभावतः सुन्दर वस्तुओं में उत्पन्न हुआ विकार भी उनकी शोभा को ही बढ़ाता है ॥ ५ ॥

राजद्भिः पथि मरुतामभिन्नरूपैरुल्कार्चिः स्फुटगतिभिर्ध्वजांशुकानाम्।
तेजोभिः कनकनिकाषराजिगौरैरायामः क्रियत इव स्म सातिरेकः ॥६॥

अन्वयः--मरुतां पथि राजद्भिः अभिन्नरूपैः उल्कार्चिः स्फुटगतिभिः कनकनिकाषराजिगौरैः ध्वजांशुकानां तेजोभिः आयामः सातिरेकः क्रियते स्म इव।

विग्रहः--अभिन्नैः रूपैः = अभिन्नरूपैः। उल्कानामर्चींषि = उल्कार्चींषि, तानीव स्फुटगतीनि येषां तैः = उल्कार्चिःस्फुटगतिभिः। कनकस्य निकाषस्तस्य राजिस्तद्वद्गौरैः = कनकनिकाषराजिगौरैः। ध्वजानाम् अंशुकानि, तेषाम् = ध्वजांशुकानाम। अतिरेकेण सहितः = सातिरेकः।

अर्थः--मारुताम् = पवनानाम्। पथि = मार्गे। राजद्भिः = दीप्यमानैः। अभिन्नरूपैः = अविच्छिन्नाकारैः। उल्कार्चिःस्फुटगतिभिः = तारार्चिर्दीप्तिमार्गैः। कनकनिकाषराजिगौरैः = स्वर्णकषणरेखारुणैः। ध्वजांशुकानाम् = पताकावस्त्रा· णाम्। तेजोभिः = कान्तिभिः। आयामः = विस्तारः। सातिरेकः = सातिशयः

क्रियंते स्म इव = कृत इव। दीर्घा ध्वजपटाः स्वतेजःप्रसारेण दीर्घतमा इव लक्ष्यन्त इत्यर्थः । अत्रोत्प्रेक्षालङ्कारः ।

कोषः—'गौरः पीतेऽरुणे श्वेते' इति विश्वः ।

हिन्दी—विमानों पर फहराते हुए ध्वजवस्त्रों की दीप्तियां नीलाकाश में शोभित हो रही थीं। तारों की गति के समान उनकी गति दिखाई पड़ती थी। वे उल्कागतियां कसौटी पर खिची हुई स्वर्णरेखाओं के समान चमकती थीं। इस प्रकार ध्वजदीप्तियां ध्वजवस्त्रों की लम्बाई-चौड़ाई का विस्तार सा कर रही थीं ॥ ६ ॥

रामाणामवजितमाल्यसौकुमार्ये सम्प्राप्ते वपुषि सहत्वमातपस्य ।
गन्धर्वैरधिगतविस्मयैः प्रतीये कल्याणी विधिषु विचित्रता विधातुः॥७॥

अन्वयः—अवजितमाल्यसौकुमार्ये रामाणाम्, वपुषि आतपस्य सहत्वम् सम्प्राप्ते अधिगतविस्मयैः गन्धर्वैः विधातुः विधिषु कल्याणी विचित्रता प्रतीये ।

विग्रहः—मालैव माल्यम्, तस्य सौकुमार्यम् = माल्यसौकुमार्यम् । अवजितं माल्यसौकुमार्यम् येन तस्मिन् = अवजितमाल्यसौकुमार्ये । सहते इति सहः, तस्य भावः = सहत्वम् । अधिगतः विस्मयः यैस्तैः अधिगतविस्मयैः ।

अर्थः—अवजितमाल्यसौकुमार्ये = कुसुमादपि सुकुमारे । रामाणाम् = अप्सरसाम् । वपुषि = शरीरे । आतपस्य = घर्मस्य । सहत्वम् = सहनीयताम् । सम्प्राप्ते = प्राप्ते सति । अधिगतविस्मयैः = प्राप्ताश्चर्यैः । गन्धर्वैः = तज्जातिविशिष्टैर्देवैः । विधातुः = ब्रह्मणः । विधिषु = सृष्टिषु । कल्याणी = साधीयसी । विचित्रता = नानाविधित्वम् । प्रतीये = अवगता ।

कोषः—'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ।' इत्यमरः ।

हिन्दी—आश्चर्य-चकित गन्धर्वों ने देखा कि अप्सराओं के शरीर फूलों की कोमलता को भी जीत रहे थे फिर भी वे धूप को सहन कर चुकी थीं इससे गन्धर्वों ने ब्रह्मा जी की रचनाक्रियाओं में कल्याणकारिणी विचित्रता का अनुमान किया ॥ ७ ॥

सिन्दूरैः कृतरुचयः सहेमकक्ष्याः स्रोतोभिस्त्रिदशगजा मदं क्षरन्तः ।
सादृश्यं ययुररुणांशुरागभिन्नैर्वर्षद्भिः स्फुरितशतह्रदैः पयोदैः ॥ ८ ॥

अन्वयः—सिन्दूरैः कृतरुचयः सहेमकक्ष्याः स्रोतोभिः मदं क्षरन्तः त्रिदशगजाः अरुणांशुरागभिन्नैः वर्षद्भिः स्फुरितशतह्रदैः पयोदैः सादृश्यम् ययुः।

विग्रहः—कृताः रुचयः यैस्ते = कृतरुचयः। सह हेम्नः कक्ष्याभिरिति = सहेमकक्ष्याः। त्रिदशानां गजाः = त्रिदशगजाः। अरुणांशोः रागेण भिन्नास्तैः = अरुणांशुरागभिन्नैः। स्फुरिताः शतह्रदाः यत्र तैः = स्फुरितशतह्रदैः।

अर्थः—सिन्दूरैः = नागसम्भवनामरागद्रव्यैः। कृतरुचयः = अलङ्कृताः। सहेमकक्ष्याः = सस्वर्णमध्यगजबन्धाः। स्रोतोभिः = सप्तमदनाडीभिः। मदं = मदजलम्। क्षरन्तः = वर्षन्तः। त्रिदशगजाः = देवगजाः। अरुणांशुरागभिन्नैः = सूर्यकिरणारुण्यभिन्नैः। वर्षद्भिः = क्षरद्भिः। स्फुरितशतह्रदैः = स्फुरिततडित्कैः। पयोदैः = जलधरैः। सादृश्यम्। ययुः = जग्मुः। अत्रोपमालङ्कारः।

कोषः—'सिन्दूरं नागसम्भवम्' इत्यमरः। 'कक्ष्याः प्रकोष्ठे हर्म्यादेः काञ्च्यान् मध्येभबन्धने' इत्यमरः।

हिन्दी—सिन्दूर से सुशोभित, स्वर्ण-शृङ्खलायुक्त, मदनाडियों से मद टपकाते हुए देवताओं के हाथी, सूर्य की किरणों से व्याप्त, चमकती हुई बिजली वाले बरसते हुए बादलों के समान दिखलाई दे रहे थे॥ ८॥

अत्यर्थं दुरुपसदादुपेत्य दूरं पर्यन्तादहिममयूखमण्डलस्य।
आशानामुपरचितामिवैकवेणीं रम्योर्मि त्रिदशनदीं ययुर्बलानि॥ ९॥

अन्वयः—बलानि अत्यर्थं दुरुपसदात् अहिममयूखमण्डलस्य पर्यन्तात् दूरम् उपेत्य आशानम् उपरचिताम् एकवेणीम् इव रम्योर्मिम् त्रिदशनदीं ययुः।

विग्रहः—दुःखेनोपसदस्तस्मात् = दुरुपसदात्। अहिमं मयूखानां मण्डलं यस्य तस्य = अहिममयूखमण्डलस्य। एकावेणी = एकवेणी ताम् = एकवेणीम। रम्याः ऊर्मयः यस्यास्तान् = रम्योर्मिम्। त्रिदशानां नदी ताम् = त्रिदशनदीम्।

अर्थः—बलानि = सैन्यानि। अत्यर्थम् = अत्यन्तम्। दुरुपसदात् = दुःसहात्। अहिममयूखमण्डलस्य = तप्तकिरणमण्डलस्य सूर्यस्य। पर्यन्तात = समीपात्। दूरम् = दूरदेशम्। उपेत्य = गत्वा। आशानाम् = दिशाम्। उपरचिताम् = गुम्फिताम्। एकवेणीम् इव = एकवेणीसदृशीम। रम्योर्मिम् = रमणीयतरङ्गाम्। त्रिदशनदीम् = मन्दाकिनीम्। ययुः = जग्मुः।

कोषः—'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः ।' इत्यमरः ।

हिन्दी—अप्सराओं की सेनायें अत्यन्त दुःसह सूर्यमण्डल के पास से दूर जाकर मन्दाकिनी गङ्गा के निकट पहुँची । वह देवनदी रम्य तरङ्गों से युक्त होने के कारण दिग्वधू ( दिशा रूप युवतियों ) की लहराती हुई गुंथी हुई एकमात्र चोटी के समान शोभित हो रही थी ।। ९ ।।

आमत्तभ्रमरकुलाकुलानि धुन्वन्नुद्धूतग्रथितरजांसि पङ्कजानि ।
कान्तानां गगननदीतरङ्गशीतः सन्तापं विरमयति स्म मातरिश्वा ॥१०॥

अन्वयः—आमत्तभ्रमरकुलानि उद्धूतग्रथितरजांसि पङ्कजानि धुन्वन् गगननदीतरङ्गशीतः मातरिश्वा कान्तानां सन्तापम् विरमयति स्म ।

विग्रहः—आमत्तैः भ्रमरकुलैः आकुलानि = आमत्तभ्रमरकुलाकुलानि । उद्धूतानि ग्रथितानि च रजांसि येषु तानि = उद्धूतग्रथितरजांसि । पङ्के जातानि= पङ्कजानि । गगनस्य नदी = गगननदी, तस्यास्तरगैः शीतः सः = गगननदीतरङ्गशीतः । मातरि श्वयतीति = मातरिश्वा ।

अर्थः—आमत्तभ्रमरकुलानि = मत्तालिकुलव्याप्तानि । उद्धूतग्रथितरजांसि = उत्थापितान्योन्यसम्बद्धरजांसि । पङ्कजानि = कमलानि । धुन्वन् = कम्पयन् । गगननदीतरङ्गशीतः=मन्दाकिनीतरङ्गशीतलः । मातरिश्वा=पवनः । कान्तानाम्= अप्सरसाम् । सन्तापम् = श्रमतापम् । विरमयति स्म = शमयामास ।

कोषः—'श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः' इत्यमरः ।

हिन्दी—मतवाले भौंरों से व्याप्त, उड़ते हुए एवं जमे हुए परागवाले कमलदलों को कम्पित करते हुए, आकाशगंगा की लहरों से शीतल बने हुए पवन ने अप्सराओं के श्रमजनित संताप को दूर कर दिया ।। १० ।।

सम्भिन्नैरिभतुरगावगाहनेन प्राप्योर्वीरनु पदवीं विमानपङ्क्तीः ।
तत्पूर्वं प्रतिविदधे सुरापगायाः वप्रान्तस्खलितविवर्तनं पयोभिः ॥११॥

अन्वयः—इभतुरगावगाहनेन सम्भिन्नैः सुरापगायाः पयोभिः पदवीम् अनु उर्वीः विमानपंक्तीः प्राप्य तत्पूर्वं वप्रान्तस्खलितविवर्तनं प्रतिविदधे ।

विग्रहः—इभाश्च तुरगाश्च = इभतुरगाः, तेषाम् अवगाहनम्, तेन इभतुरगावगाहनेन । अद्भिः गच्छतीत्यापगा । सुराणामापगा, तस्याः = सुरापगायाः।

विमानानां पंक्तयस्ताः = विमानपंक्तीः। वप्रान्तेषु स्खलितानि, तैः ( कृतं ) विवर्त्त-नम् = वप्रान्तस्खलितविवर्त्तनम्। तदेव पूर्वम् = तत्पूर्वम्।

अर्थः—इभतुरगावगाहनेन = गजवाज्यवलोडनेन। संभिन्नैः = संक्षुभितैः। सुरापगायाः = देवनद्याः। पयोभिः = जलैः। पदवीम् अनु = पदव्याम्। उर्वीः = विपुलाः। विमानपंक्तीः = विमानराजीः। प्राप्य = लब्ध्वा। तत्पूर्व = इदं पूर्वं यथा तथा। वप्रान्तस्खलितविवर्तनम् = रोधोभूमिस्खलितप्रतिवर्तनम्। प्रतिविदधे = चक्रे। अत्रातिशयोक्तिरलङ्कारः।

कोषः—'वप्रः पितरि केदारे वप्रः प्राकाररोधसोः'। इति वैजयन्ती।

हिन्दी—अप्सराओं के हाथियों, घोड़ों के आलोडन से गङ्गा का जल क्षुब्ध हो गया था। तट पर खड़े हुए उनके रथों से टकरा कर जल फिर नदी को वापस आ जाता था। इस प्रकार जल का आना-जाना उनके लिये एकदम नवीन था। तट पर पंक्ति में खड़े उनके रथ ही सुरनदी का तट बन गये थे॥ ११॥

क्रान्तानां ग्रहचरितात्पथो रथाना-
मक्षाग्रक्षतसुरवेश्मवेदिकानाम्।
निःसङ्गं प्रधिभिरुपाददे विवृत्तिः
संपीडक्षुभितजलेषु तोयदेषु॥ १२॥

अन्वयः—ग्रहचरितात् पथः क्रान्तानाम् अक्षाग्रक्षतसुरवेश्मवेदिकानां रथानां प्रधिभिः संपीडक्षुभितजलेषु तोयदेषु निःसङ्गं विवृत्तिः उपाददे।

विग्रहः—ग्रहैश्चरितात् = ग्रहचरितात्। अक्षाणामग्राणि, तैः क्षताः सुराणां वेश्मनां वेदिकाः यैस्तेषाम् = अक्षाग्रक्षतसुरवेश्मवेदिकानाम्। संपीडनेन क्षुभितानि जलानि येषां तेषु सम्पीडक्षुभितजलेषु। तोयं ददतीति, तेषु = तोयदेषु।

अर्थः—ग्रहचरितात् = सूर्याद्याश्रितात्। पथः = मार्गात्। क्रान्तानाम् = निष्क्रान्तानाम्। अक्षाग्रक्षतसुरवेश्मवेदिकानाम् = चक्रधाराग्रदारितदेवगृहवेदि-कानाम्। रथानाम् = विमानानाम्। प्रधिभिः = नेमिभिः। सम्पीडक्षुभितजलेषु = नोदनक्षुभितपानीयेषु। तोयदेषु = अम्भोदेषु। निःसङ्गम् = अप्रतिघातम्। विवृत्तिः = परिभ्रमणम्। उपाददे = स्वीकृता।

कोष:—'चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमान्' इत्यमरः।

हिन्दी—सूर्यादि ग्रहों के आश्रित मार्ग से निकलते हुए रथों के पहियों के अग्रभागों ( धुरी ) से देवताओं के घरों में बनी हुई वेदिकायें नष्ट-भ्रष्ट हो गईं। उन रथों की नेमियों ने बादलों को रगड़ कर उनके जल को क्षुब्ध कर बड़े वेग से आगे बढ़ना आरम्भ किया ॥ १२ ॥

तप्तानामुपदधिरे विषाणभिन्नाः
प्रह्लादं सुरकरिणां घनाः क्षरन्तः।
युक्तानां खलु महतां परोपकारे
कल्याणी भवति रुजत्स्वपि प्रवृत्तिः ॥ १३ ॥

अन्वयः—विषाणभिन्नाः क्षरन्तः घनाः तप्तानां सुरकरिणां प्रह्लादम् उपदधिरे परोपकारे युक्तानां महतां रुजत्सु अपि कल्याणी खलु प्रवृत्तिः भवति।

विग्रहः—विषाणैः भिन्नाः = विषाणभिन्नाः। सुराणां करिणस्तेषाम् = सुरकरिणाम्। परेषामुपकारे = परोपकारे।

अर्थः—विषाणभिन्नाः = गजदन्तक्षताः। क्षरन्तः = स्रवन्तः। घनाः = मेघाः। तप्तानां = घर्मपीडितानां। सुरकरिणाम् = देवगजानाम्। प्रह्लादम् = आह्लादम्। उपदधिरे = चक्रिरे। परोपकारे = परमार्थे। युक्तानाम् = लग्नानाम्। महतां = सताम्। रुजत्स्वपि = पीडयत्स्वपि। कल्याणी = भद्रा। खलु = किल। प्रवृत्तिः = व्यापारः। भवति। अत्रार्थान्तिरन्यासालंकारः।

कोष:—'विषाणं दन्तशृङ्गयोः' इति हलायुधः।

हिन्दी—सुरगजों ने बादलों को अपने दांतों से क्षत-विक्षत कर दिया। जिससे जल टपकाते हुए बादलों ने धूप से पीड़ित ( तप्त ) उन हाथियों को उल्टा प्रसन्न ही किया। परोपकार में लगे हुए महान् पुरुषों की पीड़ित होकर भी हितकारिणी प्रवृत्ति ही बनी रहती है, वे अपने परोपकारी मार्ग को छोड़ते नहीं हैं ॥ १३ ॥

संवाता मुहुरनिलेन नीयमाने
दिव्यस्त्रीजघनवरांशुके विवृत्तिम्।
पर्यस्यत्पृथुमणिमेखलांशुजालं
सञ्जज्ञे युतकमिवान्तरीयमूर्वोः ॥ १४ ॥

अन्वयः—संवाता अनिलेन दिव्यस्त्रीजघनवरांशुके विवृत्तिम् मुहुः नीयमाने पर्यस्यत्पृथुमणिमेखलांशुजालम् ऊर्वोः युतकम् इव अन्तरीयम् सञ्जज्ञे ॥ १४ ॥

विग्रहः—दीव्यस्त्रीणां जघनेषु वरं यद् अंशुकं तस्मिन् = दिव्यस्त्रीजघनवरांशुके। पर्यस्यतां पृथुमणिमेखलानाम् अंशुजालम् = पर्यस्यत्पृथुमणिमेखलांशुजालम्। अन्तरे भवमन्तरीयम्।

अर्थः—संवाता = संवहता। अनिलेन = पवनेन। दिव्यस्त्रीजघनवरांशुके= अप्सरोजघनश्रेष्ठपटे। विवृत्तम् = अपसारम्। मुहुः = वारंवारम्। नीयमाने = प्राप्यमाने सति। पर्यस्यत्पृथुमणिमेखलांशुजालम् = प्रसर्पद्विशालमणिकाञ्च्यंशुसमूहम्। ऊर्वोः = जघनयोः। युतकम् = चल्लनम् ('लंहगा' इति हिन्द्याम्) इव। अन्तरीयम् = अधोंऽशुकम्। सञ्जज्ञे = संजातम्। अत्रोत्प्रेक्षालंकारः।

कोषः—'युतकं संश्रये युग्मे यौतके चल्लनेऽपि च' इति विश्वः!

हिन्दी—चलती हुई हवा से अप्सराओं की जांघों के ऊपर का वस्त्र बारम्बार हट जाने पर सरकती हुई विशाल मणि-मेखलाओं का अंशुजाल (किरण-समूह) जांघों पर पहने हुए अधोवस्त्र युतक (पेटीकोट) के समान ज्ञात होता था॥ १४॥

प्रत्यार्द्रीकृततिलकास्तुषारपातैः
प्रह्लादं शमितपरिश्रमा दिशन्तः।
कान्तानां बहुमतिमाययुः पयोदा
नाल्पीयान् बहु सुकृतं हिनस्ति दोषः॥ १५॥

अन्वयः—तुषारपातैः प्रत्यार्द्रीकृततिलकाः शमितपरिश्रमाः प्रह्लादं दिशन्तः पयोदाः कान्तानां बहुमतिम् आययुः। अल्पीयान् दोषः बहु सुकृतं न हिनस्ति।

विग्रहः—तुषाराणां पातास्तैः=तुषारापातैः। प्रत्यार्द्रीकृताः तिलकाः यैस्ते प्रत्यार्द्रीकृततिलकाः। शमितः परिश्रमः यैस्ते=शमितपरिश्रमाः। सुष्ठु कृतम् = सुकृतम्। बहूनाम् मतयः यस्मिस्तम् = बहुमतिम्।

अर्थः—तुषारपातैः = शीकरवर्षैः। प्रत्यार्द्रीकृततिलकाः = मार्जितविशे-

थकाः। शमितपरिश्रमाः = दूरीकृतश्रमाः! प्रह्लादम् = आनन्दम्। दिशन्तः = प्रकटयन्तः। पयोदाः = घनाः। कान्तानाम् = अप्सरसाम्। बहुमतिम् = सम्मानम्। आययुः = आनिन्युः। अल्पीयान् = अणुमात्रः। दोषः = अवगुणः। बहु = महत्। सुकृतम् = उपकारम्। न हिनस्ति = न हन्ति। अत्रार्थान्तरन्यासालंकारः।

कोषः—'तुषारौ हिमशीकरौ' इति विश्वः।

हिन्दी—बादलों ने पानी बरसा कर अप्सराओं के तिलक मिटा दिये थे। (फिर भी) उनकी थकावट को मिटाकर आनन्द प्रकट करते हुए बादलों ने अप्सराओं को सम्मानित किया। क्योंकि छोटा सा दोष किसी के विशाल उपकार को मिटा नहीं देता है॥ १५॥

वातस्य ग्रथिततरङ्गसैकताभे विच्छेदं विपयसि वारिवाहजाले।
आतेनुस्त्रिदशवधूजनाङ्गभाजां सन्धानं सुरधनुषः प्रभा मणीनाम्॥१६॥

अन्वयः—ग्रथिततरङ्गसैकताभे विपयसि वारिवाहजाले विच्छेदं यातस्य सुरधनुषः त्रिदशवधूजनाङ्गभाजां मणिनां प्रभाः सन्धानम् आतेनुः।

विग्रहः—ग्रथितास्तरङ्गाः यस्मिन्, ग्रथिततरङ्गम्। ग्रथिततरङ्गं यत् सैकतम् तस्याभा इवाभा यस्य तस्मिन् = ग्रथिततरङ्गसैकताभे। विगतानि पयसां यस्मात्, तस्मिन् = विपयसि। वारिणि वहन्ति इति वारिवाहाः, तेषां जालम्, तस्मिन् = वारिवाहजाले। विशिष्टम् छेदम् तत् = विच्छेदम्। सुराणां धनुः, तस्य = सुरधनुषः। त्रिदशानां वधूजनानामङ्गानि भजन्तीति तासाम् = त्रिदशवधूजनाङ्गभाजाम्।

अर्थः—ग्रथिततरङ्गसैकताभे = बद्धोर्मिसैकताप्रभे। विपयसि = निर्जले। वारिवाहजाले = घनसमूहैः। विच्छेदं = त्रुटिम्। यातस्य = गतस्य। सुरधनुषः = इन्द्रचापस्य। त्रिदशवधूजनाङ्गभाजां = देवाङ्गनाङ्गभाजाम्। मणीनाम् = विद्रुमादीनाम्। प्रभाः = कान्तयः। सन्धानम् = पूर्णत्वम्। आतेनुः = चक्रुः। अत्रातिशयोक्तिरलंकारः।

कोषः—'पुलिनं सैकतं सिकतामयम्।' इत्यमरः।

हिन्दी—निर्जल मेघमाल पर तट से बार-बार टकराती हुई खण्डित लहरों का प्रतिबिम्ब पड़ता था। जिसके कारण निर्जल मेघजाल भी खण्डित सा दिखलाई पड़ रहा था। उन खण्डित प्रतीत होने वाले बादलों में इन्द्रधनुष भी खण्डित

सा लग रहा था। अप्सराओं के शरीरों पर शोभित मणियों की प्रभाओं ने उस खण्डित इन्द्रधनुष को पूरा कर दिया ॥ १६ ॥

संसिद्धाविति करणीयसन्निबद्धै-
रालापैः पिपतिषतां विलंघ्य वीथीम्।
आसेदे दशशतलोचनध्वजिन्या
जीमूतैरपिहितसानुरिन्द्रकीलः ॥ १७ ॥

अन्वयः—संसिद्धौ इति करणीयसन्निबद्धैः आलापैः दशशतलोचनध्वजिन्यां पिपतिषताम् वीथीम् विलंघ्य जीमूतैः अपिहितसानुः इन्द्रकीलः आसेदे।

विग्रहः—कर्तुं योग्यं करणीयम्, तेन सन्निबद्धैः = करणीयसन्निबद्धैः। दशशतानि लोचनानि यस्य, तस्य या ध्वजिनी, तया दशशतलोचनध्वजिन्यः। पतितुमिच्छन्तीति, तेषाम् = पिपतिषताम्। अपिहितानि सानूनि यस्य सः = अपिहितसानुः। जीवस्य मूतः येषां ते जीमूतैः।

अर्थः—संसिद्धौ = कार्यसिद्धौ। इति = इत्यम्। करणीयसन्निबद्धैः = कर्त्तव्यसंयोजितैः। आलापैः = आभाषणैः। दशशतलोचनध्वजिन्या = इन्द्रसेनया। पिपतिषताम् = पक्षिणाम्। वीथीम् = मार्गम्। विलंघ्य = उल्लंघ्य। जीमूतैः = उदकपटवन्धैः मेघैः। अपिहितसानुः = आच्छादितशिखरः। इन्द्रकीलः = तदाख्यः पर्वतः। आसेदे = प्राप्तः।

कोषः—'स्यादाभाषणमालापः' इत्यमरः। 'पित्सन्तो नभसंगमाः' इत्यमरः।

हिन्दी—कार्य-सिद्धि के लिये क्या करना चाहिये और कैसे करना चाहिए? इस प्रकार कर्तव्य-सम्बन्धी आलापों को करती हुई देवराज इन्द्र की सेना ने पक्षियों के मार्ग को पार कर बादलों से आच्छन्न शिखरों वाले इन्द्रकील पर्वत को प्राप्त किया ॥ १७ ॥

आकीर्णा मुखनलिनैर्विलासिनीनामुद्धूतस्फुटविशदातपत्रफेना।
सा तूर्यध्वनितगभीरमापतन्ती भूभर्त्तुः शिरसि नभोनदीव रेजे ॥ १८ ॥

अन्वयः—विलासिनीनां मुखनलिनैः उद्धूतस्फुटविशदातपत्रफेना तूर्यध्वनितगभीरम् भूभर्त्तुः शिरसि आपतन्ती सा नभोनदी इव रेजे।

विग्रहः—मुखानि नलिनानीव तैः = मुखनलिनैः। उद्धूतानि स्फुटानि

विशदानि आतपत्राणि फेना इव यस्याः सा = उद्धृतस्फुटविशदातपत्रफेना। तूर्याणां ध्वनितानि, तैः गभीरम् = तूर्यध्वनिगभीरम्। भुवः भर्त्ता तस्य = भूभर्त्तुः। नभसो नदी = नभोनदी।

अर्थः—विलासिनीनाम् = सुन्दरीणाम्। मुखनलिनैः = मुखकमलैः। आकीर्णा = व्याप्ता। उद्धूतस्फुटविशदातपत्रफेना = ऊर्ध्वोत्क्षिप्तविकसितशुभ्रच्छत्रफेना। तूर्यध्वनितगभीरम् = वाद्यघोषगभीरम्। भूभर्त्तुः = इन्द्रकीलस्य। शिरसि = मूर्ध्नि। आपतन्ती = पतन्ती। सा = सेना। नभोनदी इव = आकाशगंगेव। रेजे = शुशुभे।

कोषः—'हैमं छत्रं त्वातपत्रम्' इत्यमरः।

हिन्दी—सुर-सुन्दरियों के कमलमुखों से व्याप्त सुरसेना की उड़ती हुई खुली छतरियाँ फेन के समान शुभ्र थीं। सेना में रणवाद्यों के गभीर घोष हो रहे थे। इस प्रकार इन्द्रकील पर्वत के ऊपर वह सेना आकाशगंगा के समान शोभित हो रही थी॥ १८॥

सेतुत्वं दधति पयोमुचां विताने
संरम्भादभिपततो रथाञ्जवेन।
आनिन्युर्नियमितरश्मिभुग्नघोणाः
कृच्छ्रेण क्षितिमवनामिनस्तुरङ्गाः॥ १९॥

अन्वयः—पयोमुचां विताने सेतुत्वं दधति संरम्भात् जवेन अभिपततः रथान् नियमितरश्मिभुग्नघोणाः अवनामिनः तुरंगाः कृच्छ्रेण क्षितिम् आनिन्युः।

विग्रहः—पयांसि मुञ्चन्तीति, तेषाम् = पयोमुचाम्। नियमितैः रश्मिभिः भुग्ना घोणाः येषां तैः = नियमितरश्मिभुग्नघोणाः। अवनमन्तीत्यवनामिनः।

अर्थः—पयोमुचाम् = मेघानाम्। विताने = विस्तारे। सेतुत्वम् = सेतुरूपत्वम्। दधति = धारयति सति। संरम्भात् = आटोपात्। जवेन = वेगेन। अभिपततः = पततः। रथान् = रथयानान्। नियमितरश्मिभुग्नघोणाः = आकृष्टप्रग्रहाकुञ्चितप्रोथाः। अवनामिनः = अवनताङ्गाः, तुरङ्गाः = अश्वाः। कृच्छ्रेण = महता प्रयत्नेन। क्षितिम् = भूमिम्। आनिन्युः = आनीतवन्तः। अत्र स्वभावोक्तिरलंकारः।

कोषः—'आविद्धं कुटिलं भुग्नं वेल्लितम् वक्रम्' इत्यमरः, 'घोणा तु प्रोथमस्त्रियाम्' इत्यमरः।

हिन्दी—रथों में जुते हुए वे घोड़े आकाश से इन्द्रकील पर्वत तक पुल के समान बने हुए घनपटल से ढालू होने के कारण शीघ्रता से उतरते हुए बड़ी कठिनता से रथों को पृथ्वी पर पहुँचा सके। रस्सियों के खिचाव के कारण उन घोड़ों के नथुने टेढ़े पड़ गये थे और अंगों के अग्रभाग से रथ खींचने के कारण उनके शरीर भी झुके हुए थे ॥ १९ ॥

माहेन्द्रं नगमभितः करेणुवर्याः पर्यन्तस्थितजलदा दिवः पतन्तः।
सादृश्यं निलयननिष्प्रकम्पपक्षैराजग्मुर्जलनिधिशायिभिर्नगेन्द्रैः॥ २० ॥

अन्वयः—माहेन्द्रं नगम् अभितः दिवः पतन्तः पर्यन्तस्थितजलदाः करेणुवर्याः निलयननिष्प्रकम्पपक्षैः जलनिधिशायिभिः नगेन्द्रैः सादृश्यम् आजग्मुः।

विग्रहः—महेन्द्रस्यायं माहेन्द्रस्तम् = माहेन्द्रम्। पर्यन्तस्थिताः जलदाः येषां ते = पर्यन्तस्थितजलदाः। करेणुषु वर्याः = करेणुवर्याः। निष्प्रकम्पा पक्षाः येषां तैः = निष्प्रकम्पपक्षैः, निलयने निष्प्रकम्पपक्षैरिति = निलयननिष्प्रकम्प-पक्षैः। जलनिधौ शेरत इति तैः = जलनिधिशायिभिः। नगानामिन्द्रास्तैः = नगेन्द्रैः।

अर्थः—माहेन्द्रम् नगम् = इन्द्रकीलपर्वतम्। अभितः = परितः। दिवः= अन्तरिक्षात्। पतन्तः=निपतन्तः। पर्यन्तस्थितजलदाः=पार्श्वस्थितघनाः। करेणु-वर्याः = श्रेष्ठगजाः। निलयननिष्प्रकम्पपक्षैः = स्थाने निश्चलपत्रैः। जलनिधि-शायिभिः=समुद्रनिलीनैः। नगेन्द्रैः=मैनाकादिपर्वतैः। सादृश्यम् = साम्यम्। आजग्मुः = प्रापुः। अत्रोपमालङ्कारः।

कोषः—'हेमकूटयो नगाः' इत्यमरः।

हिन्दीः—इन्द्रकील पर्वत पर चारो ओर से उतरते हुए वे देवताओं के हाथी जिनके दोनों पार्श्वों में बादल चिपके हुए से दिखलाई दे रहे थे, समुद्र में शयन करने वाले पंखयुक्त पर्वतों में ( नाकादि ) के समान मालूम होते थे जिनके पंख अपने स्थानों पर चिपके हुए से स्थिर थे ॥ २० ॥

उत्संगे समविषमे समं महाद्रेः क्रान्तानां वियदभिपातलाघवेन।
आमूलादुपनदि सैकतेषु लेभे सामग्री खुरपदवी तुरङ्गमाणाम् ॥२१॥

अन्वयः—महाद्रेः उत्संगे समविषमे वियदभिपातलाघवेन समम् क्रान्तानां तुरङ्गमाणाम् खुरपदवी उपनदी सैकतेषु आमूलात् सामग्री लेभे।

विग्रहः--महांश्चासावद्रिस्तस्य महाद्रेः । समं च विषमं च, तयोः समाहारः, तस्मिन् = समविषमे । अभिपतनमभिपातस्तस्य लाघवम् = अभिपतनलाघवम् । वियति अभिपतनलाघवं तेन वियदभिपतनलाघवेन । खुराणां पदवी=खुरपदवी । नद्याः समीपे = उपनदि । सिकता सन्त्येषु तेषु = सैकतेषु । समग्रस्य भावः = सामग्री ।

अर्थः—महाद्रेः नगराजस्य । उत्सङ्गे = क्रोडे, मूर्ध्नि वा । समविषमे = निम्नोन्नते । वियदभिपातलाघवेन = गगनसंचारपाटवेन । समम् = एकरूपम् । क्रान्तानाम् = गच्छताम् । तुरङ्गमाणाम्=अश्वानाम् । खुरपदवी=खुरपंक्तिः । उपनदि=नदीसमीपे । सैकतेषु=पुलिनेषु । आमूलात्=मूलमारभ्य । सामग्री= साकल्यम् । लेभे = प्राप्त ।

कोषः—'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः' इत्यमरः ।

हिन्दी—उस महान इन्द्रकील के ऊबड़-खाबड़ शिखर पर पहुँच कर वे घोड़े आकाशमार्ग से चलने में सुविधा के कारण शीघ्रता से सुरनदी तट पर पहुँच गये। सुरनदी के रेतीले तट ऊबड़-खाबड़ विषम थे अतः तट पर घोड़ों के खुर आदि से अन्त तक नहीं दिखलाई दे रहे थे ॥ २१ ॥

सध्वानं निपतितनिर्झरासु मन्द्रैः
सम्मूर्च्छन्प्रतिनिनदैरधित्यकासु ।
उदग्रीवैर्घनरवशङ्कया मयूरैः
सोत्कण्ठं ध्वनिरुपशुश्रुवे रथानाम् ॥ २२ ॥

अन्वयः--सध्वानं निपतितनिर्झरासु अधित्यकासु मन्द्रैः प्रतिनिनदैः सम्मूर्च्छन् रथानां ध्वनिः घनरवशङ्कया उदग्रीवैः मयूरैः सोत्कण्ठम् उपशुश्रुवे ।

विग्रहः--ध्वननं ध्वानस्तेन सहितम् = सध्वानम् । निपतिताः निर्झराः यासु, तासु = निपतितनिर्झरासु । निनदैः = प्रतिनिनदैः । घनानां रवः, तस्य शङ्का तया = घनरवशङ्कया । उद् ऊर्ध्वं ग्रीवा = उदग्रीवैः । उत्कण्ठया सहितं सोत्कण्ठम् ।

अर्थः—सध्वानम् = सशब्दम् । निपतितनिर्झरासु = पतितप्रवाहासु । अधित्यकासु =पर्वतोच्चभूमिषु । मन्द्रैः=गम्भीरैः । प्रतिनिनदैः = प्रतिध्वानैः । सम्मूर्च्छन् = वर्धमानः । रथानाम्=देवाङ्गनारथयानानाम् । ध्वनिः = शब्दः ।

घनरवशङ्कया = मेघगर्जितभ्रान्त्या। उद्ग्रीवैः = कृतोच्चग्रीवैः। मयूरैः=केकिभिः। सोत्कण्ठम् = उत्कण्ठया सहितम्। उपशुश्रुवे = उपश्रुतः। अत्र भ्रान्तिमदलकारः।

कोषः—'प्रवाहो निर्झरो झरः' इत्यमरः। 'भूमिरूर्ध्वमधित्यका' इत्यमरः। 'मन्द्रस्तु गम्भीर' इत्यमरः।

हिन्दी—कल कल निनाद करते हुए झरनों से युक्त, पर्वत की ऊँची भूमि पर गम्भीर प्रतिध्वनि से बढ़ती हुई रथों की ध्वनि को घन-गर्जन की शंका से मयूरों ने गर्दन ऊपर उठा-उठाकर बड़ी उत्कण्ठा से सुना ॥ २२ ॥

सम्भिन्नामविरलपातिभिर्मयूखै-
नीलानां भृशमुपमेखलं मणीनाम्।
विच्छिन्नामिव वनिता नभोऽन्तराले
वप्राम्भःस्रुतिमवलोकयाम्बभूवुः ॥ २३ ॥

अन्वयः—अविरलपातिभिः उपमेखलं नीलानां मणीनां मयूखैः भृशं सम्भिन्नां नभोऽन्तराले विच्छिन्नाम् इव वप्राम्भःस्रुतिम् वनिताः अवलोकयाम्बभूवुः।

विग्रहः—अविरलं पतन्तीति तैरविरलपातिभिः। मेखलानां निकटे = उपमेखलम्। नभसः अन्तराले=नभोऽन्तराले। वप्राणामम्भासि तेषां स्रुतिस्ताम्= वप्राम्भःस्रुतिम्।

अर्थः—अविरलपातिभिः = निरन्तरप्रसारिभिः। उपमेखलं = तटेषु। नीलानाम् = असितानाम्। मणीनाम् = विद्रुमादीनाम्। मयूखैः = किरणैः। भृशम् = महत्। सम्भिन्नाम् = एकीभूताम्। नभोऽन्तराले = वियदन्तराले। विच्छिन्नाम् = प्रच्छन्नाम्। इव। वप्राम्भःस्रुतिं = वप्रोदकधाराम्। वनिताः= अप्सरसः। अवलोकयाम्बभूवुः = अवलोकयामासुः। अत्र सङ्करालङ्कारः।

कोषः—'श्रोणिस्थानेऽद्रिकटके कटिबन्धेऽसिबन्धने' इति यादवः।

हिन्दी—सुरसुन्दरियों ने ऊपर से नीचे की ओर अविरल गति से बहते हुए झरनों को देखा कि वे आकाश के अन्तराल में अदृश्य से दिखाई पड़ने लगे क्योंकि इन्द्रकील पर्वत के निचले भाग में नीलमणियों की किरणें बराबर निकल रहीं थी अतः झरनों का प्रवाह भी नीला-सा लग रहा था ॥ २३ ॥

आसन्नद्विपपदवीमदानिलाय
क्रुध्यन्तो धियमवमत्य धूर्गतानाम् ।
सव्याजं निजकरिणीभिरात्तचित्ताः
प्रस्थानं सुरकरिणः कथञ्चिदीषुः ॥ २४ ॥

अन्वयः—धूर्गतानां धियम् अवमत्य आसन्नद्विपपदवीमदानिलाय क्रुध्यन्तः सव्याजं निजकरिणीभिः आत्तचित्ताः सुरकरिणः प्रस्थानं कथंचिद् ईषुः ।

विग्रहः—धुरं गतास्तेषां=धूर्गतानाम् । आसन्नायां द्विपपदव्यां यो मदानिलस्तस्मै = आसन्नद्विपपदवीमदानिलाय । व्याजेन सहितं=सव्याजम् । निजैः करिणीभिः=निजकरिणीभिः । आत्तानि चित्तानि येषां ते=आत्तचित्ताः । सुराणां करिणः=सुरकरिणः ।

अर्थः—धूर्गतानाम्=नियन्तॄणाम् । धियम्=बुद्धिम्, आज्ञामित्यर्थः । अवमत्य=तिरस्कृत्य । आसन्नद्विपपदवीमदानिलाय=आसन्नवनगजमार्गमदपवनाय । क्रुध्यन्तः=कुप्यन्तः । सव्याजम्=सकपटम् । निजकरिणीभिः=स्वेभीभिः । आत्तचित्ताः=आकृष्टचित्ताः । सुरकरिणः=देवगजाः । प्रस्थानम्=गमनम् । कथञ्चित्=कष्टेन । ईषुः=अभिलेषुः ।

कोषः—'कुञ्जरो वारणः करी' इत्यमरः ।

हिन्दी—अपने महावतों की आज्ञा का उल्लंघन कर निकटवर्त्ती किसी दूसरे जङ्गली हाथी की मदगन्ध को सूँघने से कुपित बने हुए वे सुरगज, अपनी हथिनियों द्वारा बहाना करके चित्त आकृष्ट हो जाने पर जैसे तैसे आगे बढ़ सके ॥

नीरन्ध्रं पथिषु रजो रथाङ्गनुन्नं पर्यस्यन्नवसलिलारुणं वहन्ती ।
आतेने वनगहनानि वाहिनी सा घर्मान्तक्षुभितजलेव जह्नुकन्या ॥२५॥

अन्वयः—नीरन्ध्रं पथिषु रथाङ्गनुन्नं पर्यस्यन्नवसलिलारुणं रजः वहन्ती सा वाहिनी घर्मान्तक्षुभितजला जह्नुकन्या इव वनगहनानि आतेने ।

विग्रहः—निर्गतं रन्ध्रम् यस्मात् तत्=नीरन्ध्रम् । रथानामङ्गानि तैः नुन्नं=रथाङ्गनुन्नम् । नवं सलिलं=नवसलिलम् । पर्यस्यत् नवसलिलमिव अरुणम्=पर्यस्यन्नवसलिलारुणम् । घर्मस्यान्ते=घर्मान्ते क्षुभितं जलं यस्याः सा=घर्मान्तक्षुभितजला । जह्नोः कन्या=जह्नुकन्या । वनानि च तानि गहनानि=वनगहनानि ।

अर्थः—नीरन्ध्रम्=सान्द्रम्। पथिषु=मार्गेषु। रथाङ्गनुन्नम्=चक्रप्रेरितम्। पर्यस्यन्नवसलिलारुणम्=प्रसर्पन्नूतनजलारुणम्। रजः=धूलिम्। वहन्ती=प्रापयन्ती। सा=पूर्वोक्ता। वाहिनी=सुरसेना। घर्मान्तक्षुभितजला=प्रावृष्याकुलितनीरा। जह्नुकन्या=जाह्नवी गङ्गा। इव। वनगहनानि=जीर्णकाननानि। आतेने=व्यानशे। अत्र सङ्करालङ्कारः।

कोषः—'नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः' इत्यमरः।

हिन्दी—मार्ग में रथचक्रों से उड़ाई हुई तथा बहते हुए नूतन जल के समान अरुण वर्ण की घनी धूल से व्याप्त वह देवताओं की सेना वर्षा ऋतु में उमड़ते हुए जलवाली गङ्गा के समान, घने जङ्गलों में चारो ओर फैल गई॥ २५॥

सम्भोगक्षमगहनामथोपगङ्गं बिभ्राणां ज्वलितमणीनि सैकतानि।
अध्यूषुश्च्युतकुसुमाचितां सहाया वृत्रारेरविरलशाद्वलां धरित्रीम्॥२६॥

अन्वयः—अथ वृत्रारेः सहायाः उपगङ्गम् सम्भोगक्षमगहनाम् ज्वलितमणीनि सैकतानि बिभ्राणां च्युतकुसुमाचिताम् अविरलशाद्वलाम् धरित्रीम् अध्यूषुः।

विग्रहः—वृत्रस्यारिस्तस्य=वृत्रारेः। गङ्गायाः समीपे=उपगङ्गम्। सम्भोगाय क्षमा गहना च ताम्=सम्भोगक्षमगहनाम्। ज्वलिताः मणयः येषु तानि=ज्वलितमणीनि। च्युतैः कुसुमैः आचिता ताम्=च्युतकुसुमाचिताम्। अविरलाः शाद्वलाः यस्यां सा ताम्=अविरलशाद्वलाम्।

अर्थः—अथ=अनन्तरम्। वृत्रारे=इन्द्रस्य। सहायाः=गन्धर्वाः। उपगङ्गम्=गङ्गासमीपे। सम्भोगक्षमगहनाम्=उपभोगयोग्यवनाम्। ज्वलितमणीनि=दीप्तमणियुक्तानि। सैकतानि=पुलिनानि। बिभ्राणाम्=धारयन्तीम्। च्युतकुसुमाचिताम्=स्वयंपतितपुष्पव्याप्ताम्। अविरलशाद्वलाम्=सान्द्रशाद्वलप्रदेशाम्। धरित्रीम्=भूमिम्। अध्यूषुः=अधितस्थुः। अत्र काव्यलिङ्गमलङ्कारः।

कोषः—'शाद्वलः शादहरिते' इत्यमरः।

हिन्दी—इसके बाद इन्द्रदेव के सहायक गन्धर्व गंगा नदी के निकट रमणीक घने जंगलों से युक्त, घनी घास से हरी-भरी बनी हुई स्थली पर ठहर गये जहाँ चमकती हुए मणियों से युक्त बहुत से रेतीले प्रदेश थे और वृक्षों से स्वयं गिरे हुए फूल बिखरे थे॥ २६॥

भूभर्त्तुः समधिकमादधे तदोर्व्याः
श्रीमत्तां हरिसखवाहिनीनिवेशः।
संसक्तौ किमसुलभं महोदयाना-
मुच्छ्रायं नयति यदृच्छयापि योगः ॥ २७ ॥

अन्वयः—तदा हरिसखवाहिनीनिवेशः भूभर्त्तुः समधिकम् श्रीमत्ताम् आदधे। महोदयानां संसक्तौ किम् असुलभम्। यदृच्छया योगः अपि उच्छ्रायम् नयति।

विग्रहः—हरेः सखा=हरिसखा, तस्य या वाहिनी, तस्यः निवेशः=हरिसखवाहिनीनिवेशः। महान्तः उदयाः येषां तेषां=महोदयानाम्। न सुलभम्=असुलभम्।

अर्थः—तदा=तस्मिन् काले। हरिसखवाहिनीनिवेशः=गन्धर्वसेनाशिविरम्। भूभर्त्तुः=पर्वतस्य। उर्व्याः=भूमेः। समधिकम्=पूर्वस्मादधिकम्। श्रीमत्ताम्=श्रियम्। आदधे=जनयामास। महोदयानाम्=महताम्। संसक्तौ=सम्यक् सम्बन्धे। किम् असुलभम्=नास्ति किमपि दुर्लभम्। यदृच्छया=दैवात्। योगः=सम्पर्कः। अपि। उच्छ्रायम्=उन्नतत्वम्। नयति=प्रापयति। अत्रार्थापत्तिरलङ्कारः।

कोषः—'निवेशः शिविरोद्वाहविन्यासेषु प्रकीर्तितः' इति शाश्वतः।

हिन्दी—उस समय गन्धर्व सेना द्वारा बनाया गया सैन्य-शिविर इन्द्रकील पर्वत की भूमि की सर्वोत्तम शोभा को उत्पन्न कर रहा था क्योंकि महान् पुरुषों का सम्यक् सम्बन्ध होने पर कुछ भी दुर्लभ नहीं होता है तथा ( सज्जनों का ) दैवयोग से प्राप्त सम्पर्क भी उन्नति ही करता है ॥ २७ ॥

सामोदाः कुसुमतरुश्रियो विविक्ताः
सम्पत्तिः किसलयशालिनीलतानाम्।
साफल्यं ययुरमराङ्गनोपभुक्ताः
सा लक्ष्मीरुपकुरुते यया परेषाम् ॥ २८ ॥

अन्वयः—सामोदाः कुसुमतरुश्रियः, विविक्ताः किसलयशालिनीलतानाम्

सम्पत्तिः, अमराङ्गनोपभुक्ताः साफल्यम् ययुः। यया परेषाम् उपकुरुते सा लक्ष्मीः।

विग्रहः—मोदेन सहिताः=सामोदाः। कुसुमतरूणाम् श्रियः=कुसुमतरुश्रियः। किसलयशालिन्यः लताः, तासाम्=किसलयशालिनीलतानाम्। अमराणामङ्गनास्ताभिः उपभुक्ताः=अमराङ्गनोपभुक्ताः।

अर्थः—सामोदाः=ससौरभाः। कुसुमतरुश्रियः=पुष्पवृक्षशोभाः। विविक्ताः=विजनप्रदेशाः। किसलयशालिनीलतानाम्=नवपल्लवयुतवल्लीनाम्। सम्पत्तिः=समृद्धिः। अमराङ्गनोपभुक्ताः=देवाङ्गनोपभुक्ताः सत्यः। साफल्यम्=सफलताम्। ययुः=जग्मुः। यया=लक्ष्म्या। परेषाम्=अन्येषाम्। उपकुरुते=उपकारो विधीयते। सा=सैव। लक्ष्मीः। नान्या इत्यर्थः।

कोषः—'विविक्तविजनच्छन्ननिःशलाकास्तथा रहः' इत्यमरः।

हिन्दी—सौरभसम्पन्न, फूलोंवाले वृक्षों की शोभा, विजन-प्रदेश तथा नूतन पल्लवयुक्त लताओं की सम्पत्ति, ये सब वस्तुएँ देवाङ्गनाओं के द्वारा उपयुक्त होने पर सफल हो गईं। परोपकार में काम आनेवाली लक्ष्मी ही वास्तविक लक्ष्मी होती है॥ २८॥

क्लान्तोऽपि त्रिदशवधूजनः पुरस्ता-<br>
ल्लीनाहिश्वसितविलोलपल्लवानाम्।<br>
सेव्यानां हतविनयैरिवावृतानां<br>
सम्पर्कं परिहरति स्म चन्दनानाम्॥ २९॥

अन्वयः—क्लान्तः अपि त्रिदशवधूजनः पुरस्तात् लीनाहिश्वसितविलोलपल्लवानाम् चन्दनानां सम्पर्कं हतविनयैः आवृतानाम् सेव्यानाम् इव परिहरतिस्म।

विग्रहः—त्रिदशानां वधूजनः=त्रिदशवधूजनः। लीनानाम् अहीनाम् श्वसितानि, तैः विलोलाः पल्लवाः येषां तेषाम्=लीनाहिश्वसितविलोलपल्लवानाम्। हतः विनयः यैस्तैः=हतविनयैः।

अर्थः—क्लान्तः=श्रान्तः। अपि। त्रिदशवधूजनः=देवाङ्गनालोकः। पुरस्तात्=अग्रे। लीनाहिश्वसितविलोलपल्लवानाम्=संश्रितसर्पनिःश्वासलोलदलानाम्। चन्दनानाम्=चन्दनवृक्षाणाम्। सम्पर्कम्=योगम्। हतविनयैः=

दुर्जनैः । आवृतानाम् = परिवृतानाम् । सेव्यानाम् = प्रभूणाम् । इव = समम् । परिहरति स्म = त्यजति स्म ।

कोष:—'अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः ।' इत्यमरः ।

हिन्दी—मार्ग में चलने से थकी होकर भी वे अप्सरायें सामने पड़नेवाले, छिपे हुए सर्पों की फुफकार से हिलते हुए पत्तों वाले चन्दन वृक्षों को छोड़ देती थीं अर्थात् सेव्य होकर भी वे चन्दन पादपों के नीचे विश्राम नहीं कर रही थीं । यथा—दुष्टों के साथ-साथ रहने के कारण लोग सज्जनों को भी छोड़ बैठते हैं ॥ २९ ॥

उत्सृष्टध्वजकुथकङ्कटा धरित्रीमानीता विदितनयैः श्रमं विनेतुम् ।
आक्षिप्तद्रुमगहना युगान्तवातैः पर्यस्ता गिरय इव द्विपा विरेजुः ॥ ३० ॥

अन्वयः—उत्सृष्टध्वजकुथकङ्कटाः विदितनयैः श्रमं विनेतुं धरित्रीम् आनीताः द्विपाः युगान्तवातैः आक्षिप्तद्रुमगहनाः पर्यस्ताः गिरयः इव विरेजुः ।

विग्रहः—उत्सृष्टाः ध्वजाः कुथाः कङ्कटाश्च येभ्यस्ते=उत्सृष्टध्वजकुथकङ्कटाः । विदितो नयः यैस्तैः = विदितनः । युगान्ताय वाताः इव वातास्तैः = युगान्तवातैः । द्रुमाणां गहनानि = द्रुमगहनानि, आक्षिप्तानि द्रुमगहनानि येभ्यस्ते आक्षिप्तद्रुमगहनाः ।

अर्थः—उत्सृष्टध्वजकुथकङ्कटाः = आक्षिप्तध्वजास्तरणतनुत्राः । विदितनयैः = शिक्षाभिज्ञैः यन्तृभिः । श्रमम् = क्लमम् । विनेतुम् = अपनेतुम् । धरित्रीम् = पृथ्वीम् । आनीताः = निवेश्यमानाः । द्विपाः=गजाः । युगान्तवातैः = प्रलयङ्करपवनैः । आक्षिप्तद्रुमगहनाः = उद्धृतवृक्षकाननाः । पर्यस्ताः = विपर्यासिताः । गिरय इव = पर्वता इव । विरेजुः = शुशुभिरे ।

कोष:—'प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः' इत्यमरः ।

हिन्दी—गजचालन में कुशल महावतों ने हाथियों की थकावट दूर करने के लिए उन पर से ध्वजा, झूल तथा कवचों को उतार कर भूमि पर रख दिया । अब वे हाथी इधर-उधर बैठे हुए उसी प्रकार से शोभित हुए जैसे कि आँधी में उखड़े हुए विशाल वृक्ष और पहाड़ शोभित होते हैं ॥ ३० ॥

प्रस्थानश्रमजनितां विहाय निद्रा-
मामुक्ते गजपतिना सदानपङ्के ।

शय्यान्ते कुलमलिनां क्षणं विलीनं
संरम्भच्युतमिव शृङ्खलं चकाशे ॥ ३१ ॥

**अन्वय:**—गजपतिना प्रस्थानश्रमजनितां निद्रां विहाय आमुक्ते सदानपंके शय्यान्ते क्षणं विलीनम् अलिनां कुलं संरम्भच्युतम् शृङ्खलम् इव चकार ।

**विग्रह:**—गजानां पतिस्तेन = गजपतिना । प्रस्थानश्रमेण जनितान् = प्रस्थानश्रमजनितान् । दानेन जातं पङ्कम् = दानपङ्कम् । दानपङ्केन सहितं, तस्मिन् = सदानपङ्के । शय्यायाः अन्ते = शय्यान्ते । संरम्भेण च्युतम् = संरम्भच्युतम् ।

**अर्थ:**—गजपतिना = गजेन्द्रेण । प्रस्थानश्रमजनिताम् = यात्राक्लमोत्पन्नाम् । निद्राम् = स्वापम् । विहाय = त्यक्त्वा । आमुक्ते = विमुक्ते । सदानपंके = गजमदयुक्ते । शय्यान्ते = शयनीयप्रदेशे । क्षणम् = मुहूर्त्तम् । विलीनम् = लीनम् । अलिनाम् = भ्रमराणाम् । कुलम् = समूहम् । संरम्भच्युतम् = उत्थानसम्भ्रमभ्रष्टम् । शृङ्खलम् = निगडम् । इव । चकाशे = शुशुभे । अत्रोत्प्रेक्षालङ्कारः ।

**कोष:**—'अथ शृङ्खले । अन्दुको निगडोऽस्त्री स्यात्' इत्यमरः ।

**हिन्दी**—सेना के किसी गजराज को मार्ग में थक जाने के कारण नींद आ गई थी । अतः वह नींद को छोड़कर मदजल से उत्पन्न कीचड़ वाले शयनीय स्थान से सहसा उठ खड़ा हुआ । मद-गन्ध के कारण मद की कोचड़ पर भौंरे मड़रा रहे थे । हाथी के सहसा उठने पर वे भौंरे उसकी टूट कर गिरी हुई सांकल के समान शोभित हुए ॥ ३१ ॥

आयस्तः सुरसरिदोघरुद्धवर्त्मा
सम्प्राप्तुं वनगजदानगन्धिरोधः ।
मूर्धानं निहितशिताङ्कुशं विधुन्वन्
यन्तारं न विगणयाञ्चकार नागः ॥ ३२ ॥

**अन्वय:**—वनगजदानगन्धिरोधः सम्प्राप्तुम् आयस्तः सुरसरिदोघरुद्धवर्त्मा नागः निहितशिताङ्कुशम् मूर्धानं विधुन्वन् यन्तारं न विगणयांचकार ।

**विग्रह:**—वनस्य गजस्य दानं = वनगजदानम्, तस्य गन्धोऽस्यास्तीति रोधः यस्य सः = वनगजदानगन्धिरोधः । सुराणाम् सरित् = सुरसरित् तस्याः ओघेन

रुद्धम् वर्त्म यस्य सः = सुरसरिदोघरुद्धवर्त्मा । निहितः शितः अङ्कुशो यस्मिन्, तम् = निहितशिताङ्कुशम् ।

अर्थः—वनगजदानगन्धरोधः = वनकरिमदगन्धिरोधः, परकूलम् इत्यर्थः। सम्प्राप्तुम् = गन्तुम् । आयस्तः = उत्सुकः । सुरसरिदोघरुद्धवर्त्मा = गङ्गाप्रवाहरुद्धमार्गः । नागः = गजः । विहितशितांकुशम् = दत्ततीक्ष्णसृणिम् । मूर्धानं = मस्तकम् । विधुन्वन् = कम्पयन्, रोषादिति भावः । यन्तारम् = हस्तिपकम् । न विगणयाञ्चकार = न विगणयामास ।

कोषः—'अङ्कुशोऽस्त्री सृणिः स्त्रियाम्' । इत्यमरः ।

हिन्दी—दूसरा हाथी गङ्गा के विशाल तट को जो कि जंगली हाथियों के मदजल से सुगन्धित था, पहुँचने के लिए उत्सुक हो रहा था । परन्तु गङ्गा के प्रवाह के कारण उसका मार्ग रुका हुआ था, अतएव महावत के द्वारा तीक्ष्ण अंकुश मारने पर वह केवल अपना शिर हिलाकर महावत की बात न मानना प्रकट कर रहा था ॥ ३२ ॥

**आरोढुः समवनतस्य पीतशेषे साशङ्कम् पयसि समीरिते करेण ।**
**सम्मार्जन्नरुणमदस्रुती कपोलौ सस्यन्दे मद इव शीकरः करेणोः ॥ ३३ ॥**

अन्वयः—समवनतस्य करेणोः करेण पीतशेषे पयसि आरोढुः साशङ्कम् समीरिते शीकरः अरुणमदस्रुती कपोलौ सम्मार्जन् मद इव सस्यन्दे ।

विग्रहः—पीतस्य शेषे = पीतशेषे । अरुणे मदस्रुती ययोस्तौ = अरुणमदस्रुती । आशङ्कया सहितं = साशङ्कम् ।

अर्थः—समवनतस्य = ( जलपानार्थम् ) आनतपूर्वकायस्य । करेणोः = हस्तिन्याः । करेण = शुण्डेन । पीतशेषे पयसि=पानशिष्टे जले । आरोढुः=हस्तिपकात् । साशङ्कम् = सभयम् । समीरिते = क्षिप्ते सति । शीकरः = अम्बुकणः। अरुणमदस्रुती = अरुणमदधारयुतौ । कपोलौ=गण्डस्थलौ । सम्मार्जन् = प्रमृजन् । मद इव = मदसदृशः । सस्यन्दे = सुस्राव । अत्रोपमालङ्कारः ।

कोषः—'करेणुरिभ्यां स्त्री नेभे' इत्यमरः ।

हिन्दी—आगे की ओर झुके हुए ( जल पीते समय ) हाथी ने सूंड़ से जल पीकर बचे हुए जल को महावत से डरकर अपने ऊपर उड़ेल लिया । उस जल के कण ( बिन्दु ) मद से अरुण बने हुए हाथी के दोनों गालों पर से मद के समान टपकने लगे ॥ ३३ ॥

आघ्राय क्षणमतितृष्यतापि रोषादुत्तीरं निहितविवृत्तलोचनेन।
सम्पृक्तं वनकरिणां मदाम्बुसेकैर्नाचेमे हिममपि वारि वारणेन ॥३४॥

**अन्वयः**—अतितृष्यता अपि क्षणम् आघ्राय रोषाद् उत्तीरं निहितविवृत्त-लोचनेन वारणेन हिमम् अपि वनकरिणां मदाम्बुसेकैः सम्पृक्तं वारि न आचेमे।

**विग्रहः**—निहिते विवृत्ते लोचने यस्य तेन=निहितविवृत्तलोचनेन। वनस्य करिणस्तेषां=वनकरिणाम्। मदस्याम्बूनि, तेषां सेकैः=मदाम्बुसेकैः।

**अर्थः**—अतितृष्यता अपि = अतिपिपासतापि। क्षणं = मुहूर्त्तम्। आघ्राय = घ्रात्वा। रोषात्=क्रोधात्। उत्तीरं=परतीरे। निहितविवृत्तलोचनेन=धृत-घूर्णितनयनेन। वारणेन = गजेन। हिमम् = शीतम्। अपि। वनकरिणां=वन-गजानाम्। मदाम्बुसेकैः=मदजलधाराभिः। सम्पृक्तम्=संसिक्तम्। वारि= जलम्। न आचेमे=न पीतम्।

**कोषः**—'कुञ्जरो वारणः करी' इत्यमरः।

**हिन्दी**—उस सेना का कोई हाथी प्यास से अत्यन्त व्याकुल होकर भी वन-गजों के मद से मिश्रित जल को क्षण भर सूंघ कर गङ्गा नदी के दूसरे तट की ओर क्रोध से घूरने लगा। उसने शीतल होते हुए भी मद-सिक्त जल को नहीं पिया॥ ३४॥

प्रश्च्योतन्मदसुरभीणि निम्नगायाः क्रीडन्तो गजपतयः पयांसि कृत्वा।
किञ्जल्कव्यवहितताम्रदानलेखैरुत्तेरुः सरसिजगन्धिभिः कपोलैः॥ ३५॥

**अन्वयः**—क्रीडन्तः गजपतयः निम्नगायाः पयांसि प्रश्च्योतन्मदसुरभीणि कृत्वा किञ्जल्कव्यवहितताम्रदानलेखैः सरसिजगन्धिभिः कपोलैः उत्तेरुः।

**विग्रहः**—गजानां पतयः=गजपतयः। प्रश्च्योतद्भिः मदैः सुरभीणि= प्रश्च्योतन्मदसुरभीणि। किञ्जल्कैः व्यवहिताः ताम्राः दानलेखाः येषु तैः=किञ्जल्क-व्यवहितताम्रदानलेखैः। सरसि जातानि सरसिजानि तेषा गन्धिभिः=सरसिज-गन्धिभिः।

**अर्थः**—क्रीडन्तः = विहरन्तः। गजपतयः = मत्तकरिणः। निम्नगायाः= गङ्गायाः। पयांसि=जलानि। प्रश्च्योतन्मदसुरभीणि=क्षरन्मदगन्धीनि। कृत्वा= विधाय। किञ्जल्कव्यवहितताम्रदानलेखैः=केसरतिरोहितताम्रमदराजिभिः। सर-

सिजगन्धिभिः = कमलसुरभिभिः । कपोलैः = गण्डस्थलैः । उत्तेरुः = निर्जग्मुः ।
अत्र परिवृत्तिरलङ्कारः ।

कोषः—'स्रवन्ती निम्नगाऽपगा' इत्यमरः ।

हिन्दी—( कुल ) विहार करते हुए गजपति गङ्गा जी के जल को अपने टपकते हुए मदजल से सुगन्धित बनाते हुए जल से बाहर आ गये । केसर से मिटाई गई ( ढकी हुई ) अरुण मदरेखाओं से युक्त, कमलगन्ध से उनके गाल सुरभित हो गये थे ॥ ३५ ॥

आकीर्णं बलरजसा घनारुणेन प्रक्षोभैः सपदि तरङ्गितं तटेषु ।
मातङ्गोन्मथितसरोजरेणुपिङ्गम् माञ्जिष्ठं वसनमिवाम्बु निर्बभासे ॥ ३६ ॥

अन्वयः—घनारुणेन बलरजसा आकीर्णं सपदि प्रक्षोभैः तटेषु तरङ्गितम् मातङ्गोन्मथितसरोजरेणुपिङ्गम् अम्बु माञ्जिष्ठं वसनम् इव निर्बभासे ।

विग्रहः—घनेनारुणेन = घनारुणेन । बलस्य रजस्तेन = बलरजसा । मातङ्गैः उन्मथिताः सरोजरेणवः, तैः पिङ्गम् = मातङ्गोन्मथितसरोजरेणुपिङ्गम् । मञ्जिष्ठया रक्तम् = माञ्जिष्ठम् ।

अर्थः—घनारुणेन=सान्द्रलोहितेन । बलरजसा=सेनोद्धूतरजसा । आकीर्णम् = व्याप्तम् । सपदि = शीघ्रम् । प्रक्षोभैः = आलोडनैः । तटेषु = तीरेषु । तरङ्गितम् = संजाततरङ्गम्, तरङ्गवद्वा कृतम् । मातोङ्गन्मथितसरोजरेणुपिङ्गम् = गजमथित-कमलकेसरपिशङ्गम् । अम्बु = जलम् । माञ्जिष्ठम् = महारजनेनारक्तम् । वसनम् इव = कौशेयवस्त्रमिव । निर्बभासे शुशुभे ।

कोषः—'कौशेयं कृमिकोशोत्थम्' इत्यमरः ।

हिन्दी—घनी, अरुण वर्ण की सेना द्वारा उड़ाई गई धूल से गङ्गा का जल भर गया था । मतवाले हाथियों के द्वारा उड़ाए गये कमलपराग से अब वह पीत हो गया । इस प्रकार का पिशङ्गी वर्ण वाला गङ्गा-जल अरुणता से मिलने पर मंजिष्ठा ( मंजीठ ) रंग से रँगे वस्त्र के समान शोभित होने लगा ॥ ३६ ॥

श्रीमद्भिर्नियमितकन्धरापरान्तैः
संसक्तैरगुरुवनेषु साङ्गहारम् ।
सम्प्रापे निसृतमदाम्बुभिर्गजेन्द्रैः
प्रस्यन्दिप्रचलितगण्डशैलशोभा ॥ ३७ ॥

अन्वयः—श्रीमद्भिः नियमितकन्धरापरान्तैः अगुरुवनेषु साङ्गहारम् संसक्तैः निसृतमदाम्बुभिः गजेन्द्रैः प्रस्यन्दिप्रचलितगण्डशैलशोभा सम्प्रापे ।

विग्रहः—नियमिताः कन्धराः अपरान्ताश्च येषां तैः = नियमितकन्धरापरान्तैः । अगुरूणां वनानि, तेषु = अगुरुवनेषु । अंगहारेण सहितं साङ्गहारम् । निसृतानि मदाम्बूनि येषां तैः = निसृतमदाम्बुभिः । गजानामिन्द्रैः = गजेन्द्रैः । प्रस्यन्दिनः, प्रचलिता ये गण्डशैलाः, तेषां शोभा = प्रस्यन्दिप्रचलितगण्डशैलशोभा ।

अर्थः—श्रीमद्भिः = शोभायुक्तैः । नियमितकन्धरापरान्तैः = सम्बद्धकन्धरापश्चिमपादैः । अगुरुवनेषु = अगुरुकाननेषु । साङ्गहारम् = साङ्गविक्षेपम् । संसक्तैः = संलग्नैः । निसृतमदाम्बुभिः = प्रसृतमदजलैः । गजेन्द्रैः = मदगजैः । प्रस्यन्दिप्रचलितगण्डशैलशोभा = जलस्राविप्रचलितच्युतोपलशोभा । सम्प्रापे = प्राप्ता । अत्र निदर्शनालङ्कारः ।

कोषः—'अपरः पश्चिमः पादः' इति वैजयन्ती । 'गण्डशैलास्तु च्युताः स्थूलोपला गिरेः ।' इत्यमरः ।

हिन्दी—सेना के वे मदवाले हाथी जिनके कन्धे और पिछले पैर जंजीर के द्वारा चन्दन-वृक्षों से बाँध दिये गये थे, छूटने के लिए प्रयत्न कर रहे थे । उनकी मदधारायें बह रही थीं । इस प्रकार वे हाथी किसी पर्वत से शिलायें टूटने पर बहते हुए झरनोंवाले पर्वत जैसे दिखलाई देते थे ।। ३७ ।।

निःशेषं प्रशमितरेणु वारणानां स्रोतोभिर्मदजलमुज्झतामजस्रम् ।
आमोदं व्यवहितभूरिपुष्पगन्धो भिन्नैलासुरभिमुवाह गन्धवाहः ।।३८।।

अन्वयः—गन्धवाहः निःशेषं प्रशमितरेणु मदजलम् स्रोतोभिः अजस्रम् उज्झताम् वारणानां व्यवहितभूरिपुष्पगन्धः भिन्नैलासुरभिम् आमोदम् उवाह ।

विग्रहः—गन्धं वहतीति = गन्धवाहः । निर्गतः शेषोः यस्मात्, तत् = निःशेषम् । प्रशमितो रेणुः येन तत् = प्रशमितरेणु । व्यवहितः भूरिः पुष्पगन्धः येन सः व्यवहितभूरिपुष्पगन्धः । भिन्ना एला तद्वत् सुरभिम् = भिन्नैलासुरभिम् ।

अर्थः—गन्धवाहः=पवनः । निःशेषं=सम्पूर्णम् । प्रशमितरेणु = शान्तधूलि । मदजलम् = मदवारि । स्रोतोभिः=मदनाडीभिः । अजस्रम् = निरन्तरम् । उज्झताम्

वर्षताम् । वारणानाम् = गजानाम् । व्यवहितभूरिपुष्पगन्धः = तिरस्कृतबहुलकुसुमगन्धः । भिन्नैलासुरभिम् = फुल्लैलावत् सुगन्धिम् । आमोदं = परिमलम् । उवाह = वहतिस्म ।

कोषः—'पृथ्वीका चन्द्रवालैला' इत्यमरः ।

हिन्दी—देवसेना के हाथी अपनी मदनाडियों से निरन्तर मदजल बहा रहे थे जिसके कारण सेना के द्वारा उड़ाई गई सम्पूर्ण धूलि बैठ गई। इस प्रकार हाथियों की मदगन्ध अनेक पुष्पों की सुगन्ध को भी तिरस्कृत कर रही थी। इलायची ( फूली हुई ) के समान गन्ध को गन्धवाही पवन बहा रहा था ॥ ३८ ॥

सादृश्यं दधति गभीरमेघघोषैरुन्निद्रक्षुभितमृगाधिपश्रुतानि ।
आतेनुश्चकितचकोरनीलकण्ठान् कच्छान्तानमरमहेभबृंहितानि ॥३९॥

अन्वयः—गम्भीरमेघघोषैः सादृश्यं दधति उन्निद्रक्षुभितमृगाधिपश्रुतानि अमरमहेभबृंहितानि कच्छान्तान् चकितचकोरनीलकण्ठान् आतेनुः ।

विग्रहः—गभीरैः मेघघोषैः = गभीरमेघघोषैः । उन्निद्राः क्षुभिताः ये मृगाधिपास्तैः श्रुतानि = उन्निद्रक्षुभितमृगाधिपश्रुतानि । महान्तः इभाः महेभाः । अमराणां महेभास्तेषां बृंहितानि = अमरमहेभबृंहितानि । चकिताश्चकोराः नीलकण्ठाश्च येषु ताम् = चकितचकोरनीलकण्ठान् ।

अर्थः—गम्भीरमेघघोषैः = सान्द्रघनगर्जितैः । सादृश्यम् = साम्यम्, दधति = धारयन्ति । उन्निद्रक्षुभितमृगाधिपश्रुतानि = प्रबुद्धसंरब्धसिंहाकर्णितानि । अमरमहेभबृंहितानि = सुरगजगर्जितानि । कच्छान्तान् = अनूपप्रदेशान् । चकितचकोरनीलकण्ठान् = सम्भ्रान्तचकोरमयूरान् । आतेनुः = चक्रुः । अत्र भ्रान्तिमदलङ्कारः ।

कोषः—'जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः' इत्यमरः ।

हिन्दी—देवताओं के हाथियों की चिग्घाड़े, जिन्हें जगकर और क्रुद्ध होकर सिंहों ने सुना, जो मेघों के गम्भीर गर्जन के समान थीं, उन चिग्घाड़ों ने गङ्गा के कछारों में रहने वाले चकोरों और मयूरों को भी चकित कर दिया ॥ ३९ ॥

शाखावसक्तकमनीयपरिच्छदाना-
मध्वश्रमातुरवधूजनसेवितानाम् ।

जज्ञे निवेशनविभागपरिष्कृतानां
लक्ष्मीः पुरोपवनजा वनपादपानाम् ॥ ४० ॥

अन्वयः—शाखावसक्तकमनीयपरिच्छदानाम् अध्वश्रमातुरवधूजनसेवितानाम् निवेशनविभावपरिष्कृतानाम् वनपादपानाम् पुरोपवनजा लक्ष्मीः जज्ञे ।

विग्रहः—परिच्छाद्यते अनेनेति परिच्छदः । शाखासु अवसक्ताः कमनीयाः परिच्छदाः येषाम्, तेषाम्=शाखावसक्तकमनीयपरिच्छदानाम् । अध्वनि श्रमः = अध्वश्रमः, तेनातुरैः वधूजनैः सेवितानाम्=अध्वश्रमातुरवधूजनसेवितानाम् । निवेशनविभागैः परिष्कृतानाम्=निवेशनविभागपरिष्कृतानाम् । वनानां पादपास्तेषां=वनपादपानाम् । पुरे यद् उपवनं तत्र जाता = पुरोपवनजा ।

अर्थः--शाखावसक्तकमनीयपरिच्छदानाम् = लतावसक्तरमणीयपरिकराणाम् । अध्वश्रमातुरवधूजनसेवितानाम् = मार्गजनितश्रमपीडितदेवाङ्गनासेवितानाम् । निवेशनविभागपरिष्कृतानाम् = आवसतिकावच्छेदालङ्कृतानाम् । वनपादपानाम् = वनवृक्षाणाम् । पुरोपवनजा = पुरकृत्रिमवनजाता । लक्ष्मीः=शोभा । जज्ञे = जाता । अत्र निदर्शनालंकारो वसन्ततिलकावृत्तञ्च ॥ ४० ॥

कोषः—'विटपी पादपस्तरुः' इत्यमरः ।

हिन्दी—वनवृक्षों की शाखाओं में सुराङ्गनाओं के सुन्दर-सुन्दर परिधान लटक रहे थे । मार्ग की थकावट से व्याकुल होकर वे उन्हीं वृक्षों के नीचे बैठ कर विश्राम कर रही थीं । देवताओं ने उन वृक्षों के नीचे की भूमि बैठने के लिए साफ कर ली थी । इस प्रकार वे वनवृक्ष नगर में बने हुए उद्यानों ( पार्कों ) के समान बड़े ही सुन्दर लग रहे थे ॥ ४० ॥

इति भारविकृतौ सुधाटीकासंवलिते किरातार्जुनीये सप्तमः सर्गः ।

—: ० :—

## अष्टमः सर्गः

अथ स्वमायाकृतमन्दिरोज्ज्वलं
ज्वलन्मणि व्योमसदां सनातनम् ।
सुराङ्गना गोपतिचापगोपुरं
पुरं वनानां विजिहीर्षया जहुः ॥ १ ॥

अन्वयः—अथ सुराङ्गनाः स्वमायाकृतमन्दिरोज्ज्वलं ज्वलन्मणि व्योमसदां सनातनं गोपतिचापगोपुरं पुरं वनानां विजिहीर्षया जहुः ।

विग्रहः—सुराणामङ्गनाः=सुराङ्गनाः । स्वमायया कृतैः मन्दिरैः उज्ज्वलम्=स्वमायाकृतमन्दिरोज्ज्वलम् । ज्वलन्तः मणयो यस्मिंस्तत्=ज्वलन्मणि । व्योम्नि सीदन्ति ये तेषाम्=व्योमसदाम् । गोः पतिः=गोपतिः, तस्य चापवद् वर्णानि गोपुराणि यस्य तत्=गोपतिचापगोपुरम् । विहर्त्तुमिच्छा विजिहीर्षा, तया=विजिहीर्षया ।

अर्थः—अथ=निवेशनान्तरम् । सुराङ्गनाः=देवाङ्गनाः । स्वमायाकृतमन्दिरोज्ज्वलम्=निजमायानिर्मितभवनदीप्तम् । ज्वलन्मणि=दीप्यन्मणि । व्योमसदाम्=गन्धर्वाणाम् । सनातनम्=सदातनम् । गोपतिचापगोपुरम्=इन्द्रधनुर्गोपुरम् । पुरम्=नगरम् । वनानां=काननानाम् । विजिहीर्षया=विहर्त्तुमिच्छया । जहुः=तत्यजुः । अत्र संसृष्टिरलङ्कारो वंशस्थवृत्तञ्च ।

कोषः—'पुरद्वारं तु गोपुरम्' इत्यमरः ।

हिन्दी—देवाङ्गनाओं ने अपनी माया द्वारा बनाये हुए उज्ज्वल भवनों वाले मणियों से प्रदीप्त, इन्द्रधनुष के समान सुन्दरवर्ण वाले तथा गन्धर्वों के सनातन नगर को वन में विहार करने की इच्छा से छोड़ दिया ॥ १ ॥

यथायथं ताः सहिता नभश्चरैः प्रभाभिरुद्भासितशैलवीरुधः ।
वनं विशन्त्यो वनजायतेक्षणाः क्षणद्युतीनां दधुरेकरूपताम् ॥ २ ॥

अन्वयः—यथायथं नभश्चरैः सहिताः प्रभाभिः उद्भासितशैलवीरुधः ताः वनजायतेक्षणाः वनं विशन्त्यः क्षणद्युतीनाम् एकरूपतां दधुः ।

विग्रहः--नभसि चरन्तीति तैः=नभश्चरैः। उद्भासिताः शैलाः वीरुधश्च याभिस्ताः=उद्भासितशैलवीरुधः। वनजानीवायतानि ईक्षणानि यासां ताः=वनजायतेक्षणाः। एकरूपस्य भाव एकरूपता ताम्=एकरूपताम्।

अर्थः--यथायथं=यथास्वम्। नभश्चरैः=गन्धर्वैः मेघैश्च। सहिताः=युक्ताः। प्रभाभिः=दीप्तिभिः। उद्भासितशैलवीरुधः=भासितपर्वतवृक्षाः। ताः=पूर्वोक्ताः। वनजायतेक्षणाः=कमलायतलोचनाः। वनं=विपिनं। विशन्त्यः=प्रविशन्त्यः। क्षणद्युतीनाम्=विद्युताम्। एकरूपताम्=साम्यम्। दधुः=धारयामासुः।

कोषः—'यथास्वं तु यथायथम्' इत्यमरः।

हिन्दी--गन्धर्वों के सहित, अपनी कान्ति से पर्वतों और वृक्षों को उद्भासित करती हुई वे कमल सदृश विशाल नयनोंवाली अप्सराएँ वन में प्रविष्ट होती हुई बिल्कुल बिजली जैसी मालूम हो रही थीं॥ २॥

निवृत्तवृत्तोरुपयोधरक्लमः प्रवृत्तनिर्ह्रादिविभूषणारवः।
नितम्बिनीनां भृशमादधे धृतिं नभःप्रयाणादवनौ परिक्रमः॥ ३॥

अन्वयः—निवृत्तवृत्तोरुपयोधरक्लमः प्रवृत्तनिर्ह्रादिविभूषणारवः अवनौ परिक्रमः नितम्बिनीनां नभःप्रयाणात् भृशम् धृतिम् आदधे।

विग्रहः--निवृत्तः वृत्तस्योरुपयोधरस्य क्लमः यस्मिन् सः=निवृत्तवृत्तोरुपयोधरक्लमः। निर्ह्रादीनि विभूषणानि=निर्ह्रादिविभूषणानि, तेषामारवः। प्रवृत्तः निर्ह्रादिविभूषणारवो यस्मिन् सः=प्रवृत्तनिर्ह्रादिविभूषणारवः।

अर्थः—निवृत्तवृत्तोरुपयोधरक्लमः = गतवर्तुलोरुस्तनश्रमः। प्रवृत्तनिर्ह्रादिविभूषणारवः=जातनिर्ह्रादिनूपुरादिध्वानः। अवनौ=भूमौ। परिक्रमः=सञ्चारः। नितम्बिनीनाम्=अप्सरसाम्। नभःप्रयाणात् = आकाशगमनात्। भृशम्=अधिकम्। धृतिम् = सन्तोषम्। आदधे = धृतवान्। अत्र काव्यलिङ्गमलङ्कारः।

कोषः—'अवनिर्मेदिनी मही' इत्यमरः।

हिन्दी—नितम्बिनी सुराङ्गनाओं को पृथिवी-परिभ्रमण आकाश-भ्रमण की अपेक्षा अधिक रुचिकर लगा। इस भूपरिक्रमण से उनके गोल जांघों और स्तनों की थकावट दूर हो गई। पहने हुए नुपुरादि आभूषणों से मधुर ध्वनि प्रकट हो रही थी॥ ३॥

घनानि कामं कुसुमानि बिभ्रतः करप्रचेयान्यपहाय शाखिनः।
पुरोऽभिसस्रे सुरसुन्दरीजनैर्यथोत्तरेच्छा हि गुणेषु कामिनः ॥ ४ ॥

अन्वयः--घनानि करप्रचेयानि कामं कुसुमानि बिभ्रतः शाखिनः अपहाय सुरसुन्दरीजनैः पुरः अभिसस्रे। हि कामिनः गुणेषु यथोत्तरेच्छाः।

विग्रहः—करैः प्रचेयानि=करप्रचेयानि। सुराणां सुन्दरीजनास्तैः=सुर-सुन्दरीजनैः। उत्तरमुत्तरमिच्छाः येषां ते = यथोत्तरेच्छाः।

अर्थः—घनानि = सान्द्राणि। करप्रचेयानि = हस्तग्राह्याणि। कामम= प्रचुरम्। कुसुमानि = पुष्पाणि। बिभ्रतः = धारयतः। शाखिनः = वृक्षान्। अप-हाय=त्यक्त्वा। सुरसुन्दरीजनैः=अप्सरोभिः। पुरः = अग्रे। अभिसस्रे=अभिसृ-तम्। हि = यतः। कामिनः=कामातुराः। गुणेषु = अतिशयविषयेषु। यथोत्त-रेच्छाः = उत्तरोत्तरमभिलाषिणः। भवन्तीति शेषः। अत्रार्थान्तरन्यासालङ्कारः।

कोषः—'वृक्षो महीरुहः शाखी' इत्यमरः।

हिन्दी—घने और हाथों से तोड़े जा सकनेवाले प्रचुर फूलों से लदे वृक्षों को छोड़कर सुरसुन्दरियाँ और आगे बढ़ने लगी। क्योंकि कामीजन विषयादि गुणों की उत्तरोत्तर इच्छा बढ़ाते रहते हैं अर्थात् विषयादि-सुखों में कभी उन्हें सन्तोष नहीं होता है ॥ ४ ॥

तनूरलक्तारुणपाणिपल्लवाः स्फुरन्नखांशूत्करमञ्जरीभृतः।
विलासिनीबाहुलता वनालयो विलेपनामोदहृताः सिषेविरे ॥ ५ ॥

अन्वयः—विलेपनामोदहृताः वनालयः तनूः अलक्तारुणपाणिपल्लवाः स्फुर-न्नखांशूत्करमञ्जरीभृतः विलासिनीबाहुलताः सिषेविरे।

विग्रहः--विलेपनस्य आमोदाः, तैः हृताः = विलेपनामोदहृताः। वनानां अलयः = वनालयः। पाणयः एव पल्लवाः = पाणिपल्लवाः, अलक्तैः अरुणाः पाणिपल्लवाः यासां ताः = अलक्तारुणपाणिपल्लवाः। नखांशूनाम् उत्कराः = नखांशूत्कराः। स्फुरन्तः नखांशूत्कराः एव मञ्जर्यस्ताः बिभ्रतीति = स्फुरन्नखां-शूत्करमञ्जरीभृतः। विलासिनीनां बाहव एव लतास्ताः = विलासिनीबाहुलताः।

अर्थः—विलेपनामोदहृताः = लेपनहर्षाकृष्टाः। वनालयः = वनभ्रमराः। तनूः = कृशाः। अलक्तारुणपाणिपल्लवाः = लाक्षारसारक्तपाणिपल्लवाः। स्फुर-

नखांशूत्करमञ्जरीभृत:=स्फुरन्नखकिरणपुञ्जमञ्जरीयुता:। विलासिनीबाहुलता:= सुरसुन्दरीभुजलता:। सिषेविरे=भेजिरे। अत्र रूपकालङ्कारः।

**कोष:**—'भुजबाहू प्रवेष्टो दो:' इत्यमरः।

**हिन्दी**—अङ्गरागादिलेपन की सुगन्ध पर आकृष्ट वनभ्रमरों ने पतली लाक्षारस से रंगे हुए हाथोंवाली सुरसुन्दरियों की भुजलताओं का सेवन किया। उनके नाखूनों से निकलती हुई किरणें मञ्जरियों के समान ज्ञात होती थीं ॥५॥

निपीयमानस्तबका शिलीमुखैरशोकयष्टिश्चलबालपल्लवा।
विडम्बयन्ती ददृशे वधूजनैरमन्ददष्टौष्ठकरावधूननम् ॥ ६ ॥

**अन्वय:**—शिलीमुखैः निपीयमानस्तबका चलबालपल्लवा अमन्ददष्टौष्ठकरावधूननम् विडम्बयन्ती अशोकयष्टि: ददृशे।

**विग्रह:**—निपीयमानः स्तबकः यस्याः सा=निपीयमानस्तबका। चलाः बालपल्लवाः यस्याः सा=चलबालपल्लवा। अमन्दं दष्ट ओष्ठो यस्मिन्, तत्करावधूननम्=अमन्ददष्टौष्ठकरावधूननम्। अशोकस्य यष्टि:=अशोकयष्टि:।

**अर्थ:**—शिलीमुखैः=भ्रमरैः। निपीयमानस्तबका=पीयमानगुच्छा। चलबालपल्लवा=चञ्चलनूतनदला। अमन्ददष्टौष्ठकरावधूननम्=दृढदष्टौष्ठकरकम्पनम्। विडम्बयन्ती=अनुकुर्वती। अशोकयष्टि:=अशोकशाखा। ददृशे=दृष्टा।

**कोष:**—'अलिबाणौ शिलीमुखौ' इत्यमरः।

**हिन्दी**—भ्रमरों ने अशोकलता के पुष्पगुच्छों का मधुपान कर लिया था उसके नये निकले हुए पत्ते इस प्रकार हिल रहे थे जैसे तीक्ष्ण ओष्ठदंश ( ओष्ठ में काटना ) के कारण भौंरों को उड़ाने के लिए हाथ अप्सराओं के हिल रहे हों। ( यह दृश्य सुरसुन्दरियों के लिए बड़ा मनोरम था ) ॥ ६ ॥

अथ कश्चिद् मधुपाक्रान्तां काञ्चिदाह—

करौ धुनाना नवपल्लवाकृती वृथा कृथा मानिनि मा परिश्रमम्।
उपेयुषी कल्पलताभिशङ्कया कथं न्वितस्त्रस्यति षट्पदावलिः ॥ ७ ॥

**अन्वय:**—हे मानिनि! नवपल्लवाकृती करौ धुनाना वृथा परिश्रमं मा कृथाः कल्पलताभिशङ्कया उपेयुषी षट्पदावलिः कथं नु इतः त्रस्यति।

विग्रहः—नवस्य पल्लवस्य आकृतिरिवाकृतिर्ययोस्तौ=नवपल्लवाकृतौ। कल्पलतायाः अभिशङ्का, तया=कल्पलताभिशङ्कया। षट् पदानि सन्ति एषां ते=षट्पदाः। षट्पदानामवलिः=षट्पदावलिः।

अर्थः—मानिनि=अयि मानशीले! नवपल्लवाकृती=नवदलरूपौ। करौ=हस्तौ। धुनाना=कम्पायमाना। वृथा=व्यर्थम्। परिश्रमम्=श्रमम्। मा कृथाः=मा कुरुष्व। कल्पलताभिशङ्कया=कल्पद्रुमभ्रान्त्या। उपेयुषी=उपगता। षट्पदावलिः=भ्रमरपंक्तिः। कथं। नु=किल। इतः=अस्मात्। त्रस्यति=बिभेति। न त्रस्यत्येवेत्यर्थः॥ ७॥

कोषः—'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः' इत्यमरः।

हिन्दी--किसी अप्सरा को भौंरों ने घेर लिया है इसपर कोई व्यक्ति कहता है—हे मानशालिनी! नये पत्तों के समान आकृतिवाले हाथों को हिलाहिला कर तुम व्यर्थ परिश्रम न करो। कल्पवृक्ष की शङ्का से यह भ्रमरालि तुम्हारे पास आई है। तुम डरती क्यों हो॥ ७॥

अथ काचित्सखी काञ्चित्प्रणयकुपितामाह—

जहीहि कोपं दयितोऽनुगम्यतां
पुराऽनुशेते तव चञ्चलं मनः।
इति प्रियं काञ्चिदुपैतुमिच्छतो
पुराऽनुनिन्ये निपुणः सखीजनः॥ ८॥

अन्वयः—प्रियम् उपैतुम् इच्छतीं काञ्चित् निपुणः सखीजनः कोपं जहीहि दयितोऽनुगम्यताम्। चञ्चलं तव मनः पुरा अनुशेते इति पुरः अनुनिन्ये।

विग्रहः—सखी एव जनः=सखीजनः।

अर्थः--प्रियम्=प्रणयिनम्। उपैतुम्=समीपं गन्तुम्। इच्छन्तीम्=अभिलषन्तीम्। काञ्चित्=नायिकाम्। निपुणः=चित्तज्ञः। सखीजनः=प्रियाजनः। कोपम्=क्रोधम्। जहीहि=त्यज। दयितोऽनुगम्यताम्=प्रियोऽनुस्रियताम्। चञ्चलं=चपलं। तव=ते। मनः=चित्तम्। पुरा अनुशेते=अग्रेऽनुशयिष्यते। इति=इत्थम्। पुरः=पूर्वम् एव। अनुनिन्ये=प्रसादयामास।

कोषः--'कोपक्रोधामर्षरोषप्रतिघा' इत्यमरः।

हिन्दी--किसी प्रणय-कुपिता सखी से कोई सखी कहती है :—क्रोध छोड़

दो। प्रिय का अनुसरण करो। तुम्हारा चञ्चल मन आगे चलकर समक्ष में आवेगा। इस प्रकार प्रेमी के पास जाने की इच्छुक किसी युवती सखी को एक दूसरी चतुर सखी ने पहले ही अनुकूल कर लिया॥ ८॥

अथ चतुर्भिः श्लोकैः कलापकमाह—

समुन्नतैः काशदुकूलशालिभिः परिक्वणत्सारसपंक्तिमेखलैः।
प्रतीरदेशैः स्वकलत्रचारुभिर्विभूषिताः कुञ्जसमुद्रयोषितः॥ ९॥

अन्वयः—समुन्नतैः काशदुकूलशालिभिः परिक्वणत्सारसपंक्तिमेखलैः। स्वकलत्रचारुभिः प्रतीरदेशैः विभूषिताः कुञ्जसमुद्रयोषितः।

विग्रहः—काशानि तानि दुकूलानि इव तैः शालन्ते इति तैः=काशदुकूलशालिभिः। सारसानां पंक्तयः=सारसपङ्क्तयः। सारसपङ्क्तयः मेखला इव, ताः परिक्वणन्त्यः येषु ते तैः परिक्वणत्सारसपंक्तिमेखलैः। स्वेषां कलत्राणि, तद्वच्चारवस्तैः=स्वकलत्रचारुभिः। प्रतीरे देशास्तैः=प्रतीरदेशैः। कुञ्जानां समुद्रयोषितः=कुञ्जसमुद्रयोषितः।

अर्थः—समुन्नतैः=उच्चैः। काशदुकूलशालिभिः=अश्वबालकुसुमवस्त्रशालिभिः। परिक्वणत्सारसपंक्तिमेखलैः=नदत्सारसराजिमेखलैः। स्वकलत्रचारुभिः=आत्मस्त्रीजनरुचिरैः। प्रतीरदेशैः=तटप्रदेशैः। विभूषिताः=अलङ्कृताः। कुञ्जसमुद्रयोषितः=वननद्यः।

कोषः—'स्त्रीकट्यां मेखला कांची सप्तकी रशना तथा' इत्यमरः।

हिन्दी—शैल-सरितायें अत्यन्त ऊँचे-ऊँचे तटों से शोभित हो रही थीं। उनके तट वस्त्र (चादर) के समान लगते हुए विकसित काश कुसुमों से शोभित थे, जिनपर ध्वनि करती हुई सारस-पंक्तियां मेखलाओं जैसी लग रही थीं। वे तट अपनी प्रियतमा के नितम्ब भाग (ऊँचे नीचे होने से) के समान रुचिकर प्रतीत होते थे॥ ९॥

विदूरपातेन भिदामुपेयुषश्च्युताः प्रवाहादभितः प्रसारिणः।
प्रियाङ्कशीताः शुचिमौक्तिकत्विषो वनप्रहासा इव वारिबिन्दवः॥ १०॥

अन्वयः—विदूरपातेन भिदाम् उपेयुषः प्रवाहात् च्युताः अभितः प्रसारिणः प्रियाङ्कशीताः शुचिमौक्तिकत्विषः वनप्रहासा इव वारिबिन्दवः।

विग्रहः—विदूरात् पातेन=विदूरपातेन। प्रियायाः अङ्कः=प्रियाङ्कस्त-

द्वत् शीता: = प्रियाङ्कशीता: । शुचीनां मौक्तिकानां त्विष इव त्विषः येषां ते = शुचिमौक्तिकत्विषः । वनस्य प्रहासा: = वनप्रहासाः । इव । वारीणां बिन्दवः = वारिबिन्दवः ।

अर्थ:--विदूरपातेन = दूरत: पतनेन । भिदां = भेदम् । उपेयुषः = उपगतान्, प्रवाहात् = प्रवेगात् । च्युता: = भ्रष्टाः अभितः = अभिमुखम् । प्रसारिणः= प्रसर्पन्तः । प्रियाङ्कशीता: = प्रियोत्सङ्गशीतलाः । शुचिमौक्तिकत्विषः = शुभ्रमौक्तिककान्तयः । वनप्रहासाः = उपवनहासाः इव । वारिबिन्दवः = जलशीकराः । स्थिताः इति शेषः । अत्रोत्प्रेक्षोपमयोः संसृष्टिः ।

कोषः—'मौक्तिकम् मुक्ताऽथ' इत्यमरः ।

हिन्दी--ऊँचाई से गिरने के कारण नदियों के प्रवाह विच्छिन्न हो गये थे जिससे इधर-उधर फैले हुए जल बिन्दु प्रेयसी की गोद के समान अतीव शीतल और मोतियों के समान चमक रहे थे । वे जल-बिन्दु शोभा में वन-प्रहास से लग रहे थे ।। १० ।।

सखीजनं प्रेमगुरूकृतादरं निरीक्षमाणा इव नम्रमूर्तयः ।
स्थिरद्विरेफाञ्जनशारितोदरैर्विसारिभिः पुष्पविलोचनैर्लताः ।। ११ ।।

अन्वयः – स्थिरद्विरेफाञ्जनशारितोदरैः विसारिभिः पुष्पविलोचनैः प्रेमगुरुकृतादरं सखीजनं निरीक्षमाणा इव नम्रमूर्तयः लताः ।

विग्रहः—द्वौ रेफौ येषां ते द्विरेफाः । स्थिराः द्विरेफा एव अञ्जनानि, तैः शारितानि उदराणि येषां तैः = स्थिरद्विरेफाञ्जनशारितोदरैः । पुष्पाणि एव विलोचनानि, तैः = पुष्पविलोचनैः । प्रेम्णा गुरुकृतः आदरो यस्मिन् कर्मणि तत् = प्रेमगुरुकृतादरम् । नम्राः मूर्त्तयः यासां ताः नम्रमूर्तयः ।

अर्थ:--स्थिरद्विरेफाञ्जनशारितोदरैः = निश्चलभ्रमराञ्जनशबलीकृतोदरैः । विसारिभिः = विस्तृतैः । पुष्पविलोचनैः = कुसुमनयनैः । प्रेमगुरुकृतादरम् = प्रेम्णा विस्तारितसम्मानम् । सखीजनम् = सखीम् । निरीक्षमाणाः = पश्यन्त्यः इव । नम्रमूर्त्तयः = अवनताङ्ग्यः । लताः = शाखाश्च स्थिताः इति शेषः अत्र रूपकोत्प्रेक्षयोः संकरः ।

कोषः—'शारः शबलवातयोः' इति विश्वः ।

हिन्दी—वृक्षलताएँ फूलों से लदी हुई झुक गई थीं । फूलों पर मुग्ध

होकर मधुप अविचल रूप से मकरन्द पान कर रहे थे। इससे यह ज्ञात होता था जैसे लतारूपी रमणियां फूलों पर अविचल बैठे हुए काले भौंरों के रूप में अञ्जन लगाये विशाल पुष्परूपी नेत्रों से प्रिय और आदरणीया सखियों को झुक-झुक कर देख रही हों॥ ११॥

उपेयुषीणां बृहतीरधित्यका मनांसि जह्रुः सुरराजयोषिताम्।
कपोलकाषैः करिणां मदारुणैरुपाहितश्यामरुचश्च चन्दनाः॥ १२॥

अन्वयः-मदारुणैः करिणां कपोलकाषैः उपाहितश्यामरुचः चन्दनाः बृहतीः अधित्यकाः उपेयुषीणां सुरराजयोषिताम् मनांसि जह्रुः।

विग्रहः—मदेनारुणैः। कपोलानां काषैः = कपोलकाषैः। उपाहिताः श्यामाः रुचः येषु ते = उपाहितश्यामरुचः। सुरराजस्य योषितस्तासाम् = सुरराजयोषिताम्।

अर्थः—मदारुणैः = मदरक्तैः। करिणाम् = गजानाम्। कपोलकाषैः = गण्डस्थलघर्षणैः उपाहितश्यामरुचः = जनितकृष्णवर्णाः। चन्दनाः = चन्दनपादपाः। बृहतीः विपुलाः अधित्यकाः ऊर्ध्वभूमीः। उपेयुषीणाम् = उपसेवितवतीनाम्। सुरराजयोषिताम् = अप्सरसाम्। मनांसि = चित्तानि। जह्रुः। अपहृतवन्तः।

कोषः—'अव्यक्तरागस्त्वरुणः' इत्यमरः। 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्।' इत्यमरः।

हिन्दी—मद से अरुण बने हुए हाथियों ने अपने गालों को खुजलाकर चन्दन-पादपों को श्यामवर्ण की कान्ति का कर दिया था। इन्द्रकील पर्वत की अधित्यकाओं पर विराजमान अप्सराओं के मन उन चन्दन-वृक्षों ने अपनी सुषमा से हर लिये थे॥ १२॥

स्वगोचरे सत्यपि चित्तहारिणा
विलोभ्यमाना प्रसवेन शालिनाम्।
नभश्चराणा मुपकर्त्तुमिच्छतां
प्रियाणि चक्रुः प्रणयेन योषितः॥ १३॥

अन्वयः—चित्तहारिणा प्रसवेन विलोभ्यमानाः योषितः स्वगोचरे सत्यपि उपकर्त्तुम् इच्छताम् नभश्चराणा प्रणयेन प्रियाणि चक्रुः।

विग्रहः—चित्तं हरतीति, तेन = चित्तहारिणा । नभसि चरन्तीति, तेषाम् = नभश्चराणाम् ।

अर्थः—चित्तहारिणा = मनोहरेण । शाखिनां = पादपानाम् । प्रसवेन = पुष्पजातेन । विलोभ्यमानाः = आकृष्यमाणाः, योषितः = अप्सरसः । स्वगोचरे = स्वविषये । सत्यपि उपकर्त्तुम् = परिचरितुम् । इच्छताम् = अभिलषताम् । नभश्चराणाम् = गन्धर्वाणाम् । प्रणयेन = सहायहेतुना । प्रियाणि = रुचिराणि । चक्रुः = विदधुः ।

कोषः—'वृक्षो महीरुहः शाखी' इत्यमरः ।

हिन्दी—उस इन्द्रकील पर्वत पर वृक्षों के मनोहर फूलों ने अप्सराओं के मन अपनी ओर आकृष्ट कर लिये । यद्यपि उन पुष्पों को वे स्वयं तोड़ सकती थीं तथापि परिचर्याभिलाषी प्रियजनों गन्धर्वों के द्वारा चुने हुए फूलों को ही लेकर उन अप्सराओं ने उन्हें प्रसन्न कर दिया ॥ १३ ॥

प्रयच्छतोच्चैः कुसुमानि मानिनी विपक्षगोत्रं दयितेन लम्भिता ।
न किञ्चिदूचे चरणेन केवलं लिलेख बाष्पाकुललोचना भुवम् ॥ १४ ॥

अन्वयः—कुसुमानि प्रयच्छता दयितेन उच्चैः विपक्षगोत्रम् लम्भिता मानिनी न किञ्चिद् ऊचे केवलं बाष्पाकुललोचना चरणेन भुवं लिलेख ।

विग्रहः—बाष्पैः आकुले लोचने यस्याः सा = बाष्पाकुललोचना ।

अर्थः—कुसुमानि = पुष्पाणि । प्रयच्छता = ददता । दयितेन = प्रियेण । उच्चैः = उच्चैस्तराम् । विपक्षगोत्रम् = सपत्नीनामधेयम् । लम्भिता = प्रापिता । मानिनी = गर्विता प्रेयसी । न किंचिद् ऊचे = नैव किञ्चिदप्युवाच । केवलम् । बाष्पाकुललोचना = सजलनयना । चरणेन = पादेन । भुवम् = भूमिम् । लिलेख = रेखांकितां चकार ।

कोषः—'नाम गोत्रम् कुलं गोत्रम्' इति शाश्वतः ।

हिन्दी—एक अप्सरा अपने प्रियतम के द्वारा सपत्नी का नाम जोर से पुकार कर फूल देते देख कर कुछ भी नहीं बोली, बल्कि केवल आँखों में आंसू भर कर वह पैर से भूमि कुरेदने लगी ॥ १४ ॥

प्रियेऽपरा यच्छति वाचमुन्मुखी निबद्धदृष्टिः शिथिलाकुलोच्चया ।
समादधे नांशुकमाहितं वृथा विवेद पुष्पेषु न पाणिपल्लवम् ॥ १५ ॥

अन्वयः—वाचं यच्छति प्रिये निबद्धदृष्टिः उन्मुखी शिथिलाकुलोच्चया अपरा अंशुकं न समादधे । पुष्पेषु वृथा अहितम् पाणिपल्लवं च न विवेद ।

विग्रहः—निबद्धा दृष्टिः यस्याः सा = निबद्धदृष्टिः । उद् मुखं यस्याः सा = उन्मुखी । शिथिलः आकुलश्च उच्चयो यस्याः सा = शिथिलाकुलोच्चया । पाणिः एव पल्लवो यस्तम् = पाणिपल्लवम् ।

अर्थः—वाचम् यच्छति = समालपति । प्रिये = प्रियजने । निबद्धदृष्टिः = निश्चलदृष्टिः । उन्मुखी = ऊर्ध्वमुखी । शिथिलाकुलोच्चया = श्लथचलितनीवीग्रन्था । अपरा = अन्या । अंशुकम् = परिधानम् । न समादधे = न धृतवती । पुष्पेषु = कुसुमेषु । वृथा = व्यर्थम् । आहितम् = आरोपितम् । पाणिपल्लवम् च । न विवेद = न जज्ञे । अत्रोपमारूपकयोः सङ्करः ।

कोषः—'नारीकट्यंशुकग्रन्थौ नीवी स्यादुच्चयोऽप्यथ' इति मार्तण्डः ।

हिन्दी—प्रियतम से बात (प्रेमालाप) करती हुए कोई दूसरी अप्सरा मुख ऊपर उठाकर एकटक दृष्टि से देखती ही रह गई । उसका सारा नीवी-बंधन नीचे खिसक गया और प्रेमालाप में मुग्ध होने के कारण वह वस्त्र तक न सुधार सकी अर्थात् नंगी हो गई । फूलों पर उसका पल्लव के समान कोमल हाथ भी नहीं पड़ रहा था ।। १५ ।।

सलीलमासक्तलतान्तभूषणं समासजन्त्या कुसुमावतंसकम् ।
स्तनोपपीडं नुनुदे नितम्बिना घनेन कश्चिज्जघनेन कान्तया ।। १६ ।।

अन्वयः—आसक्तलतान्तभूषणं कुसुमावतंसकं सलीलं समासजन्त्या कान्तया कश्चित् स्तनोपपीडं नितम्बिना घनेन जघनेन नुनुदे ।

विग्रहः—आसक्ता लतान्ता भूषणं यस्य तत् आसक्तलतान्तभूषणम् । लीलया सहितं = सलीलम् । स्तनाभ्याम् उपपीड्येति = स्तनोपपीडम् ।

अर्थः—आसक्तलतान्तभूषणम् = पल्लवैः सह ग्रथितम् । कुसुमावतंसकं = पुष्पशेखरम् । सलीलम् = सविलासम् । समासजन्त्या = शिरसि प्रतिदधत्या । कान्तया = प्रेयस्या । कश्चित् = प्रियः । स्तनोपपीडम् = पयोधरोपपीडम् । नितम्बिना = नितम्बयुतेन, घनेन जघनेन = स्थूलारुस्थलेन । नुनुदे = नुन्नः ।

कोषः—'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' इत्यमरः ।

हिन्दी—आभूषणों के रूप में फूलों को अपने शिर पर खेल-खेल में धारण

करती हुई कोई एक अप्सरा अपने वक्षस्थल की शोभा को कुछ कम समझकर अपने घनजघनों से प्रियतम को प्रसन्न कर रही थी ॥ १६ ॥

कलत्रभारेण विलोलनीविना गलद्दुकूलस्तनशालिनोरसा।
वलिव्यपायस्फुटरोमराजिना निरायतत्वादुदरेण ताम्यता ॥ १७ ॥

अन्वय:—विलोलनीविना कलत्रभारेण गलद्दुकूलस्तनशालिना उरसा वलिव्यपायस्फुटरोमराजिना निरायतत्वात् ताम्यता उदरेण ।

विग्रह:—विलोला नीवी यस्मिन्तेन = विलोलनीविना । गलद् दुकूलं याभ्यां स्तनाभ्यां ताभ्यां शालते इति तेन = गलद्दुकूलस्तनशालिना । वलिव्यपायेन स्फुटा रोमराजि: यस्मिस्तेन = वलिव्यपायस्फुटरोमराजिना । कलत्रस्य भारस्तेन = कलत्रभारेण । निर्गतम् आयतत्वं यस्मात् तस्मात् = निरायतत्वात् ।

अर्थ:—विलोलनीविना = विश्लिष्टवस्त्रग्रन्थिना । कलत्रभारेण = श्रोणिभारेण । गलद्दुकूलस्तनशालिना = स्रंसमानांशुकपयोधरशालिना । उरसा = वक्षसा । वलिव्यपायस्फुटरोमराजिना = भङ्गिनिवृत्तिस्फुटलोमपंक्तिना । निरायतत्वात् = अप्रसारितत्वात् । ताम्यता = तनूभवता । उदरेण = उदरप्रदेशेन । ( मन: समादद इति शेष: ) । अत्र स्वभावोक्तिरलङ्कार: ।

कोष:—'कलत्रं श्रोणिभार्ययो:' इत्यमर: ।

हिन्दी—किसी दूसरी देवाङ्गना ने जिसकी वस्त्रग्रन्थि ढीली पड़ गयी थी, जिसके स्तन वस्त्ररहित होकर वक्षःस्थल की शोभा बढ़ा रहे थे और जिनके क्षीण ( पतले ) उदर पर त्रिवली न होने के कारण रोयें स्पष्ट दिखाई दे रहे थे, अपने प्रियतम का मन आकृष्ट कर लिया ॥ १७ ॥

विलम्बमानाकुलकेशपाशया कयाचिदाविष्कृतबाहुमूलया।
तरुप्रसूनान्यपदिश्य सादरं मनोऽधिनाथस्य मन: समाददे ॥ १८ ॥

अन्वय:—विलम्बमानाकुलकेशपाशया आविष्कृतबाहुमूलया कयाचित् तरुप्रसूनानि अपदिश्य सादरं मनोधिनाथस्य मन: समाददे ।

विग्रह:—विलम्बमान: आकुलश्च केशपाशो यस्यास्तया = विलम्बमानाकुलकेशपाशया । आविष्कृतं बाहुमूलं यस्यास्तया = आविष्कृतबाहुमूलया । वृक्षस्य प्रसूनानि = वृक्षप्रसूनानि । मनसोऽधिनाथस्तस्य = मनोऽधिनाथस्य ।

अर्थः—विलम्बमानाकुलकेशपाशया=विस्रंसमानविलुलितजटाजूटया। आविष्कृतबाहुमूलया=दर्शितकक्षप्रदेशया। कयाचित् कान्तया। तरुप्रसूनानि=पादपकुसुमानि। अपदिश्य=व्याजीकृत्य। सादरं=साभिलाषम्। मनोधिनाथस्य=प्रियतमस्य। मनः=चित्तम्। समाददे=आचकर्ष।

कोष—'व्याजोऽपदेशो लक्ष्यं च' इत्यमरः।

हिन्दी—किसी दूसरी देवाङ्गना ने जिसके लहराते हुए केश लटक रहे थे, जिसका वक्ष भाग खुला हुआ था, वृक्ष से फूल तोड़ने के बहाने अपने प्रियतम का मन अपनी ओर आकृष्ट कर लिया॥ १८॥

व्यपोहितुं लोचनतो मुखानिलैरपारयन्तं किल पुष्पजं रजः।
पयोधरेणोरसि काचिदुन्मना प्रियं जघानोन्नतपीवरस्तनी॥ १९॥

अन्वयः—उन्नतपीवरस्तनी काचित् लोचनतः पुष्पजम् रजः मुखानिलैः व्यपोहितुम् अपारयन्तं किल प्रियम् उन्मनाः पयोधरेण उरसि जघान।

विग्रहः—उन्नतौ पीवरौ च स्तनौ यस्याः सा = उन्नतपीवरस्तनी। पुष्पाज्जातन्तत्=पुष्पजम्। मुखानामनिलैः=मुखानिलैः।

अर्थः—उन्नतपीवरस्तनी=उदग्रस्थूलपयोधरा। काचित्=कान्ता। लोचनतः=स्वनेत्रात्। पुष्पजं रजः=पुष्पजातं परागम्। मुखानिलैः फूत्कारैः। व्यपोहितुम्=अपनेतुम्। अपारयन्तम्=अशक्नुवन्तं। किल = अलीक, प्रियम् = प्रियतमम्। उन्मनाः = उत्सुका सती। पयोधरेण = स्तनेन। उरसि = वक्षसि। जघान=ताडयामास।

कोषः—'परागः पुष्पजं रजः' इत्यमरः।

हिन्दी—उन्नत और स्थूल पयोधरों वाली किसी दूसरी देवाङ्गनाने आँख से पुष्पराग को फूक कर निकाल सकने में असमर्थ अपने प्रियतम के वक्षःस्थल में मुंह ऊँचा करके (पराग निकालने के बहाने) अपने स्तन से चोट मार दी॥ १९॥

इमान्यमूनीत्यपवर्जिते शनैर्यथाभिरामं कुसुमाग्रपल्लवे।
विहाय निःसारतयेव भूरुहान्पदं वनश्रीर्वनितासु सन्दधे॥ २०॥

अन्वयः—यथाभिरामं कुसुमाग्रपल्लवे इमानि अमूनि इति शनैः अपवर्जिते वनश्रीः निःसारतया इव भूरुहान् विहाय वनितासु पदं सन्दधे।

विग्रहः--कुसुमानि, अग्रपल्लवानि च कुसुमाग्रपल्लवं, तस्मिन् =कुसुमाग्रपल्लवे। वनस्य श्रीः = वनश्रीः। भूमौ रुहन्तीति, तान् भूरुहान्।

अर्थः—यथाभिरामम् = यथासुन्दरम्। कुसुमाग्रपल्लवे=पुष्पाग्रदले। 'इमानि अमूनि' इति = इत्थं निर्देशपूर्वकम्। शनैः =मन्दम्। अपवर्जिते=अपचिते सति। वनश्रीः = वनशोभाः, निःसारतया इव = नीरसतयेव। भूरुहान् = वृक्षान्। विहाय = त्यक्त्वा। वनितासु = अप्सरःसु। पदं सन्दधे = पदं दधौ।

कोषः—'वामा वनिता महिला तथा' इत्यमरः।

हिन्दी—'ये फूल मुझे दो' वे 'फूल मुझे दो' इस प्रकार से वनवृक्षों से फूल और पल्लव धीरे से तोड़ लेने पर उनकी शोभा नष्ट हो गई। फिर उस वनश्री ने तत्वरहित होने के कारण वृक्षों को छोड़कर उन सुरबालाओं का ही आश्रय लिया। अर्थात् तोड़े हुए फूलों और पल्लवों को सुराङ्गनाओं ने यथास्थान अपने अंगोंपर धारण किया॥ २०॥

प्रवालभङ्गारुणपाणिपल्लवः परागपाण्डूकृतपीवरस्तनः।
महीरुहः पुष्पसुगन्धिराददे वपुर्गुणोच्छ्रायमिवाङ्गनाजनः॥ २१॥

अन्वयः—प्रवालभङ्गारुणपाणिपल्लवः परागपाण्डूकृतपीवरस्तनः पुष्पसुगन्धिः अङ्गनाजनः महीरुहः वपुर्गुणोच्छ्रायम् आददे इव।

विग्रहः--प्रवालस्य भङ्गः = प्रवालभङ्गस्तेनारुणः पाणिपल्लवो यस्य सः = प्रवालभङ्गारुणपाणिपल्लवः। परागेण पाण्डूकृतौ पीवरौ स्तनौ यस्य सः = परागपाण्डूकृतपीवरस्तनः। पुष्पैः सुगन्धिः पुष्पसुगन्धिः। वपुर्गुणस्य उच्छ्रायः = वपुर्गुणोच्छ्रायस्तम् तथोक्तम्।

अर्थः--प्रवालभङ्गारुणपाणिपल्लवः = पल्लववलयारुणकरदलः। परागपाण्डूकृतपीवरस्तनः = पुष्परजःपाण्डुपीवरपयोधरः। पुष्पसुगन्धिः = कुसुमसुरभिः। अङ्गनाजनः = देवाङ्गनाजनः। महीरुहः =वृक्षजातात्। वपुर्गुणोच्छ्रायम् = स्वदेहगुणोत्कर्षम्। आददे इव = लब्धवानिव। अत्रोत्प्रेक्षालङ्कारः।

कोषः—'परागः सुमनोरजः' इत्यमरः।

हिन्दी--सुराङ्गना का पाणिपल्लव नवकिसलयों को तोड़ने से रंग गया था, पुष्पराग से उसके उन्नत उरोज पाण्डुरंग के हो गये थे। उसके फूलों से सुगन्धित शरीर ने मानो वृक्ष से उच्चतारूपी गुणोत्कृष्टता प्राप्त की थी॥ २१॥

पञ्चभिः कुलकमाह--

वरोरुभिर्वारणहस्तपीवरैश्चिराय खिन्नान्नव पल्लवश्रियः।
समेऽपि यातुं चरणाननीश्वरान्मदादिव प्रस्खलतः पदे पदे ॥ २२ ॥

अन्वयः—वारणहस्तपीवरैः वरोरुभिः चिराय खिन्नान् नवपल्लवश्रियः समे अपि यातुम् अनीश्वरान् मदात् इव पदे पदे प्रस्खलतः चरणान्।

विग्रहः—वारणहस्त इव पीवरैः = वारणहस्तपीवरैः। वरैः उरुभिः = वरोरुभिः। नवानां पल्लवानां श्रीरिव श्रीर्येषां तान् = नवपल्लवश्रियः।

अर्थः—वारणहस्तपीवरैः= करिकरस्थूलैः वरोरुभिः=महोरुभिः। चिराय= चिरकालाय। खिन्नान् = क्लिन्नान्। नवपल्लश्रियः=नवकिसलयवन्मृदून्। समेऽपि = समस्थलेऽपि। यातुम् = गन्तुम्। अनीश्वरान् = अशक्तान्। मदादिव = प्रमादादिव, पदे पदे = प्रतिपदे। प्रस्खलतश्चरणान्=स्खलतः पदान्। अत्रोपमालङ्कारः।

कोषः—'जानूरुपर्वाऽष्ठीवदस्त्रियाम्' इत्यमरः।

हिन्दी—इन्द्रकील पर्वत के शिखर-मार्गों पर अनुसरण करती हुई अप्सराओं के नवपल्लवों के समान कोमल चरण, हाथी की सूँड़ की भांति मांसल जांघों वाले थे जो कि पर्वत-शिखर की समतल भूमि पर चलने से थक गये थे अतः वे पग-पग पर इस प्रकार लड़खड़ा रहे थे जैसे वे मद्यपान किये हों।२२।

विसारिकाञ्चीमणिरश्मिलब्धया मनोहरोच्छ्रायनितम्बशोभया।
स्थितानि जित्वा नवसैकतद्युतिं श्रमातिरिक्तैर्जघनानि गौरवैः ॥ २३ ॥

अन्वयः—विसारिकाञ्चीमणिरश्मिलब्धया मनोहरोच्छ्रायनितम्बशोभया नवसैकतद्युतिं जित्वा स्थितानि श्रमातिरिक्तैः गौरवैः जघनानि।

विग्रहः—विसारिभिः काञ्चीमणीनां रश्मिभिः लब्धया = विसारिकांचीमणिरश्मिलब्धया। मनोहरः उच्छ्रायः येषां तेषां नितम्बानां या शोभा, तया = मनोहरोच्छ्रायनितम्बशोभया। नवसैकतानां द्युतिस्ताम् = नवसैकतद्युतिम्। श्रमेणातिरिक्तैः=श्रमातिरिक्तैः।

अर्थः—विसारिकाञ्चीमणिरश्मिलब्धया = प्रसारिमेखलामणिकान्तिलब्धया। मनोहरोच्छ्रायनितम्बशोभया = मनोरमोत्सेधनितम्बश्रिया। नवसैकतद्युतिम् = नूतनसैकतशोभाम्। जित्वा = विजित्य। स्थितानि = अवस्थितानि। श्रमा-

तिरिक्तैः परिश्रमातिशयैः। गौरवैः = गुरुत्वैः। उपलक्षितानीति शेषः। जघनानि= जघनस्थलानि।

कोषः—'मेखला कांची सप्तकी रशना तथा' इत्यमरः।

हिन्दी—सुराङ्गनाओं की जांघों ने जो कि करधनी में लगे हुए रत्नों की कान्ति से शोभित और मनोहर उन्नत नितम्बों की शोभा से युक्त थीं, ऊँचे कगारों और रेत से चमकते पुलिनों को जीत लिया। चलने से थकी हुई उनकी जांघें शिथिल हो गई॥ २३॥

समुच्छ्वसत्पङ्कजकोशकोमलैरुपाहितश्रीण्युपनीवि नाभिभिः।
दधन्ति मध्येषु वलीविभङ्गिषु स्तनातिभारादुदराणि नम्रताम्॥ २४॥

अन्वयः—समुच्छ्वसत्पङ्कजकोशकोमलैः नाभिभिः उपनीवि उपाहितश्रीणि वलीविभङ्गिषु मध्येषु स्तनातिभारात् नम्रताम् दधन्ति उदराणि।

विग्रह—समुच्छ्वसन्तः पङ्कजकोशास्तद्वत्कोमलैः=समुच्छ्वसत्पङ्कजकोशकोमलैः। नीव्याः समीपे=उपनीवि। उपाहिताः श्रियः येषु तानि = उपाहितश्रीणि। वलीनां विभङ्गो येषु तेषु = वलीविभङ्गिषु स्तनानाम् अतिभारः = स्तनातिभारस्तस्मात् = स्तनातिभारात्।

अर्थः—समुच्छ्वसत्पङ्कजकोशकोमलैः=दलत्कमलमुकुलकोमलैः। नाभिभिः= प्रतारिकाभिः। उपनीवि = नीवीपार्श्वे। उपाहितश्रीणि = जनितशोभानि। वलीविभङ्गिषु = ऊर्मिमत्सु। मध्येषु। जघनस्थलेषु। स्तनातिभारात् = पयोधरगुरुत्वात्। नम्रताम् = नम्रत्वम्। दधन्ति = बिभ्राणानि। उदराणि = उदरस्थलानि चेति।

कोषः—'अथ नाभिस्तु जन्त्वङ्गे यस्य संज्ञा प्रतारिका' इति केशवः।

हिन्दी—उन सुरसुन्दरियों के उदर जो कि विकसित कमलकोश के समान कोमल नाभियों से नीवीबन्धनों के पास बड़े सुन्दर लग रहे थे, स्तनभार के कारण त्रिवलीयुक्त जघनस्थलों को अवनत बना रहे थे॥ २४॥

समानकान्तीनि तुषारभूषणैः सरोरुहैरस्फुटपत्रपंक्तिभिः।
चितानि घर्माम्बुकणैः समन्ततो मुखान्यनुत्फुल्लविलोचनानि च॥ २५॥

अन्वयः—घर्माम्बुकणैः समन्ततः चितानि अनुत्फुल्लविलोचनानि तुषारभूषणैः अस्फुटपत्रपंक्तिभिः सरोरुहैः समानकान्तीनि मुखानि च।

विग्रहः—घर्मात् जातमम्बु=घर्माम्बु, तस्य कणैः = घर्माम्बुकणैः। नैव उत्फुल्लानि=अनुत्फुल्लानि। अनुत्फुल्लानि च तानि विलोचनानि = अनुत्फुल्लविलोचनानि। तुषाराण्येव भूषणानि येषां तैः=तुषारभूषणैः अस्फुटपत्राणां पंक्तयः येषु तैः = अस्फुटपत्रपंक्तिभिः। सरःसु रुहाणि = सरोरुहाणि, तैः = सरोरुहैः। समानाः कान्तयः येषां तानि = समानकान्तीनि।

अर्थः—घर्माम्बुकणैः = स्वेदबिन्दुभिः। समन्ततः = सर्वत्र। चितानि = व्याप्तानि। अनुत्फुल्लविलोचनानि=अविकसदक्षीणि। तुषारभूषणैः=शीकरपरिवृतैः। अस्फुटपत्रपंक्तिभिः = अविकचदलराजिभिः। सरोरुहैः = पद्मैः। समानकान्तीनि = समशोभितानि मुखानि = आननानि। च। अत्रोपमालङ्कारः॥ २५॥

कोषः—'व्याकोशविकचस्फुटाः' इत्यमरः। 'तुषारौ हिम शीकरौ' इति शाश्वतः।

हिन्दी—उन देवाङ्गनाओं के नेत्र तथा मुख पसीने से व्याप्त थे। वे ऐसे पद्मों की कान्ति की समानता करते थे जिनकी अविकसित कलियों पर पड़े हुए तुषारकण चमक रहे थे॥ २५॥

विनिर्यतीनां गुरुखेदमन्थरं सुराङ्गनानामनुसानु वर्त्मनः।
सविस्मयं रूपयतो नभश्चरान् विवेश तत्पूर्वमिवेक्षणादरः॥ २६॥

अन्वयः—अनुसानु वर्त्मनः गुरुखेदमन्थरं विनिर्यतीनाम् सुराङ्गनानाम् सविस्मयं रूपयतः नभश्चरान् तत्पूर्वम् इव ईक्षणादरः विवेश।

विग्रहः—गुरुणा खेदेन मन्थरमिति गुरुखेदमन्थरम्। विस्मयेन सहितं = सविस्मयम्। नभसि चरन्तीति तान् = नभश्चरान्। ईक्षणाय आदरः=ईक्षणादरः।

अर्थः—अनुसानु=सानुषु। वर्त्मनः = मार्गात्। गुरुखेदमन्थरम् = महाखेदालसम्। विनिर्यतीनाम् = निर्गच्छन्तीनाम् सुराङ्गनानाम् = अप्सरसाम्। सविस्मयम् = साश्चर्यम् रूपयतः = पूर्वोक्तचरणादीनि वर्णयतः। नभश्चरान् = गन्धर्वान् तत्पूर्वम् इव = तदेव प्रथमं यथा तथा। ईक्षणादरः = आलोकनकौतुकम्। विवेश=प्राविशत्।

कोषः—'अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः' इत्यमरः।

हिन्दी—इन्द्रकील पर्वत की चोटियों पर चलते हुए मार्ग से अत्यन्त खेद

द्वारा आलस्य को पहुँची हुई ( थकी हुई ) सुराङ्गनाओं की गति धीमी पड़ गई और आश्चर्यचकित होकर वर्णन करते हुए गन्धर्वों को 'यह सब पहले-पहल देखा है' इस प्रकार से देखने को कौतुक उत्पन्न हो गया ॥ २६ ॥

सम्प्रति सलिलक्रीडावर्णनमारभते—

अथ स्फुरन्मीनविधूतपङ्कजा विपङ्कतीरस्खलितोर्मिसंहतिः।
पयोवगाढुं कलहंसनादिनी समाजुहावेव वधूः सुरापगा ॥ २७ ॥

अन्वयः—अथ स्फुरन्मीनविधूतपङ्कजा विपङ्कतीरस्खलितोर्मिसंहतिः कलहंसनादिनी सुरापगा वधूः पयोऽवगाढुम् समाजुहाव इव ।

विग्रहः—स्फुरद्भिः मीनैः विधूतपङ्कजा । या सा = स्फुरन्मीनविधूतपङ्कजा। विगतं पङ्कं यस्मात् तत् = विपङ्कम्, विपङ्कं यत् तीरं तस्मिन् स्खलिता ऊर्मिसंहतिः यस्याः सा = विपङ्कतीरस्खलितोर्मिसंहतिः । कलहंसैः नदति या सा = कलहंसनादिनी । सुराणामापगा = सुरापगा ।

**अर्थः**—अथ = पुष्पावचयानन्तरम् । स्फुरन्मीनविधूतपङ्कजा = चलन्मत्स्यधूतकमला । विपङ्कतीरस्खलितोर्मिसंहतिः = पङ्करहिततटविचलिततरङ्गसंहतिः। कलहंसनादिनी = कादम्बशब्दवती सुरापगा = गङ्गा । वधूः = अप्सरसः। पयः=जलम् । अवगाढुम् = अवगाहितुम् । समाजुहावेव = आकारयामासेव। अत्रोत्प्रेक्षालङ्कारः ।

**कोषः**—'हूतिराकाणाह्वानम्' इत्यमरः ।

**हिन्दी**—इसके बाद गङ्गानदी ने जिसमें कि मछलियों के कूदने से कमल हिल रहे थे, जिसके तट पर कीचड़ का नाम तक नहीं था, लहरों का तांता लगा हुआ था एवं हंस कल कूजन कर रहे थे, अप्सराओं का मानो जलावगाहन के लिए आवाहन किया ॥ २७ ॥

प्रशान्तघर्माभिभवः शनैर्विवान् विलासिनीभ्यः परिमृष्टपङ्कजः।
ददौ भुजालम्बमिवात्तशीकरस्तरङ्गमालान्तरगोचरोऽनिलः ॥ २८ ॥

**अन्वयः**—प्रशान्तघर्माभिभवः शनैः विवान् परिमृष्टपङ्कजः आत्तशीकरः तरङ्गमालान्तरगोचरः अनिलः विलासिनीभ्यः भुजावलम्बम् ददौ इव ।

**विग्रहः**—घर्मस्य अभिभवः = घर्माभिभवः । प्रशान्तः घर्माभिभवो येन सः = प्रशान्तघर्माभिभवः । परिमृष्टं पंकजं येन सः = परिमृष्टपंकजः । आत्तः शीकरो येन

सः =आत्तशीकरः । तरङ्गानां माला=तरङ्गमाला, तासामन्तरे गोचर इति= तरङ्गमालान्तरगोचरः । भुजयोः अवलम्बस्तम् =भुजावलम्बम् ।

अर्थः—प्रशान्तघर्माभिभवः=शान्तोष्णबाधः । शनैः =मन्दम् । विवान्= वहन् । परिमृष्टपङ्कजः=पद्मगन्धी । आत्तशीकरः=व्याप्तजलकणः । तरङ्गमाला॰न्तरगोचरः ऊर्मिपंक्तिमध्यवासः । अनिलः=पवनः । विलासिनीभ्यः= अप्सरोभ्यः । भुजावलम्बम् =बाह्वावलम्बनम् । ददौ=दत्तवान् इव । अत्रोत्प्रे॰क्षालङ्कारः ।

कोषः—'भङ्गस्तरङ्गऊर्मिर्वा' इत्यमरः ।

हिन्दी—धूप के प्रभाव को मिटानेवाला, धीमे २ बहता हुआ कमलगन्धी पवन जलकणों से युक्त था और जो नदियों की तरङ्गों से होकर चल रहा था, उन अप्सराओं के लिए मानो अपनी भुजाओं में समेट रहा था ॥ २८ ॥

गतैः सहावैः कलहंसविक्रमं कलत्रभारैः पुलिनं नितम्बिभिः ।
मुखैः सरोजानि च दीर्घलोचनैः सुरस्त्रियः साम्यगुणान्निरासिरे ॥ २९ ॥

अन्वयः—सुरस्त्रियः सहावैः गतैः कलहंसविक्रमं नितम्बिभिः कलत्रभारैः पुलिनं दीर्घलोचनैः सरोजानि च साम्यगुणात् निरासिरे ।

विग्रहः—सुराणां स्त्रियः=सुरस्त्रियः । हावैः सहितैः=सहावैः । कलहंसानां विक्रम=कलहंसविक्रमम् । कलत्राणां भारैः=कलत्रभारैः । दीर्घे; लोचनैः= दीर्घलोचनैः ।

अर्थः—सुरस्त्रियः=देवाङ्गना । सहावैः=सविलासैः । गतैः=गतिभिः, कलहंसविक्रमम्=हंसगतिम् । नितम्बिभिः=प्रशस्तनितम्बैः, कलत्रभारैः= जघनभारैः । पुलिनम्=नितम्बभारशून्यम् । दीर्घलोचनैः=विशालनेत्रैः । सरो॰जानि=कमलानि च । साम्यगुणत्वात् = समानगुणत्वात् । निरासिरे = निर॰स्तवत्यः ।

कोषः—'आननं लपनं मुखम्' इत्यमरः ।

हिन्दी—देवाङ्गनाओं ने अपने हावभावादि कटाक्षों एवं मन्द चाल से हंसों की चाल, नितम्बवाले जघनभार से नदी-पुलिन और विशाल नेत्रों से कमल शोभा को निरस्त कर दिया ॥ २९ ॥

विभिन्नपर्यन्तगमीनपंक्तयः पुरो विगाढाः सखिभिर्मरुत्वतः।
कथंचिदापः सुरसुन्दरीजनैः सभीतिभिस्तत्प्रथमं प्रपेदिरे॥ ३०॥

अन्वयः—विभिन्नपर्यन्तगमीनपंक्तयः मरुत्वतः सखिभिः पुरः विगाढाः सभीतिभिः सुरसुन्दरीजनैः तत्प्रथमं कथंचित् आपः प्रपेदिरे।

विग्रहः—विभिन्नाः पर्यन्तगाः मीनानां पंक्तयः यासां ताः=विभिन्नपर्यन्तगमीनपंक्तयः। भीतिभिः सहितैः=सभीतिभिः।

अर्थः—विभिन्नपर्यन्तगमीनपंक्तयः=भिन्नप्रान्तगतमत्स्यरेखाः। मरुत्वतः=इन्द्रस्य। सखिभिः=मित्रैः गन्धर्वैः। पुरः=पूर्वम्। विगाढाः=प्रविष्टाः। सभीतिभिः=सभयैः। सुरसुन्दरीजनैः=अप्सरोभिः। तत्प्रथमं=अवगाहनपूर्वम्। कथंचित्=यथा तथा भयात्। आपः=जलम्। प्रपेदिरे=जगाहिरे।

कोषः—'झषो मत्स्यो मीनो वैसारिणोऽण्डजः।' इत्यमरः।

हिन्दी—(गंगातट पर पहुँच कर) इन्द्र के मित्र गन्धर्वों ने सर्वप्रथम जल में प्रवेश किया जिससे पंक्ति में तैरती हुई मछलियों का तांता टूट गया और वे इधर-उधर किनारों पर चली गयी। गन्धर्वों के जलावगाहन के बाद वे सुरसुन्दरियाँ भी डरती-डरती पानी में प्रविष्ट हुईं॥ ३०॥

विगाढमात्रे रमणीभिरम्भसि प्रयत्नसंवाहितपीवरोरुभिः।
विभिद्यमाना विससार सारसानुदस्य तीरेषु तरंगसंहतिः॥ ३१॥

अन्वयः—प्रयत्नसंवाहितपीवरोरुभिः रमणीभिः अम्भसि विगाढमात्रे विभिद्यमाना तरंगसंहतिः तीरेषु सारसान् उदस्य विससार।

विग्रहः—प्रयत्नेन संवाहिताः पीवराः उरवः याभिस्ताभिः=प्रयत्नसंवाहितपीवरोरुभिः। तरङ्गाणां संहतिः=तरङ्गसंहतिः।

अर्थः—प्रयत्नसंवाहितपीवरोरुभिः=यत्नसंचारितस्थूलजघनाभिः रमणीभिः=अप्सरोभिः। अम्भसि=जले। विगाढमात्रे=प्रविष्ट एव सति। विभिद्यमाना=विशीर्यमाणा। तरङ्गसंहतिः=ऊर्मिसमूहः। तीरेषु=तटेषु। सारसान्=सारसपक्षिविशेषान्। उदस्य=उत्सार्य। विससार=वितस्तार।

कोषः—'सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः', इति यादवः। 'चक्राङ्गः सारसो हंसः' इति शब्दार्णवे।

हिन्दी—देवाङ्गनाओं के बड़े प्रयत्न से स्थूल जांघों को जल में रखते

( डुबोते ) ही लहरें छिन्न-भिन्न हो गयीं और वे तटवर्ती सारसादि पक्षियों को हटाकर तट तक फैल गयीं ॥ ३१ ॥

शिलाघनैर्नाकसदामुरःस्थलैर्बृहन्निवेशैश्च वधूपयोधरैः ।
तटाभिनीतेन विभिन्नवीचिना रुषेव भेजे कलुषत्वमम्भसा ॥ ३२ ॥

अन्वयः—शिलाघनैः नाकसदाम् उरःस्थलैः बृहन्निवेशैः वधूपयोधरैः तटाभिनीतेन विभिन्नवीचिना अम्भसा रुषा इव कलुषत्वम् भेजे ।

विग्रहः—शिलावद् घनैः शिलाघनैः । नाकं सदः येषां तेषाम् =नाकसदाम् । बृहत् निवेशः येषां तैः = बृहन्निवेशैः । वधूनां पयोधराणि, तैः =वधूपयोधरैः । तटमभितः नीतेन=तटाभिनीतेन । विभिन्ना वीचयः यस्य तेन=विभिन्नवीचिना । कलुषस्य भावः कलुषत्वम् ।

अर्थः—शिलाघनैः = शिलाकठिनैः । नाकसदाम् = गन्धर्वाणाम् । उरःस्थलैः वक्षःस्थलैः । बृहन्निवेशैः = अतिस्थूलैः वधूपयोधरैः = देवाङ्गनास्तनैः । तटाभिनीतेन = तटमभितः प्रापितेन । विभिन्नवीचिना = भग्नोर्मिणा । अम्भसा= जलेन । रुषा इव = रोषेणेव । कलुषत्वम् = आविलत्वम् । भेजे=प्राप । अत्रोत्प्रेक्षा-लङ्कारः ।

कोष —'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु' इत्यमरः ।

हिन्दी—स्वर्गवासिनी देवाङ्गनाओं के पत्थर के समान कठोर वक्षःस्थलों तथा विस्तृत उन्नत उरोजों के द्वारा खण्ड-खण्ड होकर लहरें तट तक पहुँच जाती थीं । नदी का जल गंदला ( मैला ) होने से ज्ञात होता था मानों अप्सराओं के कार्यों से गंगा रुष्ट हो गई हों ॥ ३२ ॥

विधूतकेशाः परिलोलितस्रजः सुराङ्गनानां प्रविलुप्तचन्दनाः ।
अतिप्रसङ्गाद्विहितागसो मुहुः प्रकम्पमीयुः सभया इवोर्मयः ॥ ३३ ॥

अन्वयः—विधूतकेशाः परिलोलितस्रजः प्रविलुप्तचन्दनाः अतिप्रसङ्गात् सुराङ्गनानां विहितागसः ऊर्मयः सभया इव मुहुः प्रकम्पम् ईयुः ।

विग्रहः—विधुताः केशा यैस्ते =विधुतकेशाः । परिलालिताः स्रजः यैस्ते = परिलोलितस्रजः । प्रविलुप्तानि चन्दनानि यैस्ते =प्रविलुप्तचन्दनाः । विहितम् आगो यैस्ते =विहितागसः । भयेन सहिताः =सभयाः ।

अर्थः—विधुतकेशाः =विक्षिप्तकेशाः । परिलोलितस्रजः =विलोलितमालाः ।

प्रविलुप्तचन्दनाः=प्रमृष्टाङ्गरागाः। अतिप्रसङ्गात्=अविच्छेदात् सुराङ्गनानाम्=देववधूनाम्। विहितागसः=कृतमण्डनखण्डनरूपापराधाः। ऊर्मयः=तरङ्गाः। सभयाः=भयभीतः। इव। मुहुः=वारं वारम्। प्रकम्पम्=कम्पम्। ईयुः=ययुः॥ ३३॥

कोष:—'चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः।' इत्यमरः।

हिन्दी—गङ्गा की लहरों ने देवाङ्गनाओं के बालों को बिखेर दिया, उनकी पुष्पमालाओं को झकझोर डाला तथा शरीर में लगे चन्दन, अंगरागादि को मिटा दिया। इस प्रकार अप्सराओं की सजावट मिटाने का पाप करके अपराधिनी सी बनी हुई लहरें लहराती हुई मानों भय से काँप रही थीं॥ ३३॥

विपक्षचित्तोन्मथना नखव्रणास्तिरोहिता विभ्रममण्डनेन ये।
हृतस्य शेषानिव कुङ्कुमस्य तान् विकत्थनीयान्दधुरन्यथा स्त्रियः॥३४॥

अन्वय:—विपक्षचित्तोन्मथना ये नखव्रणाः विभ्रममण्डनेन तिरोहिताः हृतस्य कुङ्कुमस्य शेषान् इव विकत्थनीयान् तान् स्त्रियः अन्यथा दधुः।

विग्रह:—विपक्षस्य चित्तानाम् उन्मथनाः=विपक्षचित्तोन्मथनाः। नखानां व्रणाः=नखव्रणाः। विभ्रमस्य मण्डनम्, तेन=विभ्रममण्डनेन।

अर्थ:—विपक्षचित्तोन्मथनाः=सपत्नीजनचित्तव्यथकाः। ये नखव्रणाः=यानि नखक्षतानि। विभ्रममण्डनेन=सौन्दर्यमण्डनेन, कुंकुमलेपादिना। तिरोहिताः=छन्नाः। हृतस्य=क्षालितस्य। कुंकुमस्य=कुंकुमनाम्नः सौन्दर्यमण्डनस्य। शेषान् इव=अवशिष्टान् इव=विकत्थनीयान्=व्यञ्जकत्वेन श्लाघनीयान्। तान्=नखव्रणान् स्त्रियः=अप्सरसः। अन्यथा दधुः=प्रकाशम् दधुः। अत्र उत्प्रेक्षालङ्कारः।

कोष:—'व्रणोऽस्त्रियाम्' इत्यमरः।

हिन्दी—स्नान करते समय देवाङ्गनाओं के सपत्नीजन ( सौतों ) के चित्तों को व्याकुल बनाने वाले नखक्षत कुंकुमाङ्गरागादि के लेप से जो छिपा दिये गये थे वे पानी से धुल कर व्यक्त हो रहे थे फिर भी वे अवशिष्ट कुंकुम रेखा के समान थे अतः देवाङ्गनाओं ने उन नखक्षतों को जो कि प्रशंसनीय थे, प्रकाशित ही रखा, छिपाया नहीं॥ ३४॥

सरोजपत्रे नु विलीनषट्पदे विलोलदृष्टे स्विदमू विलोचने।
शिरोरुहाः स्विन्नतपक्ष्मसन्ततेर्द्विरेफवृन्दं नु निशब्दनिश्चलम् ॥ ३५ ॥

**अन्वयः**—अमू विलीनषट्पदे सरोजपत्रे नु विलोलदृष्टेः विलोचने स्वित् नतपक्ष्मसन्ततेः शिरोरुहाः स्वित् निशब्दनिश्चलम् द्विरेफवृन्दम् नु।

**विग्रहः**—विलीनाः षट्पदाः ययोः, ते=विलीनषट्पदे। सरोजस्य पत्रे= सरोजपत्रे। विलोला दृष्टिर्यस्यास्तस्याः=विलोलदृष्टेः। नता पक्ष्मणां सन्ततिः यस्यास्तस्याः=नतपक्ष्मसन्ततेः। शिरसि रुहाः=शिरोरुहाः। निशब्दम् च निश्चल च=निशब्दनिश्चलो, तयोः समाहार निशब्दनिश्चलम्। द्विरेफाणां वृन्दम् = द्विरेफवृन्दम्।

**अर्थः**—अमू=निर्दिष्टे द्वे। विलीनषट्पदे = भ्रमरलीने। सरोजपत्रे= कमलदले। नु इति वितर्के। विलोलदृष्टेः=चञ्चलाक्ष्याः। विलोचने = नेत्रे। स्वित्=नु। नतपक्ष्मसन्ततेः=अवनतपक्ष्मराजेः अवनतनेत्रायाः। शिरोरुहाः= केशाः। स्वित्=यद्वा निशब्दनिश्चलम्=नीरवस्थिरम्। द्विरेफवृन्दम् = भ्रमर-समूहः। नु=स्वित्। अत्र निश्चयान्तसन्देहालङ्कारः।

**कोषः**—द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः' इत्यमरः।

**हिन्दी**—कमलदल में छिपी हुई एक अप्सरा को अन्य अप्सरायें देखकर निश्चित नहीं कर सकीं:—

यह सामने भौंरों से व्याप्त दो कमल दल हैं अथवा चपलदृष्टि वाली सखी के दो नेत्र हैं? नीचे को पलक डाली हुई सुन्दरी के यह काले-काले केश हैं अथवा नीरव और निश्चल रूप से बैठे हुए भौंरों का वृन्द है?। अर्थात् यह सखी ही है इस बात का उन्होंने निश्चय नहीं कर पाया॥ ३५ ॥

अगूढहासस्फुटदन्तकेसरं मुखं स्विदेतद्विकसन्नु पङ्कजम्।
इति प्रलीनां नलिनीवने सखीं विदाम्बभूवुः सुचिरेण योषितः ॥ ३६ ॥

**अन्वयः**—अगूढहासस्फुटदन्तकेसरम् मुखम्, स्वित् एतद्विकसत् पङ्कजम् नु, इति नलिनीवने प्रलीनां सखीं योषितः सुचिरेण विदाम्बभूवुः।

**विग्रहः**—अगूढः हासः=अगूढहासस्तेन स्फुटाः दन्ताः केसरा इव यस्य तत्=अगूढहासस्फुटदन्तकेसरम्। नलिनीनां वनम्, तस्मिन्=नलिनीवने। प्रकर्षेण लीनाम्=प्रलीनाम्।

अर्थः—अगूढहासस्फुटदन्तकेसरम् = व्यक्तस्मितस्फुटदर्शनकेसरम् मुखम् = आननम्। स्वित् = यद्वा। एतत् = इदम्। विकसत्पङ्कजम् = विकचकमलम्। नु = इति वितर्के। इति = इत्थम्। नलिनीवने = कमलिनीकानने। प्रलीनाम् = लीनाम्। सखीम् = सहगामिनीम्। योषितः = अप्सरसः। सुचिरेण = अतिविलम्ब्य, विदाम्बभूवुः = विदाञ्चक्रुः। अत्र संदेहालंकारः।

कोषः—'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः।

हिन्दीः—स्पष्ट हास से निकलती हुई दाँतों की ज्योति वाला यह मुख है अथवा खिलता हुआ कमल है? इस प्रकार कमल वन में छिपी हुई किसी एक सखी को अन्य अप्सराओं ने बहुत देर में जान पाया कि यह सखी ही है ॥३६॥

प्रियेण संग्रथ्य विपक्षसन्निधा-
वुपाहितां वक्षसि पीवरस्तने।
स्रजं न काचिद् विजहौ जलाविलां
वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥ ३७ ॥

अन्वयः—प्रियेण संग्रथ्य विपक्षसन्निधौ पीवरस्तने वक्षसि उपाहिताम् स्रजं जलाविलाम् न विजहौ। हि गुणाः प्रेम्णि वसन्ति वस्तुनि न ( वसन्ति )।

विग्रहः—विपक्षस्य सन्निधौ = विपक्षसन्निधौ। पीवरौ स्तनौ यस्य तस्मिन् = पीवरस्तने। जलेनाविलाम् = जलाविलाम्।

अर्थः—प्रियेण = प्रियतमेन। संग्रथ्य = स्वयमेव रचयित्वा। विपक्षसन्निधौ = सपत्नीसमक्षम्। पीवरस्तने वक्षसि = उन्नतपयोधरे वक्षःस्थले। उपाहिताम् = पातिताम्। स्रजम् = मालाम्। जलाविलाम् = मृदितामपि। न विजहौ = न तत्याज। हि = यतः। गुणाः = दाक्षिण्यादिगुणा। प्रेम्णि = प्रीतौ। वसन्ति = तिष्ठन्ति। न वस्तुनि = नैव वसन्तीति। अत्रार्थान्तरन्यासालंकारः।

कोषः—'उरो वत्सं च वक्षश्च' इत्यमरः।

हिन्दीः—किसी सखी के उन्नत पयोधरों वाले वक्षस्थल पर प्रियतम ने स्वयं माला बनाकर उसकी सपत्नी के समक्ष ही पहनाई। जल के कारण मसली

हुई भी उस माला को सखी ने नहीं निकाला, पहने ही रही। गुण वास्तव में प्रेम में रहते हैं किसी वस्तु मे नहीं ॥ ३७ ॥

असंशयं न्यस्तमुपान्तरक्ततां
यदेव रोद्धुं रमणीभिरञ्जनम्।
हृतेऽपि तस्मिन् सलिलेन शुक्लतां
निरास रागो नयनेषु न श्रियम् ॥ ३८ ॥

अन्वयः—रमणीभिर्यद् अञ्जनं न्यस्तम् उपान्तरक्ततां रोद्धुम् एव असंशयं तस्मिन् सलिलेन हृते अपि रागः नयनेषु शुक्लतां निरास श्रियम् न ( निरास )।

विग्रहः—उपान्तयोः रक्तता, ताम्=उपान्तरक्तताम्।

अर्थः—रमणीभिः = सुरवधूभिः। यद् अंजनम्=चक्षुःशोभार्थं यत् कज्जलं न्यस्तम = धृतम्। तदञ्जनम्। उपान्तरक्ताम्=नेत्रप्रान्तयोः अरुणत्वम्। रोद्धुम्=प्रतिबद्धुम् एव न्यस्तम्। न तु शोभार्थमित्यर्थः। असंशयम् = नात्र संशयः। तस्मिन् = अंजने। सलिलेन = अम्भसा। हृते = क्षालिते। अपि। रागः = रक्तत्वम्। नयनेषु = नेत्रेषु। शुक्लतां = श्वेतत्वम्। निरास = निरस्तवान्। श्रियम् = शोभाम्। न निरस्तवान् इति।

कोषः—'सुन्दरी रमणी रामा' इत्यमरः।

हिन्दी—जलविहार से पूर्व अप्सराओं ने अपनी आंखों में जो काजल लगा रखा था वह नेत्रों के निचले भागों की रक्तता बनाये रखने के लिए था, इसमें कोई सन्देह नही है क्योंकि जलावगाहन से काजल के छूट जाने पर भी नेत्र भागों की अरुणिमा ने नेत्रों की सफेदी को ही मिटाया, उसकी रमणीयता को नहीं दूर किया ॥ ३८ ॥

द्युतिं वहन्तो वनितावतंसका हृताः प्रलोभादिव वेगिभिर्जलैः।
उपप्लुतास्तत्क्षणशोचनीयतां च्युताधिकाराः सचिवा इवाययुः ॥ ३९ ॥

अन्वयः—द्युतिं वहन्तः वेगिभिः जलैः प्रलोभात् हृताः उपप्लुताः वनितावतंसकाः च्युताधिकाराः सचिवा इव तत्क्षणशोचनीयताम् ययुः।

विग्रहः—वनितानाम् अवतंसकाः = वनितावतंसकाः। च्युताः अधिकाराः यैस्ते = च्युताधिकाराः। तत्क्षणं शोचनीयतामिति तत्तथोक्ताम्।

अर्थः—द्युतिम् = शोभां तेजश्च । वहन्तः = धारयन्तः । वेगिभिः = जविभिः जलैः = पयोभिः, अर्ज्ञैश्च । प्रलोभात् = मोहात् । हृताः = गृहीताः उपप्लुताः = मृदिताः, पीडिता वा । वनितावतंसकाः = देवाङ्गनापुष्पभूषणानि । च्युताधिकाराः = अधिकारभ्रष्टाः सचिवाः = मन्त्रिण इव । तत्क्षणम् = च्युतकाले । शोचनीयताम् शोकत्वम् । ययुः = प्रापुः ।

कोषः—'जलं गोकवलं नीरे ह्रीवेरे च जडोऽन्यवत्' इति विश्वः ।

हिन्दी—अप्सराओं के द्वारा जूड़ों पर बांधे गये पुष्पाभरण जो कि देदीप्यमान थे, जल के वेग ने उन्हें दूर फेंक दिया। इस प्रकार फेंके गये उन पुष्पाभरणों की ऐसी दयनीय दशा हो गई थी जैसे कि अधिकार छिन जाने पर मन्त्रियों की हो जाती है ॥ ३९ ॥

विपत्रलेखा निरलक्तकाधरा निरञ्जनाक्षीरपि बिभ्रतीः श्रियम् ।
निरीक्ष्य रामा बुबुधे नभश्चरैरलङ्कृतं तद्वपुषैव मण्डनम् ॥ ४० ॥

अन्वयः—विपत्रलेखाः निरलक्तकाधराः निरञ्जनाक्षीः अपि श्रियं बिभ्रतीः रामाः निरीक्ष्य नभश्चरैः तद्वपुषा एव मण्डनम् अलङ्कृतम् बुबुधे ।

विग्रहः—विगताः पत्रलेखाः यासां ताः = विपत्रलेखाः । निरलक्तकाः अधराः यासां ताः = निरलक्तकाधराः । निर्गतानि अञ्जनानि = निरञ्जनानि । निरञ्जनानि अक्षीणि यासां ताः = निरञ्जनाक्षीः । तासां वपुषा = तद्वपुषा ।

अर्थः—विपत्रलेखाः = तिलकरहिताः । निरलक्तकाधराः = क्षालितरागाः । निरञ्जनाक्षीः = कज्जलरहितनेत्राः । अपि श्रियं = शोभाम् । बिभ्रतीः = धारयतीः । रामाः = सुराङ्गना । निरीक्ष्य = दृष्ट्वा । नभश्चरैः = गन्धर्वैः । तद्वपुषैव = सुराङ्गनादेहेनैव । मण्डनम् अलङ्कृतम् = अलंकरणमलङ्कृतम् । इति बुबुधे = ज्ञातम् ।

कोषः—गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः' । इत्यमरः ।

हिन्दी—गन्धर्वों ने देखा—जलावगाहन से अप्सराओं के तिलक धुल गये हैं, उनके ओठों की लाली भी मिट गई है और आँखों में काजल नहीं रह गया है फिर भी वे सुन्दर लग रही हैं। इससे गन्धर्वों को ज्ञात हुआ कि भूषण उन्हें शोभित नहीं कर रहे हैं बल्कि उनसे भूषण ही शोभित होता है ॥ ४० ॥

तथा न पूर्वं कृतभूषणादरः प्रियानुरागेण विलासिनीजनः ।
यथा जलार्द्रो नखमण्डनश्रिया ददाह दृष्टीश्च विपक्षयोषिताम् ॥ ४१ ॥

अन्वयः—विलासिनीजनः पूर्वं प्रियानुरागेण कृतभूषणादरः विपक्षयोषिताम् दृष्टीः तथा न ददाह यथा जलार्द्रः नखमण्डनश्रिया ददाह ।

विग्रहः—प्रियस्यानुरागेण = प्रियानुरागेण । कृतः भूषणेषु आदरः येन सः= कृतभूषणादरः । विपक्षाः याः योषितस्तासाम् = विपक्षयोषिताम् । जलेन आर्द्रः = जलार्द्रः । नखान्येव मंडनं, तस्य श्रिया = नखमण्डनश्रिया ।

अर्थः—विलासिनीजनः = अप्सरोजनः । पूर्वम् = जलविहारात् प्राक् । प्रियानुरागेण = प्रियतमप्रेम्णा । कृतभूषणादरः = कृताभूषणासक्तिः । विपक्ष-योषिताम् = सपत्नीनाम् । दृष्टिः = चक्षूंषि । तथा न ददाह = तादृशं न दुःखी-चकार । यथा = यादृशं जलार्द्रः = जलसिक्तः सन् । नखमण्डनश्रिया = नखक्षत-शोभया, ददाह = तापयामास । अत्र विषमालङ्कारः ।

कोषः—'पुनर्भवः कररुहो नखोऽस्त्रि नखरोऽस्त्रियाम्' इत्यमरः ।

हिन्दी—प्रियानुराग से रमणियों के आभूषणों को प्रियतमों ने सुधार दिया था परन्तु आभूषणों का सुधारना सपत्नियों को उतना नहीं खला जितना कि सौतों के शरीर पर नखक्षत ( नाखून के चिह्न ) जल से भीगा हुआ परिताप करने लगा ॥ ४१ ॥

शुभाननाः साम्बुरुहेषु भीरवो विलोलहाराश्चलफेनपंक्तिषु ।
नितान्तगौर्यो हृतकुङ्कुमेष्वलं न लेभिरे ताः परभागमूर्मिषु ॥ ४२ ॥

अन्वयः—शुभाननाः विलोलहारा नितान्तगौर्यः भीरवः ताः साम्बुरुहेषु चलफेनपंक्तिषु हृतकुङ्कुमेषु ऊर्मिषु अलम् परभागम् न लेभिरे ।

विग्रहः—शुभानि आननानि यासां ताः = शुभाननाः । विलोलाः हाराः यासां ताः = विलोलहाराः । नितान्तं गौर्यः = नितान्तगौर्यः । अम्बुरुहैः सहितेषु= साम्बुरुहेषु । चलाः फेनपंक्तयः येषु तेषु = चलफेनपंक्तिषु । हृतानि कुङ्कुमानि यैस्तेषु = हृतकुंकुमेषु ।

अर्थः—शुभाननाः = वराननाः । विलोलहाराः = लोलमालाः । नितान्तगौर्यः= अत्यन्तमरुणाः । भीरवः = भीताः । ताः = स्त्रियः साम्बुरुहेषु = सकमलेषु । चलफेनपंक्तिषु = चंचलफेनराजिषु, हृतकुंकुमेषु = दूरीकृतपरागेषु । ऊर्मिषु = तरङ्गेषु । अलम् = अत्यर्थम् । परभागम् = गुणोत्कर्षम् । न लेभिरे = न प्रापुः । अत्र सामान्ययथासंख्ययोरङ्गाङ्गिभावेन संकरः ।

कोष:—'गौरोऽरुणे सिते पीते' इति वैजयन्ती। 'परभागो गुणोत्कर्ष:' इति यादव:।

हिन्दी—सुन्दर मुखों वाली डरी हुई वे अप्सरायें जिनके वक्ष:स्थल पर हार लहरा रहे थे और जो अत्यन्त गौर वर्ण की थीं, कमल-युक्त चपल तरंगित तथा कुंकुमरज को धोने वाली लहरों में पर्याप्त गुणोत्कर्ष प्राप्त नहीं कर सकी ॥४२॥

ह्रदाम्भसि व्यस्तवधूकराहते रवं मृदङ्गध्वनिधीरमुज्झति।
मुहु: स्तनैस्तालसमं समाददे मनोरमं नृत्यमिव प्रवेपितम् ॥ ४३ ॥

अन्वय:—व्यस्तवधूकराहते ह्रदाम्भसि मृदङ्गध्वनिधीरम् रवम् उज्झति मुहु स्तनै: तालसमम् मनोरमं नृत्यम् इव प्रवेपितं समाददे।

विग्रह:—व्यस्ताभ्यां वधूकराभ्याम् आहते = व्यस्तवधूकराहते। ह्रदस्याम्भ स्तस्मिन् = ह्रदाम्भसि। मृदंगस्य ध्वनि: = मृदंगध्वनि: तद्वद्धीरम् = मृदंगध्वनिधीरम्। तालस्य समम् = तालसमम्।

अर्थ:—व्यस्तवधूकराहते = विपर्यासितवधूहस्तताडिते। ह्रदाम्भसि = ह्रदजले। मृदङ्गध्वनिधीरम् = मृदङ्गवाद्यवद्गभीरम्। रवम् = ध्वनिम्। उज्झति = मुञ्चति ध्वनति सति। मुहु:=पुन: पुन:। स्तनै: = पयोधरै:, तालसमम् = तालसदृशम्। मनोरमम् = मनोहारि। नृत्यम् इव = नृत्यसमम्। प्रवेपितम् = प्रकम्प:, समाददे= स्वीकृतम्। अत्रोपमालङ्कार:।

कोष:—'ताल: कालक्रियामानम्' इत्यमर:।

हिन्दी—जलविहार करते समय अप्सरायें अपने व्यस्त ( हथेली नीचे करके ) हाथों से जल पर अभिघात ( चोट ) करती थीं, जिससे जल से मृदङ्ग के समान गम्भीर ध्वनि उत्पन्न हो रही थी, इस ध्वनि से तालसाम्य करते हुए उन अप्सराओं के स्तन बारम्बार मनोरम नाच करते हुए से हिल रहे थे ॥ ४३ ॥

श्रिया हसद्भि: कमलानि सस्मितैरलङ्कृताम्बु: प्रतिमागतैर्मुखै:।
कृतानुकूल्या सुरराजयोषितां प्रसादसाफल्यमवाप जाह्नवी ॥ ४४ ॥

अन्वय:—श्रिया कमलानि हसद्भि: सस्मितै: प्रतिमागतै: मुखै: अलंकृताम्बु: सुरराजयोषितां कृतानुकूल्या जाह्नवी प्रसादसाफल्यम् अवाप।

विग्रहः—अलंकृतानि अम्बूनि यस्याः सा=अलंकृताम्बुः। सुरराजस्य योषितः, तासाम् = सुरराजयोषिताम्। कृतम् आनुकूल्यम् यया सा=कृतानुकूल्या, सफलस्य भावः साफल्यम्, प्रसादस्य साफल्यमिति=प्रसादसाफल्यम्।

अर्थः—श्रिया=शोभया। कमलानि=पङ्कजानि। हसद्भिः=उपहसद्भिः। सस्मितैः=समृदुहासैः। प्रतिमागतैः = प्रतिबिम्बगतैः। मुखैः=आननैः। अलंकृताम्बुः=शोभिताम्बुः। सुरराजयोषिताम्=अप्सरसाम्। कृतानुकूल्या= कृतोपकारा। जाह्नवी=भगीरथी। प्रसादसाफल्यम्=स्वच्छन्दसफलताम्, अवाप = प्राप। अत्र काव्यलिङ्गमलङ्कारः।

कोषः—'प्रतिमानं प्रतिबिम्बं प्रतिमा' इत्यमरः

हिन्दी—शोभा से कमलदलों का उपहास करते हुए सस्मित एवं जल में प्रतिबिम्बित सुरसुन्दरियों के मुखों से शोभित जलवाली गङ्गा ने, जो कि जलविहार में सुरसुन्दरियों की अनूकूलता कर रही थी, अपनी जलस्वच्छता का साफल्य प्राप्त किया ॥ ४४ ॥

परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः।
उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम् ॥४५॥

अन्वयः—परिस्फुरन्मीनविघट्टितोरवः त्रासविलोलदृष्टयः कम्पितपाणिपल्लवाः सुराङ्गनाः सखीजनस्य अपि विलोकनीयताम् उपाययुः।

विग्रहः—परितः स्फुरद्भिः मीनैः विघट्टिताः ऊरवः यासां ताः=परिस्फुरन्मीनविघट्टितोरवः। त्रासेन विलोलाः दृष्टयः यासां ताः=त्रासविलोलदृष्टयः। पाणयः पल्लवाः इव=पाणिपल्लवाः, कम्पिताः पाणिपल्लवाः यासां ताः= कम्पितपाणिपल्लवाः।

अर्थः—परिस्फुरन्मीनविघट्टितोरवः=परितः विवर्तमानमत्स्यविघट्टितजघनाः। त्रासविलोलदृष्टयः=भयचञ्चलनेत्राः। कम्पितपाणिपल्लवाः=कम्पितकरदलाः, सुराङ्गनाः=देवाङ्गनाः। सखीजनस्य आलीजनस्यापि। विलोकनीयताम्=सुदृष्टिगोचरताम्। उपाययुः=अगच्छन्। अत्र स्वभावोक्तिरलङ्कारः।

कोषः—'झषो मत्स्यो मीनो वैसारिणोऽण्डजः' इत्यमरः।

हिन्दी—जलविहार करते समय इधर-उधर उछलती हुई मछलियों से जाँघें टकरा जाने पर सुराङ्गनायें डरकर चञ्चलता से देखने लगती थीं और अपने

सुन्दर हाथ झकझोरने लगती थीं। उनका यह कौतुक सखियों तक को मनोरम लगता था, फिर प्रियजनों का तो कहना ही क्या ? ॥ ४५ ॥

भयादिवाश्लिष्य झषाहतेऽम्भसि प्रियं मुदानन्दयति स्म मानिनी।
अकृत्रिमप्रेमरसाहितैर्मनो हरन्ति रामाः कृतकैरपीहितैः ॥ ४६ ॥

अन्वयः—मानिनी अम्भसि झषाहते भयात् इव मुदा प्रियम् आश्लिष्य आनन्दयति स्म। रामाः अकृत्रिमप्रेमरसाहितैः कृतकैः अपि ईहितैः मनः हरन्ति।

विग्रहः—अकृत्रिमो यः प्रेमरसस्तेनाहितैः=अकृत्रिमप्रेमरसाहितैः।

अर्थः—मानिनी=मानं कुर्वती काचित्। अम्भसि=पयसि। झषाहते=मत्स्यताडिते। सति भयात्=भीतेः। इव। मुदा=मोदेन। प्रियम्=प्रियजनम्। आश्लिष्य=आलिंग्य। आनन्दयतिस्म=मोदयतिस्म। रामाः=सुन्दर्यः। अकृत्रिमप्रेमरसाहितैः=अनारोपितप्रेमरसजनितैः। कृतकैः=कृत्रिमैः अपि। ईहितैः=चेष्टितैः। मनः=चित्तम्। हरन्ति=आकर्षन्ति। अत्रार्थान्तरन्यासालङ्कारः। कोषः—'पृथुरोमा झषो मत्स्यः' इत्यमरः।

हिन्दी—कोई मानिनी अप्सरा जल में झष (मछली) से टकराते ही डरी हुई सी उत्सुकता से अपने प्रियतम से चिपट गई। इस प्रकार प्रियतम के आनन्द की सीमा न रही। रमणियाँ वास्तविक प्रेम होने पर बनावटी प्रेमचेष्टाओं द्वारा भी मन को मोह लेती हैं ॥ ४६ ॥

तिरोहितान्तानि नितान्तमाकुलैरपां विगाहादलकैः प्रसारिभिः।
ययुर्वधूनां वदनानि तुल्यतां द्विरेफवृन्दान्तरितैः सरोरुहैः ॥ ४७ ॥

अन्वयः—अपां विगाहात् नितान्तम् आकुलैः प्रसारिभिः अलकैः तिरोहितान्तानि वधूनां वदनानि द्विरेफवृन्दान्तरितैः सरोरुहैः तुल्यतां ययुः।

विग्रहः—तिरोहिताः अन्ता येषां=तिरोहितान्तानि। द्विरेफाणां वृन्दानि द्विरेफवृन्दानि, तैः अन्तरितानि तैः=द्विरेफवृन्दान्तरितैः।

अर्थः—अपां=जलानाम्। विगाहात्=निमज्जनात्। नितान्तम्=नितराम्। आकुलैः=व्याकुलैः। प्रसारिभि=आयतैः। अलकैः=केशैः। तिरोहितान्तानि=छन्नप्रान्तानि। वधूनां=देवाङ्गनानाम्। वदनानि=मुखानि। द्विरेफवृन्दान्तरितैः=भ्रमरवृन्दच्छन्नैः। सरोरुहैः=कमलैः। तुल्यताम्=समताम्। ययुः=प्रापुः। अत्रोपमालङ्कारः। कोषः—'आपः स्त्री भूम्नि वार्वारि' इत्यमरः।

हिन्दी—जलावगाहन से इधर-उधर छिटक कर फैले हुए केशजाल से अप्सराओं के मुखों पर किनारे के भाग ढक गये थे। इस प्रकार रमणियों के केशाच्छन्न मुख भौंरों से आच्छादित कमल जैसे लग रहे थे ॥ ४७ ॥

करौ धुनाना नवपल्लवाकृती पयस्यगाधे किल जातसम्भ्रमा।
सखीषु निर्वाच्यमधार्ष्ट्यदूषितं प्रियाङ्गसंश्लेषमवाप मानिनी ॥ ४८ ॥

अन्वयः—मानिनी पयसि अगाधे किल जातसम्भ्रमा नवपल्लवाकृती करौ धुनाना सखीषु निर्वाच्यम् अधार्ष्ट्यदूषितं प्रियाङ्गसंश्लेषम् अवाप।

विग्रहः—जातः सम्भ्रमो यस्यां सा=जातसम्भ्रमा। नवपल्लवानाम् इवाकृतिर्ययोस्तौ = नवपल्लवाकृती। धार्ष्ट्येन दूषितो न भवतीत्यधार्ष्ट्यदूषितस्तम्=अधार्ष्ट्यदूषितम्। प्रियस्य अङ्गे यः संश्लेषस्तम् = प्रियाङ्गसंश्लेषम्।

अर्थः—मानिनी = काचित्। पयसि = अम्भसि। अगाधे=गम्भीरे सति, किल = आलीकम्। जातसम्भ्रमा = उत्पन्नभया। नवपल्लवाकृती: = नवदलसदृशौ। करौ=हस्तौ। धुनाना =कम्पयन्ती। सखीषु = सखीविषये। निर्वाच्यम्= अवाच्यम्। अधार्ष्ट्यदूषितम् = धार्ष्ट्यदूषणरहितम्। प्रियाङ्गसश्लेषम् = प्रियालिङ्गनम्। अवाप = प्राप।

कोषः—'पयः कीलालममृतं जीवनं भुवनं वनम्'। इत्यमरः।

हिन्दी—किसी दूसरी मानवती अप्सरा ने गहरे पानी में पहुंच जाने पर डूबने के भयसे सहसा अपने हाथों को पटक-पटककर अपने प्रिय का आलिङ्गन कर लिया। इस पर उसकी सखियों ने भी उसे धृष्ट नहीं कहा ॥ ४८ ॥

प्रियैः सलीलं करवारिवारितः प्रवृद्धनिःश्वासविकम्पितस्तनः।
सविभ्रमाधूतकराग्रपल्लवो यथार्थतामाप विलासिनीजनः ॥ ४९ ॥

अन्वयः—प्रियैः सलीलं करवारिवारितः प्रवृद्धनिःश्वासविकम्पितस्तनः सविभ्रमाधूतकराग्रपल्लवः विलासिनीजनः यथार्थताम् आप।

विग्रहः—लीलया सहितं सलीलम्। करयोः नीतानि यानि वारीणि=करवारीणि, तैः वारितः सः = करवारिवारितः। प्रकर्षेण वृद्धैः निःश्वासैः विकम्पितौ स्तनौ यस्य सः = प्रवृद्धनिःश्वासविकम्पितस्तनः। सविभ्रमम् आधूतानि कराग्रपल्लवानि येन सः = सविभ्रमाधूतकराग्रपल्लवः। विलसनशोला = विलासिनी सैव जनः विलासिनीजनः।

अर्थः—प्रियैः = कामिभिः। सलीलम् = लीलया सहितम्। करिवारि-

वारित: = अञ्जलिजलावरुद्ध: । प्रवृद्धनि:श्वासविकम्पितस्तन: = सन्ततनि:श्वासकम्पमानपयोधर: । सविभ्रमाधूतकराग्रपल्लव: = सविलासकम्पितपाणिपल्लव: । विलासिनीजन: = प्रियाजन: । यथार्थताम् = विलासत्वम् । आप = प्राप ।

हिन्दी—खेल-खेल में प्रियतमों ने उन अप्सराओं को अञ्जलि में भरे पानी से छींटे मार कर रोक लिया था जिससे जोर-जोर श्वास लेने के कारण अप्सराओं के स्तन हिल रहे थे और वे हाव भाव सहित अपने हाथों से प्रियतमों को ऐसा करने से रोकती हुई 'विलासिनी' शब्द को सार्थक कर रही थीं ॥ ४९ ॥

उदस्य धैर्यं दयितेन सादरं प्रसादितायाः करवारिवारितम् ।
मुखं निमीलन्नयनं नतभ्रुवः श्रियं सपत्नीवदनादिवाददे ॥ ५० ।

अन्वयः—दयितेन धैर्यम् उदस्य सादरं प्रसादितायाः नतभ्रुवः करवारिवारितम् निमीलन्नयनं मुखं सपत्नीवदनात् इव श्रियम् आददे ।

विग्रहः—नते भ्रुवौ यस्यास्तस्याः = नतभ्रुवः । करवारिवारितम् = करवारिभिर्वारितम्=करवारिवारितम् । निमीलती नयने यस्य तत् = निमीलन्नयनम् ।

अर्थः—दयितेन = प्रियेण । धैर्यम् = काठिन्यम् । उदस्य = अपनीय सादरम्= आदरसहितम् । प्रसादितायाः = प्रसन्नतां नीतायाः । नतभ्रुवः = अवनतभ्रूस्त्रियः । करवारिवारितम् = अञ्जलिरुद्धम् । विमीलन्नयनम् = निमीलितनेत्रम् । मुखम् = आननम् । सपत्नीवदनात् इव = विपक्षमुखादिव । श्रियम् = शोभाम् । आददे = जग्राह । अत्रोत्प्रेक्षालङ्कारः ।

कोषः—'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् ।' इत्यमरः ।

हिन्दी—एक प्रेमी गन्धर्व ने अधीर होकर अपनी प्रेयसी पर जल छींटना आरम्भ कर दिया । उस प्रेयसी ने प्रसन्न होकर मुंह नीचे झुका लिया और दोनों हाथों से अपना मुख ढक लिया । इस प्रकार ढका हुआ उसका मुख सौत के मुख ढकने के समान शोभित हो रहा था ॥ ५० ॥

विहस्य पाणौ विधृते धृताम्भसि प्रियेण वध्वा मदनार्द्रचेतसः ।
सखीव काञ्ची पयसा घनीकृता बभार वीतोच्चयबन्धमंशुकम् ॥ ५१ ॥

अन्वयः—धृताम्भसि पाणौ प्रियेण विहस्य विधृते मदनार्द्रचेतसः वध्वाः वीतोच्चयबन्धम् अंशुकम् पयसा घनीकृता कांची सखी इव बभार ।

विग्रहः—मदनेन आर्द्रं चेतः यस्यास्तस्याः=मदनार्द्रचेतसः वीतः उच्चयबन्धो यत्र तद् = वीतोच्चयबन्धम् ।

अर्थः—धृताम्भसि = गृहीतजले । पाणौ = करे । प्रियेण=गन्धर्वेण । विहस्य= हसित्वा । विधृते = अवलम्बिते सति । मदनार्द्रचेतसः = मदनपरवशायाः । वध्वाः= अप्सरसः । वीतोच्चयबन्धम् = मुक्तनीविग्रन्थिम् । अंशुकम् = वस्त्रम् । पयसा = जलेन । घनीकृता = आवृता । काञ्ची = मेखला । सखी इव = सखीसदृशम् । बभार=जग्राह । कोषः—'मदनो मन्मथो मारः' इत्यमरः ।

हिन्दी—जल का छींटा मारते समय प्रेयसी के जलभरे हाथों को प्रियतम ने हँसकर पकड़ लिया । कामसक्ता प्रेयसी का इतने में नीवीबन्धन ( नारा ) ढीला पड़ गया परन्तु जल से भींग कर खिंची हुई काञ्ची ( करधनी ) ने सखी के समान ही उसकी वस्त्रग्रन्थि को ज्यों का त्यों बना रहने दिया अर्थात् वह विवस्त्र नहीं होने पाई ॥ ५१ ॥

निरञ्जने साचिविलोकितं दृशावयावकं वेपथुरोष्ठपल्लवम् ।
नतभ्रुवो मण्डयतिस्म विग्रहे वलिक्रिया चातिलकन्तदास्पदम् ॥ ५२॥

अन्वयः—नतभ्रुवः विग्रहे निरञ्जने दृशौ साचिविलोकितम् अयावकम् ओष्ठ-पल्लवम् वेपथुः, अतिलकं तदास्पदं ललाटं वलिक्रिया मण्डयति स्म ॥ ५२ ॥

विग्रहः-नते भ्रुवौ यस्यास्तस्याः = नतभ्रुवः । निर्गते अञ्जने ययोस्ते = निरंजने । अविद्यमान यावकमयावकम् । नास्ति तिलको यस्मिस्तत्—अतिलकम् ।

अर्थः—नतभ्रुवः = नताङ्गयाः । विग्रहे वपुषि । निरञ्जने = अंजनरहिते । दृशौ = नेत्रे । साचिविलोकितम् = तिर्यगीक्षणम् । अयावकं = लाक्षारसरहि-तम् । ओष्ठपल्लवम् = ओष्ठदलम् । वेपथुः = कम्पः । अतिलकम् । तदास्पदम् = तिलकस्थानम् । ललाटम् = भालम् । वलिक्रिया = रेखाबन्धः । मण्डयति स्म = शोभयती स्म । कोषः—'तिर्यगर्थे साचि तिरः' इत्यमरः ।

हिन्दी—अप्सराओं के शरीर में अञ्जनरहित दृष्टि को टेढ़ी चितवन शोभित कर रही थी, लाक्षारसरहित ओष्ठपल्लव को कम्पन, तिलकरहितमाथे को ललाट-रेखाओं ने शोभित किया क्योंकि कज्जलादि स्नान करने से छूट गये थे ॥ ५२ ॥

निमीलदाकेकरलोलचक्षुषां प्रियोपकण्ठं कृतगात्रवेपथुः ।
निमज्जतीनां श्वसितोद्धतस्तनः श्रमो नु तासां मदनो नु पप्रथे ॥५३॥

अन्वयः—प्रियोपकण्ठं निमज्जतीनां निमीलदाकेकरलोलचक्षुषां तासां कृत-गात्रवेपथुः श्वसितोद्धतस्तनः श्रमः नु मदनो नु पप्रथे ।

विग्रहः—निमीलन्ति आकेकराणि लोलानि चक्षूंषि यासां तासाम् = निमील-

दाकेकरलोलचक्षुषाम् । कृत: गात्राणां वेपथु: येन स: = कृतगात्रवेपथु: । श्वसितैः उद्धतौ स्तनौ येन स: = श्वसितोद्धतस्तन: ।

अर्थः--प्रियोपकण्ठ=प्रियसमीपे । निमज्जतीनाम्=विगाहमानानाम् । निमीलदाकेकरलोलचक्षुषाम्=निमिषदाकेकरसुन्दरचक्षुषाम् । तासां=स्त्रीणाम् । कृतगात्रवेपथुः=कृतशरीरकम्प: । श्वसितोद्धतस्तन:=निश्वासोत्पतितपयोधर: । श्रमः=खेदः । नु=इति तर्के । मदनो नु=मारो नु. पप्रथे=प्रादुर्बभूव । अत्र सन्देहालंकार: ।

कोष:—आकेकरलक्षणं तु नृत्यविलासे = 'दृष्टिराकेकरा किंचित् स्फुटापाङ्गे प्रसारिता । मीलितार्धपुटा लोके ताराव्यावर्त्तनोत्तरा ।।' इति ।

हिन्दी—अपने-अपने प्रियतम के पास जलविहार करती हुई सुरागनाओं की अधखुली और आकेकरयुक्त सुन्दर आँखें थीं, शरीर कांप रहे थे और श्वास लेने से स्तन हिल रहे थे । न जाने श्रम के कारण यह सब हो रहा था या कामदेव के कारण ।। ५३ ।।

प्रियेण सिक्ता चरमं विपक्षतश्चुकोप काचिन्न तुतोष सान्त्वनैः ।
जनस्य रूढप्रणयस्य चेतसः किमप्यमर्षोऽनुनये भृशायते ।। ५४ ।।

अन्वय:–काचित् प्रियेण विपक्षतः चरमं सिक्ता चुकोप, सान्त्वनैः न तुतोष । रूढप्रणयस्य जनस्य चेतसः अमर्षः किमपि अनुनये भृशायते ।

विग्रह:—रूढ: प्रणय: यस्य, तस्य = रूढप्रणयस्य ।

अर्थः—काचित् = प्रिया । प्रियेण—गन्धर्वेण । विपक्षतः = सपत्नीतः । चरमं = पश्चात् । सिक्ता सती = जलार्द्रा सती । चुकोप=क्रोधं चकार । सान्त्वनैः= अनुनयैः । न तुतोष=न तुष्टा बभूव । रूढप्रणयस्य=गाढप्रेम्णः । जनस्य=लोकस्य । चेतसः = मनसः । अमर्षः=प्रकोपः । किमपि = कुतोऽपि हेतोः । अनुनये = विनये । भृशायते = गाढीभवति । कोष:—'कोपक्रोधामर्षरोषप्रतिघा' इत्यमरः ।

हिन्दी—कोई अप्सरा अपने पति ( प्रियतम ) के द्वारा सौत को भिगोया देखकर अत्यन्त क्रुद्ध हुई, खुशामद करने पर भी प्रसन्न नहीं हुई । प्रगाढ प्रणयी व्यक्ति के चित्त का क्रोध अनुनय विनय करने पर और बढ़ता ही है ।। ५४ ।।

इत्थं विहृत्य वनिताभिरुदस्यमानं पीनस्तनोरुजघनस्थलशालिनीभिः ।
उत्सर्पितोर्मिचयलंघिततीरदेशमौत्सुक्यनुन्नमिव वारि पुरः प्रतस्थे ।।५५।।

अन्वय:—पीनस्तनोरुजघनस्थलशालिनीभिः वनिताभिः इत्थं विहृत्य उदस्यमानम् उत्सर्पितोर्मिचयलंघिततीरदेशम् वारि औत्सुक्यनुन्नम् इव पुरः प्रतस्थे ।

विग्रहः—पीनैः स्तनैः उरुभिः जघनैः च शालन्ते ताभिः=पीनस्तनोरुजघन-शालिनीभिः। उत्सर्पितैः ऊर्मिचयैः लंघितः तीरदेशः येन तत् उत्सर्पितोर्मिनिचय-लंघिततीरदेशम्। औत्सुक्येन नुन्नम्=औत्सुक्यनुन्नम्।

अर्थः—पीनस्तनोरुजघनस्थलशालिनीभिः=पीवरपयोधरोरुजघनशोभिनीभिः। वनिताभिः=अप्सरोभिः इत्थम्=अनेन प्रकारेण। विहृत्य=जलविहारं कृत्वा। उदस्यमानं=नुद्यमानम्। उत्सर्पितोर्मिचयलंघिततीरदेशम्=उपरिभावं प्रापित-तरंगनिचयप्रापिततीरदेशम्। वारि=जलम्। औत्सुक्यनुन्नम्=विहारसहिष्णुत्व-प्रेरितम। इव। पुरः=अग्रे। प्रतस्थे=प्रस्थितम्।

कोषः—'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः' इत्यमरः।

हिन्दी—इस प्रकार उन्नत उरोजों और विशाल जांघों वाली अप्सराओं के द्वारा जल विहार करने पर क्षुब्ध होकर सुरसरिता का जल ऊँची ऊँची लहरों में उठकर तट को पार करता हुआ इस प्रकार आगे बढ़ गया जैसे कि वह रमणियों के वियोग को कौतुक के कारण सहन न कर पा रहा हो ॥ ५५ ॥

तीरान्तराणि मिथुनानि रथाङ्गनाम्नां
नीत्वा विलोलितसरोजवनश्रियस्ताः।
संरेजिरे सुरसरिज्जलधौतहारा-
स्तारावितानतरला इव यामवत्यः ॥ ५६ ॥

अन्वयः—रथाङ्गनाम्नां मिथुनानि तीरान्तराणि नीत्वा विलोलितसरोज-वनश्रियः ताः सुरसरिज्जलधौतहारा ताः तारावितानतरलाः यामवत्यः इव संरेजिरे।

विग्रहः—अन्यानि तीराणि=तीरान्तराणि। सरोजवनानां श्रियः सरोज-वनश्रियः। विलोलिताः सरोजवनश्रियः याभिस्ताः=विलोलितसरोजवनश्रियः। सुरसरितः जलैः धौता हाराः यासां ताः=सुरसरिज्जलधौतहाराः। ताराणां वितानैः तरलाः याः ताः=तारावितानतरलाः।

अर्थः—रथाङ्गनाम्नां=चक्रवाकानाम्। मिथुनानि=युग्मानि। तीरान्त-राणि=अन्यानि तीराणि। नीत्वा=नियोज्य। विलोलितसरोजवनश्रियः= विलुलितकमलनयनशोभाः। सुरसरिज्जलधौतहाराः=गङ्गाजलक्षालितमुक्तावलयः। ताः=स्त्रियः। तारावितानतरलाः=उडुगणभासुराः। यामवत्यः=यामिन्यः। इव संरेजिरे=विरेजिरे।

कोष:—'तरलो भासुरो हीरे चञ्चलेऽपि' इति वैजयन्ती ।

हिन्दी—जलक्रीड़ा में अप्सराओं ने चकई-चकवाओं को दूसरे तटों पर भगा दिया । कांपती हुई वे अप्सरायें हिलते हुए कमल जैसी सुन्दर लग रही थीं। गङ्गाजल से उनके धवल हार घुल गये थे । इस प्रकार वे अप्सराएँ नक्षत्रों से चमकने वाली रात्रि जैसी सुन्दर लग रही थीं ।। ५६ ।।

संक्रान्तचन्दनरसाहितवर्णभेदं विच्छिन्नभूषणमणिप्रकरांशुचित्रम् ।
बद्धोर्मिनाकवनितापरिभुक्तमुक्तं सिन्धोर्बभार सलिलं शयनीयलक्ष्मीम् ॥

अन्वय:—संक्रान्तचन्दनरसाहितवर्णभेदं विच्छिन्नभूषणमणिप्रकरांशुचित्रम् बद्धोर्मिनाकवनितापरिभुक्तमुक्तं सिन्धोः सलिलं शयनीयलक्ष्मीं बभार ।

विग्रह:—संक्रान्तैः चन्दनरसैः आहितः वर्णभेदो यस्य तत् = संक्रान्तचन्दनरसाहितवर्णभेदम् । विच्छिन्नानि भूषणानि = विच्छिन्नभूषणानि । तेषां ये मणिप्रकराः तेषामंशुभिः चित्रम् इति = विच्छिन्नभूषणमणिप्रकरांशुचित्रम् । बद्धा उर्मयः यस्मिस्तत् = बद्धोर्मि । नाकवनिताभिः पूर्वं परिभुक्तं पश्चात् मुक्तम् तत् = नाकवनितापरिभुक्तमुक्तम् शेरतेऽत्रेति शयनीयम्, तस्य या लक्ष्मीः ताम् = शयनीयलक्ष्मीम् ।

अर्थ:—संक्रान्तचन्दनरसाहितवर्णभेदम् = संक्रान्तमलयजद्रवरहितरूपान्तरम् । विच्छिन्नभूषणमणिप्रकरांशुचित्रम् = त्रुटिताभूषणमणिगणकिरणनानावर्णम् । बद्धोर्मि = तरंगितम् । नाकवनितापरिभुक्तमुक्तं = सुराङ्गनाभिः पूर्वं परिभुक्तम् पश्चात् मुक्तम् । सिन्धोः = गङ्गानद्याः । सलिलम् = जलम् । शयनीयलक्ष्मीम् = तल्पशोभाम् । बभार = दधार । अत्र निदर्शनालङ्कारः ।

कोष:—'प्रतीपदर्शिनी वामा वनिता महिला तथा' इत्यमरः ।

हिन्दी—अप्सराओं की जलक्रीडा से उनके अंगों में लगे हुए चन्दन अंगरागादि से गङ्गाजल का रंग बदल गया तथा उनकी टूटी हुई मणियों के किरणजाल से वह अनेक वर्ण का दिखाई पड़ने लगा । इस भाँति तरंगित और देवांगनाओं के परिभोग से छूटा हुआ गङ्गाजल सुन्दर पलंग के समान लग रहा था ।। ५७ ।।

इति भारविकृतौ सुधाटीकासंवलिते किरातार्जुनीये अष्टमः सर्गः ।

## नवमः सर्गः

वीक्ष्य रन्तुमनसः सुरनारीरात्तचित्रपरिधानविभूषाः।
तत्प्रियार्थमिव यातुमथास्तं भानुमानुपपयोधि ललम्बे ॥ १ ॥

मल्लि०—वीक्ष्येति ॥ अथ जलक्रीडानन्तरं भानुमानंशुमान् आत्तचित्रपरिधानविभूषाः स्वीकृतविविधवस्त्राभरणाः। सुरतसंनाहतीरित्यर्थः। अत एव रन्तुमनसः। 'समानकर्तृकेषु तुमुन्'। 'लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि' इति मकारलोपः। सुरनारीः वीक्ष्य तासां प्रियार्थं तत्प्रियार्थमिव। अवसरदानरूपं प्रियं कर्तुमिवेत्यर्थः। फलोत्प्रेक्षेयम्। अस्तमदर्शनम्। मकारान्तमव्ययमेतत्। यातुं प्राप्तुम्। उपपयोधि पयोधिसमीपे ललम्बे सस्रंसे। अस्मिन्सर्गे स्वागतावृत्तम्—स्वागतेति रनभाद् गुरुयुग्मम्' इति लक्षणात्।

हिन्दी—जलक्रीडाके बाद विचित्र वस्त्र और अलङ्कारोंको पहनी हुई सुरसुन्दरियोंको रमणके अभिलाषसे युक्त देखकर भगवान् सूर्य मानों उनकी प्रीतिके लिए अस्त होनेके लिए समुद्रके पास लटक गये ॥ १ ॥

मध्यमोपलनिभे लसदंशावेकतश्च्युतिमुपेयुषि भानौ।
द्यौरुवाह परिवृत्तिविलोलां हारयष्टिमिव वासरलक्ष्मीम् ॥ २ ॥

मल्लि०—मध्यमेति ॥ मध्यमोपलनिभे नायकमणिसदृशे। 'निभसंकाशनीकाशप्रतीकाशोपमादयः' इत्यमरः। 'शर्करायां स्त्रियां प्रोक्तः पुंस्यश्मन्युपलो मणौ' इति वैजयन्ती। लसदंशौ प्रसरद्रश्मौ भानौ। एकत एकस्मिन्भागे च्युतिं स्रस्ततामुपेयुषि प्राप्ते सति द्यौः परिवृत्या मध्याह्लातिक्रमेण विलोलां गत्वरीम्। अन्यत्र, गात्रस्य तिर्यगावृत्त्या मुहुश्चलन्तीम्। वासरलक्ष्मीं हारयष्टिं मुक्तावलीमिवोवाह वहति स्म।

हिन्दी—हारकी नायकमणिके सदृश किरणसे शोभित सूर्यके एक भागमें पतनको प्राप्त होनेपर द्यो ( आकाश ) रूप बालाने मध्याह्न समयके अतिक्रमण करनेसे गमनशील ( दूसरे पक्षमें ) शरीर को तिरछा करनेसे बारंबार चलती हुई दिनकी शोभाको मानों मोतियोंकी मालाकी तरह धारण कर लिया ॥ २ ॥

अंशुपाणिभिरतीव पिपासुः पद्मजं मधु भृशं रसयित्वा।
क्षीबतामिव गतः क्षितिमेष्यल्लोहितं वपुरुवाह पतङ्गः ॥ ३॥

मल्लि०--अंशुपाणिभिरिति ॥ पतङ्गः सूर्यः। 'पतङ्गः पक्षिसूर्ययोः' इत्यमरः। अतीव निर्भरम्। 'अत्यतीव च निर्भरे' इत्यमरः। पातुमिच्छुः पिपासुस्तृषितः सन्। पिबतेः सन्नन्तादुप्रत्ययः। अंशव एव पाणयस्तैः पद्मेषु जातं पद्मजं मधु मद्यमेव। मध्विति श्लिष्टं रूपकम्। मकरन्दमद्यमित्यर्थः। 'मधु मद्ये पुष्परसे' इत्यमरः। भृशमत्यन्तं रसयित्वास्वाद्य क्षीबतां मत्तत्वं गत इवेत्युत्प्रेक्षा। 'मत्ते शौण्डोत्कटक्षीबाः' इत्यमरः। क्षितिमेष्यन् गमिष्यन् लोहितं रक्तं वपुरुवाह। यथा मत्तः क्षीबतया क्षितौ लुठति रज्यते च तद्वदिति भावः। सूर्यस्य क्षितिविलयनमस्तमय इत्यागमः। अत्र रूपकोत्प्रेक्षयोः सापेक्षत्वादङ्गाङ्गिभावेन संकरः।

हिन्दी—सूर्यने अत्यन्त तृषासे युक्त होकर अपने किरण रूप हाथोंसे कमलोंमें उत्पन्न मधु ( मद्य )का अत्यन्त आस्वाद कर मतवाले-से होकर जमीनपर गिरते हुए लाल शरीरको धारण कर लिया ॥ ३ ॥

गम्यतामुपगते नयनानां लोहितायति सहस्रमरीचौ।
आससाद विरहय्य धरित्रीं चक्रवाकहृदयान्यभितापः ॥ ४ ॥

मल्लि०—गम्यतामिति ॥ सहस्रमरीचौ सूर्ये। लोहितो भवतीति लोहितायति। 'लोहितादिडाज्भ्यः क्यष्' इति क्यष्। 'वा क्यषः' इति परस्मैपदे शतृप्रत्ययः। अत एव नयनानां गम्यतामुपगते दर्शनीयतां प्राप्ते सति। अभितापो धरित्रीं विरहय्य विहाय। 'ल्यपि लघुपूर्वात्' इत्ययादेशः। चक्रवाकहृदयान्याससाद प्राप। अत्र धरित्र्या यादृशस्तीव्रार्ककरकृतसंतापस्तादृक्चक्रवाकहृदयेषु विरहसंतापः संजात इति परमार्थः। परंतु तदुपक्रमानन्तरमेतस्याविर्भावात् स एवात्र संक्रान्त इत्यभेदाध्यवसायेनोपदेशः। अत एव भेदेऽभेदरूपातिशयोक्तिरलङ्कारः।

हिन्दी—सूर्यके लाल होकर देखनेके योग्य होने पर तापने पृथ्वीको छोड़कर चक्रवाक ( चकवा ) पक्षीके हृदयको प्राप्त कर लिया ॥ ४ ॥

मुक्तमूललघुरुज्झितपूर्वपश्चिमे नभसि संभृतसान्द्रः।
सामिमज्जति रवौ न विरेजे खिन्नजिह्म इव रश्मिसमूहः ॥ ५ ॥

मल्लि०—मुक्तेति ॥ रवौ सामिमज्जति अर्धास्तमिते सति। 'सामि त्वर्धे

जुगुप्सायाम्' इत्यमरः। मुक्तं त्यक्तप्रायं मूलमाश्रयभूतो रविः। अन्यत्र, स्वामी, येन सोऽत एव लघुरल्पकश्च मुक्तमूललघुरुज्झितपूर्वस्त्यक्तपूर्वदिक्कः। अन्यत्र—त्यक्तपूर्वजनः। पश्चिमे नभसि नभोभागम। अन्यत्र--क्वचिन्नीचस्थले। संभृतः संहतः सन्। अत एव सान्द्रश्च रश्मिसमूहः आश्रितजनश्च ध्वन्यते। खिन्नश्चासौ जिह्मश्च, खिन्नेन दुःखेन जिह्मो वा, दीन इव न विरेजे। अत्र मुक्तमूलत्वादिप्रस्तुतविशेषणसाम्यादप्रस्तुताश्रितजनप्रतीतेः समासोक्तिः। तत्र वाच्यस्य रश्मिसमूहस्याचेतनस्यापि प्रतीयमानेन चेतनेनाभेदाभिधानाद् दुःखितत्वाद्युत्प्रेक्षेति तयोरङ्गाङ्गिभावेन संकरः।

हिन्दी—सूर्यबिम्बके आधे भागका अस्त होनेपर मूल ( आश्रयभूत सूर्य )-का अथवा स्वामीका परित्याग किया हुआ लघु और पूर्वदिशाका परित्याग किया हुआ अथवा पहलेके जनका त्याग किया हुआ आकाशके पश्चिम भागमें अथवा किसी नीचे स्थलमें इकट्ठा होता हुआ गाढ किरणसमूह वा आश्रितजन दुःखसे दीन सा होता हुआ शोभित नहीं हुआ ॥ ५ ॥

कान्तदूत्य इव कुङ्कुमताम्रा सायमण्डलमभित्वरयन्त्यः।
सादरं ददृशिरे वनिताभिः सौधजालपतिता रविभासः॥ ६॥

मल्लि०—कान्तेति ॥ कुङ्कुमवत् कुङ्कुमेन वा ताम्राः। सायस्य सायंकालस्य। 'सायं साये प्रगे प्रातः' इत्यमरः। यन्मण्डलं तत् अभि तदुद्दिश्य त्वरयन्त्यस्त्वरां कारयन्त्यः सौधानां जालैर्गवाक्षैः पतिताः प्रविष्टाः। 'जाल गवाक्ष आनाये' इति वैजयन्ती। रविभासः सूर्यरश्मयः कान्तानां प्रेयसां दूत्य इव वनिताभिः सादरं यथा तथा ददृशिरे दृष्टाः। सायंतनार्कभासां प्रियसमागमसूचकत्वादेव तासु स्त्रीणामादरोऽभवदित्यर्थः।

हिन्दी—कुङ्कुमके सदृश लाल सायंकालके सूर्यमण्डलको उद्देश्य कर शीघ्रता कराती हुई महलोंकी खिड़कियोंसे प्रविष्ट सूर्यकी किरणोंको स्त्रियोंने प्रियकी दूतियोंके समान आदरसे देख लिया ॥ ६ ॥

अग्रसानुषु नितान्तपिशङ्गैर्भूरुहान्मृदुकरैरवलम्ब्य।
अस्तशैलगहनं नु विवस्वानाविवेश जलधिं नु महीं नु ॥ ७ ॥

मल्लि०—अग्रेति ॥ विवस्वान् सूर्योऽग्रेऽस्तशैलशिखरे ये सानवस्तेषु ये भूरुहास्तान्नितान्तपिशङ्गैरत्यन्तारुणैर्मृदुभिः करैरिव करैरंशुहस्तैरिति श्लिष्टरूपकम्।

'बलिहस्तांशवः कराः' इत्यमरः। यद्वा—करैर्मृदुश्लथमवलम्ब्य। अस्त इति शैलोऽस्तशैलः। 'अस्तस्तु चरमक्ष्माभृत्' इत्यमरः। तस्य गहनं नु जलधिं नु महीं न्वाविवेश। तपनस्य पतनसंदेह एव दृष्टः। पतनं तु क्व चास्य तन्न ज्ञायते। शीघ्रभावादिति भावः। अत्र तपने पतनस्यारोप्यमाणस्य गहनाद्यनेकविषयत्वेन संदेहात्संदेहालंकारः।

हिन्दी—सूर्य अस्तपर्वतके शिखरोंमें समथर जमीनोंमें वृक्षोंको बहुत ही पीले कोमल करोंसे हाथोंके समान किरणोंसे शिथिलरूपसे अवलम्बन कर अस्तपर्वतके वनमें वा समुद्रमें अथवा पृथ्वीमें घुस गया ॥ ७ ॥

आकुलश्चलपतत्रिकुलानामारवैरनुदितौषसरागः ।
आययावहरिदश्वविपाण्डुस्तुल्यतां दिनमुखेन दिनान्तः ॥ ८ ॥

मल्लि०—आकुल इति ॥ चलानां कुलायेभ्यः कुलान्प्रति चलतां पतत्रिकुलानां पक्षिसमूहानामारवैः शब्दैराकुलो व्याप्तः। 'अनुदित' शब्देनाभावमात्रम्, 'उषः' शब्देन संध्यामात्रं च विवक्ष्यते। उषसि भव औषसः 'संधिवेला–'इत्यादिना योगविभागादण्प्रत्ययः। अन्यथा कालाट्ठञ्स्यात्। तथा च अनुदितौषसरागोऽविद्यमानसंध्याराग इत्यर्थः। एकत्रापगमादन्यत्रनुदयाच्चेति भावः। अहरिदश्वोऽविद्यमानसूर्यः। एकत्रानुदयात्, अन्यत्रास्तमयाच्चेति भावः। अत एव विपाण्डुः। तिमिरानुदयादिति शेषः। दिनान्तः सायंकालो दिनमुखेन प्रातःकालेन तुल्यतामाययौ। तद्वद्बभूवेत्यर्थः। अत एवोपमालङ्कारः।

हिन्दी—घोंसलेसे घोंसलोंमें चलते हुए पक्षियोंके शब्दोंसे व्याप्त सुबह सन्ध्याकालकी लालियोंसे रहित और सन्ध्यामें सूर्यकी स्थितिसे रहित अतएव पाण्डुतासे रहित सायंकाल प्रातःकालके समान हो गया ॥ ८ ॥

आस्थितः स्थगितवारिदपङ्क्त्या संध्यया गगनपश्चिमभागः ।
सोर्मिविद्रुमवितानविभासा रञ्जितस्य जलधेः श्रियमूहे ॥ ९ ॥

मल्लि०—आस्थित इति ॥ स्थगितवारिदपङ्क्त्या पिहितमेघवृन्दया संध्ययाऽऽस्थित आक्रान्तो व्याप्तो गगनपश्चिमभागः। सोर्मिः। उर्मिसंक्रान्त इत्यर्थः। तया विद्रुमवितानविभासा प्रवालप्रकरकान्त्या रञ्जितस्य स्वसावर्ण्यमापादितस्य जलधेः श्रियमूहे। संध्यया रक्तवर्णत्वादिति भावः। वहतेः कर्तरि लिट्। तत्सदृशीं श्रियमुवाहेत्यर्थः। अत एव निदर्शनालङ्कारः।

हिन्दी—मेघसमूहको आच्छादित करनेवाली सन्ध्यासे व्याप्त आकाशके पश्चिम भागने तरंगोमें संक्रान्त होकर प्रवालसमूहकी कान्तिसे रञ्जित समुद्रकी शोभाको धारण किया ॥ ९ ॥

प्राञ्जलावपि जने नतमूर्ध्नि प्रेम तत्प्रवणचेतसि हित्वा।
संध्ययाऽनुविदधे विरमन्त्या चापलेन सुजनेतरमैत्री ॥ १० ॥

मल्लि०—प्राञ्जलाविति ॥ प्रबद्धोऽञ्जलिर्येन तस्मिन् प्राञ्जलौ बद्धाञ्जलौ। 'तौ युतावञ्जलिः पुमान्' इत्यमरः। 'प्रादिभ्यो धातुजस्य बहुव्रीहिर्वाच्यो वोत्तरपदलोपश्च।' नतमूर्ध्नि नमस्कुर्वाणे तत्प्रवणं तत्र संध्यायामेवाहितं चेतो यस्य तस्मिन्नेवंविधेऽपि जने विषये प्रेम हित्वा विहाय विरमन्त्या निवर्तमानया। 'व्याङ्परिभ्यो रमः' इति परस्मैपदम्। संध्यया चापलेनास्थैर्येण। युवादित्वादण्प्रत्ययः। सुजनादितरो दुर्जनस्तस्य मैत्री सख्यमनुविदधेऽनुचक्रे। कर्मणि लिट्। यथा दुर्जनमैत्री स्निह्यन्तमपि जहाति तद्वत् संध्यापि सेवमानं जनमहासीदित्यर्थः। मित्रस्य कर्म मैत्री। अवन्तान्ङीप्। अत्र संध्यादुर्जनमैत्र्योश्चापलं समानधर्मोऽनुविधानम्। अत एवार्थरूपेणेयमुपमा।

हिन्दी—हाथ जोड़नेवाले, नमस्कार करनेवाले और सन्ध्यामें चित्त देनेवाले जनमें भी प्रेम छोड़कर लौटती हुई संध्याने अस्थिरतासे दुर्जनकी मैत्रीका अनुकरण कर लिया ॥ १० ॥

औषसातपभयादपलीनं वासरच्छविविरामपटीयः।
संनिपत्य शनकैरथ निम्नादन्धकारमुदवाप समानि ॥ ११ ॥

मल्लि०—औषसेति ॥ औषसात् प्राभातिकादातपाद्भयं तस्मादिवेत्युत्प्रेक्षा। अपलीनं क्वचिद्गूढं वासरच्छवेरातपस्य विरामाद्धेतोः पटीयः प्रभविष्णुतरम्। अन्धं करोतीत्यन्धकारं ध्वान्तम्। 'अन्धकारोऽस्त्रियां ध्वान्तम्' इत्यमरः। अथ संध्यापगमनानन्तरं शनकैर्मन्दमन्दं निम्नात् सन्निपत्यागत्य समानि समस्थलानि। उदवाप व्यानशे। अत्र प्रस्तुतान्धकारविशेषणसाम्यादप्रस्तुतार्थप्रतीतेः समासोक्तिरलङ्कारः। उत्प्रेक्षा त्वङ्गतः स्यात्।

हिन्दी—प्रातःकालकी धूपकी डरसे कहीं छिपे और धूपके दूर होनेसे जबर्दस्त होकर अन्धकारने सन्ध्या बीतनेके बाद धीरे-धीरे नीचेकी ओरसे आकर समस्थलोंको व्याप्त कर डाला ॥ ११ ॥

एकतामिव गतस्य विवेकः कस्यचिन्न महतोऽप्युपलेभे ।
भास्वता निदधिरे भुवनानामात्मनीव पतितेन विशेषाः ॥ १२ ॥

मल्लि०—एकतामिति ॥ एकतामभेदं गतस्येव । तमोव्याप्त्या तथा प्रतीतेरियमुत्प्रेक्षा । महतः शैलादेरपि कस्यचित् कस्यापि पदार्थस्य विवेको भेदो नोपलेभे न गृहीतः । अत एवोत्प्रेक्षते—पतितेनास्तमितेन भास्वता सूर्येण । 'भास्वद्विवस्वत्सप्ताश्व—' इत्यमरः । भुवनानाम् । भुवनस्थपदार्थानामित्यर्थः । विशेषा भूधरादिभेदा आत्मनि स्वस्मिन्नेव निदधिर इव निहिता इव । कथमन्यथा नोपलभ्येरन्नित्यर्थः । अत्रोत्प्रेक्षयोः सजातीययोः सापेक्षत्वादङ्गाङ्गिभावेन सङ्करः ।

**हिन्दी**—अन्धकार व्याप्त होनेके कारण मानों अभेदको प्राप्त कर विशाल पदार्थका भी भेद नहीं लिया गया । अस्त होनेवाले भगवान् सूर्यने भुवनस्थ पर्वत आदिके भेदोंको भी मानों अपनेमें रख दिया ॥ १२ ॥

इच्छतां सह वधूभिरभेदं यामिनीविरहिणां विहगानाम् ।
आपुरेव मिथुनानि वियोगं लङ्घ्यते न खलु कालनियोगः ॥ १३ ॥

मल्लि०—इच्छतामिति ॥ वधूभिः स्वकामिनीभिः सह । अभेदमवियोगमिच्छताम् । तथा संकल्पवतामपीत्यर्थः । यामिनीषु विरहिणाम् । नियतवियोगानामित्यर्थः । रहतेरावश्यकेऽर्थे णिनिः । यद्वा—निन्दायामिनिः । तेषां विहगानां चक्रवाकाणां मिथुनानि वियोगमापुरेव । न तु नापुरित्ययोगव्यवच्छेदः । तथा हि—कालनियोगो दैवाज्ञा न लङ्घ्यते खलु । दुर्वार इत्यर्थः ।

**हिन्दी**—अपनी भार्यासे वियोगकी इच्छा न करनेवाले रातमें सदा बिछुड़नेवाले चकवोंके जोड़ोंने बिछोहको पा ही लिया । दैवकी आज्ञाका कोई लङ्घन कर सकता है ? ॥ १३ ॥

यच्छति प्रतिमुखं दयितायै वाचमन्तिकगतेऽपि शकुन्तौ ।
नीयते स्म नतिमुज्झितहर्षं पङ्कजं मुखमिवाम्बुरुहिण्या ॥ १४ ॥

मल्लि०—यच्छतीति ॥ शकुन्तौ चक्रवाकपक्षिणि । सामान्यस्य प्राकरणिकविशेषपर्यवसानात् । 'शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः' इत्यमरः । अन्तिकगते समीपस्थेऽपि दयितायै चक्रवाक्यै प्रतिमुखमभिमुखं यथा तथा वाचं यच्छति वाचमेव ददाने । न तु संगच्छमाने सतीत्यर्थः । पाघ्राध्मा—' इत्यादिना दाणो यच्छादेशः ।

अम्बुरुहिण्या नलिन्या । उज्झितहर्षं चक्रवाकदुर्दशादर्शनादिव त्यक्तविकासं पङ्कजं मुखमिव नतिं नम्रत्वं नीयते स्म नीतम् । 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' । इति नयतेर्द्विकर्मकत्वात्प्रधाने कर्मणि लिट् । प्रायेण दुःखदर्शनात्स्त्रियः खिद्यन्ते । विशेषेण विरहदर्शनादिति भावः । अत्र पङ्कजावनतेश्चक्रवाकविक्रोशानन्तर्यात्तद्धेतुकत्वमुत्प्रेक्ष्यते । तच्च मुखोपमेयमम्बुरुहिण्या कामिनीसाम्यं गमयन्त्या निरूह्यत इत्युपमोत्प्रेक्षयोरङ्गाङ्गिभावेन संकरः । व्यञ्जकाप्रयोगात्प्रतीयमानोत्प्रेक्षा ।

हिन्दी—पक्षी ( चकवे )के समीप रहने पर भी अपनी प्रिया चकवीको सामने वचनमात्र देते हुए देखकर कमलिनीने हर्ष ( विकास ) से रहित कमलको मुखके समान झुका दिया ( संकुचित कर दिया ) ॥ १४ ॥

रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु ।
पूरिता नु विषमेषु धरित्री संहृता नु ककुभस्तिमिरेण ॥ १५ ॥

मल्लि०—रञ्जिता इति । तिमिरेणान्धकारेण विविधास्तरवः शैलाश्च रञ्जिताः स्वसावर्ण्यमापादिता नु । अन्यथा कथमेषां नीलाढ्यत्वमिति भावः । गगनं नामितं नु । आभूतलादिति शेषः । 'मितां ह्रस्वः' इत्यत्र वा शब्दानुवृत्त्या व्यवस्थितविभाषाश्रयणान्न ह्रस्वः । यद्वा—गगनं स्थगितमाच्छादितं नु । उभयत्रापि तमसावृतत्वान्न दृश्यत इति भावः । तथा धरित्री विषमेषु निम्नोन्नतेषु पूरिता समीकृता नु । अन्यथा तद्विवेकः कथं न स्यादिति भावः । ककुभो दिशश्च संहृता नु लुप्ताः किम् । 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' । इत्यमरः । कथमन्यथा न दृश्यन्ते । इति भावः । अत्र तिमिरे तरुशैलाद्यनेकविषयरञ्जकत्वादिकमारोप्य संदिग्ध इति संदेहालङ्कारः । अनेन 'नु' शब्दस्य संभावनाद्योतकत्वमत्रोत्प्रेक्षाप्रकारमित्यलङ्कारसर्वस्वकारः ।

हिन्दी—अन्धकारने अनेक वृक्षों और पर्वतोंको रंगा दिया क्या ? आकाशको जमीनकी तरफ झुका तो नहीं दिया ? आकाशपर काले वस्त्रसे आच्छादन तो नहीं किया ? धरतीका ऊँच-नीच स्थानोंमें सम तो नहीं कर दिया ? दिशाओंको लुप्त तो नहीं कर डाला ? ( नहीं तो ये सब क्यों नहीं देखे जा रहे हैं ? ) ॥ १५ ॥

रात्रिरागमलिनानि विकासं पङ्कजानि रहयन्ति विहाय ।
स्पष्टतारकमियाय नभः श्रीर्वस्तुमिच्छति निरापदि सर्वः ॥ १६ ॥

मल्लि०—रात्रीति ॥ श्रीः शोभा कर्त्री रात्रेः संध्याया रागेण स्वच्छायोपर-

न्जनेन मलिनानि अत एव विकापं रहयन्ति त्यजन्ति। रहतेस्त्यागार्थाच्छतृ प्रत्ययः। पङ्कजानि विहाय त्यक्त्वा स्पष्टतारकं नभः खम्। इयाय प्राप। तथा हि-सर्वो जनो निरापदि निर्बाधस्थले वस्तुं स्थातुम्। 'एकाच उपदेशेऽनुदात्तात्' इतीट् प्रतिषेधः। 'घसिश्च सान्तेषु वसिः प्रसारिणि' इति वचनात्। इच्छति।

हिन्दी—श्री ( शोभाकी अधिष्ठात्री देवी ) ने सन्ध्याके रागसे मलिन अतएव विकासको छोड़ते हुए कमलका परित्याग कर स्पष्ट ताराओंसे युक्त आकाशको प्राप्त कर लिया। सभी जन बाधासे रहित स्थलमें रहनेकी इच्छा करते हैं॥ १६॥

व्यानशे शशधरेण विमुक्तः केतकीकुसुमकेसरपाण्डुः।
चूर्णमुष्टिरिव लम्भितकान्तिर्वासवस्य दिशमंशुसमूहः॥ १७॥

मल्लि०—व्यानश इति॥ शशधरेण चन्द्रेण विमुक्तः क्षिप्तः केतकीकुसुमकेसर इव पाण्डुर्लम्भिता प्रापिता कान्तिर्यस्य सोंऽशुसमूहो रश्मिसमूहः। चूर्णस्य कर्पूरक्षोदस्य मुष्टिरिव। 'मुष्टि' शब्दस्य द्विलिङ्गत्वेऽप्यत्र पुंलिङ्गतैव ग्राह्या। उपमेयानुसारात्। वासवस्येन्द्रस्य दिशं प्राचीं व्यानशे व्याप। अनेन दिशानिशाकरयोर्नायिकानायकौपम्यं गम्यते।

हिन्दी—चन्द्रमासे छोड़े गये केतकीके फूलके केसरके समान सफेद कान्तिको प्राप्त कराये गये किरणसमूहने कर्पूरचूर्णकी मुष्टिके समान इन्द्रकी दिशा ( पूर्व ) को व्याप्त किया॥ १७॥

उज्झती शुचिमिवाशु तमिस्रामन्तिकं व्रजति तारकराजे।
दिक्प्रसादगुणमण्डनमूहे रश्मिहासविशदं मुखमैन्द्री॥ १८॥

मल्लि०—उज्झतीति॥ इन्द्रस्येयमैन्द्री दिक् प्राची तारकराजे नक्षत्रनाथे। 'कनीनिकायां नक्षत्रे तारकं तारकापि च'। इति विश्वः। अन्तिकं समीपं व्रजति सति। आशु तमिस्रामन्धतमसम्। 'तमिस्रा स्त्री ध्वान्तनिशि निश्यन्धतमसे न ना' इति वैजयन्ती। शुचमिव। विरहदुःखमिवेत्यर्थः। उज्झती विजहती। प्रसादो नैर्मल्यमेव गुणः स एव मण्डनं यस्य तत्। रश्मयो हास इव तेन विशदं मुखमिव मुखमग्रभागम्। श्लिष्टोपमेयम्। ऊहे वहति स्म। अत्र दिक्चन्द्रयोर्नायिकानायकौपम्यं गम्यते।

हिन्दी—इन्द्रकी दिशा ( प्राची ) ने नक्षत्रोंके स्वामी चन्द्रमाको समीप आते हुए देखकर शीघ्र गाढ अन्धकारकी तरह शोक ( विरहके दुःख )को मानो छोड़ती

हुई प्रसाद ( निर्मलता ) रूप गुणरूप अलंकारवाले हास्यके समान किरणसे विशद मुखके समान अग्रभागको धारण करती थी ॥ १८ ॥

नीलनीरजनिभे हिमगौरं शैलरुद्धवपुषः सितरश्मेः ।
खे रराज निपतत्करजालं वारिधेः पयसि गाङ्गमिवाम्भः ॥ १९ ॥

मल्लि०—नीलेति । शैलरुद्धवपुष उदयगिरितिरोहितमण्डलस्य सितरश्मेरिन्दोः संबन्धि नीलनीरजनिभे श्यामकमलतुल्ये खे आकाशे निपतत् प्रसरत् हिमवद् गौरं शुभ्रं करजालमंशुसमूहो वारिधेः पयसि निपतद् गाङ्गमम्भ इव रराज । उपमानेऽपि विशेषणानि योज्यानि ।

हिन्दी—उदयपर्वतसे तिरोहित मण्डलवाले चन्द्रमाके नीलकमलके समान आकाशमें फैलता हुआ बर्फके समान सफेद किरणसमूह समुद्रके जलमें पड़कर गङ्गाजलके समान शोभित हो गया ॥ १९ ॥

द्यां निरुन्धदतिनीलघनाभं ध्वान्तमुद्यतकरेण पुरस्तात् ।
क्षिप्यमाणमसितेतरभासा शंभुनेव करिचर्म चकासे ॥ २० ॥

मल्लि०—द्यामिति । द्यां निरुन्धत् आकाशमावृण्वत् । अतिनीलघनाभं मेचकम् । उद्यन्तः करा अंशवो हस्ताश्च यस्य तेन । असिताभ्य इतराः शुभ्रा भासो यस्य तेन चन्द्रेण पुरस्तात् प्राच्यामग्रे च क्षिप्यमाणं नुद्यमानं ध्वान्तं शंभुना क्षिप्यमाणं करिचर्मेव चकासे । उपमानेऽपि विशेषणानि योज्यानि ।

हिन्दी—आकाशको आच्छादित करता हुआ, अत्यन्त नीलवर्णवाले मेघके समान नीलवर्ण, उगते हुए कर ( किरणों ) और हाथोंवाले सफेद कान्तिवाले चन्द्रमासे पूर्व दिशा और अग्रभागमें हटाया जाता हुआ अन्धकार, ताण्डवनृत्यमें शिवजीसे फेंके जाते हुए हाथीके चर्मके समान शोभित हुआ ॥ २० ॥

अन्तिकान्तिकगतेन्दुविसृष्टे जिह्मतां जहति दीधितिजाले ।
निःसृतस्तिमिरभारनिरोधादुच्छ्वसन्निव रराज दिगन्तः ॥ २१ ॥

मल्लि०—अन्तिकेति । अन्तिकान्तिकेऽतिसमीपे । 'प्रकारे गुणवचनस्य' इति द्विर्भावः । कर्मधारयवद्भावात्सुपो लुक् । अन्तिकान्तिकगतेनेन्दुना विसृष्टे मुक्ते दीधितिजाले किरणसमूहे जिह्मतां संकोचं जहति त्यजति सति तिमिरभारैस्तमःस्तोमैर्निरोधादुपरोधात् । निःसृतो निर्गतो दिगन्त उच्छ्वसन् प्राणन् इव रराजेत्युत्प्रेक्षालङ्कारः ।

हिन्दी—अतिशय समीप आये हुए चन्द्रमासे छोड़े गये किरणसमूहके संकोच को छोड़नेपर अन्धकारसमूहोंकी रुकावटसे निकला हुआ होकर दिशाका भाग मानों उच्छ्वास लेता हुआ सुशोभित हुआ ॥ २१ ॥

लेखया विमलविद्रुमभासा संततं तिमिरमिन्दुरुदासे।
दंष्ट्रया कनकटङ्कपिशङ्गया मण्डलं भुव इवादिवराहः ॥ २२ ॥

मल्लि०—लेखयेति। इन्दुर्विमलविद्रुमभासा स्वच्छप्रवालसवर्णया लेखया कलया संततं सान्द्रं तिमिरमादिवराहः कनकस्य टङ्कः शिलाभेदकं शस्त्रम्। 'टङ्कः पाषाणदारणः' इत्यमरः। तद्वत् पिशङ्गया लोहितवर्णया। 'पिशङ्गादुपसंख्यानम्' इति ङाप्। दंष्ट्रया भुवो मण्डलमिव। उदास उच्चिक्षिपे। अस्यतेः कर्तरि लिट्। सोपसर्गादस्यतेरात्मनेपदं विकल्पात्।

हिन्दी—चन्द्रमाने निर्मल प्रवालके समान कलासे गाढ अन्धकारको उस तरह फेंक दिया जैसे आदिवराहने सुवर्णके शिलाभेदक शस्त्रके समान पीली वर्णवाली दाढ़ से भूमण्डल उठाकर फेंक दिया था ॥ २२ ॥

दीपयन्नथ नभः किरणौघैः कुङ्कुमारुणपयोधरगौरः।
हेमकुम्भ इव पूर्वपयोधेरुन्ममज्ज शनकैस्तुहिनांशुः ॥ २३ ॥

मल्लि०—दीपयन्निति। अथ उदयानन्तरं किरणौघैर्नभो दीपयन् प्रकाशयन् कुङ्कुमेनारुणो यः पयोधरः कुचस्तद्वत् गौरोऽरुणः। उदयरागादिति भावः। तुहिनांशुरिन्दुः शनकैः पूर्वपयोधेः पूर्वसागरात् हेम्नः कुम्भ इव उन्ममज्ज उज्जगामेत्युत्प्रेक्षा।

हिन्दी—उदयके बाद किरणसमूहसे आकाशको प्रकाशित करता हुआ कुङ्कुमसे लाल कुचके समान अरुणवर्णवाला चन्द्रमा धीरे-धीरे पूर्वसमुद्रसे सुवर्णकलशके समान ऊपर उठ गया ॥ २३ ॥

उद्गतेन्दुमविभिन्नतमिस्रां पश्यति स्म रजनीमवितृप्तः।
व्यंशुकस्फुटमुखीमतिजिह्मां व्रीडया नववधूमिव लोकः ॥ २४ ॥

मल्लि०—उद्गतेन्दुमिति ॥ लोको जनः। 'लोकस्तु भुवने जने' इत्यमरः। उद्गतेन्दुमुदितचन्द्राम्। अविभिन्नतमिस्रामनिःशेषितध्वान्तां रजनीं व्यंशुकमपनीतावगुण्ठनमत एव स्फुटं दृश्यमानं मुखं यस्याः सा तथापि व्रीडयातिजिह्मां वक्रां

नववधूं नवोढाम्। 'वधूर्नवोढयोषायां स्नुषाभार्याङ्गनासु च'। इति धरणिः। स्त्रियमिवावितृप्तः सन् पश्यति स्म।

हिन्दी—चन्द्रमाके उदित होनेपर भी लोकने असमाप्त अन्धकारवाली रातको घूंघट छूटनेपर स्पष्ट मुखवाली परन्तु लज्जाके अतिशय वक्र नयी वधूकी तरह तृप्त न होकर देखा ॥ २४ ॥

न प्रसादमुचितं गमिता द्यौर्नोद्धृतं तिमिरमद्रिवनेभ्यः।
दिङ्मुखेषु न च धाम विकीर्णं भूषितैव रजनी हिमभासा ॥ २५ ॥

मल्लि०—नेति॥ हिमभासा चन्द्रेण द्यौराकाशम्। उचितं योग्यं प्रसादं न गमिता अद्रीणां वनानि च तेभ्यः। तिमिरं नोद्धृतं नोत्सारितम्। दिशां मुखेषु धाम तेजश्च न विकीर्णं न पर्यस्तम्। तथापि रजनी भूषितैव। उक्तगुणासम्पत्ताविति भावः। अत्र प्रसाधनकारणाभावेऽपि तत्कार्यभूषणोक्त्या विभावनालङ्कारः।

हिन्दी—चन्द्रमाके कारण आकाश उचित निर्मलताको प्राप्त नहीं हुआ। पर्वतों और वनोंसे अन्धकार दूर नहीं किया गया। दिशाओंके अग्रभागोंमें तेज भी नहीं फैला तो भी रात अलंकृत ही है ॥ २५ ॥

मानिनीजनविलोचनपातानुष्णबाष्पकलुषान् प्रतिगृह्णन्।
मन्दमन्दमुदितः प्रययौ खं भीतभीत इव शीतमयूखः ॥ २६ ॥

मल्लि०—मानिनीति॥ उदितः शीतमयूख उष्णेन विरहतप्तेन बाष्पेण कलुषानाविलान्। मानिनीजनस्य कलहान्तरितनायिकाजनस्य विलोचनपातान्। मानभङ्गजनितरोषेण भीषणानिति भावः। 'कोपात्कान्तं पराणुद्य पश्चात्तापसमन्विता। कलहान्तरिता' इति दशरूपके। प्रतिगृह्णन् स्वीकुर्वन्। अपरिहार्यत्वादिति भावः। अत एव भीतभीतो भीतप्रकार इवेत्युत्प्रेक्षा। मन्दमन्दं मन्दप्रकाशम् उभयत्रापि 'प्रकारे गुणवचनस्य' इति द्विर्भावे कर्मधारयवद्भावात्सुलोपः। खमाकाशं प्रययौ।

हिन्दी - उगे हुए चन्द्रमा विरहके कारण गर्म आँसूसे मलिन मानिनी ( कलहके कारण पतिसे बिछुड़ी हुई ) नायिकाके दृष्टिपातको लेते हुए डरे हुए-से होकर मन्द प्रकाशवाले आकाशमें पहुँच गये ॥ २६ ॥

शिलष्यतः प्रियवधूरुपकण्ठं तारकास्ततकरस्य हिमांशोः ।
उद्वमन्नभिरराज समन्तादङ्गराग इव लोहितरागः ॥ २७ ॥

मल्लि०—श्लिष्यत इति ॥ तताः प्रसारिताः करा अंशुहस्ता येन तस्य त करस्य तारका एव प्रियवधूरुपकण्ठमन्तिके कण्ठे वा । अत्यन्तसंयोगे द्वितीया विभक्त्यर्थेऽव्ययीभावः । श्लिष्यतः प्रत्यासीदत आलिङ्गतश्च हिमांशोः समन्तादुद्वमन् उत्सर्पन् । अर्थान्तरत्वादकर्मकत्वम् । 'धातोरर्थान्तरे वृत्तेः' इति वचनात् । लोहितरागोऽरुणप्रभः । अङ्गराग इवाभिरराज । आलिङ्गनाद्रागो गलतीति प्रसिद्धिः । तत्र रूपकोपमयोरङ्गाङ्गिभावेन सङ्करः ।

हिन्दी—फैले हुए कर (किरणरूप हाथोंवाले) तथा तारारूप प्रिय वधुओंके समीपमें वा कण्ठमें आलिङ्गन करनेवाले चन्द्रमाके चारो ओर फैलते हुए लाल कान्तिवाले अङ्गरागके समान शोभित हुई ॥ २७ ॥

प्रेरितः शशधरेण करौघः संहतान्यपि नुनोद तमांसि ।
क्षीरसिन्धुरिव मन्दरभिन्नः काननान्यविरलोच्चतरूणि ॥ २८ ॥

मल्लि०—प्रेरित इति ॥ शशधरेण चन्द्रेण प्रेरितो विसृष्टः करौघः संहतानि सान्द्राणि अपि तमांसि मन्दरेण मन्दराचलेन भिन्नो नुन्नः क्षीरसिन्धुरविरला सान्द्रा उच्चा उन्नताश्च तरवो येषु तानि काननानीव नुनोद दूरीचकार ।

हिन्दी—मन्दर पर्वतसे प्रेरित क्षीरसमुद्रने जैसे समुद्रमन्थनके समयमें घने और ऊँचे पेड़ोंवाले वनोंको दूर कर दिया वैसे ही चन्द्रमासे प्रेरित किरणसमूहने गाढ अन्धकारोंको दूर कर दिया ॥ २८ ॥

शारतां गमितया शशिपादैश्छायया विटपिनां प्रतिपेदे ।
न्यस्तशुक्लबलिचित्रतलाभिस्तुल्यता वसतिवेश्ममहीभिः ॥ २९ ॥

मल्लि०—शारतामिति । शशिपादैश्चन्द्ररश्मिभिः । 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः । शारतां शबलत्वं गमितया । 'शारः शबलपीतयोः' इति विश्वः । विटपिनां तरूणां छायया न्यस्तैर्निक्षिप्तैः शुक्लबलिभिः श्वेतपुष्पाद्युपहारैश्चित्राणि तलानि उपरिभागा यासां ताभिः । 'करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्' इत्यमरः । वसतिवेश्ममहीभिर्निवासगृहभूमिभिः । तुल्यता साम्यं प्रतिपेदे प्राप्ता । कर्मणि लिट् । आर्थीयमुपमा ।

हिन्दी—चन्द्रमाकी किरणोंसे चित्र-विचित्र वर्णको प्राप्त पेड़ोंकी छायाने

रक्खे गये सफेद पुष्प आदि उपहारोंसे चित्र-विचित्र ऊर्ध्वभागवाली निवासगृहकी भूमिसे समानताको प्राप्त किया ॥ २९ ॥

आतपे धृतिमता सह वध्वा यामिनीविरहिणा विहगेन ।
सेहिरे न किरणा हिमरश्मेर्दुःखिते मनसि सर्वमसह्यम् ॥ ३० ॥

**मल्लि०—**आतप इति ॥ आतपे । दुःखकरेऽपीति भावः । वध्वा चक्रवाक्या सह । अत एव धृतिमता संतोषवता यामिनीषु विरहिणा नियतविरहेणात एव विहगेन चक्रवाकेण हिमरश्मेश्चन्द्रस्य किरणा न सेहिरे। तथा हि—दुःखिते संजातदुःखे मनसि सर्वम् । मनोहरमपीति भावः । असह्यं सोढुमशक्यम् । 'शकिसहोश्च' इति यत्प्रत्ययः । पूर्वं तु 'आतपाः' इति पेठुः । तत्र वध्वा सहातपा अपि सेहिरे । तद्विरहिणा तु शशिकिरणा अपि न सेहिरे इति योज्यम् । फलं तु समानम् ।

**हिन्दी—**दुःख देनेवाले सूर्यके आतप ( धूप ) में भी मादा ( चकवी ) के साथ सन्तोषवाले परन्तु रातमें मादाके विरह वाले पक्षी ( चकवे ) ने शीतल किरणवाले ( चन्द्रमा ) के किरणोंको सहन नहीं किया क्योंकि मनके दुःखित होनेपर सभी वस्तु असह्य होती है ॥ ३० ॥

गन्धमुद्धतरजः कणवाही विक्षिपन्विकसतां कुमुदानाम् ।
आदुधाव परिलीनविहङ्गा यामिनीमरुदपां वनराजी ॥ ३१ ॥

**मल्लि०—**गन्धमिति ॥ अपां कणवाही। योग्यान्वये व्यवधानमपि सोढव्यम्। विकसतां कुमुदानां गन्धं सौरभम्, उद्धतं रजः परागो यस्मिन्कर्मणि तद्यथा तथा। 'शेषाद्विभाषा' इति विकल्पान्न कप् । विक्षिपन् विकिरन् ; इत्थं शिशिरः सुरभिः । यामिनीमरुत् रात्रिवायुः । परितो लीनाः शयिता विहङ्गा यासु ता वनराजीः । आदुधाव ईषत्कम्पयामास । विहङ्गशयनाविरोधेन वनराजिः किञ्चित्कम्पितेत्यर्थः । 'आङीषदर्थेऽभिव्याप्तौ' इत्यमरः । यथा कश्चित् कामिनीं गन्धोदकादिना सिञ्चन्नाकर्षति तद्वदिति भावः ।

**हिन्दी--**जलके कणोंका वहन करनेवाले, खिलते हुए कुमुदोंके सुगन्ध ( खुशबू ) को उड़े हुए परागको बिखेरते हुए रात्रिके वायुने चारों ओर सोये हुए पक्षियोंवाली वनपङ्क्तिको कुछ कम्पित कर दिया ॥ ३१ ॥

संविधातुमभिषेकमुदासे मन्मथस्य लसदंशुजलौघः ।
यामिनीवनितया ततचिह्नः सोत्पलो रजतकुम्भ इवेन्दुः ॥ ३२ ॥

मल्लि०—संविधातुमिति ।। यामिनी वनितेव तथा रात्रिरूपया कान्त्या मन्मथस्याभिषेकं त्रिभुवनजैत्रयात्राभिषेकं संविधातुं सम्यक्कर्तुम् । अंशवो जलानीव तेषामोघः पूरो लसन् यस्मिन्सः । तत्चिह्नः स्फुटलाञ्छन इन्दुः सोत्पलो रजतकुम्भ इव । उदास उत्क्षिप्तः । अस्यतेः कर्मणि लिट् । अत्र संविधातुमिति तुमुना प्रतीयमानोत्प्रेक्षयानुप्राणितोऽयमुपमोत्प्रेक्षयोः संकरः ।

**हिन्दी**—रात्रिरूप स्त्रीके समान रात्रिने कामदेवका अभिषेक करनेके लिए जलके समान किरणोंसे शोभित हुए समूहवाले, स्पष्ट लङ्कवाले चन्द्रमाको नील कमलसे युक्त चाँदीके घड़ेके समान उठा लिया ।। ३२ ।।

ओजसापि खलु नूनमनूनं नासहायमुपयाति जयश्रीः ।
यद्विभुः शशिमयूखसखः सन्नाददे विजयि चापमनङ्गः ।। ३३ ।।

मल्लि०—ओजसेति ।। ओजसा । अनूनं संपूर्णमपि । असहायं सहाय-रहितम् । पुरुषमिति शेषः । जयश्रीर्नोपयाति खलु नूनम् । कुतः । यत् यस्मात् विभुः समर्थोऽप्यनङ्गः शशिमयूखानां सखा सहचरस्तथोक्तः । ससहायः सन्नित्यर्थः । विजयि विजयशीलम् । 'जिदृक्षि—' इत्यादिनेनिप्रत्यः । चापमाददे । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ।

**हिन्दी**—तेजसे पूर्ण होने पर भी सहायरहित ( पुरुष ) के पास विजलक्ष्मी नहीं जाती यह निश्चित है । क्योंकि समर्थ होकर भी कामदेवने चन्द्रकिरणोंका मित्र होकर ही विजयशील धनुको ले लिया ।। ३३ ।।

सद्मनां विरचनाहितशोभैरागतप्रियकथैरपि दूत्यम् ।
सन्निकृष्टरतिभिः सुरदारैर्भूषितैरपि विभूषणमीषे ।। ३४ ।।

मल्लि०—सद्मनामित्यादि ।। संनिकृष्टरतिभिरासन्नसुरतोत्सवैरत एव सुरदारैः सुरवधूभिः । आहितशोभैः प्रागेव विहितकेलिगृहमण्डनैरपि पुनः सद्मनां केलि-गृहाणां विरचना मण्डनम् । ईषेऽभिलेषे । इषेः कर्मणि लिट् । आगतप्रियकथैः प्राप्त-प्रियजनवृत्तान्तैरपि दूतस्य कर्म दूत्यं दूतीव्यापार ईषे । दूतस्य भावकर्मणोर्यत् प्रत्ययः । तथा भूषितैरपि विभूषणं प्रसाधनम् । ईषे । औत्सुक्यातिरेकादिति भावः ।

**हिन्दी**—निकट सुरतक्रीडावाली सुरसुन्दरियोंने पहले ही क्रीडागृहको सजाने पर भी फिर क्रीडागृहोंकी रचना करनेका अभिलाष किया । प्रियजनका वृत्तान्त सुनकर भी दूतीको भेजनेकी इच्छा की, तथा भूषित होकर भी भूषण करनेका अभिलाष किया ।। ३४ ।।

न स्रजो रुरुचिरे रमणीभ्यश्चन्दनानि विरहे मदिरा वा।
साधनेषु हि रतेरुपधत्ते रम्यतां प्रियसमागम एव ॥ ३५ ॥

मल्लि०—नेति ॥ विरहे वियोगावस्थायां स्रजो माल्यानि चन्दनानि गन्धा मदिरा मद्यानि वा रमणीभ्यः। 'रुच्यर्थानां प्रीयमाण.' इति संप्रदानत्वाच्चतुर्थी। न रुरुचिरे न रोचन्ते स्म। हि यस्मात् प्रियसमागम एव रतेः साधनेषु स्रगादिषु रम्यता मनोहरत्वम्। रुचिकरत्वमिति यावत्। उपाधत्त आदत्ते। तदभावादरुचिर्युक्तैवेत्यर्थः। अत एव वैधर्म्यात्कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः। रम्यन्त एष्विति रम्याणि। 'पोरदुपधात्' इति यत्प्रत्ययः, 'कृत्यल्युटो बहुलम्' इत्यधिकरणार्थः।

हिन्दी—सुरसुन्दरियों ( अप्सराओं ) को वियोगकी अवस्थामें न मालाओं· की, न चन्दनोंकी और न मदिराकी ही रुचि थी, क्योंकि प्रियका समागम ही रतिके साधनोंमें मनोहरताको प्राप्त करता है॥ ३५ ॥

प्रस्थिताभिरधिनाथनिवासं ध्वंसितप्रियसखीवचनाभिः।
मानिनीभिरपहस्तितधैर्यः सादयन्नपि मदोऽवलम्बे ॥ ३६ ॥

मल्लि०—प्रस्थिताभिरिति ॥ अधिनाथनिवासं प्रियगृहं प्रति प्रस्थिताभिः प्रचलिताभिर्ध्वंसितानि खण्डितानि प्रियसखीवचनानि स्वयं प्रस्थानं लाघवायेत्येवंरूपाणि याभिस्ताभिः। मानिनीभिः। कोपनाभिः। 'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये'। इति लक्षणात्। अपहस्तितं निरस्तं धैर्यं येन सः। तथा सादयन् मानं शरीरं च कर्शयन्नपि सदोषोऽपीत्यर्थः। मदोऽवललम्बे स्वीकृतः। अज्ञानव्याजेन लाघवापह्नवसौकर्यादिति भावः।

हिन्दी—पहले प्रियसखीके मिलापके लिए किये गये वचनोंको भी ठुकरानेवाली मानिनी स्त्रियोंने प्रियके निवासस्थानमें प्रस्थान कर धैर्यको दूर करनेवाले, अभिमान और शरीरको कृश करनेवाले मद ( मद्य ) का अवलम्बन किया॥ ३६ ॥

कान्तवेश्म बहु सन्दिशतीभिर्यातमेव रतये रमणीभिः।
मन्मथेन परिलुप्तमतीनां प्रायशः स्खलितमप्युपकारि ॥ ३७ ॥

मल्लि०—कान्तेति ॥ रतये सुरताय बहु संदिशतीभिरनेकं कथयन्तीभिः। संदेशव्यसनाद् गन्तव्यमप्यजानतीभिरित्यर्थः। रमणीभिः। कान्तवेश्म यातं प्राप्त-

मेव । न तु मध्येमार्गान्निवृत्तमित्यर्थः । तथा हि—मन्मथेन परिलुप्तमतीनां स्खलितं विरुद्धाचरणमपि प्रायश उपकारि भवति ।

**हिन्दी**—रतिक्रीडाके लिए अनेक सन्देशोंको भेजती हुई अप्सराओंने प्रिय-भवनको प्राप्त ही कर लिया, कामदेवसे लुप्त बुद्धिवालोंका विरुद्ध आचरण भी प्रायः उपकार करनेवाला होता है ॥ ३७ ॥

आशु कान्तमभिसारितवत्या योषितः पुलकरुद्धकपोलम् ।
निर्जिगाय मुखमिन्दुमखण्डं खण्डपत्त्रतिलकाकृति कान्त्या ॥ ३८ ॥

**मल्लि०**—आश्विति ॥ आशु कान्तमभिसारितवत्याः अभिगतवत्याः । स्वार्थे णिच् । योषितः सम्बन्धि पुलकैः रुद्धावावृतौ कपोलौ यस्य तत् । खण्डा प्रमृष्ट पत्त्राणां पत्त्रलेखानां तिलकस्य च आकृतिः संनिवेशो यस्य तत् तादृक् मुखं कान्त्या अखण्डं पूर्णम् । इन्दुं निर्जिगाय जयति स्मेत्यर्थः । 'इवमुखा ... जयति द्वेष्टि' इति दण्डिना सादृश्यार्थेषु गणनात् ।

**हिन्दी**—शीघ्र प्रियके पास अभिसार करनेवाली स्त्रीका रोमांचसे आवृत कपोलवाले, और मिटी हुई पत्ररेखाओं और तिलकके आकृतिवाले मुखने अपनी कान्तिसे पूर्णचन्द्रको जीत लिया ॥ ३८ ॥

उच्यतां स वचनीयमशेषं नेश्वरे परुषता सखि ! साध्वी ।
आनयैनमनुनीय कथं वा विप्रियाणि जनयन्ननुनेयः ॥ ३९ ॥

**मल्लि०**—उच्यतामिति । तत्र नायिकाह—स धूर्तोऽशेषमखिलं वचनीयं वक्तव्यमुच्यताम् । निःशङ्कमुपालभ्यतामित्यर्थः । ब्रुवो दुहादित्वादप्रधाने कर्मणि लोट् । अथ सख्याह—हे सखि, ईश्वरे भर्तरि नायके विषये परुषता पारुष्यं न साध्वी न हिता । अथ नायिकाह—तर्हि एनमनुनीय सान्त्वयित्वा, आनय । पुनः सख्याह—विप्रियाणि जनयन् अप्रियाणि कुर्वन् स कथं वाऽनुनेयोऽनुनयार्हः ।

**हिन्दी**—नायिका कहती है—उस धूर्तको सब कुछ कहना चाहिए ( उलहना देना चाहिए ) ।

सखी कहती है—नायकके विषयमें कठोरता हित करनेवाली नहीं होती है।

नायिका कहती है—तब उनको सान्त्वना देकर ले आओ ।

सखी कहती है—अप्रिय करते हुए वे कैसे सान्त्वनाके योग्य होंगे ? ॥ ३९ ॥

किं गतेन न हि युक्तमुपैतुं, कः प्रिये सुभगमानिनि! मानः।
योषितामिति कथासु समेतैः कामिभिर्बहुरसा धृतिरूहे ॥ ४० ॥

**मल्लि०**—किमिति। पुनर्नायिकाह—तर्हि गतेन तं प्रति गमनेन किम्। कोऽर्थ इत्यर्थः। अत उपैतुं गन्तुं न युक्तं हि। पुनः सख्याह—हे सुभगमानिनि सौन्दर्यमानिनि। सुभगमात्मानं मन्यत इति। 'आत्ममाने खश्च' इति चकाराण्णिनिप्रत्ययः। तस्मिन्, प्रिये विषये को मानः। मानो न कर्तव्य इत्यर्थः। यद्वा—नहीत्यादि सखीवाक्यम्। तत्र नहीत्येकं वाक्यम्। यदुक्तं सखीत्यर्थः। हे सखि, किं तूपैतुं युक्तम्। कुतः। सुभगमानिनि प्रिये को मानः। तादृग्जनस्य दुर्लभत्वदिति भावः। इति एवंरूपासु योषितां कथासु विषये समेतैः। समीपमागत्याकर्णयद्भिरित्यर्थः। कामिभिर्बहुरसाऽनेकास्वादा धृतिः संतोष ऊहे उढा। अत्र परोक्षौत्सुक्यनिर्वेदाद्यनेकभावशावल्यपरिपूर्णकान्ताकथाकर्णनादुत्तरोत्तरमपूर्वहृदयानन्दनिष्यन्दमानन्दसंदोहमविन्दन्नित्यर्थः। प्रायेणात्र प्रौढाः कलहान्तरिताश्च नायिकाः।

**हिन्दी**—फिर नायिका कहती है—तब फिर उनके पास जाना ठीक नहीं है। सखी कहती है—अरे! अपने सौन्दर्यका अभिमान करनेवाली! प्रियके विषयमें क्या मान (अभिमान) करती हो? इस प्रकारके स्त्रियोंके वचनोंमें समीप आकर सुनते हुए प्रियजनोंने अनेक आस्वादवाले सन्तोषको प्राप्त किया ॥ ४० ॥

योषितः पुलकरोधि दधत्या घर्मवारि नवसङ्गमजन्म।
कान्तवक्षसि बभूव पतन्त्या मण्डनं लुलितमण्डनतैव ॥ ४१ ॥

**मल्लि०**—योषित इति। पुलकरोधि रोमाञ्चव्यापि नवसंगम एव जन्म यस्य तत्। घर्मवारि स्वेदोदकं दधत्या इति सात्त्विकोक्तिः। कान्तवक्षसि पतन्त्या इत्यौत्सुक्योक्तिः। योषितो या लुलितमण्डनता उत्सृष्टप्रसाधनत्वम्। भावे तल्। सैव मण्डनं बभूव। तादृशफलत्वात्तस्येति भावः।

**हिन्दी**—रोमाञ्चको व्याप्त करनेवाले, नव समागमसे उत्पन्न श्रमजल-(पसीने) को धारण करती हुई और प्रियके वक्षःस्थल (छाती) पर पड़ती हुई स्त्रीकी शरीरकी सजावट मिटना भी भूषणरूप हो गया ॥ ४१ ॥

शीधुपानविधुरासु निगृह्णन्मानमाशु शिथिलीकृतलज्जः।
सङ्गतासु दयितैरुपलेभे कामिनीषु मदनो नु मदो नु ॥ ४२ ॥

**मल्लि०**—शीध्विति॥ शेरतेऽनेनेति शीधु पक्वेक्षुरसविकारो मद्यविशेषस्तस्य

पानेन विघुरासु विमूढासु । तया दयितैः संगतासु स्वयंप्रासासु च कामिनीषु अभि-मानवतीषु । आशु मानं कोपं निगृह्णन् निवर्तयन् शिथिलीकृता लज्जा येन स मदनो नु मदो नु । उपलेभे । लक्ष्यते स्मेत्यर्थः । प्रियसमागमशीधुपानरूपोभयकारणा-भङ्गादुभयथा माननिग्रहाद्यनुभावसाधारण्याच्च सन्देहः । स एवालङ्कारः

**हिन्दी**—शीधु ( मदिराविशेष ) पीनेसे मतवाली और अपने प्रियके पास पहुँची हुई मानवती अप्सराओंमें शीघ्र मान ( कोप ) को दूर करता हुआ और लज्जाको भी शिथिल करनेवाला कामदेव है या मद है ? ( नहीं कह सकते हैं। )

द्वारि चक्षुरधिपाणि कपोलौ, जीवितं त्वयि, कुतः कलहोऽस्याः ?
कामिनामिति वचः पुनरुक्तं प्रीतये नवनवत्वमियाय ॥ ४३ ॥

**मल्लि०**—द्वारीति ॥ द्वारि त्वदागमनमार्ग एव चक्षुः, इत्यौत्सुक्योक्तिः । अधिपाणि पाणौ करे कपोलौ इति चिन्तोक्तिः । किं बहुना, जीवितं त्वयि त्वदधीनम् । त्वां विना न जीवतीत्यर्थः । इति गाढानुरागोक्तिः । अतोऽस्याः कलहो विग्रहः कुतः । इति एवं कामिनां प्रीतये पुनरुक्तं पुनःपुनःरुच्यमानं वचो दूती-वाक्यं नवनवत्वं नवप्रकारत्वमपूर्ववद्भावम् । इयाय । प्रकारार्थे द्विर्भावः । कर्मधार-यवद्भावात्सुपो लुक् । कान्तानुरागप्रकटनात् कामिनः प्रहृष्यन्तीति भावः । कल-हान्तरितेयम् ।

**हिन्दी**—कलहान्तरिता नायिकाओंकी सखियाँ उनके प्रिय नायकोंसे कहती है—'आपकी प्रियाकी दरवाजेमें दृष्टि, हाथमें कपोल, और आपमें अधीन जीवन है, इस कारण इनका कलह ( झगड़ा ) ही कहाँ है ?' इस प्रकार कामुक नायकोंकी प्रीतिके लिए बारंवार कहा गया दूतीका वाक्य अपूर्व भावको प्राप्त हुआ ॥ ४३ ॥

साचि लोचनयुगं नमयन्ती रुन्धती दयितवक्षसि पातम् ।
सुभ्रुवो जनयति स्म विभूषां, सङ्गतावुपरराम च लज्जा ॥ ४४ ॥

**मल्लि०**— साचीति ॥ लोचनयुगं साचि तिर्यक् नमयन्ती प्रिये तिर्यक् पात-यन्ती । न तु समरेखयेत्यर्थः । दयितवक्षसि पातं रुन्धती इष्टमपि प्रतिबध्नती लज्जा सुभ्रुवो नायिकाया विभूषां शोभां जनयति स्म । सङ्गतौ सुरतप्रसङ्गे सति, उपरराम च । एवं यतस्तदा चाभूषणमेवेति भावः । 'विभाषाकर्मका' इति परस्मै-पदम् ।

हिन्दी—दोनों नेत्रोंको नायकमें तिरछे ( सीधे नहीं ) डालती हुई, प्रियके वक्षःस्थल ( छाती ) में पतनको रोकती हुई लज्जा सुन्दरीकी शोभाको उत्पन्न करती थी; परन्तु संभोगके प्रसङ्गमें वह ( लज्जा ) भी दूर हो गई ॥ ४४ ॥

सव्यलीकमवधीरितखिन्नं प्रस्थितं सपदि कोपपदेन ।
योषितः सुहृदिव स्म रुणद्धि प्राणनाथमभिवाष्पनिपातः ॥ ४५ ॥

मल्लि०—सव्यलीकमिति । सव्यलीकं सापराधम्, अत एव अवधीरितोऽवज्ञातः सन् खिन्नस्तम् । 'पूर्वकाल'— इत्यादिना तत्पुरुषः । सपदि कोपस्य पदेन व्याजेन प्रस्थितं निर्गच्छन्तं प्राणनाथं प्रियं योषितः संबन्धो अभिवाष्पनिपात आभिमुख्येनाश्रुमोक्षः सुहृदिव रुणद्धि स्म रुरोध । वाष्पपातस्य मन्युमोक्षलिङ्गतया प्रस्थानप्रतिबन्धकत्वात् सुहृदौपम्यम् । इयमधीरा खण्डिता—ज्ञातेऽन्यासङ्गिनि पत्यौ खण्डितेर्ष्याकषायिता । अधीराश्रु विमुञ्चन्ती विज्ञेया चात्र नायिका ॥' इति दशरूपके ।

हिन्दी—किसी ( अधीरा खण्डिता ) नायिकाके अपराधी होनेसे तिरस्कृत, खिन्न और उसीक्षण क्रोधके बहाने प्रस्थान करते हुए प्राणनाथको सामने ही किये गये नायिकाके अश्रुपातने मित्रके समान रोक डाला ॥ ४५ ॥

शङ्कितायकृतवाष्पनिपातामीर्ष्यया विमुखितां दयिताय ।
मानिनीमभिमुखाहितचित्तां शंसति स्म घनरोमविभेदः ॥ ४६ ॥

मल्लि०—शङ्कितायेति ॥ शङ्किताय दयितायाविश्वस्ताय नायकाय । ईर्ष्यया विमुखितां विमुखीकृताम् । अत एव कृतवाष्पनिपातां मानिनीं घनरोमविभेदः सान्द्रपुलकोदयोऽभिमुखमाहितं चित्तं यया ताम् । निष्कोपामित्यर्थः । शंसति स्म । व्यनक्तिस्मेत्यर्थः । अन्यथा सात्त्विकानुदयादिति भावः । अत्रापि पूर्वोक्तैव नायिका ।

हिन्दी—अविश्वस्त नायकके लिए ईर्ष्यासे पराङ्मुख की गई मानिनीको गाढ रोमाञ्चकी उत्पत्तिने यह अब कोपरहित है ऐसी सूचना दे दी ॥ ४६ ॥

अथ संभोगश्रृङ्गारमाह, तत्रापि बाह्यरतमाह—

लोलदृष्टि वदनं दयितायाश्चुम्बति प्रियतमे रभसेन ।
व्रीडया सह विनीवि नितम्बादंशुकं शिथिलतामुपपेदे ॥ ४७ ॥

मल्लि०—लोलेति ॥ प्रियतमे लोलदृष्टि चञ्चलेक्षणं दयिताया वदनं रभसेन बलात्कारेण चुम्बति सति विनीवि निर्गतबन्धनम् । अंशुकं नितम्बाद् व्रीडया सह

शिथिलतामुपपेदे । उभयमपि शिथिलमासीदित्यर्थः । अत्र व्रीडांशुकरूपसंबन्धिभेद-भिन्नवृत्तिस्रंसनरूपशैथिल्ययोरभेदाध्यवसायनिबन्धनातिशयोक्तिमूलः—सहोक्तिविशेषोऽलङ्कारः । अत एव व्रीडांशुकौपम्यं च कल्प्यम् । अत्र वात्स्यायनः—'बाह्यमाभ्यन्तरं चेति द्विविधं रतमुच्यते । तत्राद्यं चुम्बनाश्लेषनखदन्तक्षतादिकम् ॥ द्वितीयं सुरतं साक्षान्नानाकरणकल्पितम् ॥' इति ।

**हिन्दी**—चञ्चल नेत्रोंवाले प्रियाके मुखको प्रियतमके बलात्कारपूर्वक चुम्बन करने पर नीवी ( वस्त्रग्रन्थि ) से रहित वस्त्र ( साड़ी ) नितम्बसे लज्जाके साथ साथ शिथिल हो गया ॥ ४७ ॥

ह्रीतया गलितनीवि निरस्यन्नन्तरीयमवलम्बितकाञ्चि ।
मण्डलीकृतपृथुस्तनभारं सस्वजे दयितया हृदयेशः ॥ ४८ ॥

**मल्लि०**—ह्रीतयेति ॥ गलितनीवि गलितबन्धं तथापि अवलम्बिता काञ्ची येन तत् । काञ्चीलग्नमित्यर्थः । तत्, अन्तरीयमधोंशुकम् । 'अन्तरीयोपसंव्यान-परिधानान्यधोंशुके' इत्यमरः । निरस्यन् आक्षिपन् । हृदयेशः प्रियो ह्रीतया वस्त्रोपगमाल्लज्जितया । ह्रीधातोः कर्तरि क्तः । दयितया मण्डलीकृतो वर्तुलीकृतः पृथुस्तनभारो यस्मिन्कर्मणि तद्यथा तथा । गाढमित्यर्थः । सस्वज आश्लिष्टः । प्रियदृष्टेः प्रतिबन्धार्थमित्यर्थः ।

**हिन्दी**—नीवी ( वस्त्रग्रन्थि ) से रहित तथाऽपि काञ्चीका अवलम्बन किये हुए नायिकाके अधोवस्त्रको खींचते हुए प्राणेश्वर ( नायक )को लजाई हुई प्रियाने स्तनभारको गोल कर आलिंगन कर डाला ॥ ४८ ॥

आहृता नखपदैः परिरम्भाश्चुम्बितानि घनदन्तनिपातैः ।
सौकुमार्यगुणसंभृतकीर्तिर्वाम एव सुरतेष्वपि कामः ॥ ४९ ॥

**मल्लि०**—आदृता इति ॥ परिरम्भा आलिङ्गनानि नखपदैर्हेतुभिः । आदृता अभिमताः । 'हेतौ' इति तृतीया । तथा चुम्बितानि चुम्बनानि घनदन्तनिपातैर्गाढ-दन्तक्षतैर्हेतुभिरादृतानीति लिङ्गविपरिणामः । रतसुखोद्दीपकत्वान्नखदन्तक्षतपूर्वके-ष्वालिङ्गनचुम्बनेष्वादरः संवृत्त इत्यर्थः । ननु सुकुमारे कामतन्त्रे कथं पीडाकरेष्वादर इति न वाच्यमित्याह-सौकुमार्येति । सौकुमार्यमेव गुणस्तेन संभृतकीर्तिर्लब्ध-यशाः कामः सुरतेषु संभोगेष्वपि । न केवलं विप्रलम्भेष्विति भावः । वामः क्रूर एव ।

सुकुमारः काम इति प्रवादमात्रम्। वस्तुतस्तु पीडयन्नेव सुखमावहतीति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

**हिन्दी**—आलिङ्गन नखक्षतरूप कारणोंसे सत्कृत हो गये। चुम्बन गाढ़े दन्तक्षतरूप कारणोंसे सत्कृत हो गये। सुकुमारतारूप गुणसे यश पाया हुआ कामदेव संभोगोंमें भी न कि केवल विप्रलम्भमें क्रूर ही होता है ॥ ४९ ॥

अथाभ्यन्तर रतमाह—

पाणिपल्लवविधूननमन्तः सीत्कृतानि नयनार्धनिमेषाः।
योषितां रहसि गद्गदवाचामस्त्रतामुपययुर्मदनस्य ॥ ५० ॥

**मल्लि०**—पाणीति ॥ रहसि एकान्त इति विश्रम्भातिशयोक्तिः। गद्गदवाचां स्खलद्गिरां योषितां संबन्धीनि पाणिपल्लवयोर्विधूननं कम्पनम्। अन्तः सीत्कृतानि सीत्काराः। एतेन कुट्टमिताख्यो भाव उक्तः। अधरपीडनादौ सुखेऽपि 'दुःखवदुपचारः कुट्टमितम्' इति लक्षणात्। नयनानामर्धनिमेषा अर्धनिमीलितानि। रहस्येकान्ते गद्गदवाचां योषितामिति विशेषणसामर्थ्याद् गद्गद्कण्ठत्वं चेत्येतानि मदनस्यास्त्रतामुपययुः। अस्त्रवत् पुंसामुद्दीपनान्यासन्नित्यर्थः। सीत्कारार्धनिमेषादिना सुखपारवश्यं व्यज्यते। तदुक्तं रतिरहस्ये—'स्रस्तता वपुषि, मीलनं दृशोर्मूर्च्छना च रतिलालसाक्षणम्। श्लेषयेत्स्वजघनं मुहुर्मुहुः सीत्करोति गतलज्जिताकुला ॥' इति ॥ ५० ॥

**हिन्दी**—एकान्तमें गद्गद वाणीवाली स्त्रियोंके पल्लवोंके समान हाथोंका हिलाना, भीतर सीत्कार ध्वनि, नेत्रोंका अर्ध मुद्रण (मूंदना) ये सब कामदेवके अस्त्ररूप हो गये ॥ ५० ॥

अथ मधुपानवर्णनमारभते—

पातुमाहितरतीन्यभिलेषुस्तर्षयन्त्यपुनरुक्तरसानि।
सस्मितानि वदनानि वधूनां सोत्पलानि च मधूनि युवानः ॥ ५१ ॥

**मल्लि०**—पातुमिति ॥ युवान आहितरतीनि वर्धितरागाण्यत एव अपुनरुक्तरसानि पुनःपुनः पानेनाप्यपूर्वस्वादान्यत एव तर्षयन्ति तृष्णोत्पादकानि। अतृप्तिकराणीत्यर्थः। सस्मितानि वधूनां वदनानि सोत्पलानि मधूनि च पातुमभिलेषुरिच्छन्ति स्म। अत्र प्रस्तुतानामेव वदनानां मधूनां च पानक्रियौपम्यस्य गम्यत्वा-

त्केवलं प्राकरणिकविषयतया तुल्ययोगितालङ्कारः। 'प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः। औपम्यं गम्यते यत्र सा मता तुल्ययोगिता ॥' इति लक्षणात्।

**हिन्दी**—तरुण गन्धर्वोंने अनुरागको बढ़ाये हुए, अपूर्व आस्वादवाले, तृष्णाको उत्पन्न करनेवाले, मन्दहास्यसे युक्त अप्सराओंके मुखोंको और उत्पलयुक्त मद्योंको भी पीनेका अभिलाष किया ॥ ५१ ॥

कान्तसंगमपराजितमन्यौ वारुणीरसनशान्तविवादे।
मानिनीजन उपाहितसंधौ संदधे धनुषि नेषुमनङ्गः ॥ ५२ ॥

**मल्लि०**—कान्तेति ॥ कान्तसंगमेन पराजितमन्यौ त्यक्तकोपे। तदवधित्वा-त्तस्येति भावः। किंच, वारुणीरसनेन मद्यास्वादेन शान्तो विवादो वाक्कलहादिर्यस्य तस्मिन्। अत उपाहितसंधौ प्रियैः सह कृतसंधाने मानिनीजने विषयेऽनङ्गो धनुषीषुं न संदधे संधानं नाकरोत्। सिद्धसाध्ये साधनवैयर्थ्यादिति भावः।

**हिन्दी**—प्रियके समागमसे क्रोधको छोड़ी हुई, मदिराके आस्वाद करनेसे शान्त विवाद ( कलह ) वाली प्रियके साथ सन्धि करनेवाली मानिनी नायिकाके विषयमें कामदेवने धनुमें बाणका सन्धान नहीं किया ॥ ५२ ॥

कुप्यताशु भवतानतचित्ताः कोपितांश्च वरिवस्यत यूनः।
इत्यनेक उपदेश इव स्म स्वाद्यते युवतिभिर्मधुवारः ॥ ५३ ॥

**मल्लि०**—कुप्यतेति ॥ यूनः प्रियान् कुप्यत यूनां कोपं जनयत। नात्र 'क्रुधद्रुहे—'त्यादिना यूना संप्रदानत्वे चतुर्थी। तस्य 'यं प्रति कोपः' इति नियमात्। अत्र कोपस्तावत्कृत्रिम इति आशु आनतचित्ता भवत। किंच, कोपितांस्तान् वरिवस्यत परिचरत। 'नमोवरिवश्चित्रङः क्यच्' इति क्यच्। वरिवसः परिचर्यायामित्यर्थे तस्य नियमश्च। इति एवम्। अनेकोऽनेकप्रकारो यः उपदेशः प्रवर्तकवाक्यं स इव मधुवारो मधुपानावृत्तिः। 'मधुवारा मधुक्रमाः' इत्यमरः। युवतिभिः स्वाद्यते स्म। मधुवारस्य कोपादिकार्यप्रवर्तकत्वसाम्यादुपदेश इवेत्युत्प्रेक्षा। अनियता खलु मत्तचेष्टा इति भावः।

**हिन्दी**—जवानों ( अपने प्रणयी जनों ) को कुपित करा दो, शीघ्र अनुकूल चित्तवाली हो जाओ, कुपित कराये गये अपने प्रणयी जनोंकी सेवा कर लो इस प्रकार अनेक प्रकारके उपदेशके समान युवतियोंने बारंबार मद्यका आस्वादन किया ॥ ५३ ॥

भर्तृभिः प्रणयसंभ्रमदत्तां वारुणीमतिरसां रसयित्वा ।
ह्रीविमोहविरहादुपलेभे पाटवं नु हृदयं नु वधूभिः ॥ ५४ ॥

मल्लि०—भर्तृभिरिति ॥ भर्तृभिः प्रणयसंभ्रमाभ्यां प्रेमादराभ्यां दत्ताम् । 'संभ्रमः साध्वसेऽपि स्यात्संवेगादरयोरपि' इति विश्वः । अत एव, अतिरसामधिकस्वादां वारुणीं 'वरुणात्मजाम् सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा' इत्यमरः । रसयित्वाऽऽस्वाद्य वधूभिर्ह्रीविमोहविरहाद् मदेन लज्जाजाड्यापगमाद्धेतोः पाटवं पटुत्वं नु हृदयं ज्ञानविशेषं नु उपलेभे । अत एव हृदयस्य तत्कार्यज्ञानसामर्थ्याद्धृदयमेव प्रागसत्तल्लब्धमिति संदेहः । अन्यथा कथं प्रियं प्रति वक्रोक्त्याद्यर्थेषु प्रवृत्तिरिति भावः । संदेहालङ्कारः ।

हिन्दी—अप्सराओंने अपने प्रणयीसे प्रेम और आदरसे दी गई, अधिक आस्वादवाली मदिराका पान कर मदके कारण लज्जा और मोह ( जडता ) के चले जानेसे पटुता वा ज्ञानविशेषको पा लिया ॥ ५४ ॥

स्वादितः स्वयमथैधितमानं लम्भितः प्रियतमैः सह पीतः ।
आसवः प्रतिपदं प्रमदानां नैकरूपरसतामिव भेजे ॥ ५५ ॥

मल्लि०—स्वादित इति ॥ स्वयं स्वादितः । आदौ स्वयमेवादाय पीतः, अनन्तरं प्रियतमैरेधितमानं वर्धितबहुमानं यथा तथा लम्भितो ग्राहितः स्वहस्तेन पायित इत्यर्थः । ततः प्रियतमैः सह पीतः । युगपदेकपात्रेण पीत इत्यर्थः । आसवः प्रमदानां प्रतिपदं प्रतिवारं नैकरूपरसतामनेकविधस्वादुत्वम् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । नञ्समासे नलोपः स्यात् । भेजे इव प्रापेव । उपचारविशेषाद्भोज्येषु रसविशेषः स्यादिति भावः । आस्वादनादिपदार्थानामनेकरसताप्राप्तिहेतुत्वात् काव्यलिङ्गं तावदेकं स्वादनादीनामनेकधर्माणामेकस्मिन्नेव सर्वक्रमेण सम्बन्धात्पर्यायभेदश्च, तयोश्च संसृष्टयोर्नैकरसत्वोत्प्रेक्षाबीजत्वात्तया सहाङ्गाङ्गिभावेन सङ्करः ।

हिन्दी—पहले स्वयम् लेकर पी गई, अनन्तर प्रियतमसे सम्मान बढ़ाकर ग्रहण कराई गई, तब प्रियतमके साथ एक ही पात्रमें पी गई मदिराने सुन्दरियोंके लिए प्रतिवार मानों अनेक प्रकारकी स्वादुता ( मिठास ) को प्राप्त किया ॥ ५५ ॥

भ्रूविलाससुभगाननुकर्तुं विभ्रमानिव वधूनयनानाम् ।
आददे मृदुविलोलपलाशैरुत्पलैश्चषकवीचिषु कम्पः ॥ ५६ ॥

मल्लि०—भ्रूविलासेति ॥ भ्रूविलासैः सुभगान् सुन्दरान् । वधूनयनानां विभ्रमाननुकर्तुं तैरात्मानं समीकर्तुमिवेति फलोत्प्रेक्षार्थत्वात् । मृदुविलोलपलाशैः ईषच्चञ्चलदलैः । उत्पलैः । चषकेषु या वीचयो मधूर्मयस्तासु यः कम्पः आददे स्वीकृतः । न तु स्वकम्पस्तस्य विलोलविशेषणेनैवोक्तत्वात्तत्स्वीकारश्च तद्योग एव । पूर्वं नेत्रमात्रसाम्यभाजामुत्पलानां कम्पमानवीचियोगात्तु भ्रूविलासनेत्रसाम्यं जातमित्यर्थः ।

हिन्दी—भ्रूविलासोंसे सुन्दर, मानों अप्सराओंके नेत्रोंके विलासोंका अनुकरण करनेके लिए कोमल और चञ्चल पत्तेवाले कमलोंसे पानपात्रोंमें मदिराकी तरङ्गोंसे कम्प स्वीकृत हुआ ॥ ५६ ॥

ओष्ठपल्लवविदंशरुचीनां हृद्यतामुपययो रमणानाम् ।
फुल्ललोचनविनीलसरोजैरङ्गनास्यचषकैर्मधुवारः ॥ ५७ ॥

मल्लि०—ओष्ठेति । ओष्ठ एव पल्लवस्तस्य विदंशे दशने रुचिरभिलाषो येषां तेषाम् । मुखसुरापानमिषेणाधरं पिपासतामित्यर्थः । रमणानां फुल्लानि लोचनान्येव विनीलसरोजानि येषु तैः अङ्गनास्यचषकैः मधुवारो मधुपानवृत्तिर्हृद्यतां हृदयप्रियतामुपययौ । 'हृदयस्य प्रिय' इति यत्प्रत्ययः । 'हृल्लेखयदण्लासेषु-' इति हृद्भावः । रमणविशेषणार्थहेतुककाव्यलिङ्गसङ्कीर्णरूपकालङ्कारः ।

हिन्दी—पल्लवरूप ओष्ठको क्षत करनेके लिए अभिलाष करनेवाले प्रियतमोंके विकसित नेत्ररूप नीलकमलोंसे युक्त सुन्दरियोंके मुखरूप चषकों ( पानपात्रों )से मदिरापानका व्यापार चित्तका प्रिय हो गया ॥ ५७ ॥

प्राप्यते गुणवतापि गुणानां व्यक्तमाश्रयवशेन विशेषः ।
तत्तथा हि दयिताननदत्तं व्यानशे मधु रसातिशयेन ॥ ५८ ॥

मल्लि०—प्राप्यत इति ॥ गुणवताप्याश्रयवशेन गुणानां विशेषः प्रकर्षः प्राप्यते व्यक्तम् । तत्तथा । यदुक्तं तत्तथैवेत्यर्थः । हि यस्मात् दयितानामाननेन करणेन दत्तं मधु रसातिशयेन स्वादुप्रकर्षेण कर्त्रा व्यानशे व्याप्तम् । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ।

हिन्दी—गुणोंसे सम्पन्न भी आश्रयके कारण गुणोंका उत्कर्ष प्राप्त करता है यह स्पष्ट है । क्योंकि प्रियतमाके मुखसे दी गई मदिरा आस्वादके उत्कर्षसे व्याप्त हो जाती है ॥ ५८ ॥

वीक्ष्य रत्नचषकेष्वतिरिक्तां कान्तदन्तपदमण्डनलक्ष्मीम् ।
जज्ञिरे बहुमता प्रमदानामोष्ठयावकनुदो मधुवाराः ॥ ५९ ॥

मल्लि०— वीक्ष्येति ॥ रत्नचषकेषु स्फटिकादिमणिपात्रेषु । अतिरिक्तां यावकापगमात्पूर्वाभ्यधिकां कान्तस्य यत् दन्तपदमण्डनं तस्य लक्ष्मीं शोभाम् । प्रतिबिम्बितामिति शेषः । वीक्ष्य । ओष्ठयावकनुदोऽधरलाक्षारागहारिणो मधुवारा मधुपानाभ्यासाः प्रमदानां बहुमता अभिमताः । वर्तमाने क्तः । तद्योगात्षष्ठी । जज्ञिरे जाताः । तेषां प्रियानुरागचिह्नप्रकाशकत्वादिति भावः ॥ ५९ ॥

हिन्दी—स्फटिक आदि रत्नोंके पात्रों ( प्यालों ) में लालीके छूटनेसे पहलेसे भी अधिक, प्रियके दन्तक्षतरूप अलंकारकी शोभाको देखकर ओष्ठकी लालीको मिटानेवाला मदिरापानका अभ्यास सुन्दरियोंको अभीष्ट हुआ ।

लोचनाधरकृताहृतरागा वासिताननविशेषितगन्धा ।
वारुणी परगुणात्मगुणानां व्यत्ययं विनिमयं नु वितेने ॥ ६० ॥

मल्लि०—लोचनेति ॥ लोचने चाधरश्च लोचनाधरम् । 'समुद्राभ्राद्घः—' इति व्यभिचारज्ञापकान्नात्राधरशब्दस्य पूर्वनिपातः । कृतश्चासावाहृतश्चेति विशेषणसमासः । लोचनाधरस्य कृताहृतो रागो यया सा तथोक्ता । लोचनयोः कृतरागाऽधरादासमन्ताद्धृतरागा चेत्यर्थः । पष्ठ्याश्चार्थसंबन्धात्सामान्यस्य योगविशेषे पर्यवसाननियमेनाधिकरणापादानार्थयोराक्षेपात् । तथा चाधरलोचनगुणयो रागतद्विरहयोः स्थानपरिवृत्तिं कृतवतीत्यर्थः । तथा वासितेन स्वगन्धसंक्रान्तिसुरभितेन आननेन विशेषितोऽतिशयितो गन्धो यस्याः सा । यद्वा—वासितानना चासवार्पणेनैव विशेषितगन्धा चेति कृतबहुव्रीहिविशेषणसमासः । उभयथाप्याननसंक्रान्तास्वगन्धा स्वसंक्रान्ताननगन्धा चेत्यर्थः । एवंभूता वारुणी मदिरा परगुणात्मगुणानां परयोर्लोचनाधरयोर्गुणौ च परस्याननस्य गुण आत्मनो वारुण्या गुणश्च परगुणात्मगुणानां व्यत्ययं विनिमयं नु वितेने विस्तारयामास । चित्तेन प्रामादिकी वस्तुपरिवृत्तिर्व्यत्ययः । बुद्धिपूर्वा तु विनिमयः । अत्र तन्त्रोच्चरितस्य 'परगुण' शब्दस्यावृत्त्या परगुणौ च परगुणात्मगुणौ चेति विग्रहः कथंचिदगत्या सोढव्यः । उपमानपूर्वपदबहुव्रीहिवत् । तथा चायमर्थः—परगुणयोरधरलोचनगुणयो रागतद्विरहयोर्व्यत्ययं नु विनिमयं नु वितेने, तथा परगुणात्मगुणयोराननगन्धात्मगन्धयोश्च व्यत्ययं नु वितेने । अन्यथा कथमन्यस्मिन्नन्यधर्मोपलम्भः संभवतीति भावः । अत्र

लोचनाधररागयोस्तदभावयोर्वा भेदेऽप्यभेदाध्यवसायादेकत्ववाचोयुक्तिः । तस्मात्तन्मूलातिशयोक्त्यनुप्राणिता चेयं व्यत्ययविनिमययोरन्यतरकरणादुत्प्रेक्षेति संक्षेपः। सा च प्रतीयमाना व्यञ्जकाप्रयोगात् । 'नु' शब्दस्तु संशये ॥ ६० ॥

हिन्दी—नेत्रोंमें राग ( लौहित्य ) करनेवाली और अधरकी लालिमाके मिटानेवाली, अपने गन्धकी संक्रान्तिसे सुरभित मुखसे विशेष गन्धवाली मदिराने दूसरे ( नेत्रों और अधरों ) के और अपने गुणोंका व्यत्यय ( उलटफेर ) वा विनिमय ( अदल बदल ) कर डाला अर्थात् नेत्रों और अधरोंका राग (लालिमा) मिटा दिया वा मुखकी सुगन्धिसे स्वयम् सुगन्धित हो गई ।

तुल्यरूपमसितोत्पलमक्ष्णोः कर्णगं निरुपकारि विदित्वा ।
योषितः सुहृदिव प्रविभेजे लम्भितेक्षणरुचिर्मदरागः ॥ ६१ ॥

मल्लि०—तुल्येति । अक्ष्णोस्तुल्यरूपमतितुल्याकृति योषितः कर्णगं कर्णावतंसीकृतम् । असितोत्पलं निरुपकारि अनुपकारकं विदित्वा ज्ञात्वा । तत्कार्यशोभायाः कर्णान्तविश्रान्तेनाक्ष्णैव कृतत्वादिति भावः । मदरागः सुहृदिव उत्पलस्य बन्धुरिव । अनिष्टवारकत्वादिति भावः । लम्भितेक्षणरुचिराहितनयनकान्तिः सन् । प्रविभेजे वर्णान्तरापादनेन प्रविभक्तवान् । अवैलक्षण्यकरादक्ष्णो व्यावर्तयामास। ततो विच्छित्तिकरत्वादिति भावः ॥ ६१ ॥

हिन्दी—अप्सराओंकी आँखोंके समान रूपवाले कानका भूषण बनाये गये नीलकमलको उपकार न करनेवाला समझकर मदरागने कमलके मित्रके समान होकर नेत्रोंमें कान्ति प्राप्त कराकर ( दूसरा ही वर्ण बनानेसे ) दोनोंका विभाग कर डाला ।

क्षीणयावकरसोऽप्यतिपानैः कान्तदन्तपदसंभृतशोभः ।
आययावतितरामिव वध्वाः सान्द्रतामधरपल्लवरागः ॥ ६२ ॥

मल्लि०—क्षीणेति ॥ अतिपानैः क्षीणयावकरसः क्षीणलाक्षारागोऽपि कान्तस्य दयितस्य दन्तपदेन दन्तक्षतेन संभृता शोभा यस्य सः । वध्वा अधरपल्लवरागोऽतितरामतिमात्रम् । 'अति' शब्दात्तरप्प्रत्यये 'किमेत्तिङव्यये–'त्यादिनाम्प्रत्ययः । 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययसंज्ञा । सान्द्रतां घनत्वम् : आययाविव । प्रियोपभोगचिह्नमण्डितानां कामिन्यवयवानां किमन्यैर्मण्डनैरिति भावः । तत्र क्षीणस्यापि

सान्द्रतेति विरोधात् कान्तदन्तेत्यादिविशेषणगत्या सान्द्रत्वे हेतूक्त्या काव्यलिङ्गं तत्संकीर्णा चोत्प्रेक्षा ॥ ६२ ॥

**हिन्दी**—मदिराका अधिक पान करनेसे लाक्षारागसे रहित होकर भी प्रियके दन्तक्षतके चिह्नकी शोभासे सम्पन्न, अप्सराके अधरपल्लवकी लाली अत्यन्त गाढ़ी हो गई।

रागकान्तनयनेषु नितान्तं विद्रुमारुणकपोलतलेषु ।
सर्वगापि ददृशे वनितानां दर्पणेष्विव मुखेषु मदश्रीः ॥ ६३ ॥

**मल्लि०**—रागेति ॥ वनितानां सर्वगाऽपि सर्वाङ्गगतापि । 'अन्तात्यन्त–' इत्यादिना डः । मदश्री रागेण कान्तानि नयनानि येषु तेषु । विद्रुमवदरुणानि कपोलतलानि येषु तेषु । मुखेषु दर्पणेष्विव नितान्तं ददृशे । तेषां नयनादिनैर्मल्येन रागाभिव्यक्तिसंभवादिति भावः । अत्र मदश्रीः सर्वगतापि मुखेष्वेव ददृश इति विरोधः । तस्य मुखविशेषणैः समाधानात् काव्यलिङ्गानुप्राणितो विरोधवदाभासोऽलङ्कारः । स चोपमया संसृज्यते ॥ ६३ ॥

**हिन्दी**–सुन्दरियोंके समस्त अङ्गोंमें प्राप्त मदकी शोभा रागसे सुन्दर नेत्रोंवाले, प्रवालके समान अरुण ( लाल ) कपोलोंसे युक्त मुखोंमें दर्पणोंके समान अधिक दिखाई पड़ी।

बद्धकोपविकृतीरपि रामाश्चारुताभिमततामुपनिन्ये ।
वश्यतां मधुमदो दयितानामात्मवर्गहितमिच्छति सर्वः ॥ ६४ ॥

**मल्लि०**—बद्धेति ॥ बद्धा कोपेन विकृतिर्याभिस्तास्तथाभूता अपि रामाः कर्म चारुता तासां सौन्दर्यं कर्त्री अभिमततां प्रियवाल्लभ्यम् उपनिन्ये। सौन्दर्यं हि विकृतिमपि रोचयत इति भावः । मधुमदो दयितानां वश्यतां विधेयत्वमुपनिन्ये। तथाहि सर्व आत्मवर्गहितमिच्छति । अतश्चारुता स्त्रीत्वात् स्त्रीणामुपचकार । मधुमदस्तु पुंस्त्वात् पुंसामिति युक्तमित्यर्थः । अत्र विकृता अप्यभिमताः कुपिता अपि वश्या इति विरोधस्य चारुतामदाभ्यां समाधानादुभयथापि विरोधाभासो भवन्नर्थान्तरन्यासेन संसृज्यते ॥ ६४ ॥

**हिन्दी**—क्रोधसे कुछ विकार होनेपर भी सुन्दरियोंको सुन्दरताने नायकके प्रियभावको प्राप्त करा दिया। सभी अपने वर्गका हित चाहते हैं, अतः मदिराके मदने भी ( पुरुष होनेसे ) उन सुन्दरियोंको अपने पतिके वशमें कर दिया।

वाससां शिथिलतामुपनाभि ह्रीनिराममपदे कुपितानि।
योषितां विदधती गुणपक्षे निर्ममार्ज मदिरा वचनीयम् ॥ ६५ ॥

**मल्लि०**—वासप्तामिति ॥ उपनाभि नाभिसमीपे वाससां शिथिलतां ह्रीनिरासं लज्जात्यागम् । अपदे कुपितानि अस्थानकोपाश्च गुणकोटौ विदधती निवेशयन्ती । दोषानप्येतान्गुणान्कुर्वतीत्यर्थः । मदिराऽपि योषितां वचनीयम् 'न नाभिं दर्शयेत्' इति शास्त्रनिषिद्धाचरणनिन्दां निर्ममार्ज । तथा दोषाणामपि वस्त्रशैथिल्यादीनां तदानीं गुणत्वान्न कश्चिद्वचनीयावकाश इत्यर्थः ॥ ६५ ॥

**हिन्दी**—नाभिके समीपमें वस्त्रोंकी शिथिलता, लज्जाका त्याग अस्थानमें क्रोध दोषस्वरूप होनेपर भी गुणकी कोटिमें रखती हुई मदिराने सुन्दरियोंके शास्त्रनिषिद्ध आचरणकी निन्दाका परिमार्जन कर दिया ॥ ६५ ॥

भर्तृषूपसखि निक्षिपतीनामात्मनो मधुमदोद्यमितानाम् ।
व्रीडया विफलया वनितानां न स्थितं न विगतं हृदयेषु ॥ ६६ ॥

**मल्लि०**—भर्तृष्विति ॥ उपसखि सखीसमीपे । समीपार्थेऽव्ययीभावः । आत्मनः स्वदेहान् । 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि' । इति वैजयन्ती । भर्तृषु निक्षिपतीनां निपातयन्तीनाम् । भर्तृणामुपरि पतन्तीनामित्यर्थः । 'आच्छीनद्योर्नुम्' इति विकल्पान्नुमभावः । कुतः । मधुमदेनोद्यमितानां प्रेरितानाम् । न तु स्वच्छयेति भावः । वनितानामनुरक्तस्त्रीणाम् । 'वनिता जनितात्यर्थानुरागायां च योषिति' । इति विश्वः । हृदयेषु विफलया । अनुचिताचरणादिति भावः । व्रीडया न स्थितं न विगतम् । वैकल्यात्तस्या मदोपाधिकत्वाच्चेति भावः । अत एव नोभयनिषेधविरोधः ॥ ६६ ॥

**हिन्दी**—सखियोंके समीपमें अपने शरीरको पतिके ऊपर डालती हुई, मदिराके मदसे प्रेरित स्त्रियोंके हृदयोंमें निष्फल व्रीडाने न तो स्थान पा लिया न गमन ही किया ॥ ६६ ॥

रुन्धती नयनवाक्यविकासं सादितोभयकरा परिरम्भे ।
व्रीडितस्य ललितं युवतीनां क्षीबता बहुगुणैरनुजह्रे ॥ ६७ ॥

**मल्लि०**—रुन्धतीति ॥ नयनानां वाक्यानां च विकासं प्रागल्भ्यं रुन्धती प्रतिबध्नन्ती । तथा परिरम्भ आलिङ्गने सादितौ स्तम्भितौ उभौ करौ यया सा युवतीनां संबन्धिनी क्षीबता मत्तता । कर्तरि क्तः । 'अनुपसर्गात्फुल्लक्षीबकृशो-

श्लाघा:' इति निपातनात्साधुः। क्षीबो मत्तः तस्य भावः क्षीबता। त्वतलोर्गुण-वचनस्य पुंवद्भावो वक्तव्यः। बहुगुणैर्दृष्टिसङ्कोचादिभिर्व्रीडितस्य व्रीडायाः। भावे क्तः। ललितं विलासम्। अनुजह्रेऽनुचक्रे। कर्तरि लिट्। व्रीडाकार्यकरत्वाद् व्रीडा-नुकरणमित्युपमालङ्कारः॥ ६७॥

**हिन्दी**--नेत्रों और वाक्योंके विकासको रोकती हुई तथा आलिङ्गनमें दोनों हाथोंको स्तब्ध ( निश्चल ) बनानेवाली युवतियोंकी मदिराकी मत्तताने नेत्र-सङ्कोच आदि बहुतसे गुणोंसे लज्जाके विलासका अनुकरण कर लिया॥ ६७॥

योषिदुद्धतमनोभवरागा मानवत्यपि ययौ दयिताङ्कम्।
कारयत्यनिभृता गुणदोषे वारुणी खलु रहस्यविभेदम्॥ ६८॥

**मल्लि०**--योषिदिति॥ उद्धत उत्कटो मनोभवेन यो रागः प्रीतिः स यस्याः सा योषित् मानवत्यपि दयितस्याङ्कं ययौ। यतो मानाद्रागो बलीयानिति भावः। श्लाघादोषं परिहरति—कारयतीति। अनिभृता चपला। न कार्यकारिणीत्यर्थः। वारुणी मदिरा गुणेषु दोषेषु च विषये। सर्वोऽपि द्वन्द्वो विभाषयैकवद्भवति। रहस्य-विभेदं रहस्यभङ्गं कारयति खलु। कलाविगूहितावपि गुणदोषौ प्रकाशयतीत्यर्थः। यतोऽतिगूढरागप्रकटनं प्रकटमानत्यागश्च प्रमतायाः न लाघवमावहति। अबुद्धि-पूर्वकत्वादिति भावः॥ ६८॥

**हिन्दी**--कामदेवके कारण उत्कट प्रीतिवाली स्त्री मानवती ( प्रणयसे कोप करनेवाली ) होकर भी प्रियके उत्सङ्गमें स्वयम् चली गई। चञ्चल मदिरा गुणों और दोषोंके विषयमें भी रहस्य भङ्ग करा देती है॥ ६८॥

आहिते नु मधुना मधुरत्वे चेष्टितस्य गमिते नु विकासम्।
आबभौ नव इवोद्धतरागः कामिनीष्ववसरः कुसुमेषोः॥ ६९॥

**मल्लि०**--आहित इति॥ मधुना मद्येन चेष्टितस्य रतिव्यापारस्य मधुरत्वे माधुर्य आहिते नु संपादिते नु प्रागसत्येव मनोहरत्वे संप्रत्युत्पादिते वा। विकासं गमिते नु प्राक्सत्येव माधुर्ये प्रकर्षं प्रापिते वा। उद्धतराग उद्रिक्तरागः। अत एव कुसुमेषोः कामिनीषु अवसरः प्रदेशो नव इवाबभौ। नित्यसन्निहितोऽपि मदनः कामिनीषु मदकृततात्कालिकचेष्टामाधुर्याद्रागोदये सत्यपूर्ववदुद्दीप्तोऽभूदित्यर्थः। संशयानुप्राणितेयमुत्प्रेक्षा॥ ६९॥

**हिन्दी**—मद्यसे रमण क्रियाकी मधुरताको सम्पादन करने पर वा विकासको

प्राप्त करने पर अधिक रागवाला कामदेवका स्त्रियोंमें प्रवेश न्यास होकर शोभित हुआ ॥ ६९ ॥

मा गमन्मदविमूढधियो नः प्रोज्झ्य रन्तुमिति शङ्कितनाथाः ।
योषितो न मदिरा भृशमीषुः प्रेम पश्यति भयान्यपदेऽपि ॥ ७० ॥

**मल्लि०**—मा गमन्निति । शङ्कितनाथा अविश्वस्तपुरुषा योषितो मदेन विमूढधियः स्तब्धबुद्धयो नोऽस्मान् प्रोज्झ्य विसृज्य । प्रपूर्वादुज्झतेः समासेऽनञ्पूर्वे क्त्वो ल्यप् । रन्तुं मा गमन् न गच्छन्तु इति ! मनीषयेति शेषः । गमेर्माङि लुङ् । 'न माङ्योगे' इत्यडागमप्रतिषेधः । मदिरां भृशमतिमात्रं नेषुर्नेच्छन्ति स्म । किंतु भर्तृवियोगभयादीषदेव पपुरित्यर्थः । तथा हि—प्रेम स्नेहः । अपदेऽस्थानेऽपि भयानि अनिष्टानि पश्यत्युत्प्रेक्षते । शङ्कत इति यावत् । शङ्काहेतौ प्रेम्णि कर्तृत्वोपचारः ॥ ७० ॥

**हिन्दी**—पुरुषमें विश्वास न करनेवाली स्त्रियाँ मदसे स्तब्ध बुद्धिवाली होकर हमलोगोंको छोड़कर प्रियतम रमण करनेके लिए अन्यत्र न जाएँ ऐसी बुद्धिसे मदिराकी ज्यादा इच्छा नहीं करती थीं, जैसे कि प्रेम अस्थानमें भी अनिष्टोंको देखता है ॥ ७० ॥

चित्तनिर्वृतिविधायि विविक्तं मन्मथो मधुमदः शशिभासः ।
संगमश्च दयितैः स्म नयन्ति प्रेम कामपि भुवं प्रमदानाम् ॥ ७१ ॥

**मल्लि०**—चित्तेति ॥ चित्तस्य निर्वृतिविधायि सुखकरं विविक्तं रहः । 'विविक्तं रहसि स्मृतम्' इति विश्वः । मन्मथो मधुमदो मद्यमदः शशिभासश्चन्द्रिका दयितैः सह संगमश्च । 'वृद्धो यूना—'इति निर्देशात् 'सह' शब्दाप्रयोगेऽपि सहार्थे तृतीया । एतानि प्रमदानां स्त्रीणां प्रेम वियोगासहत्वावस्थासंभोगं कामपि भुवं काञ्चिद्दशां नयन्ति स्म । रत्यवस्थामप्यतिक्रम्य शृङ्गारावस्थां क्रीडामयीं निन्युरित्यर्थः । 'प्रेमाभिलाषो रागश्च स्नेहः प्रेमरतिस्तथा । शृङ्गारश्चेति संभोगः सप्तावस्थः प्रकीर्तितः ॥' इत्युक्तं रसरत्नाकरे । 'प्रेक्षा दिदृक्षा रम्येषु तच्चिन्तास्त्वभिलाषकः । रागस्तत्सङ्गबुद्धिः स्यात्स्नेहस्तत्प्रवणक्रिया । तद्वियोगासहं प्रेम रतिस्तत्सहवर्तनम् । शृङ्गारस्तत्समं क्रीडा संभोगः सप्तधा क्रमात् ॥' इति ॥ ७१ ॥

**हिन्दी**—चित्तको सुख देनेवाला एकान्तमें कामदेव, मदिराका मद, चाँदनी

और प्रियके साथ समागम ये सब स्त्रियोंके प्रेमको किसी ( अनिर्वाच्य ) अवस्थामें पहुँचा देते थे ॥ ७१ ॥

धाष्ट्र्यलङ्घितयथोचितभूमौ निर्दयं विलुलितालकमाल्ये ।
मानिनीरतिविधौ कुसुमेषुर्मत्तमत्त इव विभ्रममाप ॥ ७२ ॥

मल्लि०—धाष्ट्र्येति ॥ धाष्ट्र्येनगप्रागल्भ्येन लङ्घिताऽतिक्रान्ता यथोचिता योग्या भूमिर्मर्यादा यस्मिंस्तथोक्ते । चुम्बनताडनमणितसीत्कारपुरुषायितादौ स्वयमुच्छृङ्खलवृत्तिरिति भावः । निर्दयं यथा तथा विलुलितानि आकर्षणाकुलितानि अलका माल्यानि च यस्मिंस्तस्मिन् । मानिनीरतिविधौ सुरते कुसुमेषुः कामो मत्तमत्तो मत्तप्रकार इव विभ्रमं विजृम्भणम् । आप प्राप । मत्तः किं न करोतीति भावः । कारयितरि कर्तृत्वोपचारादुत्प्रेक्षा ॥ ७२ ॥

हिन्दी—धृष्टतासे योग्य मर्यादाके लङ्घनवाले, निर्दयताके साथ आकर्षणसे आकुल केशपाश और मालासे युक्त ऐसे मानवतीके रमणविधानमें कामदेव स्वयम् मत्त-सा होकर वृद्धिको प्राप्त हुआ ॥ ७२ ॥

शीधुपानविधुरेषु वधूनां निघ्नतामुपगतेषु वपुःषु ।
ईहितं रतिरसाहितभावं वीतलक्ष्यमपि कामिषु रेजे ॥ ७३ ॥

मल्लि०—शीध्विति ॥ शीधुपानेन मद्यपानेन विधुरेषु विह्वलेषु । 'मैरेयमासवः शीधुः' इत्यमरः । अत एव वपुःषु अङ्गेषु निघ्नतां प्रियपराधीनताम् । उपगतेषु सत्सु । 'अधीनो निघ्न आयत्तः' इत्यमरः । वधूनां संबन्धिनि रतिरसे सुरतरसास्वाद आहितभावं दत्तचित्तं कामिषु विषय ईहितं चुम्बनताडनादिचेष्टितं वीतलक्ष्यं निर्विषयम् । अस्थानकृतमपीत्यर्थः । रेजे । रागिणा स्खलितमपि शोभते इति भावः ॥ ७३ ॥

हिन्दी—मदिरा पीनेसे विह्वल सुन्दरियोंके अंगोंके प्रियतमके अधीन होनेपर उनके सुरतरसके आस्वादमें दत्तचित्त कामुकोंकी चेष्टा अस्थानमें किया गया होकर भी शोभित हुआ ॥ ७३ ॥

अन्योन्यरक्तमनसामथ बिभ्रतीनां चेतोभुवो हरिसखाप्सरसां निदेशम् ।
वैबोधिकध्वनिविभावितपश्चिमार्धा सा संहृतेव परिवृत्तिमियाय रात्रिः ॥

मल्लि०—अन्योन्येति ॥ अथ हरिसखा इन्द्रसचिवा गन्धर्वास्तेषाम् । अप्सरसां चान्योन्यरक्तमनसां परस्परानुरक्तचित्तानां चेतोभुवः कामस्य निदेशमाज्ञां

विभ्रतीनां स्मरविधेयानाम् । तासु रममाणस्येवेत्यर्थः । 'षष्ठी चानादरे' इति षष्ठी। विबोधः प्रबोधनं शीलमेषां ते वैबोधिका वैतालिकाः । 'शीलम्' इति ठक् । तेषां ध्वनिभिर्मङ्गलरवैर्विभावितोऽभ्यूहितो ज्ञातः पश्चिमार्धश्चरमभागो यस्याः सा तथोक्ता सा रात्रिः संहृता संक्षिप्तेवेत्युत्प्रेक्षा । सुखिनां भूयानपि कालो लघीयानिव भवतीति भावः । परिवृत्तिं विवृत्तिम् । इयाय । प्रभातकल्पाऽभूदित्यर्थः ॥ ७४ ॥

**हिन्दी**—परस्पर अनुरक्त चित्तवाले और कामदेवकी आज्ञाका पालन करते हुए अप्सराओं तथा गन्धर्वोंको वैतालिकोंकी आवाजोंसे जाने जातेहुए अन्तिम भाग वाली रात संकुचित सी होकर परिवर्तनको प्राप्त हुई ॥ ७४ ॥

निद्राविनोदितनितान्तरतिक्लमानामायामिमङ्गलनिनादविबोधितानाम् ।
रामासु भाविविरहाकुलितासु यूनां तत्पूर्वतामिव समादधिरे रतानि ॥

**मल्लि०**—निद्रेति ॥ निद्रया विनोदितोऽपनीतो नितान्तमत्यर्थं यो रतिः क्लमः स येषां तेषाम् । आयामिभिरायामवद्भिर्दीर्घैर्मङ्गलनिनादैर्बोधिकध्वनिभि विबोधितानां यूनां रामासु । 'सुन्दरी रमणी रामा' इत्यमरः । भाविविरहेणाकुलितासु सतीषु रतानि तान्येव पूर्वाणि प्रथमानि तत्पूर्वाणि तेषां भावः तत्पूर्वता ताम् । भावे तल्प्रत्ययः । समादधिरे प्रापुरिवेत्युत्प्रेक्षा । आद्यसुरतवदादरात्प्रवर्तन्त इत्यर्थः । यदुत्तरकालं दुर्लभं तदतितृष्णयानुभूयत इत्यर्थः ॥ ७५ ॥

**हिन्दी**—निद्रासे जिनके सम्भोगकी ग्लानि दूर की गई है, दीर्घ मङ्गल ध्वनिसे जगाये गये उन तरुण पुरुषोंका सुन्दरियोंके भावी विरहसे आकुल होनेपर संभोग क्रिया मानों पहलेकी अवस्था ( नवीनता ) को प्राप्त हुई ॥ ७५ ॥

कान्ताजनं सुरतखेदनिमीलिताक्षं संवाहितुं समुपयानिव मन्दमन्दम् ।
हर्म्येषु माल्यमदिरापरिभोगगन्धानाविश्चकार रजनीपरिवृत्तिवायुः ॥

**मल्लि०**---कान्तेति ॥ सुरतखेदेन निमीलितान्यक्षीणि येन तं स्त्रीसमूहं संवाहितुं सेवितुमिव । खेदापनोदार्थमङ्गमर्दनं कर्तुमिवेत्यर्थः । 'संवाहनं वाहनेऽपि नरादेरङ्गमर्दने' । इति विश्वः । 'वाहृ प्रयत्ने' इति धातोर्ण्यर्थात्तुमुन् । अन्यथा णिजग्रहणे संवाहयितुमिति स्यात् । मन्दमन्दं मन्दप्रकारम् । 'प्रकारे गुणवचनस्य' इति द्विर्भावे कर्मधारयवद्भावात्सुपो लुक् । समुपयात् संवान् । रजनीपरिवृत्तिवायुः निशावसानमरुत् । हर्म्येषु माल्यानि च मदिरा च परिभोगो विमर्दश्च तेषां गन्धा-

नाविश्चकार । बहिः प्रसारयामासेत्यर्थः । अत्र सेवाहेतुमिवेत्युत्प्रेक्षा । मान्द्यगुण मूलत्वाद् गुणनिमित्तक्रियाफलोत्प्रेक्षा ॥ ७६ ॥

**हिन्दी**—संभोगके परिश्रमसे आँखोंको मूंदनेवाली स्त्रियोंकी मानों सेवा करनेके लिये धीरे-धीरे बहती हुई रात्रिके अवसानकी हवाने महलोंपर माला, मदिरा और परिभोगकी सुगन्धियोंको बाहर फैला दिया ॥ ७६ ॥

आमोदवासितचलाधरपल्लवेषु निद्राकषायितविपाटललोचनेषु ।
व्यामृष्टपत्रतिलकेषु विलासिनीनां शोभां बबन्ध वदनेषु मदावशेषः ॥७७॥

आमोदेति ॥ आमोदेन मद्यगन्धेन वासिताः सुरभिताश्चला दष्टमुक्तत्वात्स्फुरन्तश्चाधरपल्लवा येषु तेषु निद्रया कषायितानि अरुणीकृतानि विपाटलानि लोचनानि येषु तेषु । 'कषायैस्तुवरे न स्त्री निर्यासे रञ्जकादिके । सुरभावपटौ रक्ते सुन्दरे लवणेऽपि च'। इति केशवः । व्यामृष्टानि प्रमृष्टानि पत्राणि तिलकाश्च येषां तेषु विलासिनीनां वदनेषु मदावशेषः शोभां बबन्ध । मण्डनान्तरापाये मदशेष एव मण्डनं बभूवेत्यर्थः । स्त्रीणां मद एव विभूषणमिति भावः ॥ ७७ ॥

**हिन्दी**—मदिराके गन्धसे सुगन्धित चञ्चल अधरपल्लवोंवाले, नींदसे अलसाये लाल नेत्रोंवाले जिनके पत्र और तिलक मिट गये हैं सुन्दरियोंके ऐसे मुखमें मदके अवशिष्ट भागने शोभाको सम्पन्न किया ॥ ७७ ॥

गतवति नखलेखालक्ष्यतामङ्गरागे समददयितपीताताम्रबिम्बाधराणाम् ।
विरहविधुरमिष्टासत्सखीवाङ्गनानां हृदयमवललम्बे रात्रिसंभोगलक्ष्मीः ॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये नवमः सर्गः ।

●

**मल्लि०**—गतवतीति ॥ अङ्गरागेऽङ्गविलेपने नखलेखासु नखपदेषु लक्ष्यतां दृश्यतां गतवति सति । विमर्दात्तन्मात्रावशेषे सतीत्यर्थः । किंच बिम्बतुल्या अधरा बिम्बाधरा । 'शाकपार्थिवादित्वान्मध्यमपदलोपी समानाधिकरणसमासः' इति वामनः । समदैर्दयितैः पीताः पीडिता अत एवातिपीडनात् आताम्रा आसमन्ताद्रक्ता बिम्बाधरा यासां तासामङ्गनानां संबन्धि विरहेणाह्निकेन वियोगेन विधुरं विह्वलं हृदयम् । रात्रिसंभोगलक्ष्मीः । नखपदादिशोभेत्यर्थः । इष्टासत्सखीव निपुणसहचरीवावललम्बे धारयामास । प्रियसंभोगचिह्नशोभा स्पष्टा बभूवेत्यर्थः । प्रियो-

पभोगचिह्नशोभावलोकनलालसाः कथं विरहमसहन्तेत्यर्थः । श्रुतिपूर्णोपमालङ्कारः।
मालिनीवृत्तम् । लक्षणं तूक्तम् ॥ ७८ ॥

इति किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां नवमः सर्गः समाप्तः।

•

**हिन्दी**––अप्सराओंके अङ्गरागमें विमर्दके कारण नखक्षतचिह्नमात्रके दृश्य होनेपर मदबाल प्रियके अत्यन्त पीडा करनेसे बिम्बफलके समान लाल अधरवाली सुन्दरियोंके विरहके कारण विह्वल हृदयको रातकी संभोगशोभाने प्रिय सखीकी तरह अवलम्बन ( सहारा ) दिया ॥ ७८ ॥

किरातार्जुनीय महाकाव्यका नवम सर्गका अनुवाद समाप्त हुआ ॥

•

## दशमः सर्गः

अथागन्तुकसहजशोभासंपन्नतया समग्रसाधनाः स्त्रियो मुनिमनःप्रलोभनार्थं प्रारथन्नित्याह—

**अथ परिमलजामवाप्य लक्ष्मीमवयवदीपितमण्डनश्रियस्ताः ।**
**वसतिमभिविहाय रम्यहावाः सुरपतिसूनुविलोभनाय जग्मुः ॥ १ ॥**

**मल्लि०**––अथेति ॥ अथ प्रभाते परिमलजां संभोगसंभूतां लक्ष्मीं शोभाम् अवाप्य । 'संभोगः स्यात्परिमले' इति वैजयन्ती । सभोगात्स्त्रियः शोभन्त इति भाव । एतेनागन्तुकशोभासंपत्तिरुक्ता । अत एव सुरतादिवर्णनस्य प्रस्तुतोपयोगित्वं चोक्तम् । अथ सहजशोभासंपत्तिमाह—अवयवेति । अवयवैः स्तनादिभिर्दीपिता मण्डिता च मण्डनश्रीः प्रसाधनशोभा याभिस्ताः । रम्यहावा मनोहरविलासास्ताः स्त्रियः । 'हावो विलासश्चेष्टायाम्' इति विश्वः । वसतिं शिबिरम् । अभिविहाय सर्वतस्त्यक्त्वा सुरपतिसूनोरर्जुनस्य विलोभनाय जग्मुः । अत्रावयवदीपकतया प्रसिद्धस्य मण्डनस्य तद्दीप्यत्वासंबन्धेऽपि संबन्धाभिधानादवयवसौन्दर्यातिशयद्योतनार्थत्वादतिशयोक्तिरलङ्कारः । अस्मिन्सर्गे पुष्पिताग्रावृत्तम्—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' । इति लक्षणात ॥ १ ॥

हिन्दी—तब (प्रातःकालमें) संभोगसे उत्पन्न शोभा पाकर स्तन आदि अवयवोंसे प्रसाधनकी शोभाको प्रकाशित और अलंकृत करती हुई मनोहर विलास-वाली स्त्रियाँ निवासस्थान छोड़कर अर्जुनको लुभानेके लिए चलीं ॥ १ ॥

द्रुतपदमभियातुमिच्छतीनां गगनपरिक्रमलाघवेन तासाम् ।
अवनिषु चरणैः पृथुस्तनीनामलघुनितम्बतया चिरं निषेदे ॥ २ ॥

मल्लि०—द्रुतेति ॥ गगनपरिक्रमलाघवेन गगनगमनवेगेन द्रुतपदं यथा तथा, अभियातुं गन्तुमिच्छतीनाम् । किंच, पृथुस्तनीनां तासामप्सरसाम् । किंच, अलघुनितम्बतया न लघवो नितम्बा यासां तासां भावस्तत्ता तया स्थूलनितम्बतया चरणैरवनिषु चिरं निषेदे स्थितम् । अभ्यासपाटवेन मनसा त्वरमाणानामपि तासां स्तनजघनभाराच्चरणा नोत्तस्थुरित्यर्थः ॥ २ ॥

हिन्दी—आकाशमें गमनके वेगसे शीघ्रतापूर्वक अभिमान करनेकी इच्छा करती हुईं स्थूल स्तनोंवाली उन अप्सराओंके नितम्बके भारी होनेसे पैर जमीनपर बहुत समय रह गये ॥ २ ॥

निहितसरसयावकैर्बभासे चरणतलैः कृतपद्धतिर्वधूनाम् ।
अविरलविततेव शक्रगोपैररुणितनीलतृणोलपा धरित्री ॥ ३ ॥

मल्लि०—निहितेति ॥ निहिता आरोपिताः सरसयावकाः सान्द्रलाक्षारागा येषु तैर्वधूनां चरणतलैश्चरणन्यासैः कृतपद्धतिः कृतमार्गरेखा । अत एव अरुणिता अरुणीकृता नीलास्तृणोलपास्तृणानि दूर्वादीन्युलपा बल्वजाख्यास्तृणविशेषाश्च यस्याः सा । 'उलपा बल्वजाः प्रोक्ताः' इति हलायुधः । 'उलपा उशीरतृणानि' इति क्षीरस्वामी । ब्राह्मणपरिव्राजकवदुलपानां पृथङ्निर्देशः । धरित्री शक्रगोपैरिन्द्रगोपाख्यैः कीटकैः । 'इन्द्रगोपस्त्वग्निरजः' इति हैमः । अविरलं यथा तथा वितता व्याप्तेवेत्युत्प्रेक्षा । बभासे ॥ ३ ॥

हिन्दी—गीले लाक्षारागवाले रक्खे गये अप्सराओंके चरणन्यासोंमे मार्गरेखा बनाई गई अतएव लाल किये गये नीले रंगके दूर्वा आदि तृण और बल्वजवाली धरती इन्द्रगोपों (बीरवहूटियों) से निरन्तर व्याप्त-सी होकर शोभित हुई ॥ ३ ॥

ध्वनिरगविवरेषु नूपुराणां पृथुरशनागुणशिञ्जितानुयातः ।
प्रतिरवविततो वनानि चक्रे मुखरसमुत्सुकहंससारसानि ॥ ४ ॥

मल्लि०—ध्वनिरिति ॥ अगविवरेषु नगरन्ध्रेषु । गुहास्वित्यर्थः । प्रतिरवैः

प्रतिध्वनिभिर्विततः संमूर्च्छितः पृथुभो रशनागुणानां शिञ्जितैः स्वनितैरनुयातोऽनुगतः। मिलित इति यावत्। 'स्वनिते वस्त्रपर्णानां भूषणानां तु शिञ्जितम्' इत्यमरः नूपुराणां ध्वनिभिध्वानैर्वनानि मुखराः शब्दायमानाः समुत्सुका उत्कण्ठिता हंसाः सारसाश्च येषां तानि चक्रे। अत्र हंसादिषु मुखरसमुत्सुकीकरणरूपेण वस्तुना तेषां नूपुरादिध्वनौ सादृश्याद्धंससारसान्तरकूजितभ्रान्तिप्रतीतेर्भ्रान्तिमदलङ्कारो व्यज्यते।

**हिन्दी**—गुफाओंमें प्रतिध्वनियोंसे बढ़े हुए अप्सराओंकी मोटी करधनीके रस्सियोंकी आवाजोंसे मिली हुई नूपुरोंकी आवाजने वनोंको शब्द करते हुए उत्कण्ठित हंसों और सारसोंसे युक्त बना डाला ॥ ४ ॥

अवचयपरिभोगवन्ति हिंस्रैः सहचरितान्यमृगाणि काननानि।
अभिदधुरभितो मुनिं वधूभ्यः समुदितसाध्वसविक्लवं च चेतः ॥ ५ ॥

**मल्लि०**—अवचयेति ॥ अवचयः पुष्पफलादिच्छेदनं परिभोग उपभोगस्तद्वन्ति। हिंस्रा घातुका व्याघ्रादयः। 'शरारुर्घातुको हिंस्रः' इत्यमरः। तैः सहचरिताः सहचरन्तः। कर्तरि क्तः। 'मतिबुद्धि—'त्यादिसूत्रेण चकारात् शीलितादिवद्वर्तमानार्थता। अन्ये हिंस्रेतरे मृगा हरिणादयो येषु तानि सहचरितान्यमृगाणि काननानि। तथा समुदितेन साध्वसेन विक्लवं विवशं चेतश्च वधूभ्यः। 'क्रियाग्रहणमपि कर्तव्यम्' इति सम्प्रदानत्वाच्चतुर्थी। अभितो मुनिमभिदधुः। आसन्नं सूचयामासुरित्यर्थः। अवचयादिलिङ्गचतुष्टयेनासन्नो मुनिरित्यन्वमायतेत्यर्थः॥ ५॥

**हिन्दी**—फूल और फल आदियोंका छेदन ( तोड़ना ) और उपभोगसे युक्त, व्याघ्र आदि हिंस्र जन्तुओंके साथ चलते हुए, अन्य ( हिंस्र जन्तुओंसे भिन्न ) मृगोंवाले वनने तथा उत्पन्न हुए भयसे विह्वल चित्तने भी अप्सराओंको मुनि ( अर्जुन ) पास ही हैं ऐसी सूचना दे दी ॥ ५ ॥

नृपतिमुनिपरिग्रहेण सा भूः सुरसचिवाप्सरसां जहार तेजः।
उपहितपरमप्रभावधाम्नां न हि जयिनां तपसामलङ्घ्यमस्ति ॥ ६ ॥

**मल्लि०**—नृपतिमुनिपरिग्रहेणेति। सा भूर्नृपतिरेव मुनिस्तस्य परिग्रहेणाऽधिष्ठानेन हेतुना सुरसचिवानां गन्धर्वाणामप्सरसां च तेजो जहार। तदाश्रमप्रवेशादेव निस्तेजस्का अभूवन्नित्यर्थः। ननु कथं मानुषेण तेजसाऽमानुषं तेजो निरस्तमित्याशङ्क्याह—हि यस्मात् उपहित आहिते परमे प्रभावधाम्नी सामर्थ्यतेजसी येषां

तेषां जयिनां जयनशीलानाम् । 'महताम्' इति पाठे महतामुत्कटानाम् । तन्मा-मलङ्घ्यं नास्ति । किमप्यसाध्यं नास्तीति भावः ॥ ६ ॥

हिन्दी--राजमुनि ( अर्जुन ) के अधिष्ठानसे उस भूमिने गन्धर्वों और अप्सराओंके तेजका अपहरण कर डाला, क्योंकि उत्तम सामर्थ्य और तेजवाले जयशील पुरुषोंकी तपस्याओंसे कुछ भी असाध्य नहीं है।

सचकितमिव विस्मयाकुलाभिः शुचिसिकतास्वतिमानुषाणि ताभिः ।
क्षितिषु ददृशिरे पदानि जिष्णोरुपहितकेतुरथाङ्गलाञ्छनानि ॥ ७ ॥

**मल्लि०**--सचकितमिति ॥ विस्मयाकुलाभिस्ताभिः स्त्रीभिः कर्त्रीभिः शुचयः सिकता यासु तासु । पादरेखाभिव्यक्तियोग्यास्वित्यर्थः । क्षितिषूपहितानि विन्यस्तानि केतुरथाङ्गलाञ्छनानि रेखास्वरूपध्वजचक्राण्येव चिह्नानि येषु तान्यत एव, अतिमानुषाणि जिष्णोरर्जुनस्य पदानि सचकितमिव सभयमिव यथा तथा ददृशिरे दृष्टानि । अद्भुतवस्तुदर्शनाद्भयविस्मयौ भवत इति भावः ॥ ७ ॥

**हिन्दी**—आश्चर्यसे आकुल उन अप्सराओंने पवित्र बालूसे युक्त पृथ्वीमें रखे गये ध्वज और चक्रके रेखारूप चिह्नोंवाले अर्जुनके मनुष्येतर पदचिह्नोंको आश्चर्य और भयसे देखा।

अतिशयितवनान्तरद्युतीनां फलकुसुमावचयेऽपि तद्विधानाम् ।
ऋतुरिव तरुवीरुधां समृद्ध्या युवतिजनैर्जगृहे मुनिप्रभावः ॥ ८ ॥

**मल्लि०**—अतिशयितेति ॥ अतिशयिता अतिक्रान्ता वनान्तराणां द्युति-र्याभिस्तासाम् । कुतः । फलानां कुसुमानां चावचयेऽपि लवनेऽपि सैव विधा प्रकारो यासां तद्विधानाम् । तथैव समग्राणामित्यर्थः । तरूणां वीरुधां च समृद्ध्या लिङ्गेन युवतिजनैर्मुनिप्रभावः ऋतुरिव जगृहे निश्चितः । कारणतयेति शेषः । उपमा-लङ्कारः ॥ ८ ॥

**हिन्दी**—अन्य वनोंकी कान्तिको मात करनेवाली, फलों और फूलोंको चुन लेनेपर भी पहलेकी तरह परिपूर्ण पेड़ों और फैली हुई लताओंकी समृद्धिसे अप्सराओंने 'ऋतुके समान यह मुनिका प्रभाव है' ऐसा निश्चय किया।

मृदितकिसलयः सुराङ्गनानां ससलिलवल्कलभारभुग्नशाखः ।
बहुमतिमधिकां ययावशोकः परिजनतापि गुणाय सद्गुणानाम् ॥ ९ ॥

**मल्लि०**—मृदितेति ॥ ससलिलमार्द्रं यद्वल्कलं तदेव भारस्तेन भुग्नशाखो

नम्रशाखः 'वल्कं वल्कलमस्त्रियाम्' इत्यमरः । अत एव मृदितकिसलयो विलुलितपल्लवः । 'क्वचित्र' इति प्रतिषेधान्न मृदेर्गुणः । अशोको वृक्षविशेषः । सुराङ्गनानामप्सरसां सम्बन्धिनीम् । अधिकां बहुमतिं तत्कर्तृकसम्मानं सज्जनसेवी धन्योऽयमिति यशो प्राप । ननु सेवकेषु का श्लाघेत्यत्राह—परीति । सद्‌गुणानां महतां परिजनतापि अनुचरत्वमपि । भावे तल् । गुणायोत्कर्षाय । भवतीति शेषः । एतेन तासां मुनेः प्रभावदर्शनादेव तत्पारवश्यं गम्यते ॥ ९ ॥

**हिन्दी**—जलसे युक्त ( आर्द्र ) वल्कलके भारसे झुकी हुई शाखासे युक्त अतएव मृदित पल्लवोंवाला अशोक वृक्ष अप्सराओंका अधिक सम्मानका पात्र हुआ, क्योंकि महापुरुषोंका अनुचर होना भी उत्कर्षका कारण हो जाता है।

यमनियमकृशीकृतस्थिराङ्गः परिददृशे विधृतायुधः स ताभिः ।
अनुपमशमदीप्ततागरीयान् कृतपदपङ्क्तिरथर्वणेव वेदः ॥ १० ॥

**मल्लि०**—यमेति ॥ यमो देशकालाद्यनपेक्षया शुद्धिहेतुरहिंसादिः नियमस्तदपेक्षया शुद्धिहेतुस्तपःस्वाध्यायादिः ताभ्यां कृशीकृतान्यपि स्थिराणि दृढान्यङ्गानि यस्य सः । विधृतायुधो धृतशस्त्रोऽत एव ततःशास्त्रयुक्तः सोऽर्जुनः शमः शान्तिरभ्युदयकाण्डे दीप्तता उग्रताऽभिचारकाण्डे ताभ्यामनुपमाभ्यां गरीयानुदग्रः । अथर्वणा वसिष्ठेन कृता रचिता पदानां पङ्क्तिरानुपूर्वी यस्य स वेदः । चतुर्थवेद इत्यर्थः । अथर्वणस्तु मन्त्रोद्धारो वसिष्ठकृत इत्यागमः । स इव ताभिः स्त्रीभिः परिददृशे दृष्टः ॥ १० ॥

**हिन्दी**—यम ( अहिंसा आदि ) और नियम ( तपस्या आदि ) से कृश किये गये परन्तु दृढ अङ्गोंवाले तथा आयुध लिये हुए अर्जुनको अनुपम शान्ति और उग्रतासे उन्नत अथर्वा ( वशिष्ठ ) से की गई पदोंकी आनुपूर्वी वाला अथर्ववेदके समान अप्सराओंने देखा।

अथ चतुर्भिस्तमेव विशिनष्टि शशधर इत्यादिभिः—
शशधर इव लोचनाभिरामैर्गगनविसारिभिरंशुभिः परीतः ।
शिखरनिचयमेकसानुसद्मा सकलमिवापि दधन्महीधरस्य ॥ ११ ॥

**मल्लि०**—शशधर इति ॥ शशधरश्चन्द्र इव लोचनाभिरामैर्नेत्राह्लादकरैर्गगनविसारिभिरंशुभिस्तेजोभिः परीतो व्याप्तोऽप्सरश्चदेकं सानु सद्म यस्य सः । एकदेश-

स्योऽप्रीत्यर्थः। महीधरस्येन्द्रकीलस्य सकलं शिखरनिचयमपि दधत् आवृण्वन्निवे-त्युत्प्रेक्षा ॥ ११ ॥

**हिन्दी**--चन्द्रमाके समान नेत्रोंको सुखदेने वाले आकाशमें फैले हुए तेजसे व्याप्त, आकाशके समान एकदेशमें स्थित होकर भी अर्जुन इन्द्रकाल पर्वतके समस्त शिखर-समूहको व्याप्त करते हुए-से प्रतीत हो रहे थे।

सुरसरिति परं तपोऽधिगच्छत् विधृतपिशङ्गबृहज्जटाकलापः।
हविरिव विततः शिखासमूहैः समभिलषन्नुपवेदि जातवेदाः ॥ १२ ॥

**मल्लि०**—सुरेति ॥ पुनः, सुरसरिति गङ्गाकूले परं तपोऽधिगच्छन्नर्जयन्। फलाभिलाषेणेति शेषः। हविः समभिलषन्नित्युपमानविशेषणसामर्थ्यात्। तथा विधृतः पिशङ्गबृहज्जटाकलापो येन सः। अत एव उपवेदि वेद्याम्। विभक्त्यर्थेऽ-व्ययीभावः। शिखासमूहैर्ज्वालाजालैर्विततो विस्तृतो हविराज्यादिकं समभिलषन्। जातवेदो हिरण्यम्। भोज्यं कर्मफलमिति यावत्। यस्मादिति जातवेदा वह्निरिव स्थितः ॥ १२ ॥

**हिन्दी**--गङ्गाके तटपर कठिन तपस्या करते हुए पीले लम्बे जटाकलापको धारण किये हुए अर्जुन अतएव वेदिके समीप ज्वालासमूहसे विस्तृत हविका अभिलाष करते हुए अग्निदेवके समान प्रतीत हो रहे थे।

सदृशमतनुमाकृतेः प्रयत्नं तदनुगुणामपरैः क्रियामलङ्घ्याम्।
दधदलघु तपः क्रियानुरूपं विजयवतो च तपःसमां समृद्धिम् ॥ १३ ॥

**मल्लि०**—सदृशमिति ॥ पुनः, आकृतेर्वपुषः। 'आकृतिः कथिता रूपे सामान्य-वपुषोरपि' इति विश्वः। सदृशं तुल्यमतनुं महान्तं प्रयत्नमुद्योगं दधत्। तथा तदनु-गुणां प्रयत्नानुकूलामपरैरन्यैरलङ्घ्याम्। कर्तुमशक्यामित्यर्थः। क्रियां व्यापारं दधत्। तथा क्रियानुरूपं क्रियानुगुणमलघु गुरु तपो दधत्। तथा विजयवतीं सर्वो-त्कर्षवतीं विजयफलां वा तपःक्रियानुरूपां तपःसमां समृद्धिमैश्वर्यं दधत्। अत्र पूर्वं प्रत्युत्तरस्य विशेषणतया स्थापनात्प्रथमैकावल्यलंकारः--'यथापूर्वं परस्य विशेषण-तया स्थानं एकावली' इति सर्वस्वसूत्रात् ॥ १३ ॥

**हिन्दी**--शरीरके समान महान् उद्योगको करते हुए उसीके अनुकूल दूसरोंसे अलङ्घनीय कर्मको करते हुए और धर्मके अनुकूल बड़ी तपस्याको करते हुए उसी

तरह विजय युक्त तपस्याके समान ऐश्वर्यको धारण करते हुए ( अर्जुन विद्यमान थे )।

चिरनियमकृशोऽपि शैलसारः शमनिरतोऽपि दुरासदः प्रकृत्या।
ससचिव इव निर्जनेऽपि तिष्ठन्मुनिरपि तुल्यरुचिस्त्रिलोकभर्तुः॥ १४॥

**मल्लि०**—चिरनियमेति ॥ पुनश्च, चिरनियमेन दीर्घकालतपसा कृशः क्षीणाङ्गोऽपि शैलसारः। उपमानपूर्वपदो बहुव्रीहिः। शमे निरतोऽपि प्रकृत्या स्वभावेन दुरासदो दुर्धर्षो निर्जने विजने देशे तिष्ठन्नपि ससचिवः सपरिवार इव। किञ्च, मुनिरपि ऐश्वर्यरहितोऽपीत्यर्थः। त्रयाणां लोकानां भर्तुरिन्द्रस्य। 'तद्धितार्थ-' त्यादिनोत्तरपदसमासः। तुल्यरुचिः समानतेजाः 'अपि' शब्दः सर्वत्र विरोधद्योतनार्थः। स च मुनेरतर्क्यमहिमत्वेन निरस्त इति विरोधालंकारः—'विरोधाभासत्वं विरोधः' इति सूत्रात्॥ १४॥

**हिन्दी**—अर्जुन दीर्घकालकी तपस्यासे दुर्बल होकर भी पर्वतके समान सारसे युक्त थे, शान्तिमें तत्पर होकर भी स्वभावसे दुर्धर्ष थे, एकान्तमें रहते हुए भी परिवारवाले-से थे और मुनि होकर भी त्रैलोक्यके स्वामी ( इन्द्र )के समान तेजस्वी थे।

तनुमवजितलोकसारधाम्नीं त्रिभुवनगुप्तिसहां विलोकयन्त्यः।
अवययुरमरस्त्रियोऽस्य यत्नं विजयफले विफलं तपोधिकारे॥ १५॥

**मल्लि०**—तनुमिति ॥ अवजिते तिरस्कृते लोकानां सारधाम्नी सत्वतेजसी यया ताम्। 'अन उपधा-' इत्यादिना ङीप्। त्रयाणां भुवनानां समाहारः त्रिभुवनम्। 'तद्धितार्थे-'त्यादिना समाहारार्थे तत्पुरुषः। पात्रादित्वात्स्त्रीत्वप्रतिषेधः। तस्य गुप्तौ रक्षणे सहां समर्थाम्। पचाद्यच्। तनुं मूर्तिं विलोकयन्त्योऽमरस्त्रियोऽप्सरसो विजयफले विजयार्थे तपोधिकारे तपोनुष्ठानेऽस्यार्जुनस्य यत्नं विफलमवययुर्मेनिरे। त्रैलोक्याधिपत्यादिमहाफलसाधनसमर्थस्य तुच्छफलाभिलाषा मत्तमातङ्गमांसभोगोचितस्य कण्ठीरवस्य जीर्णतृणचर्वणोत्कण्ठेव न शोभामावहतीति भावः। अत्र विशिष्टतनुविलोकनस्य स्त्रीविशेषणवैफल्यज्ञानहेतुत्वोक्त्या पदार्थहेतुकं काव्यलिङ्गमलंकारः॥ १५॥

**हिन्दी**—तीन लोकोंके सार और तेजको तिरस्कार करनेवाली मूर्तिको देखती

हुईं अप्सराएँ विजयरूप फलवाली तपस्याके अनुष्ठानमें इन ( अर्जुन ) के यत्नको विफल समझने लगीं ॥ १५ ॥

मुनिदनुतनयान् विलोभ्य सद्यः प्रतनुबलान्यधितिष्ठतस्तपांसि ।
अलघुनि बहु मेनिरे च ताः स्वं कुलिशभृता विहितं पदे नियोगम् ॥१६॥

मल्लि०--मुनीति ॥ प्रतनुबलानि अनुत्कृष्टसाराणि तपांस्यधितिष्ठतोऽनुतिष्ठतो मुनीन् दनुतनयान् दानवांश्च सद्यस्तत्क्षणमेव विलोभ्याकृष्य चिरात् कुलिशभृता शक्रेण । अलघुनि महति पदे स्थाने विहितं दत्तं स्वं स्वकीयं नियोगमधिकारं ताः स्त्रियो बहु यथा तथा मेनिरे । निकृष्टपदवृत्तीनामुत्कृष्टपदलाभो महान् । बहुमानमूलमिति भावः । विलोभ्य मेनिरे इत्यन्वयः । यद्वा—विलोभ्य लोभं कारयित्वा विहितं शक्रेणेत्यन्वयात् समानकर्तृत्वनिर्वाहः ॥ १६ ॥

हिन्दी—उत्कर्षसे रहित सारवाली तपस्या करते हुए मुनि और दानवों-( असुरों ) को शीघ्र ही लुभाकर इन्द्रसे उत्कृष्ट स्थानमें दिये गये अपने अधिकार-को उन अप्सराओंने बहुत समझा ॥ १६ ॥

अथ कृतकविलोभनं विधित्सौ युवतिजने हरिसूनुदर्शनेन ।
प्रसभमवततार चित्तजन्मा हरति मनो मधुरा हि यौवनश्रीः ॥ १७ ॥

मल्लि०—अथेति ॥ अथ अनन्तरं कृतकविलोभनं कृत्रिमं विलोभनं विधित्सौ विधातुमिच्छौ । वि-पूर्वाद्धधातेः सन्नन्तादुप्रत्ययः । युवतिजने हरिसूनोरर्जुनस्य दर्शनेन चित्तजन्मा कामः प्रसभं बलात् अवततार । देवतान्तरं वञ्चयितुमागतस्य मोहो भवति, यतः स्वयं मुनिवञ्चनप्रवृत्ताः स्त्रियस्तेन वञ्चिता इत्यर्थः । युक्तं चैतत् । हि यस्मात् । मधुरा मनोहरा यौवनश्रीर्मनो हरति । बलादिति शेषः ।१७।

हिन्दी--अनन्तर कृत्रिम मोहनकर्म करने की इच्छा करनेवाली अप्सराओंमें अर्जुनके दर्शनसे चित्तजन्मा ( कामदेव ) अकस्मात् अवतीर्ण हो गया, क्योंकि मधुर यौवनकी शोभा मनको हर लेती है ॥ १७ ॥

सपदि हरिसखैर्वधूनिदेशाद् ध्वनितमनोरमवल्लकीमृदङ्गैः ।
युगपदृतुगणस्य संनिधानं वियति वने च यथायथं वितेने ॥ १८ ॥

मल्लि०—सपदीति ॥ सपदि वधूनां निदेशान्नियोगात् ध्वनिता नादिता मनोरमा वल्लक्यो वीणा मृदङ्गाश्च यैस्तैर्हरिसखैर्गन्धर्वैर्वियति आकाशे वने च युगपदृतुगणस्य ऋतुषट्कस्य संनिधानमाविर्भावो यथायथं यथास्वम् । असंकरेणे-

त्यर्थः । 'यथास्वं तु यथायथम्' इति निपातः । वितेने विस्तेरे । उद्दीपनसामग्री संपादितेत्यर्थः ॥ १८ ॥

**हिन्दी**—उसी क्षण अप्सराओंकी आज्ञासे मनोहर बीन और पणव बजाकर गन्धर्वोंने आकाश और वनमें एक ही बार वसन्त आदि छः ऋतुओंका अविर्भाव अलग-अलग विस्तृत कर दिया ॥ १८ ॥

अथ वर्षाक्रमेण ऋतून्वर्णयति—सजलेत्यादि—

**सजलजलधरं नभो विरेजे विवृतिमियाय रुचिस्तडिल्लतानाम्।**
**व्यवहितरतिविग्रहैर्वितेने जलगुरुभिः स्तनितैर्दिगन्तरेषु ॥ १९ ॥**

**मल्लि०**—सजलेति । सजला जलधरा यस्मिंस्तत् । नभो विरेजे । तडित एव लता इव तासां रुचिः प्रभा विवृतिं विजृम्भणम् । इयाय । तथा व्यवहितरतिविग्रहैः दूरीकृतरतिप्रकल्पितप्रणयकलहैर्जलगुरुभिः । जलभाराद् गम्भीरैरित्यर्थः । स्तनितैः गर्जितैः । दिगन्तरेषु वितेने विततैरभावि भावे लिट् । अकर्मकत्वं वैवक्षिकम् । अत एव दिगन्तरेष्वित्यधिकरणत्वेन प्रयोगः । अन्यथा कर्मत्वमेव स्यात् ॥ १९ ॥

**हिन्दी**—जलसे पूर्ण मेघवाला आकाश शोभित हुआ । लताकी तुल्य बिजलियोंकी चमक समृद्धिको प्राप्त हुई । रमण क्रियामें कलह हटानेवाले जलके भारसे गम्भीर मेघगर्जन दिगन्तोंमें विस्तृत हो गया ॥ १९ ॥

**परिसुरपतिसूनुधाम सद्यः समुपदधन्मुकुलानि मालतीनाम् ।**
**विरलमपजहार बद्धबिन्दुः सरजसतामवनेरपां निपातः ॥ २० ॥**

**मल्लि०**—परीति ॥ परिसुरपतिसूनुधाम अर्जुनाश्रम प्रति । परीति लक्षणे कर्मप्रवचनीयस्य योगाद् द्वितीया । यद्वा—वर्जनार्थस्य तस्यात्र विरोधाद्विभक्त्यर्थेऽव्ययीभावः । तथा च सुरपतिसूनुधाम्नीत्यर्थः । सद्यो मालतीनां जातीलतानाम् । 'सुमना मालती जातिः' इत्यमरः । मुकुलानि समुपदधत् जनयन् । विरलं यथा तथा बद्धबिन्दुरपां निपातो वृष्टिरवनेः संबन्धिनीं सरजसतां सरजस्कत्वम् । 'अव्ययं विभक्ती'त्यादिसूत्रेण साकल्यार्थेऽव्ययीभावः 'समासान्तनिपातश्च बहुव्रीह्यर्थस्तु लक्ष्यते । अव्ययीभावदर्शनं तु प्रायिकम्' इति केचित् । अपजहार । धूलिं शमयामासेत्यर्थः ॥ २० ॥

**हिन्दी**—अर्जुनके आश्रममें चमेलीके पुष्पोंके मुकुलोंको उत्पन्न करती हुई विरलरूपसे बिन्दुको टपकानेवाली जलवृष्टिने भूमिकी धूलको मिटा दिया ॥ २० ॥

भोगोंको जो कि सर्पोंके फणोंके समान हैं, उनका आश्रय करनेसे आपत्ति दुर्लभ नहीं अर्थात् सुलभ होती है ॥ २३ ॥

इतोऽपि श्रियो हेया इत्याह—

नान्तरज्ञाः श्रियो जातु, प्रियैरासां न भूयते।
आसक्तास्तास्वमी मूढा वामशीला हि जन्तवः ॥ २४ ॥

मल्लि०—नेति। श्रियः संपदो जातु कदाचित्। अन्तरज्ञा नीचानीचविशेषाभिज्ञा न भवन्ति। अत एव, आसां श्रियां प्रियैर्न भूयते। न ताः कुत्राप्यनुरज्यन्तीत्यर्थः। नन्वयं श्रीदोष इति चेत्तत्राह—मूढा अमी जनाः तासु अननुरक्तास्वपि स्त्रीषु आसक्ताः। स्त्रीष्विव श्रीष्वननुरक्तास्वनुरागः पुंसामेवायं दोष इत्यर्थः। विमर्शं तर्हि तास्वेव सर्वेषामासक्तिरित्यर्थान्तरं न्यस्यति—वामेति। जन्तवो वामशीला वक्रस्वभावा हि। स्वभावस्य दुर्वारत्वादिति भावः ॥ २४ ॥

हिन्दी—सम्पत्तियाँ कभी भी 'यह नीच है यह उदार है' ऐसे भेदको जानकार नहीं होती हैं, कोई भी पुरुष इनका प्रिय नहीं होता है, मूढ पुरुष ही इनमें आसक्त होते हैं, क्योंकि प्राणीलोग वक्र स्वभाववाले होते हैं ॥ २४ ॥

यदुक्तम्—'नान्तरज्ञाः श्रियः' ( श्लो० २४ ) इति, तदेव भङ्ग्यन्तरेणाह—

कोऽपवादः स्तुतिपदे यदशीलेषु चञ्चलाः।
साधुवृत्तानपि क्षुद्रा विक्षिपन्त्येव संपदः ॥ २५ ॥

मल्लि०—क इति। यत् संपदोऽशीलेषु दुःशीलेषु विषये चञ्चला अस्थिराः। न तद्विरुद्धमुच्यते, यतः चञ्चला इति। अतः स्तुतिविषये तत्र कोऽपवादः का निन्दा किन्तु क्षुद्राः संपदः साधुवृत्तानपि विक्षिपन्त्येव जहत्येव। तदेव तासां निन्दापदमित्यर्थः। तस्मादर्थो न पुरुषार्थ इति संदर्भार्थः ॥ २५ ॥

हिन्दी—सम्पत्तियाँ दुःशील जनोंमें चञ्चल होती हैं इस स्तुतिके विषयमें क्या निन्दा है? किन्तु क्षुद्र सम्पत्तियाँ सच्चरित्र जनोंको भी छोड़ ही देती हैं ॥ २५ ॥

ननु नार्थमहमर्थये, किन्तु वीरधर्ममनुपालयन् वैरनिर्यातनमिच्छामीत्याशङ्क्य तदपि परपीडात्मकत्वादयुक्तमिति श्लोकचतुष्टयेनाचष्टे—

कृतवानन्यदेहेषु कर्ता च विधुरं मनः।
अप्रियैरिव संयोगो विप्रयोगः प्रियैः सह ॥ २६ ॥

मल्लि०—कृतवानिति। तत्रात्मदृष्टान्तेनैव परपीडातो निवर्तितव्यमित्याशये-

नाह—अप्रियैरनिष्टवस्तुभिः संभोग इव प्रियैरिष्टवस्तुभिः सह विप्रयोगो विरहो- ऽन्यदेहेषु स्वस्यैव देहान्तरेषु अतीतानागतेष्विति शेषः। मनो विधुरं दुःखितं कृत- वान् कर्ता करिष्यति च। भविष्ये लुट्। तद्वर्तमाने चानुभूयत इति शेषः। इष्ट- नाशो दुःखहेतुरिति सर्वत्रापि त्रैकालिकसिद्धमिति श्लोकार्थः॥ २६॥

हिन्दी—अप्रियों (अनिष्ट वस्तुओं) से संयोगके समान प्रियों (इष्ट वस्तुओं) से वियोगने अपने अन्य शरीरोंमें मनको दुःखित किया है और करेगा भी॥ २६॥

संप्रतीष्टसमागमस्य सुखहेतुत्वमाह—

शून्यमाकीर्णतामेति तुल्यं व्यसनमुत्सवैः।
विप्रलम्भोऽपि लाभाय सति प्रियसमागमे॥ २७॥

मल्लि०—शून्यमिति। प्रियसमागम इष्टजनसंयोगे सति शून्यं रिक्तमपि आकीर्णतां संपूर्णताम्, एति। समृद्धिमिव? प्रतीयत इत्यर्थः। व्यसनं विपदपि उत्सवैस्तुल्यम्। 'व्यसनं विपदि भ्रंशे' इत्यमरः। विप्रलम्भो वञ्चना। प्रतारण- मिति यावत्। सोऽपि लाभाय। किं बहुना, प्रियसङ्गस्य सर्वावस्थास्वपि सुखमेवे- त्यर्थः॥ २७॥

हिन्दी—प्रियजनके समागममें शून्य भी परिपूर्ण हो जाता है और विपत्ति भी उत्सवोंके समान प्रतीत होती है प्रतारण भी लाभके लिए हो जाती है॥२७॥

पुनः प्रकारान्तरेण विप्रयोगस्य दुःखहेतुत्वमाह—

तदा रम्याण्यरम्याणि, प्रियाः शल्यं तदासवः।
तदैकाकी सबन्धुः सन्निष्टेन रहितो यदा॥ २८॥

मल्लि०—तदेति। तदा रम्याण्यपि अमनोहराणि भवन्ति। किं बहुना, प्रिया असवः प्राणा अपि शल्यम्। शल्यवदसह्या भवन्तीत्यर्थः। किंच, तदा सबन्धुः सन्नपि, एकाकी असहाय एव। 'एकादाकिनिच्चासहाये' इत्याकिनि- च्प्रत्ययः। यदा इष्टेन रहितो भवति तदा सर्वमसह्यमिति॥ २८॥

हिन्दी—इसके विपरीत जब प्रियसे रहित (वियुक्त) होता है तब सुन्दर पदार्थ भी असुन्दर हो जाते हैं। प्रीतिके विषय प्राण भी कण्टक-सा हो जाता है, उस समय बन्धुओंके साथ रहता हुआ भी अकेला-सा हो जाता है॥ २८॥

युक्तः प्रमाद्यसि, हितादपेतः परितप्यसे।
यदि नेष्टात्मनः पीडा मा सञ्जि भवता जने॥ २९॥

मल्लि०—युक्त इति। किंच, युक्तः, हितेनेति शेषः। हितेनेष्टेन युक्तः सन्। प्रमाद्यसि प्रकर्षेण माद्यसि हृष्यसि। हितादपेतः परितप्यसे परितप्तो भवसि। तपेर्देवादिकात्कर्तरि लट्। सत्यमेवं ततः किमत आह—यदीति। पीडा आत्मनः स्वस्य च नेष्टा यदि तर्हि भवता जने परस्मिन्नपि मा सञ्जि न सज्यताम्। सञ्जतेर्ण्यन्तात्कर्मणि लुङ्। आत्मदृष्टान्तेन परपीडातो निवर्तितव्यमित्यर्थः। पीडायाः परात्मनोः समत्वात्॥ २९॥

हिन्दी—( हे वत्स! ) हितसे युक्त होकर बहुत ही प्रसन्न होते हो, परन्तु हितसे रहित होकर सन्तप्त हो जाते हो, इसलिए तुम दुःख भोगना नहीं चाहते हो तो अन्य जनमें आसक्त मत बनो॥ २९॥

अथ देहास्थैर्यश्रद्धया च परपीडा न कार्येत्याह—

जन्मिनोऽस्य स्थितिं विद्वाँल्लक्ष्मीमिव चलाचलाम्।
भवान्मा स्म वधीन्न्याय्यं, न्यायाधारा हि साधवः॥ ३०॥

मल्लि०—जन्मिन इति। अस्य जन्मिन उत्पत्तिधर्मिकस्य शरीरिणः। व्रीह्यादित्वादिनिः। स्थितिं लक्ष्मीमिव चलाचलां चञ्चलां जन्मिधर्मत्वादेव चलाम्। अनित्यामित्यर्थः। चलतेः पचाद्यच्। 'चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्येति वक्तव्यम्' इति द्विर्भावः। अभ्यासस्यागागमश्च। विद्वान्। जानन्नित्यर्थः। 'विदेः शतुर्वसुः' इति वैकल्पिको वसुरादेशः। भवान्। न्यायादनपेतं न्याय्यम्। 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः। मा स्म वधीत्। मा नाशयेत्यर्थः। 'स्मोत्तरे लुङ् च' इति लुङ्। 'लुङि च' इति हनो वधादेशः। 'शेषे प्रथमः' इति प्रथमपुरुषः। हि यस्मात् साधवो न्यायाधारा न्यायावलम्बाः। बहुव्रीहिस्तत्पुरुषो वा। न्यायत्यागे साधुत्वमेव न स्यादिति भावः। 'न्यायाचाराः' इति पाठे न्यायमाचरन्तीति तथोक्ताः। कर्मण्यण्॥ ३०॥

हिन्दी—इस जन्मवाले ( प्राणी )की स्थितिको लक्ष्मीकी तरह चञ्चल ( अस्थिर ) जानते हुए तुम न्याय्य ( न्यायसे युक्त ) विषयका नाश मत करो, क्योंकि सज्जनलोग न्यायका अवलम्बन करनेवाले होते हैं॥ ३०॥

तर्हि किं मे कर्तव्यं तत्राह—

विजहीहि रणोत्साहं, मा तपः साधु नीनशः।
उच्छेदं जन्मनः कर्तुमेधि शान्तस्तपोधन ! ॥ ३१ ॥

मल्लि०—विजहीहीति। हे तपोधन ! रणोत्साहं रणोद्योगम्। लोकोत्तरेषु कार्येषु स्थेयान्प्रयत्न उत्साहस्तं विजहीहि त्यज। 'आ च हौ' इतीकारः। साधु समीचीनम्। निःश्रेयसकरत्वादिति भावः। तपो मा नीनशो न नाशय। नश्यतेर्ण्यन्तान्माङ्योगादाशिषि लुङ् अडागमनिषेधश्च किन्तु जन्मन उच्छेदं साधयितुमित्यर्थः। शान्त एधि। विजिगीषानिवृत्तो भवेत्यर्थः। 'हुझल्भ्यो हेर्धिः' धिः। 'घ्वसोरेद्धावभ्यासलोपश्च' इत्येकार इति ॥ ३१ ॥

हिन्दी—( हे तपस्विन् ! ) युद्धमें उत्साहको छोड़ दो, उत्तम तपस्या नष्ट मत करो, जन्मका उच्छेद ( नाश ) करनेके लिए अर्थात् मोक्षको प्राप्त करनेके लिए शान्त बनो ॥ ३१ ॥

अथ सर्वथा मे विग्रयकण्डूतिर्न निवर्तत इत्याशङ्क्य तर्ह्यन्तःशत्रुविजयेन विधीयतां तदपनोद इत्याह—

जीयन्तां दुर्जया देहे रिपवश्चक्षुरादयः।
जितेषु ननु लोकोऽयं तेषु कृत्स्नस्त्वया जितः ॥ ३२ ॥

मल्लि०—जीयन्तामिति। दुर्जया अजय्याः। चक्षुरादयो देहे वर्तमाना रिपवो जीयन्ताम्। यस्मात् तेषु अन्तःशत्रुषु जितेषु सत्सु त्वयाऽयं कृत्स्नो लोको जितो ननु। किमुताम्ये शत्रवस्तदन्तर्गता इत्यर्थः। जितेन्द्रियस्येन्द्रियार्थनिःस्पृहस्य निर्भरवैरानुदयाद्विजयव्यपदेशः ॥ ३२ ॥

हिन्दी—( हे वत्स ! ) नहीं जीते जानेवाले शरीरमें वर्तमान नेत्र आदि शत्रुओंको जीत लो, क्योंकि उन शत्रुओंको जीतनेपर समस्त लोकको तुम जीत जाओगे ॥ ३२ ॥

अजितेन्द्रियस्यानिष्टमाचष्टे—

परवानर्थसंसिद्धौ, नीचवृत्तिरपत्रपः।
अविधेयेन्द्रियः पुंसां गौरिवेति विधेयताम् ॥ ३३ ॥

मल्लि०—परवानिति। अर्थसंसिद्धौ अभ्यवहाराविस्वार्थसाधके परवान् पराधीनः। 'परतन्त्रः पराधीनः परवान्' इत्यमरः। नीचवृत्तिः कर्षणवहनादि-

कृष्टकर्मा । अपत्रपो निर्लज्जोऽविधेयेन्द्रियोऽजितेन्द्रियः पुमान् गौर्बलीवर्द इव पुंसां विधेयतां यथोक्तकारिताम् । प्रेष्यतामिति यावत् । 'विधेयो विनयग्राही वचने स्थित आश्रवः' । इत्यमरः । एति प्राप्नोति । उपमालंकारोऽयम्—'प्रकृतयोरर्थ साधर्म्यात् श्लेषे तु शब्दमात्रसाधर्म्यम्' इति ॥ ३३ ॥

**हिन्दी**—प्रयोजनकी सिद्धिके लिए पराऽधीन, नीच कर्म करनेवाला, लज्जासे रहित और इन्द्रियोंको वशमें नहीं करनेवाला पुरुष बैलके समान अन्य पुरुषोंका वशवर्ती हो जाता है ॥ ३३ ॥

न केवलं हिंसादिदोषमूलत्वाद्विषयाणां हेयत्वम्, किन्तु अपारमार्थिकत्वादपीत्याह—

> श्वस्त्वया सुखसंवित्तिः स्मरणीयाऽधुनातनी ।
> इति स्वप्नोपमान् मत्वा कामान् मा गास्तदङ्गताम् ॥ ३४॥

**मल्लि०**—श्व इति । अधुना भवा अधुनातनी इदानींतनी । 'सायंचिरं—' मित्यादिना ट्युप्रत्ययः । सुखसंवित्तिः सुखानुभवः श्वः परेऽहनि त्वया स्मरणीया न त्वनुभवनीया । इति हेतोः । काम्यन्त इति कामा विषयास्तान् स्वप्नोपमान् स्वप्नतुल्यान् । मत्वाऽतात्त्विकान्निश्चित्य तदङ्गतां तच्छेषत्वं मा गा न गच्छ। 'इणो गा लुङि' इति गादेशः ॥ ३४ ॥

**हिन्दी**—( हे वत्स ! ) इस समय हुए सुखके अनुभवको दूसरे दिन तुम्हें स्मरण ( याद ) करना चाहिए, इस कारणसे शब्द स्पर्श आदि विषयोंको स्वप्नके समान निश्चय करके विषयोंके अधीन मत बनो ॥ ३४ ॥

अतो हेयाः कामा इत्याह—

> श्रद्धेया विप्रलब्धारः, प्रिया विप्रियकारिणः ।
> सुदुस्त्यजास्त्यजन्तोऽपि कामाः कष्टा हि शत्रवः ॥ ३५ ॥

**मल्लि०**—श्रद्धेया इति । श्रद्धातुमर्हा श्रद्धेया विश्वसनीयास्तथा विप्रलब्धारः प्रतारकाः । विश्वासघातका इत्यर्थः । तथा, प्रीणयन्तीति प्रियाः प्रीतिजनकाः । 'इगुपधे—'त्यादिना कप्रत्ययः । तथापि विप्रियकारिणो दुःखजननशीलाः । किंच, त्यजन्तोऽपि पुरुषं विहाय गच्छन्तोऽपि सुदुस्त्यजाः स्वयत्नेन त्यक्तुमशक्याः कामा विषयाः कष्टाः कुत्सिताः शत्रवो हि प्रसिद्धशत्रवः । वैधर्म्यादिति भावः । अत्र श्रद्धेयत्वादीनां विप्रलम्भकत्वादीनां चैकत्र विरोधो विषयस्वाभाव्येन समाधीयत

इति विरोधाभासोऽलंकारः। तेन च कामानां प्रसिद्धशत्रुवैषम्यं व्यतिरेकेण व्यज्यत इत्यलंकारेणालंकारध्वनिः॥ ३५॥

हिन्दी—शब्द स्पर्श आदि विषय विश्वसनीय होकर भी प्रतारक( ठगनेवाले) होते हैं, प्रीतिजनक होकर भी अप्रिय करनेवाले होते हैं, पुरुषको छोड़कर जाते हुए भी दुःखसे छोड़े जानेवाले होते हैं, अतः ये ( विषय ) कष्टजनक शत्रु ( दुश्मन ) हैं॥ ३५॥

तर्हि किं कर्तव्यमित्याशङ्क्योपसंहरन्नाह—

विविक्तेऽस्मिन्नगे भूयः प्लाविते जह्नुकन्यया।
प्रत्यासीदति मुक्तिस्त्वां पुरा मा भूरुदायुधः॥ ३६॥

मल्लि०—विविक्त इति। विविक्ते विजने। 'विविक्तविजनच्छन्ननिःशलाकास्तथा रहः'। इत्यमरः। जह्नुकन्यया गङ्गया भूयो भूयिष्ठं पुनः पुनर्वा। 'भूयः पुनः पुनः ख्यातं भूतार्थे पुनरव्ययम्' इति विश्वः। प्लाविते सिक्ते। 'पाविते' इति पाठे पवित्रीकृत इत्यर्थः। अस्मिन्नग इन्द्रकीले त्वां मुक्तिः पुरा निकटे प्रत्यासीदति। संनिकृष्टा भविष्यतीत्यर्थः। 'पुरा पुराणे निकटप्रबन्धातीतभाविषु'। इति विश्वः। उदायुधो गृहीतशस्त्रो मा भूः। शस्त्रं विमुञ्चेत्यर्थः॥ ३६॥

हिन्दी—एकान्त अथवा पवित्र गङ्गाजीसे वारंवार सेचन किये गये इस इन्द्रकील पर्वतमें तुम्हें मुक्ति समीप आयेगी शस्त्र लेनेवाले मत बनो॥ ३६॥

व्याहृत्य मरुतां पत्याविति वाचमवस्थिते।
वचः प्रश्रयगम्भीरमथोवाच कपिध्वजः॥ ३७॥

मल्लि०—व्याहृत्येति। मरुतां पत्यौ देवेन्द्रे, इति वाचं व्याहृत्य उक्त्वा, अवस्थिते सति तूष्णीं स्थिते सति। अथ कपिध्वजोऽर्जुनः प्रश्रयगम्भीरं विनयमधुरम्। 'विनयप्रश्रयौ समौ' इति यादवः। वच उवाच उक्तवान्॥ ३७॥

हिन्दी—ऐसा वाक्य कह कर देवराज इन्द्रके मौन धारण करने पर अर्जुनने विनयसे गम्भीर ऐसा वचन कहा॥ ३७॥

किमुवाचेत्यपेक्षायां चतुर्भिरिन्द्रवाक्यमुपश्लोकयन्नाह—

प्रसादरम्यमोजस्वि गरीयो लाघवान्वितम्।
साकाङ्क्षमनुपस्कारं विष्वग्गति निराकुलम्॥ ३८॥

मल्लि०—प्रसादेति। प्रसादोऽत्र प्रसिद्धार्थपदत्वं तेन रम्यम्। 'प्रसिद्धार्थ-

पदत्वं यस्य प्रसादो निगद्यते' । इति लक्षणात् । ओजस्वि समासभूयिष्ठम् । 'ओजः समासभूयस्त्वम्' इति शासनात् । गरीयोऽर्थभूयस्त्वपरिगतम् । न तु शब्दाडम्बरमात्रमित्यर्थः । लाघवान्वितं विस्तरदोषरहितम् । साकाङ्क्षम् आकाङ्क्षावत्पदकदम्बात्मकम् । न तु दशदाडिमादिवाक्यवदनाकाङ्क्षितमित्यर्थः । अनुपस्कृतं अध्याहारदोषरहितम् । विष्वग्गति कृत्स्नार्थप्रतिपादकम् । न तु सावशेषार्थम् अत एव निराकुलमसंकीर्णार्थम् ॥ ३८ ॥

हिन्दी—( हे महोदय ! ) प्रसिद्ध अर्थवाले पदोंसे रमणीय, प्रचुर समासोंसे युक्त, प्रचुर अर्थोंवाला, विस्तर दोषसे रहित, आकाङ्क्षावाले पदोंसे सहित, अध्याहार दोषसे रहित और समस्त अर्थोंका प्रतिपादक ॥ ३८ ॥

न्यायनिर्णीतसारत्वान्निरपेक्षमिवागमे ।
अप्रकम्प्यतयाऽन्येषामाम्नायवचनोपमम् ॥ ३९ ॥

मल्लि०—न्यायेति । पुनः, न्यायेन युक्त्या निर्णीतसारत्वान्निश्चितार्थत्वाद्धेतोः, आगमे शास्त्रे विषये निरपेक्षं स्वतन्त्रमिव । युक्तिदार्ढ्यादेवं प्रतीयते वस्तुतस्तु शास्त्रसिद्धार्थमिवेति 'इव' शब्दार्थः । किंच, अन्येषां प्रतिवादिनाम् । अप्रकम्प्यतया अनुमानादिभिरबाध्यत्वादप्रत्याख्येयतया आम्नायवचनोपमम् । वेदवाक्यतुल्यमित्यर्थः ॥ ३९ ॥

हिन्दी—युक्तिसे सारका निर्णय करनेसे शास्त्रके विषयमें अपेक्षा न रखनेवाला ( स्वतन्त्रके समान ), अनुमान आदिसे बाध्य न होनेसे वेदवाक्यके समान ॥ ३९ ॥

अलङ्घ्यत्वाज्जनैरन्यैः क्षुभितोदन्वदूर्जितम् ।
औदार्यादर्थसंपत्तेः शान्तं चित्तमृषेरिव ॥ ४० ॥

मल्लि०—अलङ्घ्यत्वादिति । अन्यैर्जनैरलङ्घ्यत्वाद् अनुलङ्घनीयत्वात् क्षुभितोदन्वदूर्जितम् उद्वेलाम्भोधिगम्भीरम् । औदार्यादुक्तिविशेषत्वात् । श्लाघ्यविशेषणत्वाद्वा । तदुक्तं दण्डिना—'उत्कर्षवान्गुणः कश्चिदुक्ते यस्मिन्प्रतीयते । तदुदाराह्वयं तेन सनाथा काव्यपद्धतिः । श्लाघ्यैर्विशेषणैर्युक्तमुदारं कैश्चिदिष्यते ॥' इति अग्राम्यार्थत्वात्' इति केचित् । अन्यत्र—त्यागित्वादित्यर्थः । अर्थसंपत्तेः प्रयोजनसंपत्तेः अन्यत्र—अणिमादिसमृद्धेः ऋषेर्मुनेश्चित्तमिव शान्तं सौम्यम् ॥ ४० ॥

हिन्दी—अन्य जनोंसे लंघनीय न होनेसे क्षुब्ध समुद्रके समान गम्भीर, उक्ति विशेष और प्रयोजन सम्पत्तिके कारण ऋषिके चित्तके समान सौम्य ॥ ४० ॥

इदममीदृग्गुणोपेतं लब्धावसरसाधनम् ।
व्याकुर्यात्कः प्रियं वाक्यं यो वक्ता नेदृगाशयः ॥ ४१ ॥

मल्लि०—इदमिति । इदमीदृग्गुणोपेतं यथोक्तगुणयुक्तम् । इदमुपपदाद् दृशेः क्विप् । 'इदंकिमोरीश्की' इतीशादेशः । लब्धे प्राप्तेऽवसरसाधने कालोपायौ येन तत् प्रियं प्रीतिकरं वाक्यं को वक्ता व्याकुर्यात् व्याहरेत् । यो वक्ता सोऽनीदृगाशयः ईदृग्विवक्षायाम् न भवति । अबुद्धिरित्यर्थः । तस्यार्थस्य वक्तुमशक्यत्वादिति भावः ।

हिन्दी—यह ऐसे गुणोंसे युक्त, अवसर और साधनको प्राप्त, प्रीति करनेवाले ऐसे वाक्यका ऐसे आशयसे रहित कौन पुरुष प्रतिपादन करेगा ? ॥ ४१ ॥

एवमिन्द्रवाक्यमुपश्लोक्य नाहमस्योपदेशस्याधिकारीति परिहरति—

न ज्ञातं तात ! यत्नस्य पौर्वापर्यममुष्य ते ।
शासितुं येन मां धर्मं मुनिभिस्तुल्यमिच्छसि ॥ ४२ ॥

मल्लि०—नेति । हे तात ! अमुष्य तपोरूपस्यास्य मदीययोगस्य पूर्वं चापरं च पूर्वापरे । त एव पौर्वापर्यं कारणं फलं च । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् प्रत्ययः । ते तव न ज्ञातम् । त्वया न ज्ञायत इत्यर्थः । 'मतिबुद्धो-'त्यादिना वर्तमाने क्तः । तद्योगादेव षष्ठी । कुतः । येन कारणेन मां मुनिभिस्तुल्यं सदृशं धर्मं मोक्षधर्मं शासितुमुपदेष्टुम् । इच्छसि । शासिरयं दुहादित्वाद् द्विकर्मको ज्ञेयः ।४२।

हिन्दी—हे तात ! तपस्यारूप इस मेरे प्रयत्नके कारण और फलको आपने नहीं समझा, जिस कारणसे आप मुझे मुनिके समान मोक्षधर्मका उपदेश देना चाहते हैं ॥ ४२ ॥

अथ पौर्वापर्यमज्ञात्वाप्युपदेशे दोषमाह—

अविज्ञातप्रबन्धस्य वचो वाचस्पतेरपि ।
व्रजत्यफलतामेव नयद्रुह इवेहितम् ॥ ४३ ॥

मल्लि०—अविज्ञातेति । अविज्ञातः प्रबन्धः पूर्वापरसंगतिर्येन तस्य वाचस्पतेर्बृहस्पतेरपि । कस्कादित्वात्सः । अथवा-'षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु' इति सकारः । एतस्मादेव ज्ञापकादलुगिति केचित् । वच उपदेशो नयद्रुहो नीतिविरुद्धकारिणः पुरुषस्य । ईहितमुद्योग इव । अफलतां निष्फलत्वं गच्छत्येव ॥४३॥

हिन्दी—पूर्वाऽपर संगतिको न जाननेवाले बृहस्पतिका भी उपदेश, नीतिविरुद्ध आचरण करनेवाले पुरुषके उद्योगके समान निष्फल हो जाता है ॥ ४३ ॥

ननु सदुपदेशस्य कुतो वैफल्यमित्याशङ्क्य सोऽप्यस्थाने प्रयुक्तश्चेदूषरक्षेत्रे शालिबीजवद्विफल एवेत्याशयेनाह—

श्रेयसोऽप्यस्य ते तात ! वचसो नास्मि भाजनम् ।
नभसः स्फुटतारस्य रात्रेरिव विपर्ययः ॥ ४४ ॥

मल्लि०—श्रेयस इति । हे तात ! 'पुत्रे पितरि पूज्ये च तातशब्दं प्रयुञ्जते' इति । श्रेयसोऽपि हितार्थयोगात्प्रशस्ततरस्यापि । अस्य ते तव वचसो हितोपदेशरूपस्य रात्रेर्विपर्ययो दिवसः स्फुटतारस्य व्यक्ततारकस्य नभस इव भाजनं पात्रं नास्मि । अनधिकारित्वादिति भावः । अत्राह्नो नभोमात्रसबन्धसंभवेऽपि तारासंबन्धासंभवात्तद्विशिष्टनभःसंबन्धविरोधादुक्तं तारकितस्य नभसो न पात्रमहरिति ॥ ४४ ॥

हिन्दी—हे तात ! जैसे दिन ताराओंसे व्यक्त आकाशका पात्र नहीं होता है वैसे ही कल्याणकारक होनेपर भी आपके इस हितोपदेशका मैं पात्र नहीं हूं ॥४४॥

कुतस्ते मोक्षोपदेशानधिकारित्वम्, किंच, ते तपसः पौर्वापर्यं कथं न जाने इत्याशङ्क्य तत्सर्वं स्वजात्यादिकथनपूर्वकं निरूपयति—

क्षत्त्रियस्तनयः पाण्डोरहं पार्थो धनंजयः ।
स्थितः प्रास्तस्य दायादैर्भ्रातुर्ज्येष्ठस्य शासने ॥ ४५ ॥

मल्लि०—क्षत्त्रिय इति । अहं क्षत्त्रियः क्षत्त्रियकुले जातः । तत्रापि महाकुले प्रसूतः, वीरसंतानश्चेत्याह—पाण्डोस्तनय इति । कौन्तेयोऽस्मि, न माद्रेय इत्याह—पार्थ इति । पृथा कुन्ती, तत्सुतः पार्थः । 'तस्यापत्यम्' इत्यण् । अर्जुनोऽहं महावीरश्चेत्याह—धनंजय इति । उत्तरकुरून्विजित्य धनाहरणाद्धनंजयोऽस्मीत्यर्थः । 'खचिमुमागम' इत्युक्तं प्राक् । धनंजय इत्युक्ते शरीरस्थो वायुः सर्पविशेषो वा स्यात्तदर्थः पार्थः, गन्धर्वोऽपि कश्चित्पृथासुतोऽस्ति तदर्थं पाण्डोः सुतः, नैमिषारण्ये पाण्डुविप्रस्तत्पत्नी पृथा नाम काचिद् ब्राह्मणी तत्पुत्रोऽपि स्यात्तदर्थं क्षत्त्रिय इति । अथैवं चेत्किमर्थं तर्हि तपस्यसि, मोक्षार्थं वा किं न तपस्यसि, तत्राह—स्थित इति । दायं पैतृकं धनमाददत इति दायादा ज्ञातयः । 'दायादा ज्ञातिपुत्रयोः' इति, 'विभक्तव्यं पितृद्रव्यं दायमाहुर्मनीषिणः' । इति च विश्वः । 'स्वामीश्वरादि' सूत्रे सोपसर्गादपि दायादेति कप्रत्ययान्तो निपातनात्साधुः । तैः, प्रास्तस्य राज्यान्निरस्तस्य । वैरिनिर्यातितनाधिन इत्यर्थः । ज्येष्ठस्य भ्रातुर्युधिष्ठिरस्य । 'पूर्व

शब्दादिष्ठन्प्रत्ययः। वृद्धस्य च ज्यादेशः। शासने निदेशे स्थितः। तदाज्ञया तपस्यामीत्यर्थः। अन्यथा मानहानिः सौभ्रात्रभङ्गः पूज्यपूजाव्यतिक्रमदोषश्च स्फुरतीति भावः। अत एव हिंसैकरसस्य रागद्वेषकषायितचेतसः कुतो मे मोक्षाधिकार इति तात्पर्यार्थः। सार्थविशेषणत्वात्परिकरालंकारः॥ ४५॥

हिन्दी—( हे तात ! ) मैं क्षत्रिय तथा पाण्डु और कुन्तीका पुत्र धनञ्जय ( अर्जुन ) ज्ञातियोंसे राज्यसे हटाये गये बड़े भाई ( युधिष्ठिर )की आज्ञामें स्थित हूँ ( अतः मेरी तपस्या मोक्षप्राप्तिके लिए नहीं है )॥ ४५॥

यदुक्तम्—'विरुद्धः केवलं वेषः' ( श्लो० १४ ) इति तत्रोत्तरमाह—

कृष्णद्वैपायनादेशाद्बिभर्मि व्रतमीदृशम्।
भृशमाराधने यत्तः स्वाराध्यस्य मरुत्वतः॥ ४६॥

मल्लि०—कृष्णेति। द्वीपोऽयनं जन्मभूमिर्यस्य स द्वीपायनः, स एव द्वैपायनो व्यासः। प्रज्ञादित्वात्स्वार्थेऽण्प्रत्ययः। स एव कृष्णवर्णत्वात् कृष्णद्वैपायनश्च। तस्यादेशादुपदेशात्। ईदृशम्। विरुद्धवेषमित्यर्थः। व्रतं तपोनियमं बिभर्मि धारयामि। न तु स्वेच्छयेति भावः। अथोपास्यां देवतामाह—भृशमिति। स्वाराध्यस्य सुखमाराध्यस्य। प्रादिसमासः। 'स्वाराधस्य' इति पाठ उपसृष्टात्खल्प्रत्ययः। मरुत्वत इन्द्रस्य। भृशं सम्यक्। आराधने यत्तः प्रयत्नवानित्यर्थः। तस्य क्षत्रियदैवतत्वादिति भावः॥ ४६॥

हिन्दी—मैं व्यासजीकी आज्ञासे ऐसा व्रत कर रहा हूँ, सुखपूर्वक आराधनाके योग्य इन्द्रदेवकी उचित आराधनामें यत्नयुक्त हूँ॥ ४६॥

ननु भवादृशभ्रातृसहायस्य महावीरस्य युधिष्ठिरस्य कथमरिपरिभवप्राप्तिरित्यत आह—

दुरक्षान्दीव्यता राजा राज्यमात्मा वयं वधूः।
नीतानि पणतां नूनमीदृशी भवितव्यता॥ ४७॥

मल्लि०—दुरक्षानिति। दुरक्षान्। कपटपाशकैरित्यर्थः। 'दिवः कर्म च' इति करणे कर्मसंज्ञा। दीव्यता क्रीडता। 'आहूतो न निवर्तेत द्यूतादपि रणादपि'। इति शास्त्रात्। न तु व्यसनितयेति भावः। राज्ञा युधिष्ठिरेण राज्यं राष्ट्रम्, आत्मा स्वयं, वयं चत्वारोऽनुजाः, वधूर्भार्या द्रौपदी च, पणतां ग्लहत्वम्। 'पणोऽक्षेषु ग्लहोऽक्षास्तु देवनाः पाशकाश्च ते', इत्यमरः। नीतानि। सर्वं द्यूते राज्ञा हारित-

मित्यर्थः । नीतानीति नपुंसकैकशेषः । नयतेर्द्विकर्मकत्वात्प्रधाने कर्मणि क्तः । ननु सर्वज्ञस्य राज्ञः कथमियमविमृश्यकारिता तत्राह—भवितव्यताऽनर्थानामवश्यं भाविता। ईदृशी नूनं निश्चितम् । नात्र संशय इत्यर्थः । बुद्धिरपि भवितव्यतानुसारिण्येव, न स्वतन्त्रेत्यर्थः ॥ ४७ ॥

**हिन्दी**—दुष्ट जूआ खेलते हुए राजा ( युधिष्ठिर )ने अपनेको हम ( भाई ) लोगोंको किंबहुना पत्नी ( द्रौपदी )को भी दाँवमें लगा दिया, भवितव्यता ( होनहार ) ऐसी ही होती है ॥ ४७ ॥

ननु तथापि तत्रैव तेष्वासङ्गो न तेषां त्वयि तत्राह—

तेनानुजसहायेन द्रौपद्या च मया विना।
भृशमायामियामासु यामिनीष्वभितप्यते ॥ ४८ ॥

**मल्लि०**—तेनेति । अनुजाः सहजाताः सहाया यस्य तेन । अनुजयुक्तेनेत्यर्थः, तुल्ययोगः सहायार्थः । तेन युधिष्ठिरेण द्रौपद्या च मया विना । मद्विरहादित्यर्थः। आयामिनो दीर्घा यामाः प्रहरा यासां तास्तासु । दुःखितस्य तथाभावादिति भावः यामिनीष्वभितप्यते । भावे लट् । तेषु मद्वत्तेषां मय्यप्यासङ्गान्न वैराग्यावकाश इत्यर्थः ॥ ४८ ॥

**हिन्दी**—अपने भाइयोंके साथ वे ( राजा युधिष्ठिर ) और द्रौपदी भी सब लोग मेरे बिना लम्बे प्रहरोंसे युक्त रातोंमें अत्यन्त सन्ताप कर रहे हैं ॥ ४८ ॥

अथ वैरिनिर्यातनस्यावश्यंभावद्योतनाय चतुर्भिः परापकृतिं दर्शयन् परनिकारान् वर्णयति—

हृतोत्तरीयां प्रसभं सभायामागतह्रियः।
मर्मच्छिदा नो वचसा निरतक्षन्नरातयः ॥ ४९ ॥

**मल्लि०**—हृतेत्यादि । अरातयः शत्रवः सभायां प्रसभं बलात्कारेण हृतोत्तरीयाम्, अत एव, आगतह्रियः संप्राप्तलज्जान् नोऽस्मान् । मर्मच्छिदा मर्मच्छेदिना वचसा निरतक्षन् अशातयन् । वस्त्रापहारवाक्पारुष्याभ्यां तथा व्यथयामासुरित्यर्थः । 'तक्षण'शब्दसामर्थ्याद्वचसो वाऽस्योपम्यं गम्यत इति वस्तुनालङ्कारध्वनिः।

**हिन्दी**—शत्रुओंने सभामें बलात्कार ( जबर्दस्ती )से हटाये गये उत्तरीय वस्त्रवाली द्रौपदीको और लज्जासे युक्त हमलोगोंको भी मर्मच्छेदन करनेवाले वचनसे छील दिया है ॥ ४९ ॥

अथातिदुःसहनिकारान्तरमाह—

उपाधत्त सपत्नेषु कृष्णाया गुरुसन्निधौ।
भावमानयने सत्याः सत्यङ्कारमिवान्तकः ॥ ५० ॥

**मल्लि०**—उपाधत्तेति। अन्तको मृत्युः गुरुसंनिधौ भीष्मद्रोणादिसमक्षमेव सत्याः पतिव्रतायाः कृष्णाया द्रौपद्या आनयने केशाम्बरादिकर्षणे भावं चित्ताभिप्रायमितः परमनेन पाण्डवाभिभवेनैतान् स्वनगरं नेष्यामीत्येवंभूतं सत्यङ्कारमिव। क्रियतेऽनेनेति कारः। करणे घञ्। सत्यस्य कारः सत्यङ्कारः सत्यापनम्। चिकीर्षितस्य कार्यस्यावश्यं क्रियास्थापनार्थं परहस्ते यद्दीयते स सत्यङ्कारः। क्रियादौ सत्यबोधार्थाय प्राग्दीयमानो मूल्यैकदेशश्च। 'क्लीबे सत्यापनं सत्यङ्कारः सत्याकृतिः स्त्रियाम्'। इत्यमरः। 'कारे सत्यागदस्य' इति मुमागमः। तमिव, सपत्नेषूपाधत्त निहितवान्। तेषां विनाशकाले विपरीतबुद्धिमुत्पादितवानित्यर्थः ॥ ५० ॥

**हिन्दी**—यमराजने भीष्म और द्रोणाचार्य आदि गुरुजनोंके समीपमें ही पतिव्रता द्रौपदीको लानेपर चित्तके अभिप्रायको (कौरवोंको मैं अपने नगरमें पहुँचाऊँगा) ऐसा बयानेके समान धारण कर लिया ॥ ५० ॥

केनेयमाकृष्टा, सभ्यैर्वा किं कृतं तत्राह—

तामैक्षन्त क्षणं सभ्या दुःशासनपुरःसराम्।
अभिसायार्कमावृत्तां छायामिव महातरोः ॥ ५१ ॥

**मल्लि०**—तामिति। दुःशासनः पुरःसरो यस्यास्तां तथोक्ताम्। दुःशासनेन सभां प्रत्याकृष्यमाणामित्यर्थः। 'अनुपसर्जनात्' इति न ङीप्। तां कृष्णाम्। सभायां साधवः सभ्याः। 'सभाया यः' इति यप्रत्ययः। अभिसायार्कं दिनान्तसूर्याभिमुखम्। स्थितस्येति शेषः। 'सायो नाशदिनान्तयोः' इति विश्वः। 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः। महातरोः संबन्धिनीम्, आवृत्तां छायामिव तां कृष्णां क्षणमैक्षन्त। न चिरं जुगुप्सितत्वात्। नापि किंचिद्व्याप्रियन्त माध्यस्थ्यभङ्गभयात्। ते त्वर्कवदेव साक्षित्वमात्रमास्थिता इत्यर्थः। अत्राकृष्यमाणायाः कृष्णायाः आक्रष्टारं प्रति पराङ्मुखत्वादावृत्तच्छायोपम्यम्। तथापि तां न मुञ्चतीति दुःशासनस्य तरुसाम्यम् ॥ ५१ ॥

**हिन्दी**—दुःशासनसे खींची गई द्रौपदीको सभासत् लोगोंने सूर्यके सम्मुख रहे हुए विशाल वृक्षकी विद्यमान छायाकी तरह कुछ समय तक देख लिया ॥ ५१ ॥

अथास्यास्तादात्मिकमायथार्थ्यं वर्णयति—

अयथार्थक्रियारम्भैः पतिभिः किं तवेक्षितैः ।
अरुध्येतामितीवास्या नयने वाष्पवारिणा ॥ ५२ ॥

मल्लि०—अयथार्थेति । अयथार्था मिथ्याभूताः क्रियारम्भाः पतिशब्दप्रवृत्तिनिमित्तभूतकर्मोद्योगाः येषां तैः । तामरक्षद्भिरित्यर्थः । तव संबन्धिभिः । पान्ति रक्षन्तीति पतयो भर्त्तारः । 'पातेर्डतिः' इत्यौणादिको डतिप्रत्ययः । तैः, ईक्षितैरवेक्षितैः किम् । न किंचित्फलमस्तीत्यर्थः । इतीव इत्थं विचार्यैवेत्युत्प्रेक्षा । वाष्पवारिणाऽस्याः कृष्णाया नयवे अरुध्येतामावृते । रुधेः कर्मणि लङ् । अशरणा रुरोदेत्यर्थः ॥ ५२ ॥

हिन्दी—'मिथ्याभूत कर्मका उद्योग करनेवाले तुम्हारे पतियोंको देखनेसे क्या होगा ?' मानों ऐसा विचार कर आँसूने द्रौपदीके नेत्र आच्छादित कर दिया ॥ ५२ ॥

ननु भवद्भिः किमर्थमसमर्थैरिवोपेक्षितं तत्राह—

सोढवान्नो दशामन्त्यां ज्यायानेव गुणप्रियः ।
सुलभो हि द्विषां भङ्गो दुर्लभा सत्स्ववाच्यता ॥५३॥

मल्लि०—सोढवानिति । गुणाः प्रिया यस्य स गुणप्रियः । 'वा प्रियस्य' इति परनिपातः । ज्यायान् अग्रजो युधिष्ठिर एव । 'वृद्ध'शब्दादीयसुनि 'ज्यायादीयसः' इत्याकारादेशः । नोऽस्माकम् । अन्ते भवाम्, अन्त्यां निकृष्टां दशामवस्थां सोढवान्, न तु वयम् । किन्तु तदवरुद्धा इति भावः । ननु शत्रूपेक्षा महाऽनर्थकारिणीत्याशङ्क्याह—सुलभ इति । द्विषां विद्विषां भङ्गः सुलभः । कालान्तरेऽपीति शेषः । सत्सु सज्जनेषु । अवाच्यतानिन्द्यता दुर्लभा, न तु शत्रूपेक्षा । हि प्रसिद्धौ । शत्रूपेक्षातो लोकापवाद एव बलवान् । तस्योत्पन्नस्य पुनरप्रतिविधेयत्वात्, स च समयोल्लङ्घने स्यादेवेति भावः ॥ ५३ ॥

हिन्दी—गुणोंमें प्रीति करनेवाले बड़े भाई ( युधिष्ठिर )ने ही हमलोगोंकी निकृष्ट अवस्थाको सहन कर लिया, क्योंकि शत्रुओंको जीतना सुलभ है परन्तु सज्जनोंमें निन्दाका विषय न बनना दुर्लभ है ॥ ५३ ॥

ननु शत्रुवधे राज्ञां को नामापवादः प्रत्युत कीर्तिरेवेत्याशङ्क्य, सत्यं स एव समयोल्लङ्घनकलङ्कितकीर्त्यां महानिन्दानिदानमित्याशयेनाह—

स्थित्यतिक्रान्तिभीरूणि स्वच्छान्याकुलितान्यपि ।
तोयानि तोयराशीनां मनांसि च मनस्विनाम् ॥ ५४ ॥

मल्लि०—स्थितीति । तोयराशीनां समुद्राणां तोयानि मनस्विनां मनांसि च स्थित्यतिक्रान्तेर्मर्यादोल्लङ्घनाद्धेतोः भीरूणि, अत एव आकुलितानि संक्षोभितान्यपि स्वच्छानि अकलुषाणि । न त्वरन्त इत्यर्थः । मनस्व्ययं युधिष्ठिर इति भावः । अत्र तोयानां सामान्यतो मनस्विनां चापकृतानामेव गुणतौल्यादौपम्यस्य गम्यतया तुल्ययोगितालङ्कारः । गुणश्चात्र भीरुत्वं स्वच्छता च ॥ ५४ ॥

हिन्दी – समुद्रके जल और मनस्वी पुरुषोंके मन भी मर्यादाके उल्लङ्घनसे डरनेवाले होते हैं अत एव क्षुब्ध किये जानेपर भी कलुषित नहीं होते हैं ॥ ५४ ॥

नन्वजातशत्रोः स्वजनवैरे किं कारणमित्याशङ्क्य धार्तराष्ट्रसौहार्दमेवेत्याह—

धार्तराष्ट्रैः सह प्रीतिर्वैरमस्मास्वसूयत ।
असन्मैत्री हि दोषाय कूलच्छायेव सेविता ॥ ५५ ॥

मल्लि०—धार्तराष्ट्रैरिति । धार्तराष्ट्रैर्धृतराष्ट्रपुत्रैः सह प्रीतिः सौहार्दमेव, अस्मासु विषये वैरमसूयत सूतवती । सूयतेर्दैवादिकात्कर्तरि लङ् । ननु सौहार्दं वैरजनकं चेद्विप्रतिषिद्धं तत्राह—असदिति । हि यस्मात्, असन्मैत्री दुर्जनेन सङ्गतिः कूलस्यासन्नपातस्य नदीतटस्य छायेव सेविता श्रिता सती दोषायानर्थाय भवति । न खलु दुर्जनः सुजनवन्मित्रद्रोहपातकं पश्यतीति भावः । उपमाप्राणितोऽयमर्थान्तरन्यासालङ्कारः ॥ ५५ ॥

हिन्दी – धृतराष्ट्रके पुत्रोंके साथ प्रीतिने ही हमलोगोंके विषयमें शत्रुता उत्पन्न की, क्योंकि दुर्जनके साथ नदीतटकी छायाकी तरह सेवा अनर्थके लिए होती है ॥ ५५ ॥

नन्वादावेव तेषां वृत्तमविज्ञाय कथं मैत्री कृतेत्याशङ्क्य—किं कुर्मः, दुर्जनवृत्तं दुर्विज्ञेयमित्याह—

अपवादादभीतस्य समस्य गुणदोषयोः ।
असद्वृत्तेरहो वृत्तं दुर्विभावं विधेरिव ॥ ५६ ॥

मल्लि०—अपवादादिति । अपवादात् अनाक्रोशात् । अभीतस्य । अजुगुप्समानस्येत्यर्थः । गुणदोषयोः समस्य तुल्यबुद्धेः । निग्रहानुग्रहौ गुणदोषयोरननुरुन्धत इत्यर्थः । विधावप्येतद्विशेषणं योज्यम् । अहो ! असद्वृत्तेर्दुराचारस्य

घृतंस्य । वृत्तमीहितं विधेर्दैवस्य वृत्तमिव दुर्विभावं विभावयितुमशक्यम् । किन्तु कार्यैकसमधिगम्यमित्यर्थः । भवतेर्ण्यन्तात्कृच्छ्रार्थे खल्प्रत्ययः ॥ ५६ ॥

हिन्दी—लोकाऽपवादसे न डरनेवाले और गुण तथा दोषमें समान बुद्धि रखनेवाले दुराचारीकी चेष्टा भाग्यके विधानके समान नहीं जानी जाती है ॥५६॥

नन्वेवं मानी कथं परिभूतो जीवसि तत्राह—

ध्वंसेत हृदयं सद्यः परिभूतस्य मे परैः ।
यद्यमर्षः प्रतीकारं भुजालम्बं न लम्भयेत् ॥ ५७ ॥

मल्लि०—ध्वंसेतेति । परैः शत्रुभिः परिभूतस्य मे हृदयं सद्यो ध्वंसेत । भ्रश्येदित्यर्थः । अमर्षः कर्त्ता प्रतिक्रियारूपं भुजालम्बं हस्तावलम्बनं न लम्भयेत् ग्राहयेद्यदि । हृदयेनेति शेषः । सत्यं जीवामि प्रतिविधित्सया । न तु निर्लज्जतयेति भावः ॥ ५७ ॥

हिन्दी—शत्रुओंसे तिरस्कृत मेरा हृदय, क्रोध प्रतीकार-स्वरूप बाहुका अवलम्बन ग्रहण न कराता तो उसी क्षण ध्वस्त हो जाता ॥ ५७ ॥

ननु तवैव कोऽयमभिमानस्तत्राह—

अवधूयारिभिर्नीता हरिणैस्तुल्यवृत्तिताम् ।
अन्योन्यस्यापि जिह्रीमः किं पुनः सहवासिनाम् ॥५८॥

मल्लि०—अवधूयेति । अरिभिरवधूय परिभूय हरिणैर्मृगैस्तुल्यवृत्तितां तुल्यजीवनत्वम् । वन्याहारतामित्यर्थः । नीताः प्रापिता वयम् । पञ्चापीति शेषः । अन्योन्यस्यापि जिह्रीमो लज्जामहे । सहवासिनां सहचारिणां किं पुनः । प्रति जिह्रीम इति किमु वक्तव्यमित्यर्थः । क्रियायोगे संबन्धसामान्ये षष्ठी । वयं पञ्चापि तुल्याभिमाना एव । इदं तु मदेकसाध्यं करोति मुनिशासनाम्मयानुष्ठीयत इति भावः ॥ ५८ ॥

हिन्दी—शत्रुओंसे तिरस्कृत होकर हमलोग मृगोंके समान जीवनवाले बनाये गये हैं, एक दूसरेसे भी लज्जित होते हैं सहचारियोंसे मिलनेपर फिर क्या कहना है ? ॥ ५८ ॥

ननु तर्हि दुःखैकनिदानमन्तःशत्रु मान एव त्यज्यतामित्याशङ्क्य तस्यादोषमाह—

शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः ।
जन्मिनो मानहीनस्य तृणस्य च समा गतिः ॥ ५९ ॥

मल्लि०-शक्तीति । शक्तिवैकल्येनोत्साहादिशक्तिवैधुर्येणाऽवष्टम्भसामर्थ्य-विरहेण च नम्रस्य प्रह्वीभूतस्य विधेयभूतस्य च निःसारत्वात् दुर्बलत्वात् स्थिरांश-रहितत्वाच्च। 'सारो बले स्थिरांशे च' इत्यमरः । लघीयसो गौरवहीनस्य । नीरस-स्येत्यर्थः । मानहीनस्य जन्मिनो जन्तोः । व्रीह्यादित्वादिनिः । तृणस्य च गतिर-वस्था समा इति । मानहीनस्य तृणादपि निकृष्टत्वान्न त्याज्यो मान इति भावः । श्लेषालंकारोऽयं तदनुप्राणितेयमुपमेत्यनेकार्थदीपिकेति व्यज्यते ॥ ५९ ॥

हिन्दी -- उत्साह आदि शक्तिकी विकलतासे नम्र और सारहीन होनेसे गौरव-से रहित, अभिमानहीन पुरुषकी और तृणकी अवस्था समान होती है ॥ ५९ ॥

मानत्यागे दोषमुक्त्वा तत्सद्भावे षड्भिर्गुणमाह—

अलङ्घ्यं तत्तदुद्वीक्ष्य यद्यदुच्चैर्महीभृताम् ।
प्रियतां ज्यायसी मागान्महतां केन तुङ्गता ? ॥ ६० ॥

मल्लि०—अलङ्घ्यमिति । महीभृतां पर्वतानां संबन्धि यद्यत् शृङ्गादिकम् । उच्चैरुन्नतं तत्तदलङ्घ्यमुद्वीक्ष्योत्प्रेक्ष्य । तर्कयित्वेति यावत् । महतां महात्मनां तुङ्गता मानोन्नत्यं ज्यायसीं प्रियतां प्रियत्वं केन हेतुना मागात् । न केनापि प्रियत्वं गच्छत्येवेत्यर्थः । आशिषि माङि लुङ् । अटोऽपवादः । दैवमनिच्छामुत्पाद-यत्यौषधवदस्मिन्नर्थे इत्याशंसनार्थमाशीःप्रयोगः । उद्वीक्ष्येत्यसमानकर्तृकत्वनिर्देशः क्वचित्प्रयोगदर्शनात्सोढव्यः । केचित् 'उद्वीक्ष्यम्' इति पठन्ति । तत्र यद्यदुच्चै स्तत्तलङ्घ्यमुद्वीक्ष्यमवलोकनीयं न चोल्लङ्घनीयमिति । अतो महतामित्यादि योजयन्ति ॥ ६० ॥

हिन्दी—पर्वतोंके जो-जो शृङ्ग ( चोटी ) आदि उन्नत हैं उसको अलंघनीय तर्कना करके महात्माओंकी अभिमानसे उन्नतता श्रेष्ठ प्रियताको कि क्यों प्राप्त नहीं करेगा ? ॥ ६० ॥

तावदाश्रीयते लक्ष्म्या तावदस्य स्थिरं यशः ।
पुरुषस्तावदेवासौ यावन्मानान्न हीयते ॥ ६१ ॥

मल्लि०—तावदिति । किंच, तावदेवासौ लक्ष्म्याऽऽश्रीयते । तावदस्य पुंसो यशः स्थिरम् । तावदेव असौ पुरुषः । पुरुषत्वेन गण्यत इत्यर्थः । यावत् मानाद-

भिमानात् । न हीयते न भ्रश्यति । मानहीनस्य न किंचिच्छुभमस्तीत्यर्थः ॥ ६१ ॥

हिन्दी—पुरुष तब तक लक्ष्मीसे आश्रय किया जाता है और उसका तब तक स्थिर होता है जब तक वह अभिमानसे रहित नहीं होता है ॥ ६१ ॥

स पुमानर्थवज्जन्मा यस्य नाम्नि पुरःस्थिते ।
नान्यामङ्गुलिमभ्येति संख्यायामुद्यताङ्गुलिः ॥ ६२ ॥

मल्लि०—स इति । स पुमान्, अर्थवज्जन्मा सार्थकजन्मा यस्य पुंसो नाम्नि पुरोऽग्रे स्थिते सति संख्यायां पुरुषगणनाप्रस्ताव उद्यता गुणमधिकृत्योत्क्षिप्ताङ्गुलिरन्यां द्वितीयाम् । अङ्गुलिम् । उद्यतामिति शेषः । नाभ्येति न प्राप्नोति अद्वितीयत्वादस्येत्यर्थः । एतन्मानरहितस्य न संभवतीति भावः ॥ ६२ ॥

हिन्दी—उस पुरुषका जन्म सार्थक है जिसका नाम आगे रहनेपर पुरुष गणनाके अवसरमें उद्यत अंगुलि दूसरी अंगुलिको प्राप्त नहीं करती है ॥ ६२ ॥

दुरासदवदज्यायान् गम्यस्तुङ्गोऽपि भूधरः ।
न जहाति महौजस्कं मानप्रांशुमलङ्घ्यता ॥ ६३ ॥

मल्लि०—दुरासदेति । दुरासदैर्वनैर्ज्यायान् प्रवृद्धस्तथापि तुङ्गोऽपि भूधरो गम्यो गन्तुं शक्य एव । प्रसिद्धं चैतदिति भावः । महौजस्कं प्रतापसंपन्नं मानप्रांशुं मानोन्नतम् । पुरुषमिति शेषः । अलङ्घ्यता न जहाति । कदाचिन्मानी न लङ्घयितुं न शक्यत इत्यर्थः । गिरेरपि गरीयान् मानाधिक इति भावः । अत्रोपमानाद् भूधरादुपमेयस्य मानिनो धर्मान्तरसाम्येऽप्यलङ्घ्यत्वेनाधिक्यकथनाद्व्यतिरेकालंकारः ॥ ६३ ॥

हिन्दी—दुष्प्राप्य, वनोंसे बढ़ा हुआ और ऊँचा होनेपर भी पर्वत जा सकता है, परन्तु प्रतापसे सम्पन्न और मानसे उन्नत पुरुष अलंघनीयता को नहीं छोड़ता है अर्थात् कोई उसका लंघन नहीं कर सकता है ॥ ६३ ॥

गुरून्कुर्वन्ति ते वंश्यानन्वर्था तैर्वसुन्धरा ।
येषां यशांसि शुभ्राणि ह्रेपयन्तीन्दुमण्डलम् ॥ ६४ ॥

मल्लि०—गुरूनिति । ते नराः । वंश्यान् अन्वये भवान् । गुरून् गुरून् प्रथयन्ति । स्वनाम्ना व्यपदेशयन्ति रघुदिलीपादिवदित्यर्थः । तैर्नरैः । वसूनि धरतीति वसुन्धरा । 'संज्ञायां भृतृवृजी-'त्यादिना खच्प्रत्यये 'खचि ह्रस्वः

ह्रस्वान्नुमागमश्च। अन्वर्थाऽनुगतार्था। तेषां वसुभूतानां धारणादितिभावः। येषां शुभ्राणि यशांसि इन्दुमण्डलं ह्रेपयन्ति लज्जयन्ति। यशसो निष्कलङ्कत्वादिति भावः। ईदृशं हि यशो मानमहत एव संभवतीति तात्पर्यार्थः। ह्रीधातोर्ण्यन्ताल्लट् 'अर्तिह्री–'त्यादिना पुगागमः। अत्र ह्रेपणस्य सादृश्यपर्यवसानादुपमालंकारः॥

हिन्दी—जिन पुरुषोंके सफेद यश चन्द्रमण्डलको लज्जित करते हैं, वे पुरुष ही वसुन्धरा ( पृथिवी )को अन्वर्थ ( नामके अनुसार अर्थवाली ) करते हैं तथा अपने वंशमें उत्पन्न जनोंको प्रख्यात कर देते हैं॥ ६४॥

उदाहरणमाशीःषु प्रथमे ते मनस्विनाम्।
शुष्केऽशनिरिवामर्षो यैररातिषु पात्यते॥ ६५॥

मल्लि०—उदाहरणमिति। यैरमर्षः क्रोधः शुष्के नीरसे। अशनिरिव अरातिषु विषये पात्यते प्रक्षिप्यते। मनस्विनां मानिनां प्रथमेऽग्रेसरास्ते आशीःषु पुरुषैरेवं भवितव्यमेवंरूपासु। उदाहरणं निदर्शनम्। भवन्तीति शेषः। रामादिवदुपमानं भवन्तीत्यर्थः। अतो न त्याज्यो मान इति संदर्भार्थः॥ ६५॥

हिन्दी—जिन पुरुषोंसे क्रोध सूखे पत्तोंपर वज्रके समान शत्रुओंपर प्रहार किया जाता है, अभिमानी पुरुषोंमें अग्रसर वे ही 'पुरुषोंको ऐसा होना चाहिए' ऐसे अभिलाषोंमें उदाहरणस्वरूप होते हैं॥ ६५॥

न सुखं प्रार्थये नार्थमुदन्वद्वीचिचञ्चलम्।
नानित्यताशनेस्त्रस्यन् विविक्तं ब्रह्मणः पदम्॥ ६६॥

मल्लि०—नेत्यादि। उदन्वद्वीचिरिव चञ्चलं समुद्रतरङ्गवदस्थिरं सुखं कामं न प्रार्थये नेच्छामि। तथा, चञ्चलमर्थं च न प्रार्थये। किंच अनित्यता विनाशिता सैव अशनिस्तस्मात् त्रस्यन् बिभ्यत्। 'वा भ्राशे–'त्यादिना श्यन्प्रत्ययः। विविक्तं निर्बाधं ब्रह्मणो वेधस आत्मनः पद्यत इति पदं स्थानमैक्यलक्षणं मुक्तिं च न प्रार्थये। एतेन यदुक्तम् 'उच्छेदं जन्मनः कर्तुम्' ( श्लो० ३१ ) इत्यादि तत् समाहितम्॥ ६६॥

हिन्दी—मैं समुद्रकी तरङ्गके समान चञ्चल सुख और अर्थको ओर न ... अनित्यतारूप वज्रसे डरता हुआ बाधारहित ब्रह्मपदको ही चाहता हूँ॥ ६६॥

प्रमार्ष्टुमयशःपङ्कमिच्छेयं छद्मना कृतम्।
वैधव्यतापितारातिवनितालोचनाम्बुभिः॥ ६७॥

मल्लि०—प्रमाष्टुंमिति । किंतु, छद्मना कपटेन कृतम् । शत्रुभिरिति शेषः। अयश एव पङ्कमिति रूपकालंकारः । वैधव्येन तापितानां दुःखीकृतानामरातिवनितानां लोचनाम्बुभिः प्रमाष्टुं क्षालयितुम् । इच्छेयमभिलषेयम् । इषिधातोर्लिङि रूपम् । वैरिनिर्यातनातिरिक्तं न किंचिदिच्छामीत्यर्थः ॥ ६७ ॥

हिन्दी—मैं शत्रुओंसे कपटपूर्वक किये गये अपनी अकीर्तिरूप पङ्क (कीचड़) को वैधव्यसे सन्तापित शत्रुपत्नियोंके आँसुओंसे धोना चाहता हूँ ॥ ६७ ॥

एवं तर्हि 'यः करोति वधोदर्काः' (श्लो० १९) इत्याद्युक्तदोषः स्यादित्याशङ्कामङ्गीकृत्य ग्लानिनं दोषायेति न्यायमाश्रित्य युग्मेनोत्तरमाह—

अपहस्येऽथवा सद्भिः, प्रमादो वास्तु मे धियः।
अस्थानविहितायासः कामं जिह्रेतु वा भवान् ॥ ६८ ॥

मल्लि०—अपहस्य इत्यादि । अथवा, सद्भिः पण्डितैः अपहस्ये । अपहसिष्य इत्यर्थः । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति हसतेरण्यन्तात्कर्मणि लट् । ण्यन्तत्वे भ्रान्तः पाठः । मे धियः प्रमादोऽनवधानत्वं वाऽस्तु । भवान् अस्थानेऽयोग्यविषये विहित आयासो हितोपदेशो येन स तथोक्तः । विफलप्रयत्नः सन्नित्यर्थः । कामं वा जिह्रेतु लज्जताम् ॥ ६८ ॥

हिन्दी—इस उद्देश्यसे की गई मेरी तपस्यामें मैं विद्वानोंका उपहासपात्र हो जाऊँ वा मेरी बुद्धिकी असावधानता हो अथवा अयोग्य विषयमें प्रयास करनेवाले होते हुए आप लज्जित हों ॥ ६८ ॥

वंशलक्ष्मीमनुद्धृत्य समुच्छेदेन विद्विषाम् ।
निर्वाणमपि मन्येऽहमन्तरायं जयश्रियः ॥ ६९ ॥

मल्लि०—वंशेति । अहं तु विद्विषां शत्रूणां समुच्छेदेन विनाशेन करणेन वंशलक्ष्मीमनुद्धृत्यापुनरावर्त्यं निर्वाणं मोक्षमपि जयश्रियोऽन्तरायं विघ्नं मन्ये । न तु पुरुषार्थमित्यर्थः । किमुतान्योत्सवादिकमिति भावः ॥ ६९ ॥

हिन्दी—मैं तो शत्रुओंका संहार कर अपनी वंशलक्ष्मीका उद्धार किये बिना मोक्षको भी विजयलक्ष्मीमें विघ्नरूप समझता हूँ ॥ ६९ ॥

अजन्मा पुरुषस्तावद् गतासुस्तृणमेव वा ।
यावन्नेषुभिरादत्ते विलुप्तमरिभिर्यशः ॥ ७० ॥

मल्लि०—अजन्मेति । पुरुषो यावत् अरिभिर्विलुप्तं संहृतं यश इषुभिर्बाणैः

अरिवधेन न प्रत्याहरतीत्यर्थः। तावत् अजन्मा। अजातप्राय इत्यर्थः। नन्वजातो जननान्तरमुपयुज्यत एवेत्यरुच्या पक्षान्तरमाह—गतासुर्मृतः। मृततुल्य इत्यर्थः। मृतोऽपि प्रागुपयुक्तवानित्यरुच्याह–तृणमेवेति। तृणतुल्य इत्यर्थः। अचिकित्करस्तु त्रैकाल्यानुपयोगाज्जीवन्मृत इत्यर्थः। अतो नाहमाग्रहाद् ब्रवीमि, किंतु वीरधर्ममनुपालयामीति भावः॥ ७०॥

हिन्दी—पुरुष जब तक शत्रुओंसे विलुप्त यशको बाणोंसे नहीं लौटाता है तब तक वह जन्महीन सा है। वा मरा हुआ-सा है वा तृणके ही समान है॥ ७०॥

सर्वथा वैरनिर्यातनं कर्तव्यमित्युक्तम्, तदकरणे पुरुषगुणानां हानिदोषमाह—

अनिर्जयेन द्विषतां यस्यामर्षः प्रशाम्यति।
पुरुषोक्तिः कथं तस्मिन् ब्रूहि त्वं हि तपोधन!॥ ७१॥

मल्लि०—अनिर्जयेणेति। यस्यामर्षः क्रोधो द्विषतां शत्रूणाम्। अनिर्जयेन विजयं विनैव प्रशाम्यति। उपलक्षणे तृतीया। तस्मिन् पुरुष इत्युक्तिः 'पुरुष' शब्दः कथम्? न कथंचिदित्यर्थः। प्रवर्तत इति शेषः। प्रवृत्तिनिमित्तस्य पुरुषकारस्याभावादिति भावः। हे तपोधन! त्वं हि त्वमेव ब्रूहि कथय। न च ते किंचिदविदितमस्तीति भावः। 'हि हेतावधारणे' इत्यमरः॥ ७१॥

हिन्दी—हे तपस्विन्! जिस पुरुषका क्रोध शत्रुओंको जीते बिना शान्त होता है उसमें 'पुरुष' शब्दसे व्यवहार कैसे उचित होगा? आप ही कहिए॥ ७१॥

ननु पुरुषत्वजात्यैव पुरुषोक्तिप्रवृत्तेः किंपुरुषकारेण, तत्राह—कृतमित्यादिद्वयेन—

कृतं पुरुषशब्देन जातिमात्रावलम्बिना।
योऽङ्गीकृतगुणैः श्लाघ्यः सविस्मयमुदाहृतः॥ ७२॥

मल्लि०—कृतमिति। जातिमात्रावलम्बिना जातिमात्राभिधायिना पुरुषशब्देन कृतमलम्। न तेन किंचित्साध्यत इत्यर्थः। अत्र गम्यमानसाधनक्रियापेक्षया करणत्वात्तृतीयेत्युक्तं प्राक्। 'कृतम्' इति निषेधार्थकमव्ययं चादिषु पठ्यते। सत्यं जातिमात्रेऽपि 'पुरुष' शब्दः प्रवर्तते। परन्तु नासौ पुंसामाशास्यः परत्रादिसाधारण्यादिति तात्पर्यार्थः। तर्हि कीदृक्श्लाघ्य इत्याशङ्क्याह—य इत्यादिनार्धद्वयेन। अङ्गीकृतगुणैर्गुणपक्षपातिभिः। यः पुमान् श्लाघ्यः स्तुत्यः सन् सविस्मयं ससंभ्रमम्। उदाहृतः कथितः। पुंसा ईदृशेन भवितव्यमिति निर्दशितः॥ ७२॥

हिन्दी—जातिमात्रका अवलम्बन करनेवाले 'पुरुष' शब्दको कुछ आवश्यकता

नहीं है, जो गुणोंका अङ्गीकार करनेवाले पुरुषोंसे आश्चर्यपूर्वक उदाहरणका होता है वही पुरुष प्रशंसनीय है ॥ ७२ ॥

ग्रसमानमिवौजांसि सदसा गौरवेरितम् ।
नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान्पुमान् ॥ ७३ ॥

मल्लि०—ग्रसमानमिति । किंच, सदसा सभया गौरवेणेरितं कथाप्रसङ्गे गौरवपूर्वकमुच्चारितं सत् । ओजांसि शृण्वतां तेजांसि ग्रसमानं गिलदिव स्थितं यस्य पुंसो नाम द्विषोऽप्यभिनन्दन्त्यनुमोदन्ते । किमुत सुहृद इति भावः । स पुमान् पुमान् । पुरुषत्वेन गण्यत इत्यर्थः । प्रथमः 'पुं' शब्दो जातिवचनः, द्वितीयो गुणवचनः । स एव श्लाघ्यः । अत्र पुमान्पुमानिति तात्पर्यमात्रभेदभिन्नशब्दार्थपौनरुक्त्यलक्षणो लाटानुप्रासोऽलंकारः । तथा च सूत्रम्–'तात्पर्यभेदयुक्तो लाटानुप्रासः' इति ॥ ७३ ॥

हिन्दी—सभासे गौरवसे उच्चारित होते हुए और सुननेवालोंके तेजको ग्रास करते हुए जिस पुरुषके नामका शत्रुलोग भी अनुमोदन करते हैं, वही पुरुष पुरुष शब्दसे परिगणित होता है ॥ ७३ ॥

ननु सत्सु भीमादिषु तवैवायं कोऽभिनिवेश इत्यत्राह—

यथाप्रतिज्ञं द्विषतां युधि प्रतिचिकीर्षया ।
ममैवाध्येति नृपतिस्तृष्यन्निव जलाञ्जलेः ॥ ७४ ॥

मल्लि०—यथेति । नृपतिर्युधिष्ठिरः यथाप्रतिज्ञं युधि द्विषतां प्रतिचिकीर्षया द्विषतः प्रतिकर्तुमिच्छया । प्रतिज्ञानुसारेणैव जिघांसयेत्यर्थः । तृष्यन् पिपासुः जलाञ्जलेरिव ममैवाध्येति इच्छति । कार्यसिद्धेर्मदायत्तत्वान्मामेव स्मरति, अतोऽयं ममाभिनिवेश इत्यर्थः 'अधीगर्थ–'त्यादिना कर्मणि षष्ठी ॥ ७४ ॥

हिन्दी—राजा ( युधिष्ठिर ) प्रतिज्ञाके अनुसार युद्धमें शत्रुओंका प्रतिकार करनेकी इच्छासे जैसे प्यासा पुरुष जैसे जलाञ्जलिकी इच्छा करता है उसी तरह मेरा स्मरण करते हैं ॥ ७४ ॥

ननु युधिष्ठिरः स्वार्थं साधयति, त्वया च स्वार्थमात्रमनुसंधीयतामित्यत्राह—

स वंशस्यावदातस्य शशाङ्कस्येव लाञ्छनम् ।
कृच्छ्रेषु व्यर्थया यत्र भूयते भर्तुराज्ञया ॥ ७५ ॥

मल्लि०—स इति । स नरोऽवदातस्य स्वच्छस्य वंशस्य शशाङ्कस्येव लाञ्छनं कलङ्कः । यत्र यस्मिन्पुरुषे कृच्छ्रेषु व्यसनेषु भर्तुः स्वामिन आज्ञया व्यर्थया भूयते । भावे लट् । आपदि स्वार्थसाधकः कुलघातकः तत्कथं स्वार्थनिष्ठकार्यता युक्तेत्यर्थः ॥ ७५ ॥

हिन्दी—जो पुरुष विपत्तिमें स्वामीकी आज्ञाको व्यर्थ कर देता है वह पुरुष चन्द्रमाके समान स्वच्छ वंशका कलङ्क-स्वरूप है ॥ ७५ ॥

यदुक्तम्—'विजहीहि रणोत्साहम्' ( श्लो० ३१ ) इत्यादि, तत्रोत्तरमाह—

कथं वादीयतामर्वाङ् मुनिता धर्मरोधिनी ।
आश्रमानुक्रमः पूर्वैः स्मर्यते न व्यतिक्रमः ॥ ७६ ॥

मल्लि०—कथमिति । धर्मरोधिनी धर्मविरोधिनी । अर्वाक् गार्हस्थ्यात्प्रागेव मुनितां वानप्रस्थत्वं चतुर्थाश्रमता वा । वर्णप्रक्रमेण तस्य विधानात् 'त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः' इति सूत्रकारवचनाच्च क्षत्रियस्यापि कैश्चिदिष्टत्वात् । तदेतत्सम्यग्विवेचितमस्माभी रघुवंशसंजीविन्याम् ( स० ८।१४ )—'स किलाश्रमन्त्यमाश्रितः' इत्यत्र । कथं वा आदीयतां मया कथं वाऽङ्गीक्रियताम् । संप्रश्ने लोट् । तथा हि पूर्वैर्मन्वादिभिराश्रमानुक्रमः स्मर्यते । न तु व्यतिक्रमः । 'ब्रह्मचारी भूत्वा गृही भवेत्, गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत्' इति श्रुत्यनुसारादित्यर्थः । एतदपि 'चत्वार आश्रमाः' इत्येतत्पक्षमाश्रित्योक्तम् । 'यदि चेद्वैराग्यं तदा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा' इति व्युत्क्रमपक्षस्यापि श्रवणात् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ७६ ॥

हिन्दी—गृहस्थाश्रमसे पहले ही धर्मविरोधी वानप्रस्थधर्म वा संन्यासधर्मका कैसे ग्रहण किया जाय ? मनु आदि पूर्वजोंने ब्रह्मचर्य, गार्हस्थ्य, वानप्रस्थ और संन्यास ऐसे आश्रमके क्रमका स्मरण किया है ॥ ७६ ॥

ननु भवान्गृहस्थ एव तत्कथमर्वाङ्मुनित्वविरोध इत्याशङ्क्य, सत्यं गृहस्थोऽस्मि, तथापि कृतनिखिलगृहस्थकर्तव्यस्यैव वानप्रस्थाधिकारो न गृहस्थमात्रस्य । न चाहमद्यापि कृतकृत्य इत्युत्तरमाह—

आसक्ता धूरियं रूढा जननी दूरगा च मे ।
तिरस्करोति स्वातन्त्र्यं ज्यायांश्चाचारवान्नृपः ॥ ७७ ॥

मल्लि०—आसक्तेति । आसक्ता लग्ना । अवश्यं कर्तव्येत्यर्थः । रूढा प्रसिद्धा

महतीत्यर्थः । इयं पूर्वोक्ता धूः वैरिनिर्यातनभारः । दूरगा दूरवर्तिनी जननी मातापि । तथा, नृपोऽप्याचारवान् । तपोऽधिक इत्यर्थः । तथापि ज्यायान् ज्येष्ठो नृपो युधिष्ठिरश्च मे मम स्वातन्त्र्यं स्वाच्छन्द्यं तिरस्करोति दूरीकरोति । आश्रमान्तरं प्रतिबध्नातीत्यर्थः । तिरस्करोतीति प्रत्येकमभिसंबध्यते । अन्यथा बहुवचनप्रसङ्गात् ।। ७७ ।।

हिन्दी—वैरीसे बदला लेनेका महान् यह भार मेरे ही ऊपर लगा हुआ है। मेरी माता भी दूरवर्तिनी हैं और आचारवान् राजा ( बड़े भाई युधिष्ठिर ) भी मेरी स्वतन्त्रताको दूर कर रहे हैं ( अतः दूसरा आश्रम वानप्रस्थ वा संन्यास ) मैं नहीं ले सकता हूँ ।। ७७ ।।

उक्तमर्थमुसंहरति—

स्वधर्ममनुरुन्धन्ते नातिक्रममरातिभिः ।
पलायन्ते कृतध्वंसा नाहवान्मानशालिनः ।। ७८ ।।

मल्लि०—स्वधर्ममिति । मानशालिनः स्वधर्मं क्षात्रधर्ममनुरुन्धन्तेऽनुवर्तन्ते। अतिक्रमं स्वधर्मातिक्रमं नानुरुन्धन्ते । ततः किमत आह— अरातिभिरिति । अरातिभिः कृतध्वंसाः कृतापकाराः सन्त आहवान्न पलायन्ते । अयमेव स्वधर्मानुरोध इत्यर्थः । 'उपसर्गस्यायतौ' इति रेफस्य लत्वम् । अत्र मनुः—'न निवर्तेत संग्रामात् क्षात्रधर्ममनुस्मरन्' इति । अत्रोत्तरवाक्यार्थं प्रति पूर्ववाक्यार्थस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः ।। ७८ ।।

हिन्दी—मानी पुरुष क्षत्रियधर्मका अनुसरण करते हैं, स्वधर्मका लङ्घन नहीं करते हैं । शत्रुओंसे अपकार किये जाते हुए युद्धसे पलायन नहीं करते हैं ।। ७८ ।।

किं बहुना, ममायं निश्चयः श्रूयतामित्याह—

विच्छिन्नाभ्रविलायं वा विलीये नगमूर्धनि ।
आराध्य वा सहस्राक्षमयशःशल्यमुद्धरे ।। ७९ ।।

मल्लि०—विच्छिन्नेति । विच्छिन्नं वाताहतं यदभ्रं तदिव विलीयेति विच्छिन्नाभ्रविलायं यथा तथा 'उपमाने कर्मणि च' इति कर्तर्युपपदे णमुल् । नगमूर्धनि अस्मिन्गिरिशृङ्गे विलीये विशीर्ये वा । कषादिषु यथाविध्यनुप्रयोगः । यद्वा— सहस्राक्षमिन्द्रम्, आराध्यायश एव शल्यं तत् । उद्धर उद्धरिष्यामि । न तु मध्यमकल्पकल्पेत्यर्थः । 'वा' शब्दो विकल्पे ।। ७९ ।।

हिन्दी—वायुसे ताडित मेघके समान विलीन होकर इन्द्रकील पर्वतकी चोटीमें नष्ट हो जाऊँगा वा इन्द्रदेवकी आराधना कर अकीर्तिरूप कष्टकको निकाल दूँगा ॥ ७९ ॥

इत्युक्तवन्तं परिरभ्य दोर्भ्यां तनूजमाविष्कृतदिव्यमूर्तिः ।
अघोपघातं मघवा विभूत्यै भवोद्भवाराधनमादिदेश ॥ ८० ॥

मल्लि०—इतीति । मघवा इन्द्रः । इत्युक्तवन्तं तनूजं पुत्रमर्जुनम् । आविष्कृता प्रकटिता दिव्यमूर्तिर्निजरूपं येन स यथोक्तः सन् । दोर्भ्यां बाहुभ्यां परिरभ्य विभूत्यै श्रेयसे । उपहन्यतेऽनेनेत्युपघातम् । करणे घञ्प्रत्ययः । अघानां दुःखानामुपघात-मघोपघातम् । भवः संसारस्तस्योद्भवः कारणमिति भवोद्भवः शिवस्तस्य आराधन-मुपासनम् । आदिदेश । शिवमुद्दिश्य तपश्चरेत्याज्ञापयामासेत्यर्थः ॥ ८० ॥

हिन्दी—इन्द्रदेवने ऐसा कहनेवाले अपने पुत्र अर्जुनको अपनी दिव्यमूर्तिको प्रकट कर बाहुओंसे आलिङ्गन कर उन्हें कल्याणके लिए दुःखोंका नाश करनेवाले संसारके कारणस्वरूप शिवजीके आराधनका उपदेश दिया ॥ ८० ॥

प्रीते पिनाकिनि मया सह लोकपालैर्लोकत्रयेऽपि विहिताप्रतिवार्यवीर्यः ।
लक्ष्मीं समुत्सुकयितासि भृशं परेषामुच्चार्य वाचमिति तेन तिरोबभूवे ॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये एकादशः सर्गः ।

●

मल्लि०—प्रीत इति । पिनाकिनि शिवे प्रीते सति लोकपालैः सह मया लोक-त्रयेऽपि विहितं दत्तमप्रतिवार्यमनिवार्यं वीर्यं यस्य स तथोक्तः सन् । परेषां शत्रूणां लक्ष्मीं भृशं समुत्सुकयितासि समुत्सुकां त्वय्यनुरक्तां कर्तासि । पुनराहरिष्यसी-त्यर्थः ।वीरभोग्याः संपद इति भावः 'उत्सुक' शब्दात् 'तत्करोति' इति ण्यन्तात् कर्तरि लुट् इति वाचमुच्चार्य, तेन इन्द्रेण तिरोबभूवेऽन्तर्दधे । भावे लिट् ॥ ८१ ॥

इति किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायामेकादशः सर्गः समाप्तः ।

●

हिन्दी—'हे अर्जुन ! शिवजीके प्रसन्न होनेपर लोकपालोंके साथ मुझसे भी दिये गये अनिवार्य पराक्रमसे युक्त होकर तुम शत्रुओंकी लक्ष्मीको अत्यन्त उत्सुक कर डालोगे' ऐसा वाक्य कहकर इन्द्रदेव अन्तर्हित हो गये ॥ ८१ ॥

इति किरातार्जुनीये एकादशः सर्गः ।

## द्वादशः सर्गः

अथ वासवस्य वचनेन रुचिरवदनस्त्रिलोचनम्।
क्लान्तिरहितमभिराधयितुं विधिवत्तपांसि विदधे धनञ्जयः॥ १॥

मल्लि०—अथेति। अथ इन्द्रतिरोधानानन्तरं रुचिरवदन इन्द्रसाक्षात्कार-संतोषात् प्रसन्नमुखो धनंजयोऽर्जुनो वासवस्य वचनेन उपदेशेन त्रिलोचनं शिवं क्लान्तिरहितं यथा तथा, अभिराधयितुं प्रसादयितुं तपांसि विधिवत् विध्यर्हम्। यथाशास्त्रमित्यर्थः। 'तदर्हम्' इति वतिप्रत्ययः। विदधे चक्रे। अस्मिन्सर्गे उद्गता वृत्तम्—'सजसादिमे सलघुकौ च नसजगुरुकैरथोद्गता। त्र्यङ्घ्रिगतभनजलगयुताः सजसा जगौ चरणमेकतः पठेत्।' इति लक्षणात्॥ १॥

हिन्दी—इन्द्रदेवके अन्तर्हित होनेके अनन्तर प्रसन्न मुखवाले अर्जुन इन्द्रके उपदेशसे ग्लानिरहित होकर शिवजीको प्रसन्न करनेके लिए विधिपूर्वक तपस्या करने लगे॥ १॥

अभिरश्मिमालि विमलस्य धृतजयधृतेरनाशुषः।
तस्य भुवि बहुतिथास्तिथयः प्रतिजग्मुरेकचरणं निषीदतः॥ २॥

मल्लि०—अभिरश्मीति। अभिरश्मिमालि अभिसूर्यं सूर्याभिमुखं भुवि एकचरणं निषीदन् एकचरणेन तिष्ठतो विमलस्य बाह्यान्तरशुद्धिमतः। धृता जयधृतिर्जयेच्छा येन तस्य। अनाशुषोऽनश्नतः। 'उपेयिवाननाश्वाननूचानश्च' इति निपातः। तस्यार्जुनस्य बहूनां पूरणा बहुतिथाः। बहुसंख्याका इत्यर्थः। 'तस्य पूरणे डट्'। 'बहुपूगगणसङ्घस्य तिथुक्' इति तिथुगागमः। तिथयो दिनानि प्रतिजग्मुः। अत्र 'तिथि'शब्दः पुंल्लिङ्गः। 'तदाद्यास्तिथयो द्वयोः' इत्यभिधानात्। अन्यथा बहुतिथा इत्यत्र टित्वान्ङीप्स्यात्॥ २॥

हिन्दी—सूर्यके सम्मुख पृथ्वीपर एक पैरसे खड़े होकर निर्मल होकर विजयलाभकी इच्छा करते हुए निराहार उन अर्जुनके बहुत-से दिन व्यतीत हुए॥ २॥

वपुरिन्द्रियोपतपनेषु सततमसुखेषु पाण्डवः।
व्याप नगपतिरिव स्थिरतां, महतां हि धैर्यमविभाव्यवैभवम्॥ ३॥

मल्लि०—वपुरिति। पाण्डवोऽर्जुनः सततं वपुष इन्द्रियाणां च उपतपनेषु

संतापकरेषु। करणे ल्युट्। असुखेऽत्रनशनादिदुःखेष्वपि नगपतिर्गिरीन्द्र इव स्थिरतां दार्ढ्यं व्याप प्राप। तथा हि—महतां धैर्यमविभाव्यं दुर्बोधं वैभवं सामर्थ्यं यस्य तत्तथोक्तम्। धीराणामकिञ्चित्करं दुःखमिति भावः ॥ ३ ॥

**हिन्दी**—अर्जुन निरन्तर शरीर और इन्द्रियोंके सन्तापकारी अनशन आदि दुःखोंमें भी हिमालय पर्वतके समान दृढ हो गये, क्योंकि महापुरुषोंके धैर्यके वैभव-को नहीं जाना जा सकता है ॥ ३ ॥

न पपात संनिहितपक्तिसुरभिषु फलेषु मानसम्।
तस्य शुचिनि शिशिरे च पयस्यमृतायते हि सुतपः सुकर्मणाम् ॥ ४ ॥

**मल्लि०**—नेति। तस्यार्जुनस्य मानसं मनः संनिहितानि समीपस्थानि यानि पक्तिसुरभीणि पाकसुगन्धीनि तेषु फलेषु। तथा, शुचिनि स्वच्छे शिशिरे शीतले पयसि च न पपात। न किंचिदाचकाङ्क्षेति भावः। प्राणधारणं तु तस्य तप एवे-त्याह—तथापि सुकर्मणां सुकृतिनां शोभनं तपः सुतप एव अमृतायतेऽमृतवदाचरति। किं तपस्तृप्तानां तर्पणान्तरैरिति भावः। 'लोहितादिडाज्भ्यः क्यष्' 'वा क्यषः' इत्यात्मनेपदम्। लोहितादिराकृतिगणः ॥ ४ ॥

**हिन्दी**—उन अर्जुनका मन समीपस्थ और पकनेसे सुगन्धित फलोंमें और स्वच्छ और शीतल जलमें भी आसक्त नहीं हुआ, क्योंकि पुण्यकर्म करनेवालोंकी उत्तम तपस्या अमृतके समान होती है ॥ ४ ॥

न विसिस्मिये, न विषसाद, मुहुरलसतां न चाददे।
सत्त्वमुरुधृति रजस्तमसी न हृतः स्म तस्य हृतशक्तिपेलवे ॥ ५ ॥

**मल्लि०**—नेति। सोऽर्जुनो न विसिस्मिये। 'अहो महत्तपस्तम्' इति न विस्मयं जगाम। 'तपः क्षरति विस्मयात्' इति स्मृतेरिति भावः। न विषसाद फलविलम्बाद् गतोत्साहो न बभूव। 'विषादश्चेतसो भङ्गः' इति लक्षणात्। 'सदि-रप्रतेः' इति षत्वम्। मुहुरलसतां च नाददे। तपसि मन्दोद्यमत्वं च नागमदिति भावः। किंच, हृतशक्तिनी हृतसारे अत एव पेलवे भङ्गुरे ते हृतशक्तिपेलवे रजस्त-मसी गुणौ, उरुधृति महासारं तस्यार्जुनस्य सत्त्वं सत्त्वगुणं न हृतः स्म न हृतवतो। हृत्तेः 'लट् स्मे' इति भूतार्थे लट् ॥ ५ ॥

**हिन्दी**—अर्जुन अपनी तपस्यामें विस्मित नहीं हुए और न विषादयुक्त हुए

न आलस्यको प्राप्त हुए, शक्ति नष्ट होनेसे भङ्गुर रजोगुण और तमोगुण बढ़नेके सारसे सम्पन्न सत्त्वगुणको नष्ट नहीं कर सके ॥ ५ ॥

तपसा कृशं वपुरुवाह स विजितजगत्त्रयोदयम् ।
त्रासजननमपि तत्त्वविदां किमिवास्ति यन्न सुकरं मनस्विभिः ॥ ६ ॥

मल्लि०—तपसेति । सोऽर्जुनः तपसा कृशं तथापि विजितो जगत्त्रयस्य भुवनत्रयस्य उदय उत्कर्षो येन तत्तथोक्तम् । किंच तत्त्वविदामपि लोकहितार्थत्वं जानतामपि त्रासजननं भयंकरं वपुः उवाह वहति स्म । न चैतच्चित्रमित्याह—किमिति । यत्तु मनस्विभिर्न सुकरं तत् किमिवास्ति । न किमपीत्यर्थः 'इव' शब्दो वाक्यालंकारे । 'मनस्विनाम्' इति पाठे शेषे षष्ठी स्यादेव । कृद्योगलक्षणायाः 'न लोके'-त्यादिना निषेधात् ॥ ६ ॥

हिन्दी—वे ( अर्जुन ) तपस्यासे दुर्बल होनेपर भी तीनों लोकोंके उत्कर्षको जीतनेवाले तथा तत्त्व जाननेवालोंके भी त्रासको उत्पन्न करनेवाले शरीरको धारण करने लगे, क्योंकि मनस्वी लोगोंसे जो सुकर नहीं है, ऐसा कौन-सा विषय है ? ॥ ६ ॥

ज्वलतोऽनलादनुनिशीथमधिकरुचिरम्भसां निधेः ।
धैर्यगुणमवजयन्विजयी ददृशे समुन्नततरः स शैलतः ॥ ७ ॥

मल्लि०—ज्वलत इति । विजयी सोऽर्जुनः । अनुनिशीथमर्धरात्रे । विभक्त्यर्थेऽव्ययीभावः 'अर्धरात्रनिशीथौ द्वौ' इत्यमरः । ज्वलतो दीप्यमानात् । अनलादग्नेः । अधिकरुचिर्दीप्यमानः । तथा, अम्भसां निधेर्धैर्य गाम्भीर्यं तदेव गुणस्तम् अवजयन् । किंच, शैलतः शैलादपि समुन्नततरो ददृशे दृष्टः । अत्र रुच्यादिभिरनलाद्याधिक्यासंबन्धे संबन्धाभिधानादतिशयोक्तिरलङ्कारः ॥ ७ ॥

हिन्दी—विजयशील अर्जुन आधी रातमें जलते हुए अग्निसे भी अधिक तेजवाले, समुद्रके भी गाम्भीर्य गुणको जीतते हुए और पर्वतसे भी अधिक उन्नत देखे गये ॥ ७ ॥

जपतः सदा जपमुपांशु वदनमभितो विसारिभिः ।
तस्य दशनकिरणैः शुशुभे परिवेषभीषणमिवार्कमण्डलम् ॥ ८ ॥

मल्लि०—जपत इति । सदा उपांशु रहः । गूढमित्यर्थः । 'रहश्चोपांशु

चालिङ्गे' इत्यमरः। 'करणवदशब्दमनुप्रयोग उपांशु' इति कौमारलक्षणम्। जप्यत इति जपस्तं जपम्। मन्त्रमित्यर्थः। जपतः पठतः। तस्यार्जुनस्य वदनं कर्तृ अभितो विसारिभिः प्रसरणशीलैः। दशनकिरणैर्हेतुभिः परिवेषभीषणमर्कमण्डलमिव शुशुभे। 'परिवेषस्तु परिधिरुपसूर्यकमण्डले'। इत्यमरः॥ ८॥

हिन्दी—निरन्तर गूढ जप करते हुए उन अर्जुनका मुख चारों ओर फैलनेवाले दन्तकिरणोंसे परिवेषके आवरणसे भयङ्कर सूर्यमण्डलके समान शोभित होने लगा॥ ८॥

कवचं स बिभ्रदुपवीतपदनिहितसज्यकार्मुकः।
शैलपतिरिव महेन्द्रधनुःपरिवीतभीमगहनो विदिद्युते॥ ९॥

मल्लि०—कवचमिति। कवचं वर्म बिभ्रदुपवीतपदे यज्ञोपवीतस्थाने निहितमारोपितं सज्यं कार्मुकं येन स तथोक्तः। सोऽर्जुनो महेन्द्रधनुषा परिवीतं परिवेष्टितं भीमं गहनं वनं यस्य स शैलपतिरिव हिमवानिव विदिद्युते शुशुभे॥ ९॥

हिन्दी—कवचको धारण करते हुए और यज्ञोपवीतके स्थानपर प्रत्यञ्चाके साथ धनुको लिये हुए वे (अर्जुन) इन्द्रधनुसे परिवेष्टित भयङ्कर वनवाले हिमालय पर्वतके समान शोभित होने लगे॥ ९॥

प्रविवेश गामिव कृशस्य नियमसवनाय गच्छतः।
तस्य पदविनमितो हिमवान् गुरुतां नयन्ति हि गुणा न संहतिः॥ १०॥

मल्लि०—प्रविवेशेति। नियमसवनाय नियमस्नानाय। 'सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च' इति विश्वः। गच्छतः तस्यार्जुनस्य पदैः पादन्यासैर्विनमितो हिमवान् गां भुवं प्रविवेशेवेत्युत्प्रेक्षा। ननु कृशस्य कथमियद् गौरवम्, तत्राह— गुणाः सारादयो गुरुतां नयन्ति प्रापयन्ति हि। संहतिः संघातः। मूर्तिरिति यावत् न नयन्ति। अन्तःसाराद्धि गौरवं भवति, न तु बाह्यात्स्थौल्यात्; तत्र च हेमपिण्डतूलपिण्डावेव निदर्शनमिति भावः॥ १०॥

हिन्दी—नियमके स्नानके लिए जाते हुए अर्जुनके चरणन्यासोंसे झुका हुआ हिमालय भूमिमें प्रवेश करता हुआ-सा मालूम होता था, क्योंकि गुण गुरुताको प्राप्त कराते हैं समुदाय (मूर्ति) गुरुता को प्राप्त नहीं कराता है॥ १०॥

परिकीर्णमुद्यतभुजस्य भुवनविवरे दुरासदम्।
ज्योतिरुपरि शिरसो विततं जगृहे निजान्मुनिदिवौकसां पथः॥ ११॥

मल्लि०—परिकीर्णमिति। उद्यतभुजस्य ऊर्ध्वबाहोस्तस्य शिरस उपरि। 'षष्ठ्यतसर्थप्रत्ययेन' इति षष्ठी। विततं विस्तृतं भुवनयोर्विवरे द्यावापृथिव्योरन्तराले परिकीर्णं व्याप्तं दुरासदं दुर्धर्षं ज्योतिस्तेजो मुनीनां दिवौकसां च निजान् नियतान् पथो मार्गान्। जगृहे जग्राह। प्रतिबबन्धेत्यर्थः॥ ११॥

हिन्दी—ऊर्ध्वबाहु होकर तपस्या करते हुए उन ( अर्जुन )के शिरके ऊपर विस्तृत आकाश और पृथिवीके अन्तरालमें व्याप्त दुर्धर्ष तेज मुनियों और देवताओंके नियत मार्गोंको ग्रहण करने लगा ( रोकने लगा )॥ ११॥

रजनीषु राजतनयस्य बहुलसमयेऽपि धामभिः।
भिन्नतिमिरनिकरं न जहे शशिरश्मिसंगमयुजा नभः श्रिया॥ १२॥

मल्लि०—रजनीष्विति। बहुलसमये कृष्णपक्षेऽपि रजनीषु रात्रिषु राजतनयस्यार्जुनस्य धामभिस्तेजोभिर्भिन्नस्तिमिरनिकरो यस्य तत्। नभः शशिरश्मीनां संगमेन हेतुना युजा संगतया श्रिया। तच्छ्रीतुल्यया श्रियेत्यर्थः। अत एव निदर्शनालङ्कारः। न जहे न त्यक्तम्। जहातेः कर्मणि लिट्। ज्योत्स्नातुल्यं ज्योतिर्जातमित्यर्थः॥ १२॥

हिन्दी—कृष्णपक्षमें भी रातोंमें राजपुत्र ( अर्जुन )के तेजोंसे हटाये गये अन्धकारसमूहवाला आकाश, चन्द्रकिरणोंके संगमके कारणसे संगत होनेवाली शोभासे परित्यक्त नहीं हुआ॥ १२॥

महता मयूखनिचयेन शमितरुचि जिष्णुजन्मना।
ह्रीतमिव नभसि वीतमले न विराजते स्म वपुरंशुमालिनः॥ १३॥

मल्लि०—महतेति। जिष्णोरर्जुनाज्जन्म यस्य तेन। जन्मोत्तरपदत्वाद्व्यधिकरणो बहुव्रीहिः। महता मयूखनिचयेन बहुकिरणसमूहेन शमितरुचि हतप्रभम्। अंशुमालिनो वपुरर्कबिम्बं ह्रीतं जितत्वाल्लज्जितमिवेत्युत्प्रेक्षा। वीतमले विमले। मेघनीहाराद्यावरणरहितेऽपीत्यर्थः। नभसि न विराजते स्म॥ १३॥

हिन्दी—अर्जुनसे उत्पन्न होनेवाले महान् किरणसमूहसे तेजोहीन सूर्यमण्डल लज्जित-सा होकर निर्मल आकाशमें शोभित नहीं हो रहा था॥ १३॥

तमुदीरितारुणजटांशुमधिगुणशरासनं जनाः ।
रुद्रमनुदितललाटदृशं ददृशुर्मिमन्थिषुमिवासुरीः पुरीः ॥ १४ ॥

मल्लि०—तमिति । उदीरिता उद्गता अरुणाः जटानामंशवो यस्य । तमधिगुणमधिज्यं शरासनं यस्य । तमर्जुनम् । जनाः सिद्धगणाः । आसुरीरसुरसंबन्धिनीः पुरीः मिमन्थिषुं मथितुमिच्छुम् । मथेः सन्नन्तादुप्रत्ययः । तथा, अनुदिताऽनुत्पन्ना ललाटे दृक् यस्य तं साक्षात्त्रिपुरविजयोद्यतमभालाक्षं रुद्रमिव ददृशुः । अत्राभालाक्षस्य रुद्रस्यासम्भवात्स्वतः सिद्धोपमानासिद्धेर्नेयमुपमा, किंतूत्प्रेक्षा । सा चाभालाक्षमित्युपमानादुपमेयस्य न्यूनत्वकथनार्थेऽन्वयव्यतिरेकेणोपजीवितेत्यनयोरङ्गाङ्गिभावेन संकरः । उपमा तु व्यज्यत इत्यलंकारेणालंकारध्वनिः ॥ १४ ॥

हिन्दी—जटाओंकी लाल किरणोंसे युक्त और धनुपर प्रत्यञ्चाको चढ़ाये हुए उन ( अर्जुन )को सिद्धगणोंने असुरोंकी पुरियोंके मथनकी इच्छा करनेवाले ललाटमें अग्निरूप नेत्रसे रहित शिवजीके समान देखा ॥ १४ ॥

मरुतां पतिः स्विदहिमांशुरुत पृथुशिखः शिखी तपः ।
तप्तुमसुकरमुपक्रमते, न जनोऽयमित्यवयये स तापसैः ॥ १५ ॥

मल्लि०—मरुतामिति । मरुतां पतिः स्वित् देवेन्द्रो वा । अहिमांशुरुत सूर्यो वा । पृथुशिखो महाज्वालः शिखी पावको वा । असुकरं दुष्करं तपस्तप्तुमुपक्रमते । अयं जनः पुरुषः कश्चित्प्राकृतो न, इति सोऽर्जुनः । तापसैस्तपस्विभिः । 'अण् च' इति मत्वर्थीयोऽण्प्रत्ययः । अवययेऽवगतः । यातेरवपूर्वात्कर्मणि लिट् । अत्रेन्द्रत्वादिकं धर्ममारोप्यं जनत्वापवादात्साम्यमारोप्यापह्नवालंकारः । सामान्यलक्षणं तु—'निषिद्धविषये साम्यारोपो ह्यपह्नवः' इति ॥ १५ ॥

हिन्दी—ये क्या देवराज इन्द्र हैं, अथवा सूर्य है, वा विशाल ज्वालाओंसे युक्त अग्निदेव दुष्कर तपस्या करनेके लिए उपक्रम कर रहे हैं, ये सामान्य पुरुष नहीं हैं, तपस्वियोंने उनको इस प्रकार गौर किया ॥ १५ ॥

न ददाह भूरुहवनानि हरतिनयधाम दूरगम् ।
न स्म नयति परिशोषमपः सुसहं बभूव न च सिद्धतापसैः ॥ १६ ॥

मल्लि०—न ददाहेति । दूरगम् । व्यापकमित्यर्थः । हरितनयस्य इन्द्रसुतस्यार्जुनस्य धाम तेजो भूरुहवनानि वृक्षखण्डान् न ददाह । अग्निवदिति भावः ।

क्वचित्कोणे स्थितमित्यर्थः। तथापि भुवनातिवर्तिना सर्वलोकातिशायिना। तेजसा। अद्रिभिः पर्वतैर्जलधिभिः समुद्रैः जलवाहपथेनाकाशेन च सह वर्तत इति तथोक्तम्। दिग्भिः सह वर्तत इति सदिक्। उभयत्रापि 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः। विश्वमश्नुवानं व्याप्नुवन्तमिव स्थितमित्युत्प्रेक्षा। 'अशूङ् व्याप्तौ' इति धातोः शानच्॥ २१॥

हिन्दी—महर्षियोंने ऊँची हिमालय पर्वतकी चोटीपर विद्यमान समस्त लोकोंका अतिक्रमण करनेवाले तेजसे पर्वत, समुद्र आकाश और दिशाओंसे युक्त विश्वको व्याप्त करते हुएसे ( शिवजीका दर्शन किया )॥ २१॥

अनुजानुमध्यमवसक्तविततवपुषा महाहिना।
लोकमखिलमिव भूमिभृता रवितेजसामवधिनाधिवेष्टितम्॥ २२॥

मल्लि०—अनुजान्विति। जान्वोर्मध्येऽनुजानुमध्यम् विभक्त्यर्थेऽव्ययीभावः। अवसक्तं लग्नं विततमायतं च वपुर्यस्य तेन महाहिना। अवसक्तिविशेषण-भूतेनेत्यर्थः। अभिवेष्टितम्, अत एव रवितेजसामवधिना पर्यन्तभूतेन भूमिभृता लोकालोकाचलेनाधिवेष्टितम्। अखिलं लोकमिव स्थितमित्युपमा। 'असूर्यम्पश्यापर-भागो लोकालोकाचलः' इत्यागमः॥ २२॥

हिन्दी—महर्षियोंने घुटनोंके बीचमें लगे हुए विस्तृत शरीरवाले विशाल सर्पसे परिवेष्टित अतएव सूर्यतेजके पर्यन्तमें हुए लोकालोक पर्वतसे परिवेष्टित समस्त लोकके समान ( शिवजीका दर्शन किया )॥ २२॥

परिणाहिना तुहिनराशिविशदमुपवीतसूत्रताम्।
नीतमुरगमनुरञ्जयता शितिना गलेन विलसन्मरीचिना॥ २३॥

मल्लि०—परिणाहिनेति। पुनश्च, तुहिनराशिवत् विशदं शुभ्रम्, उपवीत-सूत्रता यज्ञोपवीतत्वं नीतं प्रापितम् उरगं शेषाहिम्। अनुरञ्जयता स्वगुणोपरक्तं कुर्वता। श्यामीकुर्वतेत्यर्थः। परिणाहिना विशालेन विलसन्मरीचिना प्रसृतकिरणेन शितिना नीलेन गलेन कण्ठेनोपलक्षितम्। 'कण्ठो गलोऽथ ग्रीवायाम्' इत्यमरः। अत्रोरगस्य स्वधवलिमत्यागेनान्यजन्यनीलिमग्रहणात्तद्गुणालङ्कारः-'तद्गुणः स्वगुण-त्यागादन्योत्कृष्टगुणग्रहः' इति लक्षणात्॥ २३॥

हिन्दी—महर्षियोंने हिमराशिके समान शुक्ल, यज्ञोपवीतके समान बनाये गये शेषनागको अपने गुणसे युक्त ( श्यामवर्णवाला ) करते हुए विशाल और

फैली हुई किरणसे युक्त नीलवर्णवाले कण्ठसे उपलक्षित ( शिवजीका दर्शन किया ) ॥ २३ ॥

प्लुतमालतीसितकपालकुमुदमवरुद्धमूर्धजम् ।
शेषमिव सुरसरित्पयसां शिरसा विसारि शशिधाम बिभ्रतम् ॥ २४ ॥

मल्लि०—प्लुतेति । पुनश्च, मालती जातीकुसुमम् । 'सुमना मालती जातिः' इति 'पुष्पे जातीप्रभृतयः स्वलिङ्गा व्रीह्यः फले' । इति चामरः । तद्वत् सितं यत् कपालमेव कुमुदं तत् प्लुतमाप्लुतं येन तत्तथोक्तम् । अवरुद्धमूर्धजं व्याप्तशिरोरुहम् । अत एव सुरसरित्पयसां शेषमिव निर्यातावशिष्टं गाङ्गमम्म इव । स्थितमित्यर्थः । उत्प्रेक्षालङ्कारः । विसारि विसृत्वरं शशिधाम चन्द्रतेजः शिरसा बिभ्रतम् । पुरुषं ददृशुरिति पूर्वेण संबन्धः ॥ २४ ॥

हिन्दी—चमेलीके फूलके समान सफेद कपालरूप कुमुदको व्याप्त करनेवाले, केशोंको व्याप्त करनेवाले अत एव गङ्गाजलके अवशिष्ट भागके समान स्थित फैले हुए चन्द्रप्रकाशको शिरसे धारण करते हुए (शिवजीका दर्शन किया) ॥२४॥

मुनयस्ततोऽभिमुखमेत्य नयनविनिमेषनोदिताः ।
पाण्डुतनयतपसा जनितं जगतामशर्मं भृशमाचचक्षिरे ॥ २५ ॥

मल्लि०—मुनय इति । ततो दर्शनानन्तरं मुनयोऽभिमुखमेत्य । शिवस्येति शेषः । नयनविनिमेषेण नेत्रसंज्ञया नोदिताः प्रेरिताः सन्तः पाण्डुतनयस्यार्जुनस्य तपसा जनितं तत्पूर्वोक्तं जगतामशर्मं असुखम् । दुःखमित्यर्थः । 'शर्मशातसुखानि च' इत्यमरः । भृशं सम्यक् । आचचक्षिरे कथितवन्तः ॥ २५ ॥

हिन्दी—मुनिलोग शिवजीका दर्शन पानेके बाद शिवजीके सम्मुख आकर उनके नेत्रोंके इशारेसे प्रेरित होकर अर्जुनकी तपस्यासे उत्पन्न लोकोंके दुःखको अच्छी तरहसे कहने लगे ॥ २५ ॥

'तरसैव कोऽपि भुवनैकपुरुष ! पुरुषस्तपस्यति ।
ज्योतिरमलवपुषोऽपि रवेरभिभूय वृत्र इव भीमविग्रहः ॥ २६ ॥

मल्लि०—तरसेति । हे भुवनैकपुरुष ! पुरुषोत्तम ! वृत्रो वृत्रासुर इव भीमविग्रहः कोऽपि । अविज्ञात इत्यर्थः । पुरुषः । तरसा बलात्कारेणैव । 'तरसी बलरंहसी' इति विश्वः । अमलवपुष उज्ज्वलमूर्तेः रवेरपि ज्योतिरभिभूय तपस्यति तपश्चरति । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यङ् ॥ २६ ॥

**हिन्दी**—'हे उत्तम पुरुष ! वृत्राऽसुरके समान भयङ्कर शरीरवाला यह पुरुष बलात्कारसे ही निर्मल मूर्तिवाले सूर्यके भी तेजको तिरस्कृत कर रहा है ॥ २६ ॥

**स धनुर्महेषुधि बिभर्ति कवचमसिमुत्तमं जटाः।**
**वल्कमजिनमिति चित्रमिदं मुनिताविरोधि न च नास्य राजते ॥ २७ ॥**

**मल्लि०**—स इति । किंच, स पुरुषो महान्ताविषुधी यस्य तत् महेषुधि धनुः कवचं वर्म उत्तममसि खडगं जटा वल्कं चीरम् अजिनं चर्म च बिभर्ति इति रूपम्, इदं विरुद्धवेषधारणं मुनिताविरोधि मुनित्वप्रतिबन्धकं तथापि, अस्य न राजत इति न । किं तु राजत एवेत्यर्थ । चित्रमाश्चर्यम् । संभाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ' इति वामनः ॥ २७ ॥

**हिन्दी**—वह पुरुष विशाल तरकशोंसे युक्त धनु, कवच, उत्तम तलवार, जटा, वल्कल और मृगचर्मको धारण करता है । तथाऽपि मुनित्वका विरोधी इसका वेष शोभित नहीं हो रहा है, यह बात नहीं है । यह आश्चर्य है ॥ २७ ॥

**चलनेऽवनिश्चलति तस्य करणनियमे सदिङ्मुखम् ।**
**स्तम्भमनुभवति शान्तमरुद्ग्रहतारकागणयुतं नभस्तलम् ॥ २८ ॥**

**मल्लि०**—चलन इति । किंच, तस्य पुंसः चलनेऽवनिः पृथिवी चलति तथा, करणनियमे समाधिनेन्द्रियनिरोधे सति । 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि' । इत्यमरः । शान्तैः हितमितैर्मरुतां वायूनां ग्रहाणां सूर्यादीनां तारकाणां नक्षत्राणां च गणैर्युतं नभस्तलं व्योम सदिङ्मुखं दिक्सहितं स्तम्भं निश्चलताम् अनुभवतीत्यर्थः । अतो विश्वातिशायिनी तस्य शक्तिरुपलक्ष्यत इति भावः ॥२८॥

**हिन्दी**—उस पुरुषके चलनेपर भूमि कम्पित होती है, समाधिसे इन्द्रियका निरोध करनेपर वायु, ग्रह और तारा इनके शान्त गणोंसे युक्त आकाशमण्डल भी दिशाओंके साथ निश्चलताका अनुभव कर रहा है ॥ २८ ॥

न चैतदुपेक्ष्यमित्याशयेनाह—

**स तदोजसा विजितसारममरदितिजोपसंहितम् ।**
**विश्वमिदमपिदधाति पुरा किमिवास्ति यन्न तपसामदुष्करम् ॥ २९ ॥**

**मल्लि०**—स इति । स पुमान् । ओजसा विजितसारं निरस्तसत्त्वम् । अमरदितिजोपसंहितं सुरासुरसहितं तदिदं विश्वं पुराऽपिदधाति । अपिधास्यतीत्यर्थः ।

शीघ्रमेव हरिष्यतीति भावः। 'निकटागामिके पुरा' इत्यमरः। 'यावत्पुरा-निपातयोर्लट्' इति भविष्यदर्थे लट्। तथा हि—यत् कर्म तपसामदुष्करं तत्किमिवास्ति। न किञ्चित्तेन दुष्करमस्तीत्यर्थः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ २९॥

**हिन्दी**—वह पुरुष जीते गये सारवाले देवताओं और दैत्योंसे युक्त इस संसार को शीघ्र तिरोहित कर डालेगा, क्योंकि जो कर्म तपस्यासे दुष्कर है वह कर्म क्या है? ( कुछ भी नहीं )॥ २९॥

न चैतदन्यफलकं तप इत्याह—

**विजिगीषते यदि जगन्ति युगपदथ संजिहीर्षति।**
**प्राप्तुमभवमभिवाञ्छति वा वयमस्य नो विषहितुं क्षमा रुचः॥ ३०॥**

**मल्लि०**—विजिगीषत इति। स पुरुषो जगन्ति भुवनानि युगपद्विजिगीषते यदि विजेतुमिच्छति वा। 'पूर्ववत्सनः' इत्यात्मनेपदम्। अथ युगपत् संजिहीर्षति संहर्तुमिच्छति वा। अभवमपवर्गं प्राप्तुमभिवाञ्छति वा, न विद्मो वयमिति शेषः। किंतु वयमप्यस्य रुचस्तेजांसि विषहितुं सोढुम्। 'तीषसहलुभरुषरिषः' इति विकल्पादिडागमः। नो क्षमा न शक्ताः। केचित् रुचः कामितानि विषहितुमवधारयितुम्' इति व्याचक्षते, तत्र सहेरवधारणार्थत्वं विचार्यम्॥ ३०॥

**हिन्दी**—वह तपस्वी लोकोंको एकबार ही जीतना चाहता है वा एकबार ही संहार करना चाहता है अथवा मोक्ष पाना चाहता है। हमलोग इसके तेजको सहनेमें असमर्थ हैं॥ ३०॥

**किमुपेक्षसे कथय नाथ! न तव विदितं न किंचन।**
**त्रातुमलमभयदार्हसि नस्त्वयि मा स्म शासति भवत्पराभवः॥ ३१॥**

**मल्लि०**—किमिति। हे नाथ! किमर्थमुपेक्षसे? कथय। त्वमिति शेषः। तव न विदितम्। त्वयाऽज्ञायमानमित्यर्थः। 'क्तस्य च वर्तमाने' इति षष्ठी। न किंचन किमपि न। हे अभयद! नोऽस्मान् अलं त्रातुमर्हसि। त्वयि शासति सति पराभवो मा स्म भवत् मा भूत्। 'स्मोत्तरे लङ् च' इति लङ्॥ ३१॥

**हिन्दी**—हे नाथ! आप क्यों उपेक्षा कर रहे हैं? कहिए। आपसे अविदित कुछ भी नहीं है। हे अभय देनेवाले भगवन्! आप हमलोगोंकी रक्षा करनेको पूर्णरूपसे योग्य हैं, आपके शासनमें हमलोगोंका मत हो॥ ३१॥

इति गां विधाय विरतेषु मुनिषु, वचनं समाददे।
भिन्नजलधिजलनादगुरु ध्वनयन्दिशां विवरमन्धकान्तकः॥ ३२॥

मल्लि०—इतीति। इति इत्थं गां वाचं विधाय। अभिधायेत्यर्थः। सामान्य विशेषपर्यवसानात्। मुनिषु विरतेषु तूष्णींभूतेषु सत्सु। अन्धकान्तकः भिन्नस्योद्वेलस्य जलधेर्जलस्य नादमिव गुरु गम्भीरं यथा दिशां विवरमन्तरा ध्वनयन् वचनं समाददे स्वीचकार। उवाचेत्यर्थः॥ ३२॥

हिन्दी—ऐसा वचन कहकर मुनियोंके चुप रहनेपर शिवजी उठी हु तरङ्गोंवाले समुद्रके जलके शब्दके समान गम्भीररूपसे दिशाओंके अन्तरा ध्वनित करते हुए बोलने लगे॥ ३२॥

बदरीतपोवननिवासनिरतमवगात माऽन्यथा।
धातुरुदयनिधने जगतां नरमंशमादिपुरुषस्य गां गतम्॥ ३३॥

मल्लि०—बदरीति। बदरीतपोवने बदरिकाश्रमे निवासनिरतं नित्यनिवा गां गतं भुवमवतीर्णं जगतामुदयनिधने सृष्टिसंहारौ धातुः। तयोः कर्तुरित्यर्थः इति दधातेस्तृन्प्रत्ययः। अत एव 'न लोके—'त्यादिना कर्मणि षष्ठीप्रतिषेध आदिपुरुषस्य विष्णोः। अंशमंशभूतम्। नरम्, नरसंज्ञकमित्यर्थः। यो नाराय सखेति भावः। अन्यथा उक्तवैपरीत्येन, एनं माऽवगात। मनुष्यमात्रं मा जानी त्यर्थः। 'इणो गा लुङि' इति गादेशः॥ ३३॥

हिन्दी—बदरिकाश्रममें निवास करनेवाले, भूतलमें अवतीर्ण लोकोंकी सृ और संहार करनेवाले आदि पुरुष ( विष्णु )के अंशभूत नरसंज्ञक इसको आप दूसरा ( मनुष्यमात्र ) मत समझें॥ ३३॥

द्विषतः परासिसिषुरेष सकलभुवनाभितापिनः।
क्रान्तकुलिशकरवीर्यबलान्मदुपासनं विहितवान्महत्तपः॥ ३४॥

मल्लि०—द्विषत इति। एष नरः सकलभुवनान्यभितापयन्त्यभीक्ष्णमि तथोक्तान्। 'बहुलमाभीक्ष्ण्ये' इति णिनिः। क्रान्ते आक्रान्ते कुलिशकरस्येन्द्र वीर्यबले शक्तिसैन्ये यैस्तान् द्विषतः शत्रून् परासिसिषुः परासितुमिच्छुः अस्य सन्नन्तादुप्रत्ययः। मदुपासनं मदाराधनम्। करणे ल्युट्। महत्तपो विहितवान् अत्र निमित्तं शत्रुक्षय एवेति भावः॥ ३४॥

हिन्दी—इस ( नर )ने समस्त लोकोंको सन्तप्त करनेवाले और इन्द्रकी श

और सैन्यको आक्रान्त करनेवाले शत्रुओंको परास्त करनेकी इच्छा कर मेरी आराधना-स्वरूप बड़ी तपस्या की है ॥ ३४ ॥

अथास्य मानुषावतारे कारणमाह—

अयमच्युतश्च वचनेन सरसिरुहजन्मनः प्रजाः ॥
पातुमसुरनिधनेन विभू भुवमभ्युपेत्य मनुजेषु तिष्ठतः ॥ ३५ ॥

मल्लि०—अयमिति । विभू प्रभू अयं नरोऽच्युतः कृष्णश्च सरसिरुहजन्मनो ब्रह्मणो वचनेन प्रार्थनया । असुराणां निधनेन मारणेन प्रजाः पातुं रक्षितुं भुवमभ्युपेत्य मनुजेषु तिष्ठतः । वस्तुस्तु साक्षान्नरनारायणावेतौ कृष्णार्जुनावित्यर्थः ॥ ३५ ॥

हिन्दी—समर्थ यह ( नर ) और अच्युत ( नारायण ) ब्रह्माकी प्रार्थनासे दैत्योंके संहारसे प्रजाओंकी रक्षा करनेके लिए भूतलपर अवतीर्ण होकर रहते हैं ॥ ३५ ॥

अथास्य सत्त्वसंपदं प्रकाशयितुमाह—

सुरकृत्यमेतदवगम्य निपुणमिति मूकदानवः ।
हन्तुमभिपतति पाण्डुसुतं त्वरया तदत्र सह गम्यतां मया ॥ ३६ ॥

मल्लि०—सुरेति । मूकदानवो मूकाख्यः कश्चिदसुरः । एतत् पाण्डवकृत्यं सुरकृत्यमिति निपुणमवगम्य साधु निश्चित्य पाण्डुसुतमर्जुनं हन्तुमभिपतति । तत् तस्मात्कारणात्, अत्रार्जुनाश्रमे । आश्रमं प्रतीत्यर्थः । मया सह त्वरया गम्यताम् । द्रष्टुमिति शेषः ॥ ३६ ॥

हिन्दी—( हे तपस्विगण ! ) मूक नामका दानव यह ( तपस्यारूप ) कार्य देवताओंका कार्य है ऐसा अच्छी तरहसे निश्चय कर पाण्डुपुत्र अर्जुनको मारनेके लिए आ रहा है इस कारणसे अर्जुनके आश्रममें मेरे साथ आपलोग शीघ्र जायें ॥ ३६ ॥

विवरेऽपि नैनमनिगूढमभिभवितुमेष पारयन् ।
पापनिरतिरविशङ्कितया विजयं व्यवस्यति वराहमायया ॥ ३७ ॥

मल्लि०—विवर इति । पापे निरतिरतिप्रीतिर्यस्य स एव दानवो विवरे रन्ध्रेऽपि । एकान्तेऽपीत्यर्थः । एनं पाण्डवम् । अनिगूढं प्रकाशं स्पष्टं यथा तथा, अभिभवितुं न पारयन् न शक्नुवन् । विभाषायाम् 'नञ' इति नञ्समासः ।

अविशङ्कितया स्वरूपगूहनान्निःशङ्कितया वराहमायया वराहभूमिकया विज
व्यवस्यति । विजयं प्रत्युद्युक्त इत्यर्थः ॥ ३७ ॥

**हिन्दी**—पापमें प्रीति करनेवाला यह मूक दानव, एकान्तमें भी इस (अर्जुन
को प्रकाशरूपसे अभिभूत करनेमें असमर्थ होकर अपना रूप छिपानेके कारण
निःशङ्क होकर वराहकी मायासे अर्जुनको जीतनेका व्यवसाय ( उद्योग ) क
रहा है ॥ ३७ ॥

ततः किं भविष्यतीत्यत्राह—

**निहते विडम्बितकिरातनृपतिवपुषा रिपौ मया।**
**मुक्तनिशितविशिखः प्रसभं मृगयाविवादमयमाचरिष्यति ॥ ३८ ॥**

**मल्लि०**—निहत इति । विडम्बितमनुकृतं किरातनृपतिवपुर्येन । तद्रूपधारिणे
त्यर्थः । मया निहते रिपौ वराहे मुक्तनिशितविशिखः सन् । अयं पाण्डवः प्रसभं
प्रसह्य मृगयाविवादं मृगप्रहारकलहम् । आचरिष्यति करिष्यति । मत्प्रहृतमेव मृगं
प्रहृत्य स्वयमहमेव प्रहर्तेति कलहिष्यति इत्यर्थः ॥ ३८ ॥

**हिन्दी**—किरातराजके शरीरका वेष लेनेवाले मुझसे मारे गये वराहमें तीक्ष्ण
बाण छोड़कर यह ( पाण्डव ) हठात् मृगयाके विषयमें कलह ( विवाद )
करेगा ॥ ३८ ॥

ततोऽपि किं भावीत्यत्राह—

**तपसा निपीडितकृशस्य विरहितसहायसंपदः ।**
**सत्त्वविहितमतुलं भुजयोर्बलमस्य पश्यत मृधेऽधिकुप्यतः ॥ ३९ ॥**

**मल्लि०**—तपसेति । तपसा नितरां पीडितोऽत एव कृशस्तस्य निपीडित
कृशस्य । 'पूर्वकाले--'त्यादिना समासः । तथा, विरहिता सहायसंपद्यस्य, तस्यै
काकिनो मृधे रणे । 'मृधमास्कन्दनं संख्यम्' इत्यमरः । अधिकुप्यतोऽस्य पाण्डवस्य
सत्त्वविहितं स्वभावकृतम् । स्वाभाविकमित्यर्थः । 'सत्त्वोऽस्त्री जन्तुषु' क्लीबे
व्यवसाये पराक्रमे । आत्मभावे पिशाचादौ द्रव्ये सत्तास्वभावयोः' । 'प्राणे बलेऽन्तः
करणे' इति वैजयन्ती । अतुलं निरुपमं भुजयोर्बाह्वोर्बलं शक्ति पश्यत । 'बलं
शक्तिर्बलं सैन्यम्' इति शाश्वतः ॥ ३९ ॥

**हिन्दी**—तपस्याके कारण अत्यन्त पीडित अत एव कृश, सहाय सम्पत्तिसे

रहित युद्धमें अत्यन्त कोप करते हुए इस ( पाण्डव )का स्वाभाविक अनुपम बाहुबलको आपलोग देख लें ॥ ३९ ॥

अत्र त्रिभिरस्य किरातभावं वर्णयति—

इति तानुदारमनुनीय विषमहरिचन्दनालिना ।
धर्मजनितपुलकेन लसद्गजमौक्तिकावलिगुणेन वक्षसा ॥ ४० ॥

मल्लि०—इतीत्यादि । शिव इति इत्थं तान् मुनीन् । उदारं युक्तियुक्तं यथा तथाऽनुनीय शिक्षयित्वा । उक्त्वेति यावत् । 'रुचिरः किरातपृतनापतिः संववृते' इत्युत्तरेणान्वयः । किरातसेनापतिवेषधारी बभूवेत्यर्थः । कथंभूतः । विषमा विकृतविन्यासा हरिचन्दनस्यालयो रेखा यस्मिस्तेन । घर्मेण स्वेदेन जनिताः पुलका रोमाञ्चा यस्मिंस्तेन । 'पुलकः पुनः । रोमाञ्चः कण्टको रोमविकारो रोमहर्षणम्' हेमचन्द्रः । 'घर्मः स्यादातपे ग्रीष्मे उष्णस्वेदाम्भसोरपि' इति विश्वः । लसन्तः शोभमाना गजमौक्तिकानां करिकुम्भोद्भवमौक्तिकानाम् आवलय एव गुणाः सूत्राणि यस्मिंस्तेन वक्षसा वक्षःस्थलेनोपलक्षितः । करिणां मुक्तायोनित्वे प्रमाणमाहागस्त्यः—'जीमूतकरिमत्स्याहिवंशशङ्खवराहजाः । शुक्त्युद्भवाश्च विज्ञेया अष्टौ मौक्तिकयोनयः ॥' इति ॥ ४० ॥

हिन्दी—शिवजी इस प्रकार उन मुनियोंको युक्तिके साथ कहकर विकृत हरिचन्दनकी रेखावाले, पसीनेसे उत्पन्न रोमाञ्चवाले और शोभित होते हुए गजमुक्ताओंकी पङ्क्तिरूप सूत्रवाले छातीसे उपलक्षित ( सुन्दर किरातसेनापति हो गये ) ॥ ४० ॥

वदनेन पुष्पितलतान्तनियमितविलम्बिमौलिना ।
बिभ्रदरुणनयनेन रुचं शिखिपिच्छलाञ्छितकपोलभित्तिना ॥ ४१ ॥

मल्लि०—वदनेनेति । पुष्पितैर्लतान्तैर्विकसितलताग्रैर्नियमिताः संयता विलम्बिनश्च ते मौलयः संयतकेशा यस्य तेन । 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः' । इत्यमरः । शिखिपिच्छलाञ्छिते बर्हिबर्हाङ्किते कपोलभित्ती यस्य तेन । अरुणनयनेनारक्तनेत्रेण वदनेन रुचं शोभां बिभ्रत् ॥ ४१ ॥

हिन्दी—शिवजी पुष्पयुक्त लताओंके अग्रभागोंसे बाँधे गये और लटकते हुए जूडोंवाले, मोरपंखले चिह्नित कपोलोंसे युक्त लाल नेत्रोंवाले मुखसे शोभाको धारण करते हुए ( सुन्दर किरात-सेनापति हो गये ) ॥ ४१ ॥

बृहदुद्वहञ्जलदनादि धनुरुपहितैकमार्गणम् ।
मेघनिचय इव संववृते रुचिरः किरातपृतनापतिः शिवः ॥ ४२॥

मल्लि०—बृहदिति । पुनश्च, जलद इव नदतीति जलदनादि । 'कर्तर्युपमाने' इति णिनिः । उपाहितैकमार्गणं संहितैकबाणं धनुरुद्वहन् । अत एव मेघनिचय इव स्थित इत्युपमा । अत्र विशेषके स्वभावोक्तिरलंकारः । 'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्' । इति लक्षणात् ॥ ४२ ॥

हिन्दी—शिवजी मेघके समान आवाज करते हुए, रखे गये एक बाणसे युक्त धनुको धारण करते हुए अत एव मेघसमूहके समान स्थित होकर सुन्दर किरात-सेनापति हो गये ॥ ४२ ॥

अनुकूलमस्य च विचिन्त्य गणपतिभिरात्तविग्रहैः ।
शूलपरशुशरचापभृतैर्महति वनेचरचमूर्विनिर्ममे ॥ ४३॥

मल्लि०—अनुकूलमिति । अस्य शिवस्य । अनुकूलं विचिन्त्य प्रियमिति निश्चित्य । आत्तविग्रहैर्गृहीतकिरातदेहैः । शूलानि परशवः कुठाराः शराश्चापानि च तानि भृतानि यैस्तैः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' इति निष्ठायाः परनिपातः । गणपतिभिः प्रमथमुख्यैर्महती वनेचरचमूः सेना विनिर्ममे निर्मिता । माङः कर्मणि लिट्, 'ह्रस्व' इत्यभ्यासस्य ह्रस्वत्वम् ॥ ४३ ॥

हिन्दी—इन ( शिवजी )के प्रीतिविषयका विचार कर किरात शरीरको धारण किये हुए शूल, फर्सा, बाण और धनु लिये हुए शिवजीके प्रधान प्रमथोंने विशाल किरातसेनाकी रचना की ॥ ४३ ॥

विरचय्य काननविभागमनुगिरमथेश्वराज्ञया ।
भीमनिनदपिहितोरुभुवः परितोऽपदिश्य मृगयां प्रतस्थिरे ॥ ४४॥

मल्लि०—विरचय्येति । अथ ईश्वराज्ञयाऽनुगिरं गिरौ । विभक्त्यर्थेऽव्ययीभावः । 'गिरेश्च सेनकस्य' इति समासान्तः । काननविभागं वनविभागं विरचय्य । अस्यायमिति देशविभागं कृत्वेत्यर्थः । भीमैर्निनदैः कलकलैः पिहिता उरवो भुवो यैस्ते तथोक्ताः सन्तः । मृगयामपदिश्य व्याजीकृत्य परितः प्रतस्थिरे प्रस्थिताः ॥ ४४॥

हिन्दी—तब शिवजी आज्ञासे पर्वतमें वनविभागकी रचना कर भयङ्कर कोलाहलसे विस्तीर्ण पृथिवीको व्याप्त करते हुए शिकार खेलनेका बहाना कर प्रमथगणने प्रस्थान किया ॥ ४४ ॥

क्षुभिताभिनिःसृतविभिन्नशकुनिमृगयूथनिःस्वनैः ।
पूर्णपृथुवनगुहाविवरः सहसा भयादिव रराास भूधरः ॥ ४५ ॥

**मल्लि०**—क्षुभितेति । क्षुभितास्त्रस्ता अभिनिःसृताः स्वस्थानान्निर्गता विभिन्ना मुक्तसंघाश्च ये शकुनयः पक्षिणो मृगाश्च तेषां यूथानि तेषां निःस्वनैः पूर्णानि पृथूनि वनानि गुहाविवराणि च यस्य भूधरः सहसा भयादिवेत्युत्प्रेक्षा । रराास चुक्रोश ॥ ४५ ॥

**हिन्दी**—डरे हुए और अपने स्थानसे निकले हुए भिन्न-भिन्न पक्षी और पशुओंके समूहकी आवाजोंसे पूर्ण, विशाल वन और कन्दराओंका विवरवाला पर्वत सहसा मानों भयसे चिल्लाने लगा ॥ ४५ ॥

न विरोधिनी रुषमियाय पथि मृगविहङ्गसंहतिः ।
घ्नन्ति सहजमपि भूरिभियः सममागताः सपदि वैरमापदः ॥ ४६ ॥

**मल्लि०**—नेति । पथि पलायनमार्गे विरोधिनी जातिवैरिणी मृगाणां सिंहव्याघ्रादीनां विहङ्गानां काकोलूकानां च संहतिः सङ्घो रुषं परस्परक्रोधं नेयाय न प्राप । किन्तु सहैव चचारेत्यर्थः । तथा हि—भूरिः प्रभूता भीर्यासु ताः समं साधारण्येन आगता आपदो विपत्तयः सहजं स्वाभाविकमपि वैरं सपदि घ्नन्ति । नोह संघातव्यसनेषु प्रजायते वैरानुबन्ध इति भावः ॥ ४६ ॥

**हिन्दी**—भागनेके मार्गमें जन्मसे ही विरोधी पशु और पक्षियोंका समूह ( गरोह ) भी एक दूसरेपर क्रुद्ध नहीं हुआ ( किन्तु साथ-साथ चलने लगा ) । प्रचुर भयवाली तथा तुल्यरूपसे आई हुई विपत्तियाँ स्वाभाविक शत्रुताको उसी समय नष्ट कर डालती हैं ॥ ४६ ॥

चमरीगणैर्गणबलस्य बलवति भवेऽप्युपस्थिते ।
वंशविततिषु विषक्तपृथुप्रियबालवालधिभिराददे धृतिः ॥ ४७ ॥

**मल्लि०**—चमरीति । वंशविततिषु वेणुगुल्मेषु विषक्ता लग्नाः पृथवो भृशं प्रियबालाः प्रियरोमाणो बालधयः पुच्छानि येषां तैः । 'पुच्छोऽस्त्री लूमलाङ्गूले वालहस्तश्च वालधिः' । इत्यमरः । चमरीगणैर्मृगविशेषैर्गणबलस्य शिवबलस्य संबन्धिनि । तद्धेतुक इत्यर्थः । संबन्धमात्रविवक्षायां षष्ठी । अन्यथा 'भीत्रार्थानां भयहेतुः' इति पञ्चमी स्यात् । बलवति प्रबले भय उपस्थिते प्राप्तेऽपि धृतिर्धैर्यम् आददे स्वीकृता । बालच्छेदभयात्प्राणहानिमप्यवगणय्य स्थितमित्यर्थः ॥ ४७ ॥

हिन्दी—बांसोंकी झाड़ियोंमें फँसे हुए प्रचुर प्रियरोमवाले पुच्छोंसे युक्त चमरी गायोंने किरातसेनासे प्रबल भयके उपस्थित होनेपर भी वालच्छेदके भयसे धैर्यधारण किया ॥ ४७ ॥

हरसैनिकाः प्रतिभयेऽपि गजमदसुगन्धिकेसरैः।
स्वस्थमभिददृशिरे सहसा प्रतिबोधजृम्भितमुखैर्मृगाधिपैः ॥ ४८ ॥

**मल्लि०**—हरेति । प्रतिभये भयहेतौ । 'भयङ्करं प्रतिभयम्' इत्यमरः। प्राप्तेऽपीति शेषः । गजमदैः सुगन्धयः सुरभयः केशराः सटा येषां तैः । हतानेकगजैरित्यर्थः । सहसा सेनाकलकलश्रवणानन्तरमेव प्रतिबोधेन निद्रापगमेन जृम्भितानि व्यात्तानि मुखानि येषां तैः मृगाधिपैः सिंहैः स्वस्थं निःशङ्कमेव यथा तथा हरसैनिकाः अभिददृशिरे ईक्षिताः । न तु किञ्चित्क्षुभितमित्यर्थः । युक्तं चैतद्गजगजमदहारिणां केसरिणामिति भावः ॥ ४८ ॥

**हिन्दी**—भयका हेतु प्राप्त होनेपर भी हाथियोंके मदसे सुगन्धित अयालवाले सहसा सेनाओंका कोलाहल सुनकर जागनेसे जमुहाई लेते हुए सिंहोंने निःशङ्क ही होकर शिवगणोंको देख लिया ॥ ४८ ॥

बिभरांबभूवुरपवृत्तजठरशफरीकुलाकुलाः।
पङ्कविषमिततटाः सरितः करिरुग्णचन्दनरसारुणं पयः ॥ ४९ ॥

**मल्लि०**—बिभरामिति । अपवृत्तजठरैस्तत्कालक्षोभाल्लुठितोदरैः शफरीकुलैराकुला व्याप्ताः पङ्कविषमितानि दुर्गमीकृतानि तटानि कूलानि यासां ताः । सरितः करिभिः, पलायमानैरिति शेषः । रुग्णानां मार्गरोधितया भग्नानाम् । 'ओदितश्च' इति निष्ठानत्वम् । चन्दनानां रसैररुणं करिरुग्णचन्दनसारुणं पयो बिभरांबभूवुः । भृधातोः 'भीह्रीभृहुवां श्लुवच्च' इत्याम्प्रत्ययः श्लुवद्भावश्च । 'कृञ्चानुप्रयुज्यते लिटि' इति भुवोऽनुप्रयोगः ॥ ४९ ॥

**हिन्दी**—उस समय उदरको लोटपोट करनेवाले मत्स्यविशेषके समूहसे व्याप्त, कीचड़से दुर्गम किये गये तटोंवाली नदियोंने भागते हुए हाथियोंसे तोड़े गये चन्दनके रससे लाल जलको धारण किया ॥ ४९ ॥

महिषक्षतागुरुतमालनलदसुरभिः सदागतिः।
व्यस्तशुकनिभशिलाकुसुमः प्रणुदन्ववौ वनसदां परिश्रमम् ॥ ५० ॥

**मल्लि०**—महिषेति । महिषैर्लुलायैः क्षतानि विदलितानि तैरगुरुभिस्तमाल-

र्नलदैरुशीरैश्च सुरभिः सुगन्धिः। व्यस्तानि विक्षितानि शुकनिभानि शुकसवर्णानि शिलाकुसुमानि शैलेयाख्या ओषधिविशेषा येन सः। अतः शीतल इति भावः। 'कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु। शैलेयम्' इत्यमरः। 'शुकनिभ' इति स्वरूपकथनम्। सदागतिर्वायुः वनसदां वनेचराणां परिश्रमं प्रणुदन्। अतो मन्द इति भावः। 'मातरिश्वा सदागतिः' इत्यमरः। ववौ वाति स्म ॥ ५० ॥

**हिन्दी** – महिषोंसे विदलित अगुरु, तमाल और उशीरोंसे सुगन्धित तोतेके वर्णके सदृश शैलेयको विकीर्ण कर हवा किरातोंके परिश्रमको दूर कर मन्द गतिसे बहने लगी ॥ ५० ॥

मथिताम्भसो रयविकीर्णमृदितकदलीगवेधुकाः।
क्लान्तजलरुहलताः सरसीर्विदधे निदाघ इव सत्त्वसंप्लवः ॥ ५१ ॥

**मल्लि०** — मथिताम्भस इति। सत्वसंप्लवः प्राणिसंक्षोभो निदाघो ग्रीष्म इव सरसीः सरांसि 'कासारः सरसी सरः' इत्यमरः। मथिताम्भसः संक्षोभितोदका रयेण पलायनवेगेन विकीर्णं व्याकीर्णं यथा तथा मृदिता निष्पीडिताः कदल्यो गवेधुकास्तृणधान्यविशेषाश्च यासां तास्तथोक्ताः। 'तृणधान्यानि नीवाराः स्त्री गवेधुर्गवेधुका'। इत्यमरः। मृदित इति, 'ग्क्ङिति च' इति गुणप्रतिषेधः। क्लान्ता जलरुहलताः पद्मिन्यो यासु ता एवंभूता विदधे चकार ॥ ५१ ॥

**हिन्दी**—उस समय हुए प्राणियोंके संक्षोभने ग्रीष्म-ऋतुके समान तालाबको संक्षोभित जलवाला और पलायनके वेगसे बिखरी गई कदली और गवेधुकावाली तथा कुंभली गई पद्मिनीवाला बना दिया ॥ ५१ ॥

इति चालयन्नचलसानुवनगहनजानुमापतिः।
प्राप मुदितहरिणीदशनक्षतवीरुधं वसतिमैन्द्रसूनवीम् ॥ ५२ ॥

**मल्लि०**—इतीति। इति इत्थम्। उमापतिरचलसानुषु वनेषु उपभोग्य-वृक्षेषु गहनेषु दावेषु च जातांस्तथोक्तान्। सत्त्वानिति शेषः। चालयन्। मुदितानां हरिणीनां दशनैः क्षता वीरुधो लता यस्यां ताम्। इन्द्रसूनोरिमाम् ऐन्द्रसूनवीम्। वसत्यत्रेति वसतिमाश्रयम्। 'वहिवस्यतिभ्यश्चित्' इत्यौणादिको वसतेरतिप्रत्ययः। प्राप ॥ ५२ ॥

**हिन्दी**—इस प्रकार शिवजी पर्वतके समतल प्रदेशोंमें उपभोग योग्य पेड़ोंमें

और वनोंमें उत्पन्न जन्तुओंको विचलित कर प्रसन्न मृगियोंके दाँतोंसे क्षत विसृत लतावाले अर्जुनके आश्रममें पहुँच गये ॥ ५२ ॥

स तमाससाद घननीलमभिमुखमुपस्थितं मुनेः।
पोत्रनिकषणविभिन्नभुवं दनुजं दधानमथ सौकरं वपुः ॥ ५३ ॥

मल्लि०—स इति। अथ अनन्तरं स शिवो घनशीलं मेघमेचकं मुनेरर्जुनस्य अभिमुखमुपस्थितमागतं पोत्रस्य मुखाग्रस्य निकषणेनोल्लेखनेन विभिन्ना विदारिता भूर्येन तम्। 'मुखाग्रे क्रोडहलयोः पोत्रम्' इत्यमरः। 'हलसूकरयोः पुवः' इति ष्ट्रन्प्रत्ययः। सूकरस्येदं सौकरं वाराहं वपुर्दधानं दनुजं दानवम्। आससाद प्राप। ददर्शेति यावत् ॥ ५३ ॥

हिन्दी—अनन्तर शिवजी मेघके समान कृष्णवर्ण, मुनि ( अर्जुन )के सम्मुख आये हुए थूथनको घिसकर पृथ्वीको विदीर्ण करते हुए सूकरशरीर लिए हुए दानव ( मूक )के पास प्राप्त हुए ॥ ५३ ॥

कच्छान्ते सुरसरितो निधाय सेनामन्वीतः स कतिपयैः किरातवर्यैः।
प्रच्छन्नस्तरुगहनैः सगुल्मजालैर्लक्ष्मीवाननुपदमस्य संप्रतस्थे ॥५४॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये द्वादशः सर्गः।

मल्लि०—कच्छान्त इति। लक्ष्मीवान्। 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' इति मतुपो मकारस्य वकारादेशः। स शिवः। सुरसरितो मन्दाकिन्या कच्छान्तेऽनूपप्रान्ते। 'जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः'। इत्यमरः। सेनां निधाय। स्थापयित्वेत्यर्थः। कतिपयैः किरातवर्यैरन्वीतोऽनुगतः सन्। 'ई गतौ' इति धातोरनुपूर्वात्कर्मणि क्तः। सगुल्मजालैर्लताप्रतानसहितैः। तरुगहनैः प्रच्छन्नश्छादितः। 'वा दान्तशान्त—' इत्यादिना निपातः। अस्य वराहस्य पदमनु अनुपदम्। पदानुसारेणेत्यर्थः। संप्रतस्थे प्रस्थितः। 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम्। प्रहर्षिणीवृत्तम् ॥ ५४ ॥

इति किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां द्वादशः सर्गः समाप्तः ॥

हिन्दी—शोभासम्पन्न शिवजीने मन्दाकिनीके जलप्राय स्थानके समीप सेनाको रखकर कतिपय श्रेष्ठ किरातोंसे अनुगत होकर लतासमूहसे प्रच्छन्न हो उस वराहके पदका अनुसरण कर प्रस्थान किया ॥ ५४ ॥

इति श्रीकिरातार्जुनीये द्वादशः सर्गः।

## त्रयोदशः सर्गः

वपुषा परमेण भूधराणामथ संभाव्यपराक्रमं बिभेदे।
मृगमाशु विलोकयांचकार स्थिरदंष्ट्रोग्रमुखं महेन्द्रसूनुः ॥ १ ॥

मल्लि०—वपुषेति। अथ ईश्वरप्रस्थानान्तरं महेन्द्रसूनुरर्जुनः परमेण महता वपुषा हेतुना भूधराणां बिभेदे विदारणे संभाव्यपराक्रमं क्षमोऽयमिति प्रतर्क्यपौरुषं स्थिराभ्यां दृढाभ्यां दंष्ट्राभ्यामुग्रं मुखं यस्य तं मृगम्। वराहमित्यर्थः। आशु तदागमनान्तरम्। अविलम्बेनेत्यर्थः। विलोकयांचकार ददर्श। अस्मिन्सर्गे प्राक्पञ्चत्रिंशच्छ्लोकादौपच्छन्दसिकं वृत्तम् ॥ १ ॥

हिन्दी—शिवजीके प्रस्थानके अनन्तर इन्द्रपुत्र अर्जुनने विशाल शरीरसे पर्वतोंको विदारण करनेमें समर्थ पराक्रमवाले और दृढ़ दाढ़ोंसे भयङ्कर मुंहवाले वराहको शीघ्र देखा ॥ १ ॥

स्फुटबद्धसटोन्नतिः स दूरादभिधावन्नवधीरितान्यकृत्यः।
जयमिच्छति तस्य जातशङ्के मनसीमं मुहुराददे वितर्कम् ॥ २ ॥

मल्लि०—स्फुटेति। स्फुटा स्पष्टा बद्धा विरचिता सटानां केसराणामुन्नतिरुद्धतिर्यस्य सः। क्रोधाद्धर्षितलोमेत्यर्थः। 'सटा जटाकेसरयोः' इति विश्वः। दूरादभिधावन् संमुखमापतन्। तथा, अवधीरितान्यकृत्यस्त्यक्तान्यकर्मा स वराहो जयमिच्छति जयार्थिनि अत एव जातशङ्के। स्वयं जिघांसोर्द्विषामेकलक्ष्यत्वादिति भावः। तस्य मुनेर्मनसि मुहुरिमं वितर्कं वक्ष्यमाणमूहम्। 'अध्याहारस्तर्क ऊहः' इत्यमरः। आदद उत्पादयामास ॥ २ ॥

हिन्दी—व्यक्तरूपसे अयालोंको उन्नत कर दूरसे दौड़ता हुआ सब काम छोड़कर वह वराह जयकी इच्छा करनेवाले और शङ्कित मुनि ( अर्जुन )के मनमें बारंबार इस प्रकारका तर्क उत्पन्न करने लगा ॥ २ ॥

अथैकादशभिर्वितर्कमेव विरूपयति—

'घनपोत्रविदीर्णशालमूलो निबिडस्कन्धनिकाषरुग्णवप्रः।
अयमेकचरोऽभिवर्तते मां समरायेव समाजुहूषमाणः ॥ ३ ॥

मल्लि०—घनपोत्रेति। घनेन कठिनेन पोत्रेण मुखाग्रेण विदीर्णानि विदलि-

तानि शालमूलानि वृक्षमूलानि येन सः। निविडस्य स्कन्धस्य निकाषेण निकषणेन रुग्णवप्रो भग्नसानुः। अतो महासत्त्वसंपन्न इति भावः। एकश्चासौ चरश्चेति एकचर एकाकी। यूथादपेत इत्यर्थः। अतः, अयं वराह समराय समरं कर्तुम्। 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी। समाजुहूषमाण इव समाह्वातुमिच्छन्निव। 'इव' शब्दः संभावनायाम्। समाह्वयतेः सन्नन्ताच्छानच्प्रत्ययः। 'स्पर्धायामाङः', 'पूर्ववत्सनः' इत्यात्मनेपदम्। 'अभ्यस्तस्य च' इति संप्रसारणम्। 'मामभिवर्तते मामभिधावति'। उपसर्गवशात् सकर्मकत्वम्। अतः सर्वथा नायमुपेक्ष्य इति भावः॥ ३॥

**हिन्दी**—कठोर थूथनसे वृक्षमूलोंको विदीर्ण करनेवाला वृक्षके घने स्कन्धको रगड़नेसे प्राकारको तोड़नेवाला अकेला यह वराह, युद्ध करनेके लिए ललकारता हुआ-सा मेरे सम्मुख आ रहा है॥ ३॥

**इह वीतभयास्तपोऽनुभावाज्जहति व्यालमृगाः परेषु वृत्तिम्।**
**मयि तां सुतरामयं विधत्ते विकृतिः किं नु भवेदियं नु माया?॥ ४॥**

**मल्लि०**—इहेति। इह आश्रमे तपोनुभावाद्वीतभयाः। लक्षणया विगतवैरा इत्यर्थः। अतएव व्यालमृगाः क्रूरव्याघ्रादयः। 'व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनि' इति विश्वः। परेषु प्राण्यन्तरेषु वृत्तिं जीविकां जहति। हिंसया न जीवन्तीत्यर्थः। अयं वराहो मयि मद्विषये तां वृत्तिं सुतरां विधत्ते करोति। मां हन्तुमिच्छतीत्यर्थः। तदियं विकृतिस्तपःसामर्थ्यभङ्गरूपा भवेत्किं नु। यद्वा, माया कस्यचिद्दैत्यस्य वराहभूमिका भवेत् नु। 'किन्तु' शब्दो वितर्के॥ ४॥

**हिन्दी**—इस आश्रममें तपस्याके प्रभावसे परस्पर विरोधको छोड़े हुए क्रूर व्याघ्र आदि पशु अन्य जन्तुओंमें मारनेका व्यवहार छोड़ रहे हैं, यह वराह मुझपर उस हिंसाका व्यवहार भलीभाँति कर रहा है, अतः यह विकार है वा किसी दैत्यकी माया है॥ ४॥

**अथवैष कृतज्ञयेव पूर्वं भृशमासेवितया रुषा न मुक्तः।**
**अवधूय विरोधिनीः किमारान्मृगजातीरभियाति मां जवेन॥ ५॥**

**मल्लि०**—अथवेति। 'अथवा' इति पक्षान्तरे। एष मृगः पूर्वं जन्मान्तरे भृशमत्यर्थम्। आसेवितयाऽतिपरिचितया रुषा क्रुधा। मद्गोचरयेति शेषः। कृतज्ञयेव पूर्वकृतं वैरानुबन्धं संप्रति जानात्येवेत्युत्प्रेक्षा। न मुक्तो न त्यक्तः। अद्यापीति शेषः।

नूनमयं प्राग्भवीयवैरानुबन्धी कश्चित् । संप्रति वैरबीजासंभवादिति भावः । कुतः यद्यत आरात् समीपतः । 'आराद्दूर समीपयोः' इत्यमरः । विरोधिनीर्मृगजाती-रवधूय त्यक्त्वा जवेन मामभियाति अभिधावति । अन्यथा नाभियायादिति भावः ॥ ५ ॥

हिन्दी--अथ वा यह जानवर पूर्वजन्ममें अत्यन्त परिचित मेरे प्रति कृतघ्नके समान क्रोधसे नहीं छोड़ा गया है क्योंकि यह समीपसे विरोधिनी पशु-जातियोंको छोड़कर मेरे सम्मुख दौड़ कर आ रहा है ॥ ५ ॥

न केवलमभियानमेव, किं च मनोवृत्तिरप्यत्र प्रमाणमित्याह—

न मृगः खलु कोऽप्ययं, जिघांसुः स्खलति ह्यत्र तथा भृशं मनो मे ।
विमलं कलुषीभवच्च चेतः कथयत्येव हितैषिणं रिपुं वा ॥ ६ ॥

मल्लि०—न मृग इति । अयं मृगो न खलु, किंतु कोऽपि कश्चिदन्य एव जिघांसुर्हन्तुमिच्छुः हन्तेः सन्नन्तादुप्रत्ययः । 'अभ्यासाच्च' इति कुत्वम् । 'अज्झन-गमां सनि' इति दीर्घः । कुतः । हि यस्मात्, अत्रास्मिन्मृगविषये मे मनस्तथा भृशं स्खलति क्षुभ्यति । यथायं जिघांसुरिति बुद्धिरुत्पद्यत इत्यर्थः । तथा हि—विमलं प्रसन्नं तथा कलुषीभवत् क्षुभ्यच्च चेत एव हितैषिणं रिपुं वा मित्रममित्रं च कथ-यति । यत्र यत्र मनः प्रसीदति तदेव मित्रम् । अन्यथा त्वन्यथेति निश्चितमित्यर्थः । अतोऽयं वध्य इति भावः ॥ ६ ॥

हिन्दी—यह जानवर नहीं है, किन्तु कोई दूसरा ही मारनेकी इच्छा करने-वाला है, क्योंकि इसमें मेरा मन ज्यादा ही क्षुब्ध हो रहा है, प्रसन्न तथा क्षुब्ध होनेवाला चित्त मित्र या शत्रुकी सूचना करता है ॥ ६ ॥

ननु मुनेः किमनया दुःशङ्कया, तत्राह—

मुनिरस्मि, निरागसः कुतो मे भयमित्येष न भूतयेऽभिमानः ।
परवृद्धिषु बद्धमत्सराणां किमिव ह्यस्ति दुरात्मनामलङ्घ्यम् ॥ ७ ॥

मल्लि०—मुनिरिति । मुनिरस्मि । अतो निरागसो निरपराधस्य मे कुतो भयमित्येषोऽभिमानोऽहंकारः अनपकारिणं मां कोऽपि किं करिष्यतीति बुद्धिर्भूतये श्रेयसे न भवति । तथा हि—परवृद्धिषु विषये बद्धमत्सराणां दुरात्मनामलङ्घ्यं किमिवास्ति न किंचिदकार्यमस्तीत्यर्थः । 'इव' शब्दो वाक्यालङ्कारे ॥ ७ ॥

हिन्दी—मैं तपस्वी हूँ अतः निरपराध मुझे कहाँसे भय है ? ऐसा अभिमान

कल्याणकारक नहीं है, क्योंकि दूसरेकी उन्नतिमें द्वेष करनेवाले दुरात्माओंको कुछ भी अकार्य नहीं है ॥ ७ ॥

अस्तु जिघांसुरपि क्षुद्रः किं करिष्यतीत्यत्राह—

दनुजः स्विदयं क्षपाचरो वा वनजे नेति बलं बतास्ति सत्त्वे।
अभिभूय तथा हि मेघनीलः सकलं कम्पयतीव शैलराजम् ॥ ८ ॥

मल्लि०—दनुज इति । अयं दनुजः स्वित् दानवो वा क्षपाचरो राक्षसो वा। न तु मृग एवेत्यर्थः । कुतः । वनजे सत्त्वे वन्यप्राणिनि । इति ईदृशं बलं नास्ति। बतेत्याश्चर्ये । बलमेव समर्थयते । तथा हि—मेघनीलोऽयं वराहः सकलं शैलराजमभिभूय आक्रम्य कम्पयतीव । पदविष्टम्भात्तथा प्रतीयत इत्यर्थः । अत्र कम्पयतीवेत्युत्प्रेक्षागर्भोऽयं शैलकम्पनरूपकार्येण तत्कारणबलातिरेकसमर्थनात्कार्येण कारणसमर्थनरूपोऽर्थान्तरन्यासः ॥ ८ ॥

**हिन्दी**—यह दानव वा राक्षस है, क्योंकि वनमें उत्पन्न जानवरमें ऐसा बल नहीं होता है । मेघके समान कृष्ण-वर्ण यह वराह समूचे पर्वतराजको आक्रमण कर कम्पित कर रहा है ॥ ८ ॥

किंच, योऽयं शैले मृगयाकलकल इव श्रूयते सोऽप्येतन्मायापरिकल्पित एवेत्याह—

अयमेव मृगव्यसत्रकामः प्रहरिष्यन्मयि मायया शमस्थे।
पृथुभिर्ध्वजिनीरवैरकार्षीच्चकितोद्भ्रान्तमृगाणि काननानि ॥ ९ ॥

मल्लि०—अयमिति । अयमेव शमस्थे शान्तिनिविष्टे इति रन्ध्रोक्तिः । मयि। अधिकरणविवक्षायां सप्तमी । मायया प्रहरिष्यन् । प्रहर्तुमिच्छन्नित्यर्थः । 'लृट् शेषे च' इति चकारात्क्रियार्थायां क्रियायाम् लृट् । 'लृटः सद्वा' इति शत्रादेशः। मृगव्यं, मृगया तस्य सत्रं वनं, तदर्थं वनमित्यर्थः । तत्कामयत इति मृगव्यसत्रकामः मृगयाभूमिपरिग्रहार्थी सन्नित्यर्थः । 'कर्मण्यण्' 'आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्' । इति, 'सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च' इति चामरः । पृथुभिर्बृहद्भिर्ध्वजिनीरवैः सेनाकलकलैः । स्वमायया कल्पितैरेवेत्यर्थः । काननानि चकितोद्भ्रान्तास्त्रस्तपलायिता मृगा येषु तानि । अकार्षीच्चकार । अयमेव रन्ध्रान्वेषी मत्प्रहारार्थं स्वयमेव मृगयुर्भूत्वा वनावरोधाय सेनाघोषं कल्पयामास । स मृगरूपेणागच्छतीत्यर्थः ॥ ९ ॥

**हिन्दी**—यह ( वराह ) ही शान्तिमें स्थित मुझपर मायासे प्रहार करनेकी

इच्छा करता हुआ मृगयाके वनकी चाह कर विशाल सेनाके कोलाहलसे वनोंको भीत और दौड़नेवाले जानवरोंवाला बना रहा है ॥ ९ ॥

वितर्कान्तरमाह –

बहुशः कृतसत्कृतेर्विधातुं प्रियमिच्छन्नथवा सुयोधनस्य ।
क्षुभितं वनगोचराभियोगाद् गणमाशिश्रियदाकुलं तिरश्चाम् ॥ १० ॥

मल्लि०—बहुश इति । अथवा बहुशः कृता सत्कृतिः सत्कारो येन तस्य सुयोधनस्य प्रियं मद्वधरूपं प्रतिप्रियं विधातुं कर्तुमिच्छन् । यः कश्चिदिति शेषः । वनं गोचरस्थानं येषां तेषां वनगोचराणामभियोगादवरोधात् । 'अभियोगोऽवरोधः स्यात्' इति हलायुधः । क्षुभितमुद्विग्नमाकुलं चलं तिरश्चां मृगादिपशूनां गणमाशिश्रियत् वराहरूपेण प्राविशत् । 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' 'चङि' इति द्विर्भावः ॥ १० ॥

हिन्दी—अथवा कई बार सत्कार किये हुए दुर्योधनका अभीष्ट करना चाहता हुआ यह कोई वनमें रहनेवालोंको रोकनेसे उद्विग्न और चञ्चल मृग आदि पशुओंके गणका आश्रय ले रहा है ( वराहरूपसे प्रवेश कर रहा है ) ॥ १० ॥

वितर्कान्तरमाह—

अवलीढसनाभिरश्वसेनः प्रसभं खाण्डवजातवेदसा वा ।
प्रतिकर्तुमुपागतः समन्युः कृतमन्युर्यदि वा वृकोदरेण ॥ ११ ॥

मल्लि०-अवलीढेति । खाण्डवजातवेदसा खाण्डववनाग्निना प्रसभमवलीढसनाभिर्दग्धबन्धुः । 'सपिण्डास्तु सनाभयः । सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ।' इत्यमरः । अत एव समन्युर्बद्धवैरः । तस्यार्जुनस्यापकारयितृत्वादिति भावः । अश्वसेनस्तक्षकपुत्रः कश्चिन्महासर्पः प्रतिकर्तुं वैरनिर्यातनार्थम् । उपागतो वा । वराहमाययेति शेषः । पक्षान्तरमाह--यदि वा वृकोदरेण भीमसेनेन कृतमन्युर्जनितक्रोधो वा । कश्चिदिति शेषः । पुरा किल पाण्डवः खाण्डवदाहे पावकभयात् पलायमानांस्तक्षकपुत्रानश्वसेनस्य बन्धून् बाणैरवरुध्य दाहयामासेति भारतकथा ॥ ११ ॥

हिन्दी—अथवा खाण्डव वनकी आगसे जला हुआ बन्धुवाला अत एव वैर ( दुश्मनी ) करता हुआ अश्वसेन ( तक्षकका पुत्र कोई सर्प ) बदला लेनेके लिए वराहरूप लेकर आया हुआ है अथवा भीमसेनसे उत्पन्न क्रोधवाला यह कोई आया हुआ है ॥ ११ ॥

अथ द्वाभ्यामनन्तरकरणीयमध्यवस्यति—बलेत्यादिना—

बलशालितया यथा तथा वा धियमुच्छेदवरामयं दधानः।
नियमेन मया निवर्हणीयः, परमं लाभमरातिभङ्गमाहुः॥ १२॥

मल्लि०—किं बहुना, यथा तथा वाऽस्तु। अयं मायिकः पारमार्थिको वा स्त्वित्यर्थः। सर्वथापि बलशालितया। बलदृप्ततयेत्यर्थः। उच्छेदपरां धियं दधानः मां जिघांसुरित्यर्थः। अतोऽयम् मृगो नियमेनावश्यं मया निवर्हणीयो वध्यः। 'प्रमापणं निवर्हणम्' इत्यमरः। तथा हि—अरातिभङ्गं शत्रुक्षयं परमं लाभमाहुः॥

हिन्दी—अथवा यह जो कोई हो सर्वथा बलवान् होनेसे नाश करनेकी मति लेता हुआ यह जानवर अवश्यही मुझसे वध्य है, क्योंकि विद्वान् लोग शत्रुनाशको उत्तम लाभ कहते हैं॥ १२॥

ननु तपोविरोधिनीं हिंसेत्याशङ्क्याह—

कुरु तात! तपांस्यमार्गदायी विजयायेत्यलमन्वशान्मुनिर्माम्।
बलिनश्च वधादृतेऽस्य शक्यं व्रतसंरक्षणमन्यथा न कर्तुम्॥ १३॥

मल्लि०—कुर्विति। हे तात वत्स! मार्गदायी न भवतीति अमार्गदायी। रन्ध्रान्वेषिणां प्रवेशमयच्छन्नित्यर्थः। कुतः। जयार्थित्वादित्याह—विजयाय तपांसि कुर्विति मुनिर्व्यासो मामलं भृशम्। अन्वशात् अनुशिष्टवान्। अनुशासेर्लङ्। ननु मुनिर्वा कथमधर्ममन्वशात्, तत्राह—बलिन इति अस्य मृगस्य बलिनः प्रबलस्य वधादृते वधं विना। 'अन्यारादितरर्ते—' इत्यादिना पञ्चमी। अन्यथा उपायान्तरेण व्रतसंरक्षणं तपोरक्षणं कर्तुं न शक्यम्। हिंसापि दुष्टनिग्रहात्मिका नाधर्म इत्यर्थः॥ १३॥

हिन्दी—'हे वत्स! रन्ध्रका अन्वेषण करनेवालोंको प्रवेशका मार्ग नहीं देते हुए तुम विजयके लिए तपस्या करो' ऐसा व्यास मुनिने मुझे अनुशासन किया है। बलवान् इस वराहको मारे विना दूसरे उपायसे तपस्याकी रक्षा नहीं की जा सकती है॥ १३॥

इति तेन विचिन्त्य चापनाम प्रथमं पौरुषचिह्नमाललम्बे।
उपलब्धगुणः परस्य भेदे सचिवः शुद्ध इवाददे च बाणः॥ १४॥

मल्लि०—इतीति। तेनार्जुनेन। इतीत्थं विचिन्त्य वितर्क्य चापनाम चापाख्यं प्रथमं पौरुषचिह्नम्। तस्य मुख्यायुधत्वादिति भावः। आललम्बे गृहीतम्।

कर्मणि लिट्। अथ परस्य शत्रोर्भेदे विदारण उपजाते च उपलब्धगुणो ज्ञातशक्तिः बाणस्तु प्राप्तमौर्वीकश्चेति शेषः। शुद्धः ऋजुर्दिग्धत्वादिदोषरहितो वा। 'न कर्मभेदैर्नो दिग्धैर्नाग्निज्वलिततेजसैः'। इति निषेधात्। अन्यत्र—शुद्धो निर्मलचित्त इति यावत्। बाणश्च सचिव इव। आददे जगृहे। अत्र बाणसचिवयोः शब्दमात्रसाम्यर्याच्छ्लेषालंकारः। प्रकृताप्रकृतविषय इति सर्वस्वकारः। उपमैवेति केचित्॥ १४॥

हिन्दी—उन्होंने ( अर्जुनने ) ऐसा विचार कर धनु नामवाले पहले पुरुषार्थके चिह्नको उठाया, शत्रुको विदारण करनेमें जानी गई शक्तिवाला और प्रत्यञ्चापर चढ़ाया गया शुद्ध (सीधा वा दोषरहित) मन्त्रीके समान बाणको ले लिया॥१४॥

अनुभाववता गुरु स्थिरत्वादविसंवादि धनुर्धनञ्जयेन।
स्वबलव्यसनेऽपि पीडयमानं गुणवन्मित्रमिवानतिं प्रपेदे॥ १५॥

मल्लि०—अनुभावेति। गुरु महत्पूज्यं च स्थिरात् सारवत्त्वात्। अविसंवादि अभङ्गुरम्, अन्यत्र प्रतिष्ठितत्वादसत्यरहितम्। गुणवत् सज्यम्। अन्यत्र—औदार्यादिगुणवत्। धनुर्मित्रमिवानुभाववता निश्चयबुद्धिमता। 'अनुभावः प्रभावे च सतां च मतिनिश्चये।' इत्यमरः। धनञ्जयेन स्वबलव्यसनेऽपि तपसा क्षीणत्वेपि। अन्यत्र स्वं धनं तदेव बलं तस्य व्यसने ह्रासेऽपि। पीडयमानमाकृष्यमाणमवरुध्यमानं च सत् मित्रमिव। आनतिं नम्रतामानुकूल्यं च प्रपेदे। अलंकारस्तु पूर्ववत्॥ १५॥

हिन्दी—गुरु ( विशाल और पूज्य ) सारयुक्त होनेसे अभङ्गुर ( नहीं टूटनेवाला ) अथवा प्रतिष्ठित होनेसे असत्यसे रहित, गुण ( प्रत्यञ्चा वा उदारता-आदि )से युक्त धनुने मित्रके समान, निश्चय बुद्धिवाले अर्जुनसे तपस्यासे क्षीण होनेपर भी अथवा स्व( धन )रूप बलका ह्रास होनेपर भी खींचा जाकर उत्तम मित्रके समान आनति ( नम्रता वा अनुकूलता )को प्राप्त किया॥ १५॥

प्रविकर्षनिनादभिन्नरन्ध्रः पदविष्टम्भनिपीडितस्तदानीम्।
अधिरोहति गाण्डिवं महेषौ सकलः संशयमारुरोह शैलः॥ १६॥

मल्लि०—प्रविकर्षेति। तदानीं तस्मिन् काले महेषौ बाणे गाण्डिवमर्जुनधनुः। अधिरोहति सति। 'कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकौ' इत्यमरः। 'गाण्डयजगात्संज्ञायाम्' इति वप्रत्ययः। प्रविकर्षेण ज्यास्फालनेन यो निनादस्तेन भिन्नरन्ध्रो विदलितगह्वरः तथा, पदविष्टम्भेन पादाक्रमणेन निपीडितो नुन्नः सकलः समूलः

शैलः संशयं जीवितसंदेहम् । आरुरोह । प्रापेत्यर्थः । अत्र शैलस्य संशयासंबन्धे संबन्धकथनादतिशयोक्तिरलंकारः ॥ १६ ॥

**हिन्दी**—उस समय विशाल बाणके अर्जुनके धनु गाण्डीवपर चढ़ाने प्रत्यञ्चाके ताडनसे विदीर्ण गह्वरवाला तथा पैरके आक्रमणसे प्रेरित मूलके पर्वत ही संशयको प्राप्त हो गया ॥ १६ ॥

ददृशेऽथ सविस्मयं शिवेन स्थिरपूर्णायतचापमण्डलस्थः।
रचितस्त्रिसृणां पुरां विधातुं वधमात्मेव भयानकः परेषाम् ॥ १७ ॥

**मल्लि०**--ददृश इति । अथ बाणसंधानानन्तरं शिवेन स्थिरं निश्चलं पूर्णं यथा तथा, आयत आकृष्टे चापमण्डले तिष्ठतीति तथोक्तः । चापमण्डलमध्ये स्थितः इत्यर्थः । तिसृणाम् । 'न तिसृचतसृ' इति दीर्घप्रतिषेधः । पुराम् । त्रिपुरासुरस्येत्यर्थः । वधं संहारं विधातुं कर्तुं रचितः कल्पितः । स्थानविशेषे स्थापित इव यावत् । आत्मा स्वयमिव परेषां भयानको भयंकरः सोऽर्जुनः सविस्मयं ददृशे दृष्टः। उपमालंकारः ॥ १७ ॥

**हिन्दी**—बाणसन्धानके अनन्तर शिवजीने निश्चल और पूर्णरूपसे आकृष्ट धनुर्मण्डलको आच्छादित कर रहे हुए त्रिपुराऽसुरका वध करनेके लिए उद्यत अपने ही समान दूसरोंको भयङ्कर अर्जुनको आश्चर्यके साथ देखा ॥ १७ ॥

अथ पिनाकिवृत्तान्तमाह—

विचकर्ष च संहितेषुरुच्चैश्चरणास्कन्दननामिताचलेन्द्रः ।
धनुरायतभोगवासुकिज्यावदनग्रन्थिविमुक्तवह्नि शंभुः ॥ १८ ॥

**मल्लि०**—विचकर्षेति । अथ शंभुश्च संहितेषुः सन् उच्चैर्भृशं चरणास्कन्देन पदविष्टम्भेन नामितोऽधो नीतोऽचलेन्द्रो येन स तथोक्तः । आयतभोग आकृष्टकायो वासुकिरेव ज्या तस्य वदनमेव ग्रन्थिस्तेन विमुक्त उत्सृष्टो वह्निर्यस्य तत् धनुर्विचकर्षेति स्वभावोक्तिः ॥ १८ ॥

**हिन्दी**—तब बाणका सन्धान करते हुए शिवजीने उन्नत रूपसे चरणके आक्रमणसे पर्वतराजको झुकाते हुए शरीरको आकृष्ट करनेवाला सर्पराज वासुकि रूप प्रत्यञ्चा, उसके मुखरूप ग्रन्थिसे अग्निको छोड़नेवाले धनुको आकृष्ट किया ॥ १८ ॥

स भवस्य भवक्षयैकहेतोः सितसप्तेश्च विधास्यतोः सहार्थम् ।
रिपुराप पराभवाय मध्यं प्रकृतिप्रत्ययोरिवानुबन्धः ॥ १९ ॥

मल्लि०—स इति । सह संभूय अर्थमरिवधरूपप्रयोजनं विधास्यतोः करिष्यतोः । अन्यत्र—सहार्थमभिधेयमभिधास्यतोरित्यर्थः । 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' इति वचनात् । भवक्षयैकहेतोः संसारोच्छेदनिदानस्य भवस्य शिवस्य सितसप्तेरर्जुनस्य च मध्यं रिपुर्वराहः । यस्मात्प्रत्ययो विधीयते सा प्रकृतिर्धात्वादिः, प्रत्ययः सनादिः, तयोर्मध्यमनुबन्ध इत्संज्ञको वर्णः । यथा भूतं भूतिरित्यादौ ककारः । स इव पराभवाय नाशाय लोपार्थमेव आप । न तु स्थित्यर्थमित्यर्थः ॥ १९ ॥

हिन्दी—मिलकर शत्रुका वधरूप प्रयोजनको करनेवाले, दूसरे पक्षमें —साथ-साथ अर्थका प्रतिपादन करनेवाले, संसारके संहारके लिए एकमात्र कारण-स्वरूप शिवजी और अर्जुनके भी बीचमें शत्रु ( वराह ) प्रकृति ( धातु आदि ) प्रत्यय ( सन् आदि ) उनके बीचमें अनुबन्ध ( इत्संज्ञक वर्ण )की तरह लोपके लिए प्राप्त हुआ ॥ १९ ॥

अथ दीपितवारिवाहवर्त्मा रववित्रासितवारणादवार्यः ।
निपपात जवादिषुः पिनाकान्महतोऽभ्रादिव वैद्युतः कृशानुः ॥ २० ॥

मल्लि०—अथेति । अथ रिपोर्मध्यप्रवेशानन्तरं दीपितं वारिवाहवर्त्म आकाशं येन सः । अवार्यो दुर्वार इषुः शरो रववित्रासितवारणात् स्वघोषभीषितगजात् पिनाकात् शिवधनुषः । 'पिनाकोऽजगवं धनुः' इत्यमरः । महतोऽभ्रान्मेघात्, विद्युतोऽयं वैद्युतः कृशानुरशनिरिव जवाद्वेगात् । निपपाताधाव ॥ २० ॥

हिन्दी—तब आकाशको प्रकाशित करनेवाला और निवारण नहीं किया जा सकनेवाला बाण अपनी आवाजसे हाथीको डरानेवाले शिवधनु पिनाकसे विशाल मेघसे बिजलीवाले वज्रके समान वेगसे छूटा ॥ २० ॥

व्रजतोऽस्य बृहत्पतत्त्रजन्मा कृततार्क्ष्योपनिपातवेगशङ्कः ।
प्रतिनादमहान्महोरगाणां हृदयश्रोत्रभिदुत्पपात नादः ॥ २१ ॥

मल्लि०—व्रजत इति । व्रजतो धावतोऽस्य बाणस्य बृहद्भ्यः पतत्त्रेभ्यः पक्षेभ्यो जन्म यस्य स तथोक्तः । कृता तार्क्ष्योपनिपातवेगशङ्का गरुडागमनवेगभ्रमो येन सः । अत एव, महोरगाणां सर्पाणां हृदयानि श्रोत्राणि च भिनत्तीति हृदयश्रोत्रभित् । 'समुद्राभ्राद्घः' इति सूत्रे पूर्वनिपातव्यभिचारात् 'श्रोत्र' शब्दस्य पूर्वनिपातः

व्यभिचारः। प्रतिनादैः प्रतिध्वनिभिः महान् संमूर्च्छितो नाद उत्पपात
अत्र नादस्योरगहृदयभेदकत्वासम्बन्धेऽपि सम्बन्धाभिधानादतिशयोक्तिः।
तार्क्ष्यवेगभ्रमोत्थापितेति तयोरङ्गाङ्गिभावेन संकरः॥ २१॥

हिन्दी—दौड़ते हुए इस बाणके विशाल पुंखोंसे उत्पत्तिवाली गरुडके
के वेगकी शङ्का उत्पन्न करनेवाली अत एव विशाल सर्पोंके हृदय और
फाड़नेवाली, प्रतिध्वनियोंसे भारी आवाज उत्पन्न हुई॥ २१॥

नयनादिव शूलिनः प्रवृत्तैर्मनसोऽप्याशुतरं यतः पिशङ्गैः।
विदधे विलसत्तडिल्लताभैः किरणैर्व्योमनि मार्गणस्य मार्गः॥ २२॥

मल्लि०—नयनादिवेति। शूलिनो नयनात् प्रवृत्तैर्निर्गतैरिव स्थितैरित्युत्प्रेक्षा
नेत्राग्निशिखाकल्पैरित्यर्थः। पिशङ्गैः पिङ्गलैः विलसत्तडिल्लताभैर्विद्युद्दामतुल्यै
रित्युपमा। मनसश्चित्तादपि आशुतरं शीघ्रतरम्। 'आशु' शब्दादनव्ययात्तरप्
अतः 'किमेत्तिङव्ययघा—'त्यादिनाम्प्रत्ययो न। 'क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां
सत्त्वगामि यत्।' इत्यमरः। यतो गच्छतः। इणः शतृप्रत्ययः। मार्गणस्य शरस्य
'कदम्बमार्गणशराः' इत्यमरः। किरणैर्व्योमनि आकाशे मार्गं उल्कारेखाकार
पन्था विदधे विरचित इति स्वभावोक्तिरलंकारः॥ २२॥

हिन्दी—शिवजीको नेत्रसे निकले हुएके समान स्थित, पीली चमकती हुई
बिजलीके समान, मनसे भी अतिशीघ्र जाते हुए बाणकी किरणोंसे आकाशमें
उल्काकी रेखाके आकारवाला मार्ग बनाया गया॥ २२॥

अपयन्धनुषः शिवान्तिकस्थैर्विवरेसद्भिरभिख्यया जिहानः।
युगपद्ददृशे विशन्वराहं तदुपोढैश्च नभश्चरैः पृषत्कः॥ २३॥

मल्लि०—अपयन्निति। पृषत्को बाणः। 'पृषत्कबाणविशिखाः' इत्यमरः।
धनुषः पिनाकात् अपयन् निर्यन्। निर्गच्छन्नित्यर्थः। इणः शतृप्रत्ययः। शिवान्ति
कस्थैर्नभश्चरैः। अभिख्यया शोभया जिहानः। शोभां गच्छन्नित्यर्थः। 'ओहाङ्
गतौ' इति धातोः शानच्। 'अभिख्या नामशोभयोः' इत्यमरः। विवरे सीदन्तीति
विवरेसदस्तैः विवरेसद्भिरन्तरालवर्तिभिर्नभश्चरैः। 'सत्सूद्विषे—'त्यादिना क्विप्।
'तत्पुरुषे कृति बहुलम्' इत्यलुक्। अथ वराहं विशन् प्रविशन्, तदुपोढैस्तं वराह
मुपोढैः प्रत्यासन्नैः। वहेः कर्तरि क्तः। नभश्चरैर्युगपद्ददृशे दृष्ट इति बाणवेगोक्तिः।
अत्र क्रमेण पिनाकनिष्क्रमणादिक्रियाविशिष्टस्य बाणस्य शिवान्तिकादिभिन्नदेशस्थ

नभश्चरकर्तृकदर्शनयौगपद्यासम्बन्धेऽपि तत्सम्बन्धोक्तिमूलातिशयोक्त्या लोकोत्तरवेग-प्रतीतेरलंकारेण वस्तुध्वनिः ॥ २३ ॥

**हिन्दी**—बाण, पिनाक धनुसे निकल कर शोभाको प्राप्त कर शिवजीके निकट स्थित आकाशचारियोंसे और अन्तरालमें स्थित आकाशचारियोंसे तथा वराहके निकटवर्ती आकाशचारियोंसे भी वराहको भेदन करता हुआ एकही बार देखा गया ॥ २३ ॥

स तमालनिभे रिपौ सुराणां घननीहार इवाविषक्तवेगः।
भयविप्लुतमीक्षितो नभःस्थैर्जगतीं ग्राह इवापगां जगाहे ॥ २४ ॥

**मल्लि०**—स इति। बाणः। तमालनिभे तमालप्रभे। नीलाभ इति यावत्। सुराणां रिपौ वराहे घननीहारे सान्द्रतुहिन इव, अविषक्तवेगोऽप्रतिबद्धवेगः सन्। तथा, नभःस्थैः खेचरैः भयेन विलुप्तं विह्वलं यथा तथा, ईक्षितः सन्। अपां सम्बन्धी वेग आपः, अपां समूहो वा आपम्। आपेन गच्छतीति आपगा नदी तां गृह्णातीति ग्राहो जलग्राहः। जलचर इति यावत्। 'जलचरे' इति वक्तव्याद् 'विभाषा' ग्रहः' इति णप्रत्ययः। स इव। जगतीं भूमिम्। 'जगती विष्टपे भूम्यां वास्तुच्छन्दोविशेषयोः' इति वैजयन्ती। जगाहे विवेश। अन्तर्हित इत्यर्थः ॥ २४ ॥

**हिन्दी**—बाण, तमालवृक्षके समान नीलवर्णवाले वराहमें गाढ़ कोहरेके समान न रुके हुए वेगवाला होकर आकाशचारियोंसे भयसे विह्वल होकर देखा जाता हुआ जैसे ग्राह नदीमें प्रवेश करता है उसी तरह भूमिमें घुस गया ॥ २४ ॥

अथार्जुनबाणप्रयोगमाह—

सपदि प्रियरूपपर्वरेखः सितलोहाग्रनखः खमाससाद।
कुपितान्तकतर्जनाङ्गुलिश्रीर्व्यथयन् प्राणभृतः कपिध्वजेषुः ॥ २५ ॥

**मल्लि०**—सपदीति। सपदि शिवबाणपातसमय एव प्रिया रूपमाकृतिः पर्वाणि ग्रन्थयो रेखा रचनाश्च यस्य सः। अङ्गुलिपक्षे-पर्वरेखाः प्रसिद्धाः लोहाग्र-मयःफलं तन्नखमिवेत्युपमितिसमासः। सितं लोहाग्रनखं यस्य सः। कुपितस्यान्त-कस्य मृत्योर्या तर्जना तस्या अङ्गुलिस्तर्जनाङ्गुलिः तर्जनी तस्याः श्रीरिव श्रीर्यस्य सः कपिध्वजेषुरर्जुनबाणः प्राणभृतो व्यथयन् भीषयमाणः खमाकाशम्। आससाद प्राप। उपमालंकारः ॥ २५ ॥

**हिन्दी**—उसी क्षण प्रिय आकार, ग्रन्थि और रचनासे युक्त सफेद लोहाग्ररूप-

वक्षवाला होकर कुपित मृत्युकी तर्जनीकी सदृश शोभासे युक्त अर्जुनका प्राणियों को व्यथित करता हुआ आकाश-मण्डलमें पहुँच गया ॥ २५ ॥

परमास्त्रपरिग्रहोरु तेजः स्फुरदुल्काकृति विक्षिपन्वनेषु।
स जवेन पतन् परःशतानां पततां व्रात इवारवं वितेने ॥ २६ ॥

मल्लि०—परमेति । परमास्त्रपरिग्रहेण दिव्यास्त्राधिष्ठानेन उरु महदत एव स्फुरदुल्काकृति । उल्कावद्दीप्यमानमित्यर्थः । तेजो वनेषु विक्षिपन् विकिरन् जवेन पतन् धावन् स बाणः । शतात्परे परःशतास्तेषाम् । शताधिकसंख्याकानामित्यर्थः । 'परःशताद्यास्ते येषां परा संख्या शताधिकात्' ।इत्यमरः । 'पञ्चमी—' इति योगविभागात्समासः । 'राजदन्तादिषु परम्' इत्युपसर्जनस्य 'शत' शब्दस्य परनिपातः । पारस्करादित्वात्सुडागमः । पततां पतत्रिणाम् । 'पतत्पत्ररथाण्डजाः' इत्यमरः । व्रातः समूह इव, आरवं वितेने विस्तारयामास ।। २६ ॥

हिन्दी—दिव्य अस्त्रमें अधिष्ठान करनेसे विशाल अत एव चमकती हुई उल्काकी सदृश आकृतिसे युक्त तेजको वनमें फैला कर वेगसे दौड़ता हुआ वह बाण सौसे अधिक पक्षियोंके समूहके समान आवाज फैलाने लगा ॥ २६ ॥

अविभावितनिष्क्रमप्रयाणः शमितायाम इवातिरंहसा सः।
सह पूर्वतरं नु चित्तवृत्तेरपतित्वा नु चकार लक्ष्यभेदम् ॥ २७ ॥

मल्लि०—अविभावितेति । अतिरंहसाऽतिवेगेन । अविभाविते अलक्षिते निष्क्रमो गाण्डीवान्निःसरणं प्रयाणमन्तरागमनं च यस्य सः । तथा, शमितायामः संक्षिप्तदैर्घ्यं इव स्थित इत्युपमा । अत्र वेगगुणनिमित्ता दैर्घ्यगुणाभावोत्प्रेक्षा । स शरः। सह नु सह वा चित्तवृत्त्येति शेषः । चित्तवृत्तेः पूर्वतरं नु प्रागेव वा । उभयत्रापि लक्ष्ये पतित्वेति शेषः । अथवा, अपतित्वा नु । लक्ष्य इति शेषः । लक्ष्यभेदं चकार। अत्रोपात्तवेगगुणनिमित्ताद्बाणस्य चित्तवृत्त्या सहपातपूर्वपातपतनाभावोत्प्रेक्षास्त्रितयस्य उत्तरोत्तरोत्कर्षेण वेगातिशयव्यञ्जिका इत्यलंकारेण वस्तुध्वनिः ।। २७ ॥

हिन्दी—अतिशय वेगसे जिसका धनुसे निकलना और चलना दोनों ही अलक्षित हैं दीर्घताको संक्षिप्त करता हुआ-सा स्थित, उस बाणने चित्तवृत्तिके साथ वा पहले ही अथवा मानों लक्ष्यमें पड़े बिना ही लक्ष्यभेद कर डाला ॥२७॥

स वृषध्वजसायकावभिन्नं जयहेतुः प्रतिकायमेषणीयम् ।
लघु साधयितुं शरः प्रसेहे विधिनेवार्थमुदीरितं प्रयत्नः ॥ २८ ॥

मल्लि०—स इति । जयहेतुः स शरो वृषध्वजसायकावभिन्नं शिवशरविद्धम् । एषणीयम् । वेद्धुमिति शेषः । इषेरिच्छार्थादनीयर्प्रत्ययः । प्रतिकायम् । प्रतिशरीरम् । प्रतिपक्षमिति यावत् । विधिना दैवेन, उदीरितं फलसाधनतया प्रतिपादितमर्थं योगादिकं प्रयत्नः पुरुषव्यापार इव । लघु अक्लेशेन यथा तथा साधयितुम् । स्वार्थणिजन्तात्तुमुन् । प्रसेहे शशाक । उपमालंकारः ॥ २८ ॥

हिन्दी—जयका कारण वह बाण, शिवजीके बाणसे विद्ध होकर, वेध करनेके योग्य शत्रुको भाग्यसे प्रतिपादित योग आदिको प्रयत्नके समान शीघ्र साधन करनेको समर्थ हुआ ॥ २८ ॥

अविवेकवृथाश्रमाविवार्थं क्षयलोभाविव संश्रितानुरागम् ।
विजिगीषुमिवानयप्रमादाववसादं विशिखौ विनिन्यतुस्तम् ॥ २९ ॥

मल्लि०—अविवेकेति । अविवेकोऽन्तरानभिज्ञत्वं, वृथाश्रमो निष्फलप्रयासस्तौ अर्थं धनमिव । अस्थानविनियोगहेतुकत्वादनयोर्धनहानिकरत्वमिति भावः । क्षयोऽनुपचयो लोभोऽदातृत्वं तौ, संश्रितानाम् अनुजीविनाम् अनुरागमिव । अकिंचित्करे स्वामिन्यनुरागस्यानवस्थानादिति भावः । अनयो दुर्नीतिः प्रमादोऽनवधानता तौ विजिगीषुमिव । रन्ध्रभूयिष्ठस्य जयासिद्धेरिति भावः । विशिखौ शिवार्जुनबाणौ तं वराहम् । अवसादं करणशैथिल्यं विनिन्यतुर्नीतवन्तौ । नयतिर्द्विकर्मकः । मालोपमेयम् ॥ २९ ॥

हिन्दी—जैसे अविवेक और व्यर्थ परिश्रम धनको, क्षय और लोभ जैसे आश्रित पुरुषके अनुरागको और दुर्नीति और प्रमाद जैसे विजयके इच्छुकको कार्यमें शिथिलता कर देते हैं वैसे ही शिवजी और अर्जुनसे छोड़े गये बाणोंने उस वराहको शिथिल कर दिया ॥ २९ ॥

अथ दीर्घतमं तमः प्रवेक्ष्यन् सहसा रुग्णरयः स संभ्रमेण ।
निपतन्तमिवोष्णरश्मिमुर्व्यां वलयीभूततरुं धरां च मेने ॥ ३० ॥

मल्लि०—अथेति । अथ स वराहो दीर्घतमं तमो दीर्घनिद्रां प्रवेक्ष्यन् । मरिष्यन्नित्यर्थः । सहसा झटिति रुग्णरयो भग्नवेगः, संभ्रमेण भ्रान्त्या । 'संभ्रमो

भ्रान्तिहावयोः' इति विश्वः। उष्णरश्मिमुर्व्यां भूमौ निपतन्तमिव मेने। पृथ्वीं वलयीभूता मण्डलीभूतास्तरवो यस्यास्तां मेने। तथा बभ्रानेत्यर्थः। स्वभावोक्तिरलंकारः ॥ ३० ॥

हिन्दी—तब वह वराह दीर्घ निद्रामें प्रवेश करता हुआ वेगहीन होकर भ्रान्तिसे सूर्यको जमीनपर गिरे हुए और पृथिवीको मण्डलाकार पेड़ोंसे युक्त समझने लगा ॥ ३० ॥

स गतः क्षितिमुष्णशोणिताद्रैः खुरदंष्ट्राग्रनिपातदारिताश्मा।
असुभिः क्षणमीक्षितेन्द्रसूनुर्विहितामर्षगुरुध्वनिर्निरासे ॥ ३१ ॥

मल्लि०—स इति। क्षितिं गतः क्षितौ पतित उष्णेन प्रत्यग्रत्वाच्छोणितेनार्द्रः क्लिन्नः खुराणां दंष्ट्रयोश्च अग्राणां निपातेनाघातेन दारिताश्मा पाटितपाषाणः। किंच, क्षणमीक्षितेन्द्रसूनुः। स्वार्थविघातरोषादिति भावः। अत एव, विहितः कृतोऽमर्षगुरुः क्रोधोद्धतो ध्वनिः क्रन्दितं येन स तथोक्तः स वराहोऽसुभिः प्राणैः निरासे निरासितः। त्यक्त इत्यर्थः। अस्यतेः कर्मणि लिट्। इयं च स्वभावोक्तिः॥

हिन्दी—जमीनपर गिरा हुआ और गरम रक्त ( खून )से लथपथ होकर खुरों और दाढ़ोंके अग्रभागोंके आघातसे पत्थरको विदीर्ण कर कुछ समय तक अर्जुनको देखकर क्रोधसे भारी आवाज कर वह वराह प्राणोंसे छूट गया ॥ ३१ ॥

स्फुटपौरुषमापपात पार्थस्तमथ प्राज्यशरः शरं जिघृक्षुः।
न तथा कृतवेदिनां करिष्यन् प्रियतामेति यथा कृतावदानः ॥ ३२ ॥

मल्लि०—स्फुटेति। अथ वराहपातानन्तरं पार्थोऽर्जुनः प्राज्यशरः प्रभूतशरः। सन्नपीत्यर्थः। 'प्रभूतं प्रचुरं प्राज्यम्' इत्यमरः। स्फुटपौरुषं व्यक्तविक्रमं वराहभेदिनं शरं जिघृक्षुर्ग्रहीतुमिच्छुः ग्रहेः सन्नन्तादुप्रत्ययः। आपपाताधावति स्म। कृतज्ञतया शरग्रहणं, न तु लोभादित्यर्थः। नन्वन्येऽप्युपकर्तार एव, किमित्यनैवादरस्तस्येत्यत आह—कृतवेदिनां कृतज्ञानां कृतावदानः कृतकर्मा। 'अवदानं कर्म वृत्तम्' इत्यमरः। यथा प्रियतामेति तथा करिष्यन् उपकरिष्यन्न प्रियतामेति। 'कृतकरिष्यमाणयोः कृतं बलीयः' इति न्यायादिति भावः ॥ ३२ ॥

हिन्दी—वराहके गिरनेके बाद अर्जुन बाणोंकी प्रचुरता होनेपर भी प्रकट पुरुषार्थ वाले बाणको लेनेकी इच्छा करते हुए दौड़ पड़े, कृतज्ञोंको कर्म करनेवाला जैसे प्रिय होता है वैसे भविष्यत्में उपकार करता हुआ प्रिय नहीं होता है ॥

अथ युग्मेनाह--

उपकार इवासति प्रयुक्तः स्थितिमप्राप्य मृगे गतः प्रणाशम् ।
कृतशक्तिरधोमुखो गुरुत्वाज्जनितव्रीड इवात्मपौरुषेण ॥ ३३ ॥

मल्लि०—उपकार इति । असति नीचे प्रयुक्त उपकार इव मृगे स्थितिमप्राप्य प्रणाशमदर्शन गत इत्युपमा । यथा कृतशक्तिः कृतपौरुषो गुरुत्वात् लोहभारान्महत्वाच्च अधोमुखो नम्रमुखः । अत एव, आत्मपौरुषेण जनितव्रीड इव इत्युत्प्रेक्षा ।

हिन्दी—असत्पुरुषमें किये गये उपकारके समान अर्जुनका बाण वराहके शरीरमें स्थितिको न पाकर नाशको प्राप्त हुआ जैसेकि पुरुषार्थ कर लोहके भारसे वा विशाल होनेसे भी नम्र मुखवाला होकर अपने पुरुषार्थसे मानों लज्जित होकर अधोमुख हो रहा है ॥ ३३ ॥

स समुद्धरता विचिन्त्य तेन स्वरुचं कीर्तिमिवोत्तमां दधानः ।
अनुयुक्त इव स्ववार्तमुच्चैः परिरेभे नु भृशं विलोचनाभ्याम् ॥ ३४ ॥

मल्लि०—स इति । उत्तमां स्वरुचं कान्ति कीर्तिमिव दधान इत्युत्प्रेक्षा । किंच, विचिन्त्य सर्वथा ग्राह्योऽयमिति विमृश्य समुद्धरता तेनार्जुनेन उच्चैः स्ववार्तं स्वपाटवम् । 'वार्तं पाटवमारोग्यं भव्यं स्वास्थ्यमनामयम्' । इति यादवः । अनुयुक्तः पृष्ट इव स्थित इत्युत्प्रेक्षा । आदरात्तथा प्रतीयत इत्यर्थः । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः । स बाणो विलोचनाभ्यां नयनाभ्यां भृशं परिरेभे नु आलिङ्गितः किमित्युत्प्रेक्षा । तेनात्यादरेण दृष्ट इत्यर्थः ॥ ३४ ॥

हिन्दी—वह बाण उत्तम अपनी कान्तिको कीर्तिके समान धारण करता हुआ स्थित था । यह ग्राह्य है ऐसा विचार कर ऊंचे स्वरसे अपनी कुशलताको पूछे गयेके समान स्थित उस बाणको अर्जुनने दोनों नेत्रोंसे बारंवार मानों आलिङ्गन किया ॥ ३४ ॥

तत्र कार्मुकभृतं महाभुजः पश्यति स्म सहसा वनेचरम् ।
संनिकाशयितुमग्रतः स्थितं शासनं कुसुमचापविद्विषः ॥ ३५ ॥

मल्लि०—तत्रेति । तत्र प्रदेशे महाभुजोऽर्जुनः कुसुमचापविद्विषः स्मरारेः शासनं वक्ष्यमाणमादेशं संनिकाशयितुं संनिवेशयितुम् । निवेदयितुमिति यावत् । अग्रतः स्थितं कार्मुकभृतं वनेचरं सहसा झटिति पश्यति स्म । इतः प्रभृति रथोद्धतावृत्तम्—'रो नराविह रथोद्धता लगौ' इति लक्षणात् ॥ ३५ ॥

हिन्दी—इस प्रकार अपना आशय बतलानेवाले अर्जुनको किरातराजका दूत तेजसे तर्जन करके किरातसेनामें संगत प्रसन्नरूपवाले शिवजीके समीप गया ॥२६॥

ततोऽपवादेन पताकिनीपतेश्चचाल निर्ह्रादवती महाचमूः।
युगान्तवाताभिहतेव कुर्वती निनादमम्भोनिधिवीचिसंहतिः ॥ २७॥

मल्लि०—तत इति। ततः पताकिनीपतेः सेनापतेः अपवादेनादेशेन। 'अपवादोऽन्यथादेशः' इति सज्जनः। निर्ह्रादवती शब्दवती महाचमूः सेना युगान्तवातैरभिहता आन्दोलिता अत एव निनादं कुर्वती, अम्भोनिधिवीचिसंहतिरर्णवोर्मिसमूह इव चचाल ॥ २७ ॥

हिन्दी—तदनन्तर सेनापतिकी आज्ञासे शोरगुल करती हुई बड़ी सेना प्रलयकालके वायुसे आन्दोलित अत एव आवाज करती हुई समुद्रकी तरङ्ग-परम्पराकी तरह चलने लगी ॥ २७ ॥

रणाय जैत्रः प्रदिशन्निव त्वरां तरङ्गितालम्बितकेतुसंततिः।
पुरो बलानां सघनाम्बुशीकरः शनैः प्रतस्थे सुरभिः समीरणः ॥ २८॥

मल्लि०—रणायेति। जेतैव जैत्रो जयनशीलः। अनुकूल इत्यर्थः। जयतेस्तृन्नन्तात्प्रज्ञादित्वात्स्वार्थेऽण्प्रत्ययः। तरङ्गितं संजाततरङ्गं यथा तथा, आलम्बिता अवस्थिताः केतुसंततयो येन सः। सह घनैः सान्द्रैरम्बुशीकरैः सघनाम्बुशीकरः सुरभिः सुगन्धः समीरणो वायू रणाय त्वरां प्रदिशन्निव त्वरयन्निव बलानां सैन्यानां पुरोऽग्रे शनैः प्रतस्थे प्रस्थितः। ववावित्यर्थः ॥ २८ ॥

हिन्दी—जयनशील ( अनुकूल ) तरङ्गितकी तरह पताका समूहको अवस्थित करनेवाली, गाढ़ जलकणोंसे सुगन्धित हवा युद्धके लिए शीघ्रताके लिए मानों आदेश करती हुई सेनाके सामने बहने लगी ॥ २८ ॥

जयारवक्ष्वेडितनादमूर्च्छितः शरासनज्यातलवारणध्वनिः।
असंभवन्भूधरराजकुक्षिषु प्रकम्पयन्गामवतस्तरे दिशः ॥ २९॥

मल्लि०—जयेति। जयारवैर्वन्दिनां जयजयेतिशब्दैः क्ष्वेडितनादैः सिंहनादैश्च मूर्च्छितो वर्धितः शरासनज्यानां धनुर्गुणानां तलवारणानां ज्याघातवारणानां च ध्वनिर्भूधरराजकुक्षिषु गिरिगुहासु असंभवन् अमान्। अवकाशमलभमान इत्यर्थः। अत एव गां भुवं प्रकम्पयन्। एतेन बलानां बाहुल्यमुक्तम्। दिशोऽवतस्तरे व्यानशे। 'ऋतश्च संयोगादेर्गुणः'। अत्र 'मूर्च्छा'पदार्थस्य विशेषणगत्याऽसंभवनहेतु-

स्वात्काररलिङ्गन्, रूकं तु गिरिकुञ्जिकापेक्षया वनेरावेश्याविरशोकतेरविकालं-कारश्च। तेभ्यश्चेयमसंभवन्निति व्यञ्जकं विनोत्याप्यमानोपात्तमूर्च्छागुणनिमित्ता प्रतीयमाना क्रियोत्प्रेक्षा। तैरङ्गाङ्गिभावेन संकीर्यत इति संकरः ॥ २९ ॥

हिन्दी—'जयजय' शब्दोंसे और सिंहनादोंसे बढ़ी हुई, धनुषोंकी प्रत्यञ्चाओं-की तथा ढालकी आवाज पर्वतकी कन्दराओंमें न समाती हुई अत एव जमीनको कम्पित करती हुई दिशाओंमें गूँजने लगी ॥ २९ ॥

निशातरौद्रेषु विकासतां गतैः प्रदीपयद्भिः ककुभामिवान्तरम् ।
वनेसदां हेतिषु भिन्नविग्रहैर्विपुस्फुरे रश्मिमतो मरीचिभिः ॥ ३० ॥

मल्लि०—निशातेति। निशातास्तीक्ष्णा अत एव रौद्रा भीषणाश्च ये तेषु। निशातरौद्रेषु। विशेष्यविशेषणयोरन्यतरविशेष्यत्वविवक्षाया इष्टत्वाद्विशेषणसमासः। वने सीदन्तीति वनेसदां वनेचराणाम्। 'सत्सूद्विषे—'त्यादिना क्विप्। 'तत्पुरुषे कृति बहुलम्' इत्यलुक्। हेतिषु आयुधेषु। 'हेतिः शस्त्रेऽपि पुंस्त्रियोः' इति केशवः। भिन्नविग्रहैः संक्रान्तमूर्तिभिरत एव विकासतां विसृत्वरतां गतैरत एव ककुभां दिशाम्, अन्तरमवकाशं प्रदीपयद्भिः प्रज्वालयद्भिरिव स्थितैरित्युत्प्रेक्षा। रश्मिमतः सूर्यस्य। 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' इति मतुपो मकारस्य न वकारः। मरीचिभिः करैः 'भानुः करो मरीचिः स्त्रीपुंसयोः' इत्यमरः। विपुस्फुरे बभासे। स्फुरतेर्भावे लिट् ॥ ३० ॥

हिन्दी—तीक्ष्ण और भयंकर वनेचरोंके हथियारोंमें मूर्ति संक्रान्त करनेवाली, अतएव विकासको प्राप्त दिशाओंके अवकाशोंको प्रदीप्त कर रही-सी होकर अवस्थित सूर्यकी किरण प्रदीप्त होने लगी ॥ ३० ॥

उदूढवक्षःस्थगितैकदिङ्मुखो विकृष्टविस्फारितचापमण्डलः ।
वितत्य पक्षद्वयमायतं बभौ विभुर्गुणानामुपरीव मध्यगः ॥ ३१ ॥

मल्लि०—उदूढेति। उदूढेनोन्नतेन वक्षसा स्थगितमाच्छादितमेकमेकतरं दिङ्मुखं येन सः, विकृष्टमाकृष्टमत एव विस्फारितं निर्घोषितं चापमण्डलं येन स विभुः शिवः। आयतं विस्तृतं पक्षद्वयं पार्श्वद्वयं वितत्य स्वमहिम्ना व्याप्य। 'पक्षः साध्यगरुत्पार्श्वसहायबलभित्तिषु' इति वैजयन्ती। गणानां मध्यगो मध्यस्थोऽपि उपरि स्थित इव बभौ। सर्वोन्नतत्वात्तथा लक्षित इत्यर्थः ॥ ३१ ॥

हिन्दी—उन्नत वक्षःस्थलसे दिशाके एक भागको आच्छादित करनेवाले, खींच

कर धनुर्मण्डलको शब्दायमान करनेवाले शिवजी विस्तृत दो पार्श्वोंको अपनी महिमासे व्याप्त कर गणोंके मध्यमें अवस्थित होकर भी ऊपर रहे हुएके समान शोभित हुए ॥ ३१ ॥

सुगेषु दुर्गेषु च तुल्यविक्रमैर्जवादहंपूर्विकया यियासुभिः।
गणैरविच्छेदनिरुद्धमाबभौ वनं निरुच्छ्वासमिवाकुलाकुलम् ॥ ३२॥

मल्लि०—सुगेष्विति। सुखेन दुःखेन च गच्छन्त्येष्विति सुगेषु सुगमेषु दुर्गेषु दुर्गमेषु च। समविषमदेशेष्वित्यर्थः। सुदुरोरधिकरणार्थे डो वक्तव्यः। अत एव टिलोपः। तुल्यविक्रमैर्लाघवात्समसंचारैः जवाद्वेगात्। अहंपूर्विकयाऽहमहमिकया। 'अहंपूर्वमहंपूर्वमित्यहंपूर्विका स्त्रियाम्'। इत्यमरः। यियासुभिर्यातुमिच्छुभिः। यातेः सन्नन्तादुप्रत्ययः। गणैः प्रमथैः। मनोज्ञादित्वाद् वुञ्प्रत्ययः। पृषोदरादित्वाद् वृद्धयभावः। 'गणाः प्रमथसङ्घौघाः' इति वैजयन्ती। अविच्छेदेन निरुद्धमत एव, आकुलाकुलमाकुलप्रकारम्। 'प्रकारे गुणवचनस्य' इति द्विर्भावः। वनं निरुच्छ्वासं निरुद्धप्राणमिव। आबभौ इत्युत्प्रेक्षा ॥ ३२ ॥

हिन्दी—सुगम और दुर्गम सभी स्थानोंमें तुल्य पराक्रमवाले, वेगसे 'मैं पहले जाऊँगा,' 'मैं पहले जाऊँगा' इस प्रकार जानेकी इच्छा करनेवाले गणोंसे विच्छेदके विना निरुद्ध अतएव वन अत्यन्त आकुल होकर दम घुटा सा हो गया ॥ ३२ ॥

तिरोहितश्वभ्रनिकुञ्जरोधसः समश्नुवानाः सहसातिरिक्तताम्।
किरातसैन्यैरपिधाय रेचिता भुवः क्षणं निम्नतयेव भेजिरे ॥ ३३ ॥

मल्लि०—तिरोहितेति। किरातसैन्यैस्तिरोहितानि छन्नानि श्वभ्रनिकुञ्जरोधांसि गर्त्तकुञ्जतटानि यासां ताः। अत एव भुवः। प्रदेशाः सहसाऽतिरिक्ततामुत्तानतां समश्नुवाना आप्नुवत्यः। तथा, अपिधायाच्छाद्य रेचिता रिक्तीकृता मुक्ताः क्षणं निम्नतया गाम्भीर्येण भेजिरे इव प्राप्ता इवेत्युत्प्रेक्षा। सैन्यैर्या भुवो व्याप्तास्ता उत्तानाः प्रतीयन्ते। तैर्मुक्तास्ता एव निम्नाः प्रतीयन्त इत्यर्थः ॥ ३३ ॥

हिन्दी—किरातसेनाओंसे गड्ढे, लतागृह और तटभाग आच्छादित हो जानेसे जमीनके भाग भाग (हिस्से) सहसा उन्नत भावको प्राप्त हो गये। उस तरहसे आच्छादन कर छोड़े जानेपर क्षणभरमें फिर गाम्भीर्य प्राप्त हुए-से प्रतीत हुए ॥ ३३ ॥

पृथूरुपर्यस्तबृहल्लताततिर्जवानिलाघूर्णितशालचन्दना ।
गणाधिपानां परितः प्रसारिणी वनान्यवाञ्चीव चकार संहतिः ॥ ३४ ॥

मल्लि०—पृथ्विति । पृथुभिर्विशालैरूरुभिः सक्थिभिः पर्यस्ताः क्षिप्ता बृहत्यो लताततयो यया सा जवानिलेन वेगमारुतेनाऽऽघूर्णिता भ्रमिताः शालाः सर्जतरवश्चन्दनानि च यया सा । 'प्राकारवृक्षयोः सालः शालः सर्जतरुः स्मृतः' । इति शाश्वतः । परितः सर्वत्र प्रसारिणी प्रसरणशीला गणाधिपानां संहतिः समूहो वनान्यवाञ्चि न्युब्जानीव नीचानीवेत्यर्थः । चकारेत्युत्प्रेक्षा । अवाञ्चत्यधोमुखो भवति । अवपूर्वादञ्चतेः क्विप् । 'स्यादवाङप्यधोमुखः' इत्यमरः ॥ ३४ ॥

हिन्दी—विशाल ऊरुओंसे बड़ी-बड़ी लतापंक्तिको फेंकती हुई वेगपूर्ण वायुसे सर्जवृक्ष और श्रीखण्ड वृक्षोंको घुमाती हुई चारों ओर फैलनेके स्वभावसे युक्त करातस्वामियोंकी सेनाने मानों वनोंको अधोमुख कर डाला ॥ ३४ ॥

अथाष्टभिः श्लोकैरर्जुनं विशेषयन् गणानां तदभियोगमाह—

ततः सदर्पं प्रतनुं तपस्यया मदस्रुतिक्षाममिवैकवारणम् ।
परिज्वलन्तं निधनाय भूभृतां दहन्तमाशा इव जातवेदसम् ॥ ३५ ॥

मल्लि०—तत इत्यादि । ततः सदर्पं सगर्वं सान्तःसारं तपस्यया तपश्चर्यया । तपस्यतेः क्यजन्तात्स्त्रियामप्रत्यये टाप् । प्रतनुं कृशमत एव मदस्रुत्या मदक्षरणेन क्षामं कृशम् । 'क्षायो मः' इति निष्ठातकारस्य मकारः । एकवारणमेकाकिनं गजमिव स्थितमित्युपमा । पुनः । भूभृतां राज्ञां निधनाय नाशाय परिज्वलन्तं तेजस्विनमत एव, आशा दिशो दहन्तं जातवेदसमग्निमिव स्थितमित्युपमालंकारः । 'कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात्' । इत्यमरः ॥ ३५ ॥

हिन्दी—तब अन्तःसारसे युक्त तपस्या करनेसे दुबले-पतले अतएव मदके गिरनेसे अकेले हाथीके समान स्थित राजाओंके नाशके लिए तेजस्वी अतः दिशाओंको जलाते हुए अग्निके समान स्थित अर्जुनको ॥ ३५ ॥

अनादरोपात्तधृतैकसायकं जयेऽनुकूले सुहृदीव सस्पृहम् ।
शनैरपूर्णप्रतिकारपेलवे निवेशयन्तं नयने बलोदधौ ॥ ३६ ॥

मल्लि०—अनादरेति । पुनश्च, अनादरेणावगणनया उपात्तो निषङ्गादुद्धृतो धृतश्चैकः सायको येन तं, तथाऽनुकूले सुहृदीव जये सस्पृहम् । जयमिच्छन्तमित्यर्थः । पुनश्च, अपूर्णो न्यूनः प्रतिकारो बाणाहरणप्रत्यर्पणरूपो यस्य सः । अत एव पेलवो

लघुस्तस्मिन् अपूर्णप्रतिकारपेलवो बलोदधौ सेनासमुद्रे शनैरसंभ्रमेण नयने दृष्टी निवेशयन्तमिति वीरस्वभावोक्तिः । बलमुदधिरिवेत्युपमितसमासः । 'पेषंवासवाहनधिषु च' इत्युदकस्योदादेशः ॥ ३६ ॥

हिन्दी—अनादरसे तरकशसे एकमात्र बाणको लिये हुए अनुकूल मित्रके समान विजयको चाहनेवाले न्यून प्रतिकारवाले अतः लघु सेनासमुद्रमें दृष्टिपात करते हुए अर्जुनको ॥ ३६ ॥

निषण्णमापत्प्रतिकारकारणे शरासने धैर्यं इवानपायिनि ।
अलङ्घनीयं प्रकृतावपि स्थितं निवातनिष्कम्पमिवापगापतिम् ॥ ३७ ॥

मल्लि०—निषण्णमिति । पुनश्च, आपदां प्रतिकारस्य कारणे साधनेऽनपायिनि स्थिरे एवंभूते शरासने धैर्यं इव निषण्णं स्थितं प्रकृतौ स्वभावे स्थितमपि । निर्विकारमपीत्यर्थः । अत एव, अलङ्घनीयमनतिक्रमणीयमत एव निवातनिष्कम्पं वाताभावान्निश्चलम् । 'निवातावाश्रयावातौ' इत्यमरः । आपगापतिं समुद्रमिव स्थितम् ॥ ३७ ॥

हिन्दी—फिर आपत्तियोंके प्रतिकारके कारणमें स्थिर धैर्यके समान धनुमें स्थित, प्रकृतिमें स्थित ( निर्विकार ) अत एव अलङ्घनीय अतः हवा न लगनेसे कम्परहित समुद्रके समान स्थित अर्जुनको ॥ ३७ ॥

उपेयुषीं बिभ्रतमन्तकद्युतिं वधाददूरे पतितस्य दंष्ट्रिणः ।
पुरः समावेशितसत्पशुं द्विजैः पतिं पशूनामिव हूतमध्वरे ॥ ३८ ॥

मल्लि०—उपेयुषीमिति । पुनश्च, अदूरे समीपे पतितस्य दंष्ट्रिणो वराहस्य । व्रीह्यादित्वादिनिप्रत्ययः । वधाद्धेतोः उपेयुषीं प्राप्ताम्, अन्तकस्येव यमस्येव द्युतिस्तां बिभ्रतं धारयन्तम् । तथा च द्विजैर्ब्राह्मणैः । अध्वरे यज्ञे । 'यज्ञः सवोऽध्वरो यागः' इत्यमरः । हूतमाहूतं पुरोऽग्रे समावेशितः स्थापितः सत्पशुर्यज्ञीयपशुर्यस्य तम् । पशूनां पतिं रुद्रमिव स्थितम् ॥ ३८ ॥

हिन्दी—फिर समीपमें गिरे हुए वराहके वधसे प्राप्त यमराजके समान तेजको धारण करते हुए तथा ब्राह्मणोंसे यज्ञमें बुलाये गये सामने यज्ञियपशुको रखनेवाले रुद्रके समान स्थित अर्जुनको ॥ ३८ ॥

निजेन नीतं विजितान्यगौरवं गभीरतां धैर्यगुणेन भूयसा ।
वनोदयेनेव घनोरुवीरुधा समन्धकारीकृतमुत्तमाचलम् ॥ ३९ ॥

मल्लि०—निजेनेति । पुनश्च, निजेन नैसर्गिकेण भूयसा बहुलेन धैर्यमेव गुणस्तेन विजितमन्येषां गौरवं गाम्भीर्यं यस्मिन्कर्मणि तथा गभीरतां दुरवगाहत्वं नीतम् । अत एव घनाः सान्द्रा उरवश्च महत्यो वीरुधो लताश्च यस्मिस्तेन घनोरुवीरुधा वनोदयेन अरण्यप्रादुर्भावेन समन्धकारीकृतं दुरवगाहीकृतम्, उत्तमाचलमिव स्थितम् । समन्ततोऽन्धकारो यस्य स इति विग्रहः ॥ ३९ ॥

हिन्दी—फिर अपने प्रचुर धैर्यरूप गुणसे औरोंके गाम्भीर्यको जीतकर गम्भीरताको प्राप्त कराये हुए अत एव घनी और बड़ी फैली हुए लताओंसे युक्त वनके प्रादुर्भावसे दुष्प्रवेश किये गये उत्तम पर्वतके समान स्थित अर्जुनको ॥३९॥

महर्षभस्कन्धमनूनकन्धरं बृहच्छिलावप्रघनेन वक्षसा ।
समुज्जिहीर्षुं जगतीं महाभरां महावराहं महतोऽर्णवादिव ॥ ४० ॥

मल्लि०—महर्षभेति । महर्षभस्य महावृषभस्य स्कन्ध इव स्कन्धावंसौ यस्य तम् । उपमानपूर्वपदत्वादुत्तरस्कन्धलोपः । 'ऋषभो वृषभो वृषः' इत्यमरः । स्कन्धो भुजशिरोंसोऽस्त्री' इत्यमरः । अनूनकन्धरं स्थूलग्रीवम् । 'अथ ग्रीवायां शिरोधिः कन्धरेत्यपि' इत्यमरः । बृहच्छिलावप्रं महाशिलातटं तद्वत् घनेन कठिनेन वक्षसा उपलक्षितम् । महाभरां दुष्टैरतिभारवतीं जगतीं महीं समुज्जिहीर्षुं दुष्टराजकार्णवात् समुद्धर्तुमिच्छुम्, अत एव महतोऽर्णवाजगतीं समुज्जिहीर्षुमुक्तविशेषणविशिष्टं च महावराहमिव स्थितम् । अर्थसाधर्म्यादियमुपमा न श्लेषः, शब्दमात्रसाधर्म्येण तस्य विधानादिति रहस्यम् ॥ ४० ॥

हिन्दी—बड़े-से सांड़केसे कन्धोंवाले, स्थूल ग्रीवासे युक्त और बड़े चट्टानके समान कठोर वक्षःस्थल ( छाती )से उपलक्षित अतिशय भारवाली पृथ्वीका दुष्ट राजसमूहरूप समुद्रसे उद्धार करनेकी इच्छा वाले अत एव विशाल समुद्रसे पृथ्वीका उद्धार करनेके इच्छुक महावराहके समान स्थित अर्जुनको ॥ ४० ॥

हरिन्मणिश्याममुदग्रविग्रहं प्रकाशमानं परिभूय देहिनः ।
मनुष्यभावे पुरुषं पुरातनं स्थितं जलादर्श इवांशुमालिनम् ॥ ४१ ॥

मल्लि०—हरिदिति । पुनश्च, हरिन्मणिश्यामं मरकतमणिश्यामलम् । उदग्रविग्रहमुदारमूर्ति देहिनः सत्त्वान् परिभूय तिरस्कृत्य प्रकाशमानम् । जलमेवाऽऽदर्शो मुकुरस्तस्मिन्, अंशुमालिनं सूर्यमिव । मनुष्यभावे मनुष्यरूपे स्थितं पुरातनं पुरुषम् । यो बदरीतपोवननिवासी नारायणसहचरो नरो नाम स एवायमित्यर्थः ॥ ४१ ॥

हिन्दी—मरकत मणि ( पन्ना )के समान श्याम वर्णवाले, उन्नत शरीरवाले अन्य जन्तुओंका तिरस्कार कर प्रकाशमान जलरूप दर्पणमें स्थित सूर्यके समान, मनुष्यरूपमें स्थित प्राचीन पुरुष नरके समान स्थित अर्जुनको ।। ४१ ।।

गुरुक्रियारम्भफलैरलंकृतं गतिं प्रतापस्य जगत्प्रमाथिनः ।
गणाः समासेदुरनीलवाजिनं तपात्यये तोयघना घना इव ॥ ४२ ॥

मल्लि०—गुर्विति । गुरुभिः क्रियारम्भाणां फलैरलंकृतम् । सफलकर्मारम्भमित्यर्थः । जगत्प्रमाथिनो जगद्विजयिनः प्रतापस्य तेजसो गतिं स्थानम् । अतोऽस्य बहूनामेकलक्ष्यत्वं च युज्यत इति संदर्भाभिप्रायः । पूर्वोक्तविशेषणविशिष्टम्, अनीलवाजिनं श्वेताश्वमर्जुनं गणाः प्रमथादयः, तपात्यये तोयघनास्तोयभरिताः । वार्षिका इत्यर्थः । घना मेघा इव । महाचलमिति शेषः । समासेदुः । अवापुरित्यर्थः । कुलकम् ।। ४२ ।।

हिन्दी—गौरवपूर्ण कार्यके आरम्भोंके फलसे अलंकृत, जगत्के विजयी तेजके स्थानस्वरूप अर्जुनके पास जैसे बलपूर्ण वर्षाके मेघ महापर्वतोंको प्राप्त करते हैं वैसे ही प्रमथगण अर्जुनके पास प्राप्त हुए ।। ४२ ।।

यथास्वमाशंसितविक्रमाः पुरः मुनिप्रभावक्षततेजसः परे ।
ययुः क्षणादप्रतिपत्तिमूढतां महानुभावः प्रतिहन्ति पौरुषम् ॥ ४३ ॥

मल्लि०—यथास्वमिति । पुरा पूर्वम् । स्वं स्वमनतिक्रम्य यथास्वम्, अहमेवैनं जेष्यामीति आशंसिताः काङ्क्षिताः कथिता वा विक्रमा यैस्ते परे शत्रवो मुनेःप्रभावात्क्षततेजसो हतप्रभावाः सन्तः क्षणादप्रतिपत्तिमूढतां मोहान्धतां ययुः । तथा हि—महानुभावोऽतिप्रतापः पौरुषं पुरुषस्य चेष्टितं प्रतिहन्ति नाशयति ।। ४३ ।।

हिन्दी—पहले 'मैं ही इसे जीत लूँगा' ऐसा कहते हुए शत्रुलोग अर्जुनके प्रभावसे नष्ट प्रभाववाले होकर क्षणभरमें ही निश्चय करनेमें मोहको प्राप्त हुए, क्योंकि अतिशय प्रतापी पुरुष दूसरेके पुरुषार्थको नष्ट कर देता है ।। ४३ ।।

ततः प्रजह्रे सममेव तत्र तैरपेक्षितान्योन्यबलोपपत्तिभिः ।
महोदयानामपि सङ्घवृत्तितां सहायसाध्याः प्रदिशन्ति सिद्धयः ॥ ४४ ॥

मल्लि०—तत इति । तत एकैकस्याशक्तौ अपेक्षिता वाञ्छिताऽन्योन्यबलोपपत्तिरन्योन्यशक्त्यवष्टम्भो यैः । तैः प्रमथैः । तत्रार्जुने । क्रियाधारत्वात्सप्तमी । समं युगपदेव प्रजह्रे प्रहृतम् । भावे लिट् । तथा हि—सहायसाध्याः सिद्धयः कार्य-

सिद्धयो महोदयानामपि महानुभावानामपि । सङ्घेन वृत्तिर्व्यापारो येषां तेषां भाव इत्तां तां सङ्घवृत्तितां संभूयकारितां प्रदिशन्ति । अतो गणानामपि संभूयकारित्वं न दोष इति भावः ॥ ४४ ॥

**हिन्दी**—उसके बाद दूसरेकी शक्तिकी सहारा चाहनेवाले उन प्रमथोंने अर्जुन-पर एक-ही बार प्रहार किया, क्योंकि सहायसे होनेवाली कार्य सिद्धियाँ महानुभावों को भी-समुदायसे कार्य करनेका उपदेश देती हैं ॥ ४४ ॥

किरातसैन्यादुरुचापनादिताः समं समुत्पेतुरुपात्तरंहसः ।
महावनादुन्मनसः खगा इव प्रवृत्तपत्त्रध्वनयः शिलीमुखाः ॥ ४५ ॥

**मल्लि०**—किरातेति । उरुभिर्बृहद्भिश्चापैर्नोदिताः प्रक्षिप्ता उपात्तरंहसः प्राप्त-वेगाः प्रवृत्तपत्त्रध्वनयः संजातपक्षस्वनाः शिलीमुखा बाणाः । महावनादुन्मनसः क्वापि गन्तुमुत्सुकाः । तथा, उक्तविशेषणविशिष्टाश्च खगाः पक्षिण इव । किरात-सैन्यात् समं समन्ततः समुत्पेतुः ॥ ४५ ॥

**हिन्दी**—विशाल धनुओंसे प्रेरित, वेगको प्राप्त करनेवाले, पंखकी आवाजवाले बाण विशाल वनसे कहीं भी जानेके लिए उत्सुक होकर पक्षियोंकी तरह किरातों-की सेनासे एक-ही बार चारों ओर छूट गये ॥ ४५ ॥

गभीररन्ध्रेषु भृशं महीभृतः प्रतिस्वनैरुन्नमितेन सानुषु ।
धनुर्निनादेन जवादुपेयुषा विभिद्यमाना इव दध्वनुर्दिशः ॥ ४६ ॥

**मल्लि०**—गभीरेति । गभीररन्ध्रेषु गम्भीरगह्वरेषु महीभृतः सानुषु ये प्रति-स्वनास्तैर्भृशमुन्नमितेनोत्थापितेन दीर्घीकृतेन जवादुपेयुषा प्राप्तवता धनुषां निनादेन दिशो विभिद्यमाना विदीर्यमाणा इव दध्वनुर्ध्वनिं चक्रुः ॥ ४६ ॥

**हिन्दी**—गहरी गुफाओंमें, पर्वतकी समतल जमीनोंमें प्रतिध्वनिसे अतिशय दीर्घ किये गये और वेगसे प्राप्त होनेवाले धनुकी आवाजसे दिशाएँ विदीर्ण का गई-सी होकर आवाज करने लगीं ॥ ४६ ॥

विधूनयन्ती गहनानि भूरुहां तिरोहितोपान्तनभोदिगन्तरा ।
महीयसी वृष्टिरिवानिलेरिता रवं वितेने गणमार्गणावलिः ॥ ४७ ॥

**मल्लि०**—विधूनयन्तीति । भूरुहां गहनानि वनानि । 'अटव्यरण्यं विपिनं गहनं काननं वनम्' । इत्यमरः । विधूनयन्ती कम्पयन्ती तिरोहितानि छादितानि उपान्तानि प्रान्तानि नभोऽन्तरिक्षं दिगन्तराणि च यया सा । गणमार्गणावलिः

प्रमथशरसंहतिः । अनिलेन वायुना । ईरिता प्रेरिता । महीयसी वृष्टिरिव रवं वितेने विस्तारयामास ॥ ४७ ॥

**हिन्दी**—वृक्षोंके समूहोंको कम्पित करती हुई, आकाश और दिशाओंके प्रान्तोंको आच्छादित करती हुई, प्रमथोंके बाणोंकी पंक्ति ( कतार ) वायुसे प्रेरित होकर मूसलधार वृष्टिकी तरह आवाज फैलाने लगी ॥ ४७ ॥

त्रयीमृतूनामनिलाशिनः सतः प्रयाति पोषं वपुषि प्रहृष्यतः ।
रणाय जिष्णोर्विदुषेव सत्वरं घनत्वमीये शिथिलेन वर्मणा ॥ ४८ ॥

त्रयीमिति । ऋतूनां त्रयीं षण्मासान् । कालाध्वनोरत्यन्तसंयोगे द्वितीया । अनिलाशिनो वायुभक्षकस्य । कृशस्येत्यर्थः । सतः, तथापि रणाय रणं कर्तुं प्रहृष्यत उत्सहमानस्य । 'क्रियार्थोपि—'त्यादिना चतुर्थी । जिष्णोरर्जुनस्य वपुषि पोषमुपचयं प्रयाति गच्छति सति शिथिलेन । प्रथममिति शेषः वर्मणा कवचेन विदुषेवानन्तरकरणीयं जानतेवेत्युत्प्रेक्षा । सत्वरं शीघ्रं घनत्वं दृढत्वम् । ईये प्राप्तम् । अन्यथानुप्रयोगादिति भावः । इणः कर्मणि लिट् ॥ ४८ ॥

**हिन्दी**—तीन ऋतु अर्थात् छः मास तक वायुपान करते हुए कृश तो भी युद्ध करनेके लिए उत्साह करनेवाले अर्जुनके शरीरके वृद्धिको प्राप्त करनेपर पहले शिथिल कवच विद्वान्के समान मानों पीछे करने योग्य विषयको जानता हुआ दृढ ( मजबूत ) हो गया ॥ ४८ ॥

पतत्सु शस्त्रेषु वितत्य रोदसी समन्ततस्तस्य धनुर्दुधूषतः ।
सरोषमुल्केव पपात भीषणा बलेषु दृष्टिर्विनिपातशंसिनी ॥ ४९ ॥

**मल्लि०**—पतत्स्विति । शस्त्रेषु रोदसी द्यावापृथिव्यौ । 'द्यावापृथिव्यौ रोदस्यौ' इत्यमरः । समन्ततो वितत्य पतत्सु सत्सु धनुर्दुधूषतः कम्पितुमिच्छतः । आस्फालयत इत्यर्थः । धूञः सन्नन्ताच्छतृप्रत्ययः । 'स्वरतिसूतिसूयतिधूञूदितो वे'ति विकल्पादिडभावः । तस्यार्जुनस्य संबन्धिनी । भीषयत इति भीषणा । नन्द्यादित्वाल्ल्युः । विनिपातशंसिनी विनाशसूचिका दृष्टिरुक्तविशेषणा उल्केव बलेषु सरोषं यथा तथा पपात ॥ ४९ ॥

**हिन्दी**—आकाश और पृथिवीको चारोंओरसे व्याप्त कर शस्त्रोंके प्रहार करनेपर धनुको कम्पित करना चाहते हुए अर्जुनकी विनाशकी सूचना करनेवाली दृष्टि उल्काकी तरह किरातसेनाओंमें क्रोधके साथ पड़ गई ॥ ४९ ॥

दिशः समूहन्निव विक्षिपन्निव प्रभां रवेराकुलयन्निवानिलम् ।
मुनिश्चचाल क्षयकालदारुणः क्षितिं सशैलां चलयन्निवेषुभिः ॥ ५० ॥

मल्लि०—दिश इति । क्षयकालः कल्पान्तकाल इव । 'संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि' इत्यमरः । दारुणो रौद्रो मुनिरर्जुनः । इषुभिर्बाणैः । दिशः समूहन्निव एकत्र समाहरन्निव । अन्यथा तासां पारदर्शनं न स्यादिति भावः । रवेः प्रभां विक्षिपन्निव अधः प्रक्षिपन्निव । अन्यथा सा कथं न दृश्यत इति भावः । तथा अनिलं वायुमाकुलयन्निषुभिरन्तराल आघूर्णयन्निव । तस्य तथा गतिविघातादिति भावः । सशैलां क्षितिं चलयन्निव कम्पयन्निव । तथा संक्षोभादिति भावः । चचाल गतिमकरोत् । सर्वत्र 'इव' शब्द उत्प्रेक्षायाम् ॥ ५० ॥

हिन्दी—प्रलय-समयके समान भयंकर तपस्वी ( अर्जुन ) बाणोंसे मानों दिशाओंको एक स्थानमें लाते हुए मानों सूर्यके तेजको नीचे फेंकते हुए वायुको बाणोंसे मानों घुमाते हुए मानों पर्वतके साथ पृथिवीको कम्पित करते हुए घूमने लगे ॥ ५० ॥

विमुक्तमाशंसितशत्रुनिर्जयैरनेकमेकावसरं वनेचरैः ।
स निर्जघानायुधमन्तरा शरैः क्रियाफलं काल इवातिपातितः ॥ ५१ ॥

मल्लि०—विमुक्तमिति । आशंसितः काङ्क्षितः शत्रुनिर्जयो यैस्तैः । अहमहमिकया शत्रुं विजिगीषद्भिरित्यर्थः । वनेचरैरेकावसरं समकालम् । अत्यन्तसंयोगे द्वितीया । विमुक्तं प्रयुक्तमनेकं बहु आयुधम् । जातावेकवचनम् । सोऽर्जुनः क्रियाफलमतिपातितोऽतिक्रान्तः काल इव । अतिक्रान्तकालस्य कर्मणो निष्फलत्वादिति भावः । अन्तरा मध्ये शरैर्निर्जघान ॥ ५१ ॥

हिन्दी—शत्रुको जीतनेकी आशा करते हुए किरातोंसे एक ही बार छोड़े हुए अनेक हथियारोंको अर्जुनने क्रियाफलको अतिक्रान्त समयके समान बीचमें बाणोंसे प्रहार किया ॥ ५१ ॥

गतैः परेषामविभावनीयतां निवारयद्भिर्विपदं विदूरगैः ।
भृशं बभूवोपचितो बृहत्फलैः शरैरुपायैरिव पाण्डुनन्दनः ॥ ५२ ॥

मल्लि०—गतैरिति । पाण्डुनन्दनोऽर्जुनः परेषामविभावनीयतां लघुप्रयोगात्, अन्यत्र—गूढप्रयोगाच्च अदृश्यतामप्रकाश्यतां च गतैर्विपदमनर्थं निवारयद्भिर्विदूरगैर्दूरलक्ष्यगैः परमण्डलप्रविष्टैश्च बृहत्फलैरायताग्रैर्महालाभैश्च । 'फलं बाणाग्रलाभयोः'

इति शाश्वतः । शरैरुपायैः सामादिभिरिव भृशमुपचितः प्रवृद्धो बभूव । अत्र शब्दमात्रसाधर्म्यात् प्रकृताप्रकृतश्लेषः । उपमेति केचित् ॥ ५२ ॥

हिन्दी—अर्जुन शत्रुओंसे शीघ्रतासे छोड़े जानेसे नहीं जाने जाते हुए, अथवा गूढ प्रयोगसे अदृश्यताको प्राप्त अनर्थका निवारण करते हुए और दूर लक्ष्यतक जानेवाले, और परमण्डलको प्रविष्ट, बड़े बाणाग्रवाले, और अधिक लाभवाले बाणोंसे, वा साम आदि उपायोंसे अतिशय समृद्ध हुए ॥ ५२ ॥

दिवः पृथिव्याः ककुभां नु मण्डलात्पतन्ति बिम्बादुत तिग्मतेजसः ।
सकृद्विकृष्टादथ कार्मुकान्मुनेः शराः शरीरादिति तेऽभिमेनिरे ॥ ५३ ॥

मल्लि०—दिव इति । शरा दिवोऽन्तरिक्षात् पृथिव्या भूगोलाद्वा ककुभां मण्डलान्नु दिशां मण्डलाद्वा, उत तिग्मतेजसोऽर्कस्य बिम्बात् मण्डलाद्वा अथवा सकृद्विकृष्टात् कार्मुकाद्वा, मुनेः शरीराद्वा पतन्तीति ते गणा अभिमेनिरे ज्ञातवन्तः। अन्यथा कथममी विश्वमन्तर्धाय शराः संभाव्यन्त इति भावः । अत्र सर्वतः शरसंपातदर्शनात् संभावनया पृथिव्यादीनामन्यतमस्यापादानत्वोत्प्रेक्षा । सा च प्रतीयमाना व्यञ्जकाप्रयोगात् । 'नु' शब्दादयस्तु संशये ॥ ५३ ॥

हिन्दी—बाण आकाशसे, पृथिवीसे, दिशाओंके मण्डलसे, अथवा सूर्यमण्डलसे वा एकबार खींचे गये धनुसे अथवा मुनि (अर्जुन) के शरीरसे गिर रहे हैं ऐसा किरात सेना सोचने लगी ॥ ५३ ॥

गणाधिपानामविधाय निर्गतैः परासुतां मर्मविदारणैरपि ।
जवादतीये हिमवानधोमुखैः कृतापराधैरिव तस्य पत्त्रिभिः ॥ ५४ ॥

मल्लि०—गणेति । मर्मविदारणैरपि । मर्मस्थानान्येव विदारयद्भिरपीत्यर्थः। गणाधिपानां परासुतां मरणम् अविधायाकृत्वा निर्गतैः । तेषाममर्त्यत्वादिति भावः। तस्य मुनेः पत्त्रिभिः शरैः कृतापराधैरिव स्वामिकार्याकरणात् सापराधैरिवेत्युत्प्रेक्षा। अधोमुखैः सद्भिः जवाद्धिमवानतीयेऽतिचक्रमे । तत्र प्रविष्टमित्यर्थः । लज्जितस्य क्वचिन्निलयनमुचितमिति भावः ॥ ५४ ॥

हिन्दी—मर्मस्थानोंको ही विदीर्ण करते हुए भी प्रमथोंको मारे बिना निकले हुए तपस्वी अर्जुनके बाण अपराध किये हुएके समान अधोमुख होकर वेगपूर्वक हिमालय पर्वतको पार कर गये ॥ ५४ ॥

द्विषां क्षतीर्याः प्रथमे शिलीमुखा विभिद्य देहावरणानि चक्रिरे ।
न तासु पेते विशिखैः पुनर्मुनेररुन्तुदत्वं महतां ह्यगोचरः ॥ ५५ ॥

**मल्लि०—**द्विषामिति । प्रथमे । प्रथममुक्ता इत्यर्थः । शिलीमुखा मुनिशरा द्विषां देहावरणानि वर्माणि विभिद्य याः क्षतीः प्रहारान् चक्रिरे तासु क्षतिषु पुनः पश्चात्प्रयुक्तैर्मुनेर्विशिखैर्न पेते न पतितम् । पिष्टपेषणदोषापातादिति भावः । तथा हि—अरुन्तुदत्वं पीडितपीडन महतां सतामगोचरोऽविषयं हि । सन्तः पीडितपीडां न कुर्वन्तीत्यर्थः । 'न हन्याद्व्यसनप्राप्तं नार्तं नातिपरिक्षतम्' । इति निषेधस्मरणादिति भावः । अरुः व्रणं तुदतीति अरुन्तुदः । 'व्रणोऽस्त्रियामीर्ममरुः' इत्यमरः । 'विध्वरुषोस्तुदः' इति खश्प्रत्ययः । 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः ॥ ५५ ॥

**हिन्दी—**पहले छोड़े गये तपस्वी ( अर्जुन )के बाणोंसे शत्रुओंके शरीरके कवचोंको भेदन कर जो प्रहार किया । उनमें फिर उन्होंने प्रहार नहीं किया । क्योंकि बड़े लोगोंसे दूसरोंका मर्मस्पर्श करना नहीं देखा जाता है ॥ ५५ ॥

समुज्झिता यावदराति निर्यती सहैव चापान्मुनिबाणसंहतिः ।
प्रभा हिमांशोरिव पङ्कजावलिं निनाय संकोचमुमापतेश्चमूम् ॥ ५६ ॥

**मल्लि०—**समुज्झितेति । यावन्तोऽरातयो यावदराति । 'यावदवधारणे' इत्यव्ययीभावः । यावदराति यथा तथा समुज्झिताऽरातिसमसंख्यया मुक्ता मुनिचापात्सह संभूय एव निर्यती निष्क्रामन्ती । तादृक् तस्य कौशलमिति भावः । यातेः शतरि ङीप् । मुनिबाणसंहतिरुमापतेश्चमूं हिमांशोः प्रभा पङ्कजावलिमिव संकोचं निनाय प्रापयामास । दुहादिपाठान्नयतिर्द्विकर्मकः ॥ ५६ ॥

**हिन्दी—**जितने शत्रु हैं उतनी छोड़ी गई तपस्वी ( अर्जुन )के धनुसे मिलकर निकलती हुई मुनिके बाणोंकी पङ्क्तिने शिवसेनाको जैसे चन्द्रमाकी कान्ति कमलपङ्क्तिको संकुचित कर देती हैं उसी तरह संकुचित कर दिया ॥ ५६ ॥

अजिह्ममोजिष्ठममोघमक्लमं क्रियासु बह्वीषु पृथङ्नियोजितम् ।
प्रसेहिरे सादयितुं न सादिताः शरौघमुत्साहमिवास्य विद्विषः ॥ ५७ ॥

**मल्लि०—**अजिह्ममिति । अजिह्मं स्वरूपतो गत्या वाऽवक्रम् । अन्यत्र तु—जिह्मस्थानप्रवृत्तो न भवतीत्यजिह्मस्तम् । ओजिष्ठमोजस्विनं सारवत्तमं तेजिष्ठं च । उभयत्रापि 'ओजस्वि' शब्दाद्विन्नन्तादिष्ठन् । 'विन्मतोर्लुक्' इति लुक् । टिलोपश्च । अमोघमवन्ध्यम् अक्लमं निरन्तरव्यापारेऽप्यश्रान्तं बह्वीषु क्रियासु छेदनभेदनपात-

नादिकर्मसु पृथक् भेदेन नियोजितम् । कर्मानुगुण्येन विनियुक्तमित्यर्थः । अस्य मुनेः शरौघमुत्साहमौत्सुक्यमिव । वीररसस्य स्थायिभूतं प्रयत्नविशेषमिवेत्यर्थः । सादिताः कर्षिता विद्विषः शत्रवः सादयितुं प्रतिकर्तुं न प्रसेहिरे न शेकुः । तस्योत्साहवदेव शरवर्षं दुर्धर्षमभूदिति भावः ॥ ५७ ॥

हिन्दी—अकुटिल अथवा कुटिल स्थानसे प्रवृत्त नहीं होनेवाला, अत्यन्त सारयुक्त वा अतिशय तेजसे सम्पन्न, सफल । अश्रान्त बहुत-सी क्रियाओं ( छेदन, भेदन और पातन आदि )में अलग-अलग नियोजित तपस्वी अर्जुनके बाणसमूहको वीररसके स्थायीभाव उत्साहके समान पीड़ित शत्रुलोग प्रतीकार करनेमें समर्थ नहीं हुए ॥ ५७ ॥

शिवध्वजिन्यः प्रतियोधमग्रतः स्फुरन्तमुग्रेषुमयूखमालिनम् ।
तमेकदेशस्थमनेकदेशगा निदध्युरर्कं युगपत्प्रजा इव ॥ ५८ ॥

मल्लि०—शिवेति । अनेकदेशगा नानादेशस्थाः शिवध्वजिन्यो हरसेनाः । उग्रेषवो मयूखा इवेत्युपमितसमासः । अन्यत्र तु, उग्रेषव इव मयूखा इति मयूरव्यंसकादित्वात्समासः । तेषां मालाऽस्यास्तीति तं उग्रेषुमयूखमालिनम् । व्रीह्यादित्वादिनिः । एकदेशस्थमेकत्रावस्थितं तं मुनिमर्कं प्रजा इव युगपत् प्रतियोधं योधं योधं प्रति । 'अव्ययं विभक्ती—'त्यादिना प्रत्यर्थे वीप्सायामव्ययीभावः । अग्रतः स्फुरन्तं निदध्युर्ददृशुः । यथैकोऽर्क एकत्रैव स्थितोऽपि नानादेशस्थानामपि प्रतिपुरुषं ममैवाग्रे वर्तत इति युगपत् प्रतीयते तद्वद्बाणवर्षी मुनिरपि प्रतियोधं तथैव प्रत्यभादित्यर्थः ॥ ५८ ॥

हिन्दी—अनेक स्थानोंमें स्थित शिवजीकी सेनाएँ किरणोंके समान उग्र बाण अथवा उग्रबाणोंके समान किरणें उनकी पङ्क्तिवाले एक स्थानमें स्थित अर्जुनको सूर्यको प्रजाओंके समान एक-ही बार अपने सामने अवस्थित देखने लगीं । ५८ ।

मुनेः शरौघेण तदुग्ररंहसा बलं प्रकोपादिव विष्वगायता ।
विधूनितं भ्रान्तिमियाय सङ्गिनीं महानिलेनेव निदाघजं रजः ॥ ५९ ॥

मल्लि०—मुनेरिति । प्रकोपात् अमर्षादिव विष्वक् समन्तात् आयताऽगच्छता, उग्ररंहसा तीव्रवेगेन मुनेः शरौघेणोक्तविशेषणेन । महानिलेन वात्यया निदाघजं ग्रीष्मोत्थं रज इव । विधूनितं व्याहतं तत् बलं प्रमथानां सैन्यं सङ्गिनीमनुबन्धिनीम् । अविच्छिन्नामिति यावत् । भ्रान्तिमनवस्थानम् । इयाय प्राप ॥ ५९ ॥

**हिन्दी**—मानों कोपसे चारों ओरसे आते हुए तीव्र वेगवाले अर्जुनके बाण-समूहसे बवण्डरसे ग्रीष्मसे उत्पन्न धूलके समान ताडित होकर प्रमथोंका सैन्य लगातार भ्रान्ति ( भ्रमण )को प्राप्त होने लगा ॥ ५९ ॥

अथ त्रिभिर्विशेषकमाह—

तपोबलेनैव विधाय भूयसीस्तनूरदृश्याः स्विदिषून्निरस्यति ।
अमुष्य मायाविहतं निहन्ति नः प्रतीपमागत्य किमु स्वमायुधम् ॥ ६०॥

**मल्लि०**—तप इत्यादि । एष मुनिः । तपोबलेन तपःसामर्थ्येन भूयसीर्बह्वीः । अदृश्या स्तनूरात्मनः शरीराणि विधाय सृष्ट्वा, इषून्निरस्यति स्वित् क्षिपति किम् । अथवा, अमुष्यास्य मुनेः । मायया विहितं प्रतिहतं स्वं स्वकीयमिव आयुधं प्रतीपं प्रतिकूलम् । आगत्य । प्रत्यावृत्येत्यर्थः । नोऽस्माकं निहन्ति किमु । 'जासिनिप्रहणे-' त्यादि सूत्रेण कर्मणि षष्ठी । शेषविवक्षायां तु द्वितीया ॥ ६० ॥

**हिन्दी**—यह तपस्वी तपस्याके सामर्थ्य से बहुत से अदृश्य शरीरों को बना कर बाण छोड रहा है क्या ? अथवा इसकी मायासे नष्ट आयुध प्रतिकूल होकर ( लौट कर ) हमलोगों पर प्रहार कर रहा है क्या ? ( प्रमथलोग ऐसा सोचने लगे ) ॥ ६० ॥

हृता गुणैरस्य भयेन वा मुनेस्तिरोहिताः स्वित्प्रहरन्ति देवताः ।
कथं न्वमी संततमस्य सायका भवन्त्यनेके जलधेरिवोर्मयः ॥ ६१ ॥

**मल्लि०**—हृता इति । यद्वा, अस्य मुनेर्गुणैः शान्त्यादिभिः हृता आकृष्टाः । वशीकृता इति यावत् । भयेन दरेण वा । भयाद्बिभ्यत्य एवेत्यर्थः । देवतास्तिरोहिताः सत्य प्रहरन्ति स्वित् । तत्कुतः । अन्यथा, अस्य मुनेः । अमी सायका जलधेरूर्मय इव कथं नु संततमनेकेऽसङ्ख्या भवन्ति । एतच्चोद्यमन्यसपक्षसंभवेन न संभवतीत्यर्थः । [ 'एक' शब्दस्यैकशेषे कृते एक इति रूपमिति केचित् । 'नु' शब्दस्त्वन्यार्थे ] ॥ ६१ ॥

**हिन्दी**—अथवा इस तपस्वीके गुणोंसे आकृष्ट होकर वा तपस्वीके भयसे देवता लोग अदृश्य होकर प्रहार कर रहे हैं क्या ? नहीं तो इस तपस्वीके ये बाण समुद्रकी तरङ्गोंकी तरह लगातार कैसे असंख्य हो रहे हैं ? ॥ ६१ ॥ ( प्रमथलोग ऐसा सोचने लगे ) ।

जयेन कच्चिद्विरमेदयं रणाद्भवेदपि स्वस्ति चराचराय वा।
ततापकीर्णा नृपसूनुमार्गणैरिति प्रतर्काकुलिता पताकिनी ॥ ६२॥

मल्लि०--जयेनेति । कच्चिदयं रणाज्जयेन विरमेत् । अस्माञ्जित्वा कच्चिदयं युद्धमुपसंहरेदित्यर्थः । अपि चराचराय स्वस्ति भवेत् कच्चित् । अपि स्थावरजङ्गमं जगन्न विनश्येदित्यर्थः । 'अपि' शब्दः संभावनायाम् । प्रार्थनायां लिङ्। इति प्रतर्काकुलिता पूर्वोक्ता ये प्रतर्कास्तैः आकुलिता विह्वला । अत्र सहेतुकं विशेषमाह— नृपसूनुमार्गणैरर्जुनबाणैः कीर्णा क्षिप्ता पताकिनी सेना । किरातपतेरिति शेषः । ततापतापं प्राप ॥ ६२ ॥

हिन्दी—यह ( तपस्वी ) जयलाभ करके युद्धसे विरत होगा क्या ? स्थावर और जङ्गम प्राणियोंका कल्याण भी होगा क्या ? इस प्रकारके तर्कसे आकुल होकर अर्जुनके बाणोंसे विद्ध प्रमथोंकी सेना सन्तप्त होने लगी ॥ ६२ ॥

अमर्षिणा कृत्यमिव क्षमाश्रयं मदोद्धतेनेव हितं प्रियं वचः ।
बलीयसा तद्विधिनेव पौरुषं बलं निरस्तं न रराज जिष्णुना ॥ ६३ ॥

मल्लि०— अमर्षिणेति । अमर्षिणा क्रोधवता क्षमाश्रयं शान्तिसाध्यं कृत्यमिव। क्षमासाध्यं हि कृत्यं सामर्षैर्निरस्यते, तच्च निरस्तं न शोभते । मदोद्धतेन पुंसा हितं प्रियं वचो निरस्तं तिरस्कृतमिव । यथा बलीयसा बलवत्तरेण विधिना दैवेन निरस्तं पौरुषमिव । बलीयसा दैवेन प्रतिहतपुरुषव्यापारस्य निष्फलत्वादिति भावः । तथा जिष्णुनाऽर्जुनेन निरस्त क्षिप्तं बलं किरातसैन्यं न रराज । मालोपमा ॥ ६३ ॥

हिन्दी—क्रोधी पुरुषसे शान्तिसे सिद्ध होने वाले कार्यके समान, मदसे उद्धत पुरुषसे तिरस्कृत हित और प्रियवचनके समान, अधिक बलसे युक्त भाग्यसे प्रतिहत पुरुषार्थके समान जयशील अर्जुनसे प्रतिहत होकर प्रमथसेना शोभित नहीं हुई ।६३।

प्रतिदिशं प्लवगाधिपलक्ष्मणा विशिखसंहतितापितमूर्तिभिः ।
रविकरग्लपितैरिव वारिभिः शिवबलैः परिमण्डलता दधे ॥ ६४ ॥

मल्लि०— प्रतिदिशमिति । प्लवगानामधिपोऽधीशो लक्ष्म यस्य तेन वानरचिह्नेन । 'कपिप्लवङ्गप्लवगे-'ति, 'चिह्नं लक्ष्म च लक्षणम्' इति चामरः । अर्जुनेन विशिखसंहतितापितमूर्तिभिरिति । विशिखा बाणास्तेषां संहतयः समूहाः ।

'स्त्रियां तु संहतिर्वृन्दम्' इत्यमरः। ताभिस्तापिताः पीडिता मूर्तयो देहा येषां तैस्तथाभूतैः। शरनिकरकर्तितकलेवरैरित्यर्थः। शिवबलैः प्रमथसैन्यैः कर्तृभिः, रविकरेण ग्लपितैः सूर्यकिरणशोषितैर्वारिभिरुदकैरिव, प्रतिदिशं दिक्षु परिमण्डलतः परितश्चक्राकारमण्डलतेति यावत्। दधेऽधारि प्रतिदिशं मण्डलाकारेण स्थितमित्यर्थः। धाञः कर्मणि लिट्। आतपतप्तं हि नीरं परिभ्रमति तद्वन्मुनिपीडितं सैन्यं बभ्रामेत्यर्थः। द्रुतविलम्बितं छन्दः—'द्रुतविलम्बितमाह नभौ भरौ'। इति लक्षणात्॥ ६४॥

हिन्दी—कपिध्वज अर्जुनके बाणसमूहसे सन्तप्तमूर्तिवाली प्रमथसेनाएँ सूर्यकिरणोंसे सुखाये गये जलोंके समान प्रत्येक दिशाओंमें मण्डलाकार हो गई। ६४।

प्रविततशरजालच्छन्नविश्वान्तराले
विधुवति धनुराविर्मण्डलं पाण्डुसूनौ।
कथमपि जयलक्ष्मीर्भीतभीता विहातुं
विषमनयनसेनापक्षपातं विषेहे॥ ६५॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये चतुर्दशः सर्गः।

मल्लि०—प्रविततेति। प्रविततानि विस्तृतानि यानि शरजालानि तैः छन्नमाच्छादितं विश्वान्तरालं येन तस्मिञ्छरसमूहपूरितब्रह्माण्डोदरे पाण्डुसूनौ अत एव आविर्मण्डलमाविर्भूतमण्डलं धनुः। आविर्भूतं मण्डलं यस्य धनुष इति वृत्तौ भूतार्थस्यानुप्रवेशात् 'भूत्' शब्दस्याप्रयोगः। विधुवति कम्पयत्यास्फालयति सति भीतभीतेव भीतप्रकारेव जयलक्ष्मीर्विजयश्रीः कथमपि केनचित्प्रकारेण। महता कष्टेन वा। विषमनयनसेनापक्षपातं शिवसैन्यानुरागं विहातुं त्यक्तुं विषेहे। शशाकेत्यर्थः। मालिनीवृत्तम्। लक्षणं तूक्तम्॥ ६५॥

इति किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां चतुर्दशः सर्गः समाप्तः।

हिन्दी—विस्तृत बाणसमूहोंसे विश्वके अन्तरालको आच्छादित करनेवाले अर्जुनके मण्डलाकार किये गये धनुको कम्पित करनेपर डरी हुई-सी विजयलक्ष्मी किसी प्रकार अथवा बड़े कष्टसे शिवसेनाके अनुरागको छोड़नेको समर्थ हुई॥६५॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये चतुर्दशः सर्गः।

## पञ्चदशः सर्गः

अथ भूतानि वार्त्रघ्नशरेभ्यस्तत्र तत्रसुः ।
भेजे दिशः परित्यक्तमहेष्वासा च सा चमूः ॥ १ ॥

मल्लि०—अथेति । अथानन्तरम् । तत्र रणे भूतानि सर्वप्राणिनः । वृत्रं हतवानिति वृत्रहेन्द्रः । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' । तस्यापत्यं पुमान् वार्त्रघ्नोऽर्जुनः । 'तस्यापत्यम्' इत्यण्प्रत्ययः । तस्य शरेभ्यस्तत्रसुर्बिभ्युः । 'वा जृभ्रमुत्रसाम्' इति विकल्पादेत्वाभ्यासलोपाभावः । सा चमूश्च । इषवोऽस्यन्त एभिरितीष्वासा धनूंषि । 'धनुश्चापोऽस्त्रमिष्वासः' इति हेमचन्द्रः । 'अकर्तरि च कारके संज्ञायाम्' इति करणे घञ् । परित्यक्ता महान्त इष्वासा यया सा । परित्यक्तायुधेत्यर्थः । दिशो भेजे । पलायांचक्र इत्यर्थः । अत्र भूतत्राससेनापलायनयोः समुच्चयकथनाद्भिन्नविषयः क्रियासमुच्चयोऽलङ्कारः । 'गुणक्रियायौगपद्यं समुच्चयः' इति सामान्यलक्षणम् । अस्य यमकेन संसृष्टिः ॥ १ ॥

हिन्दी—तदनन्तर उस युद्धमें समस्त प्राणी अर्जुनके बाणोंसे त्रस्त हो गये, और प्रमथसेना भी आयुधोंका परित्याग कर दशों दिशाओंमें भाग गई ॥ १ ॥

अपश्यद्भिरिवेशानं रणान्निववृते गणैः ।
मुह्यत्येव हि कृच्छ्रेषु संभ्रमज्वलितं मनः ॥ २ ॥

मल्लि०—अपश्यद्भिरिति । गणैः प्रमथैः । ईशानं स्वामिनं शिवम् । पुरोवर्तिनमिति भावः । अपश्यद्भिरिव रणान्निववृते निवृत्तम् । भावे लिट् । तथा हि—कृच्छ्रेषु आपत्सु संभ्रमेण साध्वसेन ज्वलितं तप्तम् । 'संभ्रमः साध्वसेऽपि स्यात्' इति विश्वः । मनो मुह्यत्येव । अतः पुरोवर्तिनोऽप्यदर्शनमुपपद्यत इति भावः । २ ।

हिन्दी—प्रमथगण स्वामी शिवजीको न देखते हुए-से होकर युद्धसे निवृत्त हो गये, क्योंकि विपत्तियोंमें घबराहटसे सन्तप्त होकर मन मोहयुक्त हो जाता है । २ ।

खण्डिताशंसया तेषां पराङ्मुखतया तया ।
आविवेश कृपा केतौ कृतोच्चैर्वानरं नरम् ॥ ३ ॥

मल्लि०—खण्डितेति । खण्डिता ध्वस्ता आशंसा जयाशा यस्यास्तया तेषां

गणानां संबन्धिन्या तया। अतिसंनिकृष्टयेत्यर्थः। पराङ्मुखतया रणवैमुख्येन। पलायनेनेत्यर्थः। केतौ ध्वजे कृत आरोपित उच्चैरुन्नतो वानरो हनुमान् येन तं नरं पुरुषम्। कपिध्वजमित्यर्थः। कृपा करुणा। आविवेश। तदीयदुर्दशां दृष्ट्वा स कृपाविष्टोऽभूदित्यर्थः। यमकालङ्कारः॥ ३॥

**हिन्दी**—विजयकी आशासे रहित उन प्रमथोंके पलायनसे कपिध्वज अर्जुन दयासे युक्त हो गये॥ ३॥

आस्थामालम्ब्य नीतेषु वशं क्षुद्रेष्वरातिषु।
व्यक्तिमायाति महतां माहात्म्यमनुकम्पया॥ ४॥

**मल्लि०**—आस्थामिति। आस्थां यत्नमालम्ब्य। 'आस्था त्वालम्बनास्थानयत्नापेक्षासु कथ्यते' इति विश्वः। वशं नीतेषु क्षुद्रेषु अरातिषु शत्रुषु विषयेऽनुकम्पया कृपया महतां वीराणां माहात्म्यं महानुभावत्वं व्यक्तिं स्फुटताम्। आयाति प्राप्नोति। स्वपौरुषनिर्जितेष्वरातिष्वपि करुणा भूषणमेव महतामिति भावः॥ ४॥

**हिन्दी**—प्रयत्नका अवलम्बन कर क्षुद्र शत्रुओंके वशवर्ती होने पर वीर पुरुषोंकी महानुभावता दयासे व्यक्त हो जाती है॥ ४॥

स सासिः सासुसूः सासो येयायेयाययाययः।
ललो लीलां ललोऽलोलः शशीशशिशुशीः शशन्॥ ५॥

(एकाक्षरपदः)

**मल्लि०**—स सासिरिति। सहासिना वर्तमानः सासिः सखड्गः असून् सुवन्ति प्रेरयन्तीत्यसुवो बाणाः। 'षू प्रेरणे' इति धातोः 'सत्सूद्विषे-'त्यादिना क्विप्। असुसूभिः सह वर्तत इति सासुसूः सबाणः। अस्यन्ते क्षिप्यन्ते शरा अनेनेत्यासो धनुः। 'अकर्तरि च कारके संज्ञायाम्' इति घञ्। आसेन सह वर्तत इति सासः सचापः। सर्वत्र 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः। येया यातव्या यानसाध्याः अयेया अयातव्या यानं विनैव साध्याः। 'अचो यत्' इति यत्प्रत्ययः। येयाश्च अयेयाश्च येयायेयाः, तेषां द्वयानामाये स्वर्णगजादिलाभे याति येयायेयाययः। अयं शुभावहदैवं यातीत्यर्थः। येयायेयाययश्चासो अययश्चेति येयायेयाययाययः। यात्रातोरुभयत्रापि 'आतोऽनुपसर्गे कः' इति कप्रत्ययः। बतो ललति विलसतीति ललः। 'लल विलासे' पचाद्यच्। अलोलोऽचपलः। शशिन ईशः शिवस्तस्य शिशुः स्कन्दस्तं श्यृणाति हिनस्तीति शशीशशिशुशीः। क्विप्। शशन् प्लुतगतिं कुर्वन्। 'शश

प्लुतगतौ' इति धातोः शतृप्रत्ययः। सोऽर्जुनो लीलां शोभां ललौ प्राप। 'ला आदाने' कर्तरि लिट् ॥ ५ ॥

हिन्दी—साऽसिः=असि ( तलवार )को लिये हुए, साऽसुसूः=असु (प्राण)को प्रेरणा करनेवाले अर्थात् बाण उसको लिये हुए, साऽसः=आस=बाणोंको छोड़नेवाला धनु, उससे युक्त, येयायेमायायाययः=अर्थात् येयाः ( यानसे साध्य ) अयेयाः ( यानके बिना साध्य ), येयाऽयेयानम् ( यान साध्य और अयानसाध्य ) इनके आये ( सुवर्ण और गज आदिके लाभमें ) याति ( जो प्राप्त होता है ), अयम् ( शुभकारक भाग्य )को जो याति ( प्राप्त करता है ), इस कारणसे ललः ( शोभित होनेवाला ), अलोलः ( जो लोल अर्थात् चपल नहीं है ) शशीशः=शशी ( चन्द्रमा ) उनके ईश ( स्वामी ) अर्थात् शिवजी, उनके शिशु ( बालक अर्थात् स्कन्द), उनका ताडनकरनेवाले शशन्=प्लुतगति करते हुए सः = अर्जुन लीला (शोभा)को ललौ=प्राप्त हुए ॥ ५ ॥

हिन्दी—हाथमें तलवार, बाण और धनुको लिये हुए और यानसाध्य और अयानसाध्य दोनों प्रकारके सुवर्ण और हाथी आदिके लाभमें प्राप्त होनेवाले शुभदायक भाग्यको प्राप्त करनेवाले शोभायुक्त चञ्चल न होकर शिवपुत्र स्कन्दको पीडित करते हुए प्लुत गतिवाले होकर अर्जुन शोभित हुए ॥ ५ ॥

यह "एकाक्षर पद्य" नामका चित्रकाव्य है।

त्रासजिह्मं यतश्चैतान् मन्दमेवान्वियाय सः।
नातिपीडयितुं भग्नानिच्छन्ति हि महौजसः ॥ ६ ॥

**मल्लि०**—त्रासेति। सोऽर्जुनः। त्रासजिह्मं भयविलष्टं यथा तथा यतो गच्छतः। पलायमानानित्यर्थः। एतान् गणान् मन्दमेव। अन्वियायानुजगाम। तथा हि—महौजसो महानुभावा भग्नानतिपीडयितुं नेच्छन्ति ॥ ६ ॥

**हिन्दी**—अर्जुनने भयसे कुटिल होकर जाते हुए ( भागते हुए ) इन गणों का मन्दगतिसे अनुगमन किया, क्योंकि महानुभावलोग भागे हुएको ज्यादा पीडित करना नहीं चाहते हैं ॥ ६ ॥

अथाग्रे हसता साचिस्थितेन स्थिरकीर्तिना।
सेनान्या ते जगदिरे किञ्चिदायस्तचेतसा ॥ ७ ॥

( निरोष्ठ्यम् )

मल्लि०—अथेति । अथाग्रे । बलानामित्यर्थः । हसता तद्भङ्गदर्शनात्स्मयमानेन साचिस्थितेन तन्निवारणाय तिर्यग्व्यवस्थितेन । 'तिर्यगर्थे साचि तिरः' इत्यमरः । स्थिरकीर्तिना । स्वयमभङ्गत्वादिति भावः । किंचिदीषद् आयस्तं खिन्नं चेतो यस्य तेन स्वकीयगणभङ्गादीषत्खिन्नचित्तेन सेनान्या स्कन्देन । 'पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः' इत्यमरः । ते गणाः प्रमथादयो जगदिर उक्ताः । ओष्ठ्यवर्णाभावान्निरोष्ठ्यमेतत् ॥ ७ ॥

हिन्दी—अनन्तर सेनाओंके सामने हँसते हुए उनको रोकनेके लिए तिरछे होकर रहे हुए स्थिर कीर्तिवाले और कुछ खिन्न चित्तवाले होकर सेनापति कार्त्तिकेय उन सैनिकोंको कहने लगे । यह निरोष्ठ्य नामक चित्रकाव्य है, इसमें ओष्ठस्थानीय वर्ण नहीं हैं ॥ ७ ॥

अथैकविंशतिभिः श्लोकैः स्कन्दवाक्यमेवाह—

मा विहासिष्ट समरं समरन्तव्यसंयतः ।
क्षतं क्षुण्णासुरगणैरगणैरिव किं यशः ॥ ८ ॥
( पादान्तादियमकम् )

मल्लि०—मा विहासिष्टेत्यादि । रन्तव्यं रमणं क्रीडा । बहुलग्रहणाद्भावे तव्यप्रत्ययः । संयद्युद्धम् । 'समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः' इत्यमरः । समे रन्तव्यसंयती येषां ते समरन्तव्यसंयतः तुल्यक्रीडासंगरा इति तेषां संबोधनम् । यूयं समरं संग्रामं मा विहासिष्ट न त्यजत । जहातेर्माङि लुङ् । मध्यमबहुवचनम् । क्षुण्णाः पराजिता असुरगणा यैस्तैः । भवद्भिरिति शेषः । अगणैरिव गणेभ्योऽन्यैरिव किं किमर्थं यशः क्षतं नाशितम् । नैतद्युक्तं महाशूराणां भवादृशानामित्यर्थः ८।

हिन्दी—रमण और युद्धको समान समझनेवाले हे प्रमथो ! तुमलोग संग्रामको मत छोड़ो । दैत्यगणोंको जीतनेवाले तुमलोग गणोंसे इतर ( भिन्न )के समान होकर अपने यशको क्यों नष्ट कर रहे हो ? । यह 'पादान्तादियमक' नामका चित्रकाव्य है ॥ ८ ॥

विवस्वदंशुसंश्लेषद्विगुणीकृततेजसः ।
अमी वो मोघमुद्गूर्णा हसन्तीव महासयः ॥ ९ ॥

मल्लि०—विवस्वदिति । विवस्वदंशुसंश्लेषेण सूर्यकिरणसंपर्केण द्विगुणीकृतानि उत्तेजितानि तेजांसि येषां ते तथोक्ता मोघं व्यर्थम् उद्गूर्णा उद्यताः ।

'गुरी उद्यमने' इति धातोः कर्मणि क्तः। वो युष्माकम्। असौ महाशयः खड्गः हसन्तीवेत्युत्प्रेक्षा। किं पलायमानानां खड्गैरिति हासः॥ ९॥

**हिन्दी**—सूर्यकी किरणोंके सम्पर्कसे द्विगुण तेजवाला व्यर्थ ही उठाया गया तुमलोगोंका यह विशाल खड्ग मानों उपहास कर रहा है॥ ९॥

वनेऽवने वनसदां मार्गं मार्गमुपेयुषाम्।
वाणैर्वाणैः समासक्तं शङ्केऽशं केन शाम्यति॥ १०॥

[ पादादियमकम् ]

**मल्लि०**—वन इति। वनसदां वनेचराणाम्। अवने रक्षके, वने मार्गं मृगसंबन्धिनं मार्गं पन्थानम्। उपेयुषाम्। पलायमानामित्यर्थः। युष्माकमिति शेषः। बाणो ध्वनिरेषामस्तीति तैर्बाणैर्ध्वनियुक्तैः। 'वण संशब्दने' इति धातोर्घम्। ततः 'अर्शआदिभ्योऽच्' इत्यच्प्रत्ययः। यमकत्वाद् बवयोरभेदः। उक्तं च-'रलयोर्डलयोस्तद्वज्जययोर्बवयोरपि। सबिन्दुकाबिन्दुकयोः स्यादभेदेन कल्पनम्।' इति। बाणैः शरैः समासक्तं समासञ्जितम् अशं दुःखं तत् केन शाम्यतीति शङ्के। केनोपायेन शाम्येदिति विचारयामीत्यर्थः॥ १०॥

**हिन्दी**—बनचरोंके रक्षक वनमें रास्ते रास्तेमें प्राप्त होनेवाले ( भागते हुए) तुमलोगोंके ध्वनियुक्त बाणोंसे सम्बद्ध दुःख किस उपायसे शान्त होगा? मैं ऐसी आशङ्का कर रहा हूँ। यह 'पादादियमक' नामक चित्रकाव्यका उदाहरण है। १०।

पतितोत्तुङ्गमाहात्म्यैः संहृतायतकीर्तिभिः।
गुर्वीं कामापदं हन्तुं कृतमावृत्तिसाहसम्॥ ११॥

**मल्लि०**—पातितेति। पातितं भ्रंशितम् उत्तुङ्गमाहात्म्यमुन्नतभावो यैस्तैः संहृता आहृता आयता विस्तृताः कीर्तयो यैस्तैः। युष्माभिरिति शेषः। कां गुर्वीमापदं हन्तुम्। न कांचिदपीत्यर्थः। आवृत्तिर्युद्धान्निवृत्तिः। सैव साहसं कृतम्। अतः पापादन्यत्र किंचित्फलमस्तीति भावः। तदुक्तं मनुना-'यस्तु भीत परावृत्तः संग्रामे हन्यते परैः। भर्तुर्यद्दुष्कृतं किंचित्तत्सर्वं प्रतिपद्यते॥ यच्चास्य सुकृतं किंचिदमुत्रार्थमुपार्जितम्। भर्ता तत्सर्वमादत्ते परावृत्तहतस्य तु॥' इति॥ ११॥

**हिन्दी**—उन्नत महत्त्वको भ्रष्ट करनेवाले, विस्तृत कीर्तिका संहार करनेवाले तुमलोगोंने कौन-सी बड़ी आपत्तिको नाश करनेके लिए युद्धसे भागनेका साहस कर लिया है?॥ ११॥

नासुरोऽयं, न वा नागो घरसंस्थो न राक्षसः।
ना सुखोऽयं नवाभोगो धरणिस्थो हि राजसः ॥ १२ ॥
( गोमूत्रिक बन्ध )

**मल्लि०**—नेति। किंच, अयमसुरो दैत्यो न। नागो नागराजो वा पन्नगश्च न। धर इव संस्था यस्य स धरसंस्थः पर्वताकारः। 'अहार्यधरपर्वताः' इत्यमरः। 'संस्था व्यवस्थाप्रणिधिसमाप्त्याकारमृत्युषु' इति वैजयन्ती। राक्षसो न। किंतु अयं सुखयतीति सुखः। सुखसाध्य इत्यर्थः। नवाभोगोऽभिनवप्रयत्नः। महोत्साह इत्यर्थः। 'आभोगो वरुणच्छत्रे पूर्णतायत्नयोरपि'। इति विश्वः। धरणिस्थो भूतलचारी राजसो रजोगुणप्रधानो ना पुरुषो हि। कश्चिन्मानुष इत्यर्थः। 'पुरुषाः पूरुषा नरः। मनुष्या मानुषा मर्त्या मनुजा मानवा नरा' इत्यमरः। अतो न पलायनमुचितमिति भावः। गोमूत्रिकाबन्धः—'वर्णानामेकरूपत्वं यद्येकान्तरमर्धयोः। गोमूत्रिकेति तत्प्राहुर्दुष्करं तद्विदो विदुः।' इति लक्षणात्। षोडशकोष्ठद्वयेऽर्धद्वयं क्रमेण विलिख्यैकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिरित्युद्धारः ॥ १२ ॥

**हिन्दी**—( हे प्रमथो ! ) यह ( तपस्वी ) दैत्य नहीं है, न नाग है, न पर्वताकार राक्षस है, किन्तु यह सुखसाध्य और महान् उत्साहसे युक्त भूतलमें रहनेवाला रजोगुणी पुरुष है ॥ १२ ॥

मन्दमस्यन्निषुलतां घृणया मुनिरेष वः।
प्रणुदत्यागतावज्ञं जघनेषु पशूनिव ॥ १३ ॥

**मल्लि०**—मन्दमिति। एष मुनिर्घृणया कृपया। इषुं लतां शाखामिव मन्दमस्यन् क्षिपन् वो युष्मान् पशूनिवागतावज्ञं यथा तथा जघनेषु प्रणुदति चोदयति। किमतः परं कष्टमस्तीति भावः ॥ १३ ॥

**हिन्दी**—( हे प्रमथो ! ) यह ( तपस्वी ) कृपासे शाखाकी तरह बाणको छोड़ता हुआ तुमलोगोंको पशुओंकी तरह अनादरपूर्वक जघन स्थानोंमें प्रहार कर रहा है, ( इससे ज्यादा कष्ट क्या है ? ) यह 'गोमूत्रिका बन्ध' नामक चित्रकाव्यका उदाहरण है ॥ १३ ॥

न नोननुन्नो नुन्नोनो नाना नानानना ननु।
नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत् ॥ १४ ॥
( एकाक्षरः। )

मल्लि०—नेति । पदच्छेदस्तावत्—न ना ऊननुन्नः नुन्नोनः ना अना नानानना ननु । नुन्नः अनुन्नः ननुन्नेनः ना अनेनाः नुन्ननुन्ननुत् । अथ योजना—हे नानानना नानाप्रकाराण्याननानि येषां ते । नानाविधास्या इत्यर्थः । ऊनेन = निकृष्टेन नुन्नो विद्ध ऊननुन्नो यः स ना न = पुरुषो न । तथा नुन्न ऊनो येन स नुन्नोनो ना पुरुषोऽना ननु अपुरुषः खलु । ऊनाद्भीतः पलायमानस्तु किं वक्तव्यमिति भावः। किंच, नुन्न इनः स्वामी यस्य स नुन्नेनः । स न भवतीति ननुन्नेनः । नञर्थस्य 'न' शब्दस्य सुप्सुपेति समासः । ननुन्नो विद्धोऽपि अनुन्नोऽविद्ध एव । यूयमनुन्न स्वामिकत्वादनुन्ना एवेति भावः । तथा नुन्ननुन्ननुदतिशयेन नुन्ना नुन्ननुन्नास्तान् नुदतीति नुन्ननुन्ननुत् । अतिपीडितपीडको ना पुरुषोऽनेना निर्दोषो न भवतीति, किन्तु सदोष एवेति । 'नार्तं नातिपरिक्षतम्' इति निषेधादित्यर्थः । अयं तु नैतादृश इति न पलायितव्यमिति भावः । अयमेकव्यञ्जनः । अन्त्यस्तकारस्तु न दोषावहः 'नान्त्यवर्णस्तु भेदकः' इत्यभ्यनुज्ञानात् ॥ १४ ॥

हिन्दी—हे नानाऽऽननाः = हे नाना ( अनेक ) प्रकारके आननों ( मुखों ) वाले ! ऊननुन्नः = ऊन ( निकृष्ट )से नुन्न ( विद्ध )जो पुरुष है, वह ना (पुरुष) न = नहीं है । नुन्नोनः = नुन्न, ( विद्ध ) है ऊनः ( निकृष्ट ) पुरुष जिससे, वह ना = पुरुष, अना = पुरुष नहीं है और नुन्नेनः = नुन्नः ( विद्ध ) है इन (स्वामी) जिसका, वह नुन्नेनः = जो ऐसा नहीं है ननुन्नेनः, वह नुन्नः ( विद्ध ) होकर भी अनुन्नः ( विद्ध ) नहीं है, तुम अनुन्न ( अविद्ध ) स्वामीवाले होनेसे अनुन्न विद्ध नहीं हो । नुन्ननुन्ननुत्=नुन्ननुन्नान् ( अत्यन्त विद्ध जनोंको ) नुत्, पीड़ित करने वाला, ना = पुरुष, अनेनाः = निर्दोष, न = नहीं होता है अर्थात् दोषी होता है ( यह तपस्वी ऐसा नहीं है, इस कारण तुमलोगोंको भागना उचित नहीं है ) यह पद्य 'एकाक्षर' नामक चित्रकाव्यका उदाहरण है ॥ १४ ॥

वरं कृतध्वस्तगुणादत्यन्तमगुणः पुमान् ।
प्रकृत्या ह्यमणिः श्रेयानालङ्कारश्च्युतोपलः ॥ १५ ॥

मल्लि०—वरमिति । कृताः पूर्वमुत्पादिताः पश्चाद् ध्वस्ता नष्टास्ते कृतध्वस्ताः 'पूर्वकाले'त्यादिना समासः । कृतध्वस्ता गुणा यस्य तस्मात् पुंसः । अत्यन्तमतिशयेनागुणो निर्गुणः पुमान् वरं = मनाक्प्रियः । किंचित्प्रिय इत्यर्थः । 'वरं क्लीबे मनाक्प्रिये' इत्यमरः । तथा हि—प्रकृत्या स्वभावेन । अमणिर्मणिरहितोऽलङ्कार

श्रेयान् । च्युतोपलो भ्रष्टरत्नो न श्रेयान् । 'उपलः प्रस्तरे रत्ने' इति विश्वः । पलायितुः समरादसमर एव वरमिति भावः । अत्र समानविषयारोपयोः प्रतिबिम्बकरणाद् दृष्टान्तालंकारः ॥ १५ ॥

**हिन्दी**—पहले गुणोंको उत्पन्न करनेवाला पीछे उनको नष्ट करनेवाले पुरुषसे निर्गुण पुरुष कुछ अच्छा है । जैसे कि स्वभावसे मणिरहित अलङ्कार विशेषतः अच्छा होता है परन्तु भ्रष्ट रत्नवाला अलंकार अच्छा नहीं होता है अर्थात् युद्धसे भागनेवालेको युद्धमें न जाना ही अच्छा होता है ॥ १५ ॥

स्यन्दना नो चतुरगाः, सुरेभा वाऽविपत्तयः ।
स्यन्दना नो च तुरगाः, सुरेभा वा विपत्तयः ॥ १६ ॥

( समुद्गकः । )

मल्लि०—स्यन्दना इति । स्यन्दन्ते प्रस्रवन्तीति स्यन्दना जवनाः । स्यन्दना रथा नो सन्ति । नन्द्यादित्वाल्ल्युः । चतुरं गच्छन्तीति चतुरगाः । तुरगाश्च अश्वा नो सन्ति । सुरेभाः शोभनबृंहणाः । सुरेभा वा सुरगजाश्च नो सन्ति । अविपत्तयो विपत्तिरहिताः विपत्तयो वा विशिष्टाः पदातयो नो सन्ति । अतो न भेतव्यमिति भावः । अत्र पूर्वोत्तरार्धगतानां विशेषणानां विशेष्याणां चोद्देशोद्देश्यीभूतानां यथासंख्यसंबन्धानुक्रमाद्यथासंख्यालंकारो यमकेन संसृष्टः ॥ १६ ॥

**हिन्दी**—इस पुरुषके, स्यन्दनाः=वेगवाले, स्यन्दनाः=रथ, नो=नहीं हैं । अथवा चतुरगाः=अच्छी तरह चलनेवाले, तुरगा=घोड़े, नहीं=नहीं हैं । वा=अथवा, सुरेभा=सुन्दर आवाजवाले सुरेभाः=सुरों ( देवताओं )के इभाः (हाथी) भी, नो=नहीं हैं । वा=अथवा अविपत्तयः=विपत्तिसे रहित, वि-पत्तयः=विशिष्ट, पत्तियाँ=पैदल सेनाएँ, भी, नो=नहीं हैं । ( इस कारणसे तुमलोगोंको डरना उचित नहीं है ) । यह 'समुद्गक' नामक चित्रकाव्यका उदाहरण है । इसमें यमक और यथासंख्य अलंकारकी संसृष्टि है ॥ १६ ॥

भवद्भिरधुनारातिपरिहापितपौरुषैः ।
ह्रदैरिवार्कनिष्पीतैः प्राप्तः पङ्को दुरुत्तरः ॥ १७ ॥

मल्लि०—भवद्भिरिति । अधुनाऽरातिभिः परिहापितानि त्याजितानि पौरुषाणि यैस्तैर्भवद्भिः । अर्कनिष्पीतैरर्केण संशोषितैर्ह्रदैरिव । दुरुत्तरो दुस्तरः पङ्क इव पङ्को दुष्कीर्तिरूपः प्राप्तः ॥ १७ ॥

हिन्दी—इस समय शत्रुसे पुरुषार्थका त्याग कराये गये तुमलोगोंने सूखे सुखाये गये तालाब जैसे दुस्तर पङ्क ( कीचड़ )को प्राप्त करता है वैसे ही दुःखसे हटाये जानेवाला पङ्क ( कलङ्क )को प्राप्त कर लिया है ॥ १७ ॥

वेत्रशाककुजे शैलेऽलेशैजेऽकुकशात्रवे ।
यात किं विदिशो जेतुं तुंजेशो दिवि किंतया ॥ १८॥

( प्रतिलोमानुलोमपादः )

मल्लि०—वेत्रेति । वेत्राणि = वंशाः फलिन्यो वा । शाका बर्बराश्च कुजा वृक्षा यस्मिस्तस्मिन् वेत्रशाककुजे । शत्रुणा दुष्प्रवेश इत्यर्थः । 'वेत्रं वंशफलिन्योश्च' इति विश्वः । 'शाकः बर्बरवर्धकाः' इत्यमरः । लेशेन स्तोकेनाप्येजते कम्पत इति लेशैजः । स न भवतीति अलेशैजस्तस्मिन् । अत्यन्ताकम्पन इत्यर्थः 'एजृ कम्पने' पचाद्यच् । न कोकते नादत्त इत्यकुको ग्रहणासमर्थः शात्रवो यस्मिस्तस्मिन् अकुकशात्रवे । 'कुक आदाने' । पचाद्यच् । शैले पर्वते । केषां भावः किता कुत्सितता तयोपलक्षिताः सन्तः । 'कुत्साप्रश्नवितर्केषु क्षेपे किं शब्द इष्यते' । इति शाश्वतः । विदिशो जेतुं यात गच्छत किम् । यातेः संप्रश्ने लोट् । मध्यमपुरुषबहुवचनम् । दिवि स्वर्गेऽपि । तुञ्जेश इति तेषां संबोधनम् । तुञ्जन्त इति तुञ्जा हिंसका दैत्याः 'तुजि हिंसायाम्' पचाद्यच् । तेभ्यो दैत्येभ्य ईशत इति तुञ्जेशाः । ईशेः क्विप् । तेभ्योऽपि शक्ता इत्यर्थः । स्वर्गेऽप्यसुरविजयिनां युष्माकमत्र क्षुद्रस्थले क्षुद्रशत्रौ पलायनमनुचितमिति भावः ॥ १८ ॥

हिन्दी—तुमलोग बाँस, शाक ( बर्बर ) और वृक्षोंसे युक्त अर्थात् शत्रुसे दुष्प्रवेश्य, कम्पित न होनेवाले, जहाँ ग्रहण करनेमें शत्रु असमर्थ हैं, ऐसे पर्वतमें निन्दितरूपसे उपलक्षित होते हुए अनेक दिशाओंको जीतनेके लिए जाते हो क्या ? तुमलोग स्वर्गमें भी हिंसकों ( दैत्यों )से समर्थ हो । स्वर्गमें भी दैत्योंको जीतनेवाले तुमलोगोंको ऐसे क्षुद्र स्थलमें क्षुद्र शत्रुसे डरकर भागना उचित नहीं है यह भाव है । यह 'प्रतिलोमाऽनुलोमपाद' नामक चित्रकाव्यका उदाहरण है ॥ १८ ॥

अथेशे तिष्ठति पलायनमेतद्वो न युक्तमित्याह—

अयं वः क्लैब्यमापन्नान् दृष्टपृष्ठानरातिना ।
इच्छतीशश्च्युताचारान् दारानिव निगोपितुम् ॥ १९ ॥

मल्लि०—अयमिति । अयमीशः स्वामी शिवः क्लैब्यं निष्पौरुषत्वम् । आप-

न्नान् प्राप्तांस्तथा अरातिना दृष्टपृष्ठान्। पलायमानानित्यर्थः। वो युष्मान् च्युताचारान् स्खलितव्रतान् दारान् कलत्राणीव। 'अथ पुंभूम्नि दाराः' इत्यमरः। निगोपितुं गोप्तुम्। ऊदित्त्वादिड्विकल्पः। दारदोषं भर्तेव स्वमहिम्ना युष्मद्दोषं संवरितुम्। इच्छति। अतः कुतो युष्माकमनर्थ इत्यर्थः॥ १९॥

हिन्दी—ये स्वामी शिवजी नपुंसकत्वको प्राप्त ( पुरुषार्थहीन ) और शत्रुने जिनकी पीठ देख ली है ( भागते हुए ) तुमलोगोंको पत्नीकी तरह रक्षा करना चाहते हैं ( तुम्हारे दोषोंको छिपाना चाहते हैं )॥ १९॥

ननु हो मथना राघो घोरा नाथमहो नु न।
तयदातवदा भीमा माभीदा बत दायत॥ २०॥

( प्रतिलोमानुलोमार्द्धः )

मल्लि०—नन्विति। 'ननु' इत्यामन्त्रणे। 'हो' इत्याह्वाने। 'है हैं व्यस्तौ समस्तौ च हूतिसंबोधनार्थयोः। हो हौ चैवंविधौ ज्ञेयौ संबुद्ध्याह्वानयोरपि'। इति विश्वः। मथन्तीति मथनाः। 'मन्थ विलोडने' कर्तरि ल्युट्। राघन्ति = समर्था भवन्तीति राघः। 'राघृ सामर्थ्ये, क्विप्। घोरा क्रूराः। शत्रूणामिति भावः। नाथं महयन्ति पूजयन्तीति नाथमहः। दृशिग्रहणात्कर्मण्युपपदे क्विप्। तयन्ति=रक्षन्तीति तया रक्षकाः। पचाद्यच्। दायन्तीति दाताः = शुद्धाः। 'दैप् शोधने' कर्तरि क्तः। वदन्तीति वदा वक्तारः। पचाद्यच्। तेषां द्वन्द्वः तयदातवदाः। भीमा भयंकराः। माभीः। नञर्थ'मा'शब्दस्य सुप्सुपेति समासः। तां ददतीति माभीदा अभयप्रदाः एवंविधा यूयमिति शेषः। 'बत' इति खेदे। बवयोरभेदः। न दायत नु न शुद्धाः किम्। 'नु' पृच्छायाम्। किंतु शुद्धा एव। न काकुरत्रानुसंधेया। 'दैप् शोधने' लोड्मध्यमपुरुषबहुवचनम्॥ २०॥

हिन्दी—हे सैनिको! शत्रुओंको मथन करनेवाले, समर्थ, शत्रुओंके लिए क्रूर, अपने स्वामीकी पुजा करनेवाले, रक्षा करनेवाले, शुद्ध, वक्ता, भयङ्कर और अभयदान करनेवाले तुमलोग क्या शुद्ध नहीं हो? ( शुद्ध ही हो )। यह 'प्रतिलोमाऽनुलोमार्द्ध' नामक चित्रकाव्यका उदाहरण है॥ २०॥

किं त्यक्तापास्तदेवत्वमानुष्यकपरिग्रहैः।
ज्वलितान्यगुणैर्गुर्वी स्थिता तेजसि मानिता॥ २१॥

मल्लि०—किमिति। अपास्तोऽवधीरितो देवत्वमानुष्यकयोः परिग्रहः स्वीकारो

यैस्तैः। अतिदेवमानुषैरित्यर्थः। मनुष्याणां भावो मानुष्यकम्। 'योपधाद्गुरूपोत्तमाद्वुञ्'। ज्वलितान्यगुणैः ज्वलिता उज्ज्वलिताः। प्रकाशिता इति यावत्। अन्यगुणा असदृशगुणा यैस्तैः। 'अन्यो विभिन्नासदृशौ' इति वैजयन्ती। ईदृशैः भवद्भिरिति शेषः। तेजसि प्रतापे स्थिता प्रतापैकशरणा गुर्वी मानिता शूरमानिता किमिति त्यक्ता। किमिति निर्लज्जैः पलायन इति भावः॥ २१॥

हिन्दी—देवत्व और मनुष्यत्वका अतिक्रमण करनेवाले, असाधारण गुणोंको प्रकाशित करनेवाले तुमलोगोंने प्रतापमें स्थित शूरत्वके अभिमानको क्यों छोड़ दिया? अर्थात् क्यों निर्लज्ज होकर पलायन कर रहे हो?॥ २१॥

निशितासिरतोऽभीको न्येजतेऽमरणा रुचा।
सारतो न विरोधी नः स्वाभासो भरवानुत॥ २२॥

मल्लि०—निशितेति। हे अमरणा मरणरहिताः! निशितासिरतोऽतितीक्ष्णखड्गरतः। अभीको निर्भीकः। रुचा तेजसोपलक्षितः सुष्ठु आभासत इति स्वाभासो रमणीयः पचाद्यच्। उतात्यर्थमतिशयेन भरवान्। रणभरसहिष्णुरित्यर्थः। 'उतात्यर्थविकल्पयोः' इति विश्वः। ईदृशो नोऽस्माकं विरोधी शत्रुः सारतो बलतो न न्येजते न कम्पते। प्रचलतीत्यर्थः। 'एजृ कम्पने'। लट्। अतो भवद्भिरपि स्थातव्यमेव। न चलितव्यमिति भावः॥ २२॥

हिन्दी—हे अमर प्रमथगण! तीक्ष्ण खड्गको लिया हुआ, निर्भीक, तेजसे उपलक्षित, रमणीय, युद्धभारका सहिष्णु ऐसा हमलोगोंका विरोधी (शत्रु) बलके कारण कम्पित नहीं हो रहा है। (इस कारणसे तुमलोगोंको भी अचल होकर रहना चाहिए)॥ २२॥

नन्वयं न चलतीति कथं ज्ञायते? तत्राह प्रतिलोमानुलोमेन श्लोकद्वयम्—

तनुवारभसो भास्वानधीरोऽविनतोरसा।
चारुणा रमते जन्ये कोऽभीतो रसिताशिनि॥ २३॥

मल्लि०—तन्विति। तनुमावृणोत्याच्छादयतीति तनुवारं=वर्म। कर्मण्यण्। तेन भसति=भासत इति तनुवारभसः। 'भस दीप्तौ'। पचाद्यच्। भास्वान्=तेजस्वी, चारुणा भास्वताऽविनतेनोन्नतेन। उरसा वक्षःस्थलेनोपलक्षितः। एवंविधोऽपि अधीरो धैर्यरहितो रसितेन शब्दितेनैवाश्नाति ग्रसतीति रसिताशी तस्मिन्। रवेणैव विश्वप्राणहारिणीत्यर्थः। आभीक्ष्ण्ये णिनिः। जन्ये युद्धे। 'युद्धमायोधनं जन्यम्'

इत्यमरः। अभीतो निर्भीकः सन्' को रमते=कः क्रीडति ? यदि रमते तर्ह्ययमेवेति भावः। निर्भयसञ्चारादेवास्य निश्चलत्वं निश्चीयत इत्यर्थः। पूर्वश्लोकस्यायं प्रतिलोमः ॥ ३३ ॥

हिन्दी—कवचसे शोभित, तेजस्वी, सुन्दर और उन्नत वक्षःस्थलसे उपलक्षित, ऐसा होकर भी धैर्यरहित, शब्द करनेसे ही निरन्तर ग्रास करनेवाले युद्धमें निर्भीक होकर कौन-सा पुरुष क्रीडा करता है ? (यही तपस्वी क्रीडा कर रहा है) ॥३३॥

अथ पञ्चभिः कुलकमाह—विभिन्नेत्यादिभिः—

विभिन्नपातिताश्वीयनिरुद्धरथवर्त्मनि।
हतद्विपनगष्ठ्यूतरुधिराम्बुनदाकुले ॥ २४ ॥

मल्लि०—आहवं विशिनष्टि—विभिन्नानि विदारितान्यत एव पातितान्यश्वीयान्यश्वसमूहाः। 'पूर्वकाले–'ति समासः। तैरश्वसमूहैर्निरुद्धानि रथानां वर्त्मानि यस्मिंस्तथोक्ते। 'वृन्दे त्वश्वीयमाश्ववत्' इत्यमरः। 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' इति छप्रत्ययः। हतास्ताडिता द्विपा गजा एव नगाः शैलाः। 'शैलवृक्षौ नगावगौ' इत्यमरः। तैः ष्ठ्यूतानि उज्झितानि। ष्ठीवतेः कर्मणि क्तः। 'छ्वोः शूडनुनासिके च' इत्यूठादेशः। तानि रुधिराण्येवाम्बूनि तेषां नदैः प्रवाहैराकुले व्याप्ते ॥ २४ ॥

हिन्दी—( युद्धका और भी विशेषण दिखलाते हैं)—विदारित अश्वसमूहोंसे जहाँ रथोंका मार्ग रुका हुआ है, ताडित हाथी-रूप पर्वतोंसे छोड़े गये रुधिररूप जलके प्रवाहोंसे व्याप्त ( युद्धमें )॥ २४ ॥

देवाकानिनिकावादे
वाहिकास्वस्वकाहिवा।
काकारेभभरेकाका
निस्वभव्यव्यभस्वनि ॥ २५ ॥

मल्लि०—देवेति। पुनश्च, देवानाकनयत्युद्दीपयत्युत्साहयतीति देवाकानी तस्मिन् देवाकानिनि। 'कन दीप्तौ' इति धातोर्ण्यन्तार्णिनिः। यद्वा,–'कै शब्दे' इति धातोराङ्पूर्वस्य भावे ल्युटि आकानम् आशब्दनमीषद्वदनमिति यावत्। देवानां तद्वतीत्यर्थः। कावाद ईषद्वादो वाक्कलहः। 'ईषदर्थे' इति 'कु'शब्दस्य कादेशः।

तद्वति कावादे । अर्शआदिभ्योऽच् । वाहिका = पर्यायेण रणभारोद्वहनम्। ध्वे पर्याये धात्वर्थनिर्देशे ण्वुल्वक्तव्यः । वाहिकया कमप्राप्तरणक्रियया सुष्ठु शोभ यथा तथाऽस्वकान्=परानाजिहीतेऽभियुङ्क्ते । योजयतीति यावत् । वाहिकास्वक हास्तस्मिन् । योद्धृधर्मो युद्ध उपचर्यते । 'ओहाङ् गतौ' इति धातोर्विच्प्रत्ययः 'सोमपा' शब्दवत्प्रक्रिया । 'वा' शब्दश्चार्थे । कं मदोदकमाकिरन्तीति काकाः मदस्राविणः । किरतेराङ्पूर्वात्कर्मण्यण्, एवंविधा इभभरा गजघटा यत्र तस्मि काकारेभभरे । काका इव काका गर्ह्या इति लक्षणया तेषामामन्त्रणम् । निस्स निरुत्साहा भव्याः = सोत्साहास्तानुभयान्व्ययन्ति संवृण्वन्तीति निस्वभव्यव्य 'व्येञ् संवरणे' । 'आतोऽनुपसर्गे कः' । तैर्बभस्ति भासत इति निस्वभव्यव्यभस्व स्तस्मिन् । 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप् । सर्वतो भ्रमणात्सर्वतोभद्राख्यश्चि बन्धः । यथाह दण्डी—तदिदं सर्वतोभद्रं भ्रमणं यदि सर्वतः' इति । उद्धारस्तु चतुष्कोष्ठे चतुरङ्गबन्धक्रमेणाद्यपङ्क्तिचतुष्टये पादचतुष्टयं विलिख्यानन्तरपङ्क्ति चतुष्टयेऽप्यधः क्रमेण पादचतुष्टयलेखने प्रथमासु चतसृषु पङ्क्तिषु प्रथमः पाद सर्वतो वाच्यते, द्वितीयादिषु द्वितीय इत्यादि ॥ २५ ॥

**हिन्दी**—देवताओंको उत्साहित करनेवाले, घोड़ेसे वचनके कलहसे युक्त पारी-पारीसे युद्धके भारको प्राप्त क्रियासे अच्छी तरहसे शत्रुओंसे युद्ध करते साधन मद गिरानेवाली गजघटासे युक्त हे कौएके समान निन्दनीय ! उत्साहही और उत्साहयुक्त दोनों प्रकारके जनोंसे सवरण करनेवाले शोभित ( युद्धमें ) ।

इस पद्यमें चारों चरणोंमें बाएँ और दाहिने भागके अक्षर दुहराये गये हैं अतः यह सर्वतोभद्रनामक चित्रकाव्यका उदाहरण है ॥ २५ ॥

प्रनृत्तशववित्रस्ततुरगाक्षिप्तसारथौ ।
मारुतापूर्णतूणीरविक्रुष्टहतसादिनि ॥ २६ ॥

**मल्लि०**—प्रनृत्तेति । प्रनृत्तशवेभ्यो नृत्यत्कबन्धेभ्यो वित्रस्तैः क्षुभितैस्तुर गैराक्षिप्ता अवधूताः सारथयो यत्र तस्मिन् । तथा मारुतेनापूर्णैर्व्याप्तैस्तूणीरै निषङ्गैर्विक्रुष्टाः शब्दायमाना हतास्ताडिताः सादिनस्तौरङ्गिका यत्र तस्मिन् पाठान्तरे मारुतापूर्णतूणीरैर्विकृष्टा आकर्षिता अतएव हता मारिताः सादिनोऽश्ववा यत्र तस्मिन् ॥ २६ ॥

**हिन्दी**—नाचते हुए कबन्धों ( शिरसे रहित शवों )से डरे हुए घोड़ों

गिराये गये सारथियोंवाले, वायुसे पूर्ण तरकशोंसे शब्द करते हुए ताडित घुड़-सवारोंवाले ( युद्धमें ) ॥ २६ ॥

ससत्त्वरतिदेनित्यं
सदरामर्षनाशिनि ।
त्वराधिककसंनादे
रमकत्वमकर्षति ॥ २७ ॥

**मल्लि०**—ससत्त्वेति । ससत्त्वानां सत्त्ववतां रतिदे = रागप्रदे नित्यं सदराणां सभयानाममर्षनाशिनि = क्रोधहारिणि, त्वरयोत्साहेन अधिकं कसन्तो विकसन्तो नादा यत्र तस्मिन् । रमयतीति रमकः । रमधातोर्वुञ् । तस्याकादेशः तद्भावो रमकत्वम् । रणकर्मणा पररञ्जकत्वम् । अकर्षत्यपनुदति । परस्परमुत्साहं रणकर्मणा स्फोरयतीत्यर्थः ॥ २७ ॥

**हिन्दी**—बलवानोंको हर्ष देनेवाले और नित्य डरनेवालोंके क्रोधको हटानेवाले, उत्साहसे अधिक फैलते हुए शब्दोंसे युक्त, युद्धक्रियासे दूसरोंको प्रसन्न करनेके भावको विस्तार करनेवाले ( युद्धमें ) ।

यह पद्य अर्द्धभ्रमक-नामक चित्रकाव्यका उदाहरण है ॥ २७ ॥

आसुरे लोकवित्रासविधायिनि महाहवे ।
युष्माभिरुन्नतिं नीतं निरस्तमिह पौरुषम् ॥ २८ ॥

**मल्लि०**—आसुर इति । एवंविधः आसुरेऽसुरसंबन्धिनि लोकवित्रासविधायिनि= लोकभयंकरे महाहवे = महायुद्धे युष्माभिरुन्नतिं वृद्धिं नीतं प्रापितं पौरुषं पुरुषकर्म निरस्तं = नाशितम् । इह सङ्ग्रामे । कुलकम् ॥ २८ ॥

**हिन्दी**—( हे सैनिको ! ) लोकको त्रस्त करनेवाले असुरोंके साथ किये गये महायुद्धमें तुल्यलोगोंसे बढ़ाये गये पुरुषार्थको नष्ट कर दिया ॥ २८ ॥

इति शासति सेनान्यां गच्छतस्ताननेकधा ।
निषिध्य हसता किंचित्तस्थे तत्रान्धकारिणा ॥ २९ ॥
( निरोष्ठ्यम् )

**मल्लि०**—इतीति । इति=इत्थं, सेनान्यां=स्कन्दे शासत्याज्ञापयति । अनेकधा गच्छतः पलायमानांस्तान्गणान्निषिध्य=निवार्य, अन्धकारिणा = हरेण किंचिद्धसता तस्थे स्थितम् । भावे लिट् ॥ २९ ॥

हिन्दी—इस प्रकार सेनापति कार्त्तिकेयके समझानेपर चारों ओर भागते हु
सैनिकोंको रोककर शिवजी कुछ हँसते हुए खड़े हुए।

इस पद्यमें ओष्ठस्थानीय वर्ण नहीं है ॥ २९ ॥

मुनीषुदहनातप्ताँल्लज्जया निविवृत्सतः।
शिवः प्रह्लादयामास तान्निषेधहिमाम्बुना ॥ ३० ॥

मल्लि०—मुनीति। मुनेरिषव एव दहनस्तेनाऽऽतप्तान् पीडितांस्त्रया लज्जा
रणभङ्गाच्छालीनत्वेन निविवृत्सतो निवर्तितुकामान्। 'वृद्‍भ्यः स्यसनोः' इ
विकल्पात्परस्मैपदम्। तान् गणान् शिवो निषेधो मा भैष्ट मा पलायतेति निवार
वचनं स एव हिमाम्बु शीतोदकं तेन। प्रह्लादयामास। रूपकालंकारः ॥ ३० ॥

हिन्दी—तपस्वी ( अर्जुन )के बाणरूप अग्निसे सन्तप्त और भागनेकी इच्छा
करते हुए उन सैनिकोंको शिवजीने निषेधरूप शीतल जलसे आह्लादित क
दिया ॥ ३० ॥

दूनास्तेऽरिबलादूना निरेभा बहु मेनिरे।
भीताः शितशराभीताः शङ्करं तत्र शङ्करम् ॥ ३१ ॥

मल्लि०—दूना इति। दूनाः = शरतप्ताः 'ल्वादिभ्यः' इति निष्ठानत्वम्
अरिबलात् शत्रुबलात्। ऊना ऊनबलाः। 'पञ्चमी विभक्ते' इति पञ्चमी। निरे
निःशब्दाः। कुतः। भीतास्त्रस्ताः। कुतः। यतः शितैस्तीक्ष्णैः शरैरभीता अभि
व्याप्ताः। इणः कर्मणि क्तः। ते गणास्तत्र रणे शङ्करमभयवचनेन सुखकरं शङ्क
शिवं बहु यथा तथा मेनिरेऽमन्यन्त ॥ ३१ ॥

हिन्दी—अर्जुनके बाणोंसे सन्तप्त, शत्रुके बलसे हीन बलवाले, मौन लि
हुए, अर्जुनके तीखे बाणोंसे विद्ध डरे हुए वे गण युद्धमें अभय वचनसे सुख देने
वाले शङ्करको अधिक मानने लगे ॥ ३१ ॥

महेषुजलधौ शत्रोर्वर्तमाना दुरुत्तरे।
प्राप्य पारमिवेशानमाशश्वास पताकिनी ॥ ३२ ॥

मल्लि०—महेष्विति। दुरुत्तरे = दुस्तरे शत्रोः सम्बन्धिनि महेषुजलधौ मह
बाणसागरे वर्तमाना पताकिनी=सेना। ईशानं शिवं पारं परतीरमिव। 'पारावा
परार्वाची' इत्यमरः। प्राप्य, आशश्वास प्राणिति स्म ॥ ३२ ॥

**हिन्दी**—शत्रु ( अर्जुन )के दुस्तर महान् बाणरूप समुद्रमें विद्यमान शिवजी-की सेना शिवकीजो पार करनेवाले तटके समान पाकर आश्वस्त हुई ॥ ३२ ॥

स बभार रणापेतां चमूं पश्चादवस्थिताम् ।
पुरःसूर्यादपावृत्तां छायामिव महातरुः ॥ ३३ ॥

**मल्लि०**—स इति । स शिवो रणापेतां=रणादपावृत्तां पराङ्मुखीभूतामत एव पश्चात् पृष्ठभागेऽवस्थितां चमूं पुरोऽग्रे स्थितः सूर्यः पुरःसूर्यः । रणोपमानमेषः । तस्मात्, अपावृत्तां परावृत्तां छायां महातरुरिव बभार । छायां तरुरिवात्मैकशरणां तां चमूं न मुमोचेत्यर्थः ॥ ३३ ॥

**हिन्दी**—शिवजीने युद्धसे विमुख अत एव पृष्ठ भागमें अवस्थित सेनाको आगे रहे हुए सूर्यसे हटी हुई छायाको जैसे महावृक्ष धारण करता है वैसे ही धारण कर लिया अर्थात् नहीं छोड़ा ॥ ३३ ॥

मुञ्चतीशे शराञ्जिष्णौ पिनाकस्वनपूरितः ।
दध्वान ध्वनयन्नाशाः स्फुटन्निव धराधरः ॥ ३४ ॥

**मल्लि०**—मुञ्चतीति । ईशे=हरे कर्तरि, जिष्णावर्जुने विषये शरान्मुञ्चति सति पिनाकस्य=शिवकार्मुकस्य स्वनेन=ध्वनिना पूरितो धराधर इन्द्रकीलः स्फुटन्निव = विदीर्यमाण इवेत्युत्प्रेक्षा । आशा दिशो ध्वनयन्=शब्दयुक्ताः कुर्वन्, दध्वान = शब्दं-कमरोत् । 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' । इत्यमरः ॥ ३४ ॥

**हिन्दी**—शिवजीने अर्जुनके प्रति बाण छोड़नेपर शिवधनु पिनाकके शब्दके पूर्ण इन्द्रकील पर्वत मानों विदीर्ण होता हुआ दिशाओंको शब्दमय करता हुआ शब्द करने लगा ॥ ३४ ॥

तद्गणा ददृशुर्भीमं चित्रसंस्था इवाचलाः ।
विस्मयेन तयोर्युद्धं चित्रसंस्था इवाचलाः ॥ ३५ ॥

( द्विचतुर्थयमकम् )

**मल्लि०**—तदिति । भीमं तयोर्हरपाण्डवयोः । तत् प्रसिद्धं युद्धं गणाः प्रमथाश्चित्रसंस्थाश्चित्राकारा अचलाः शैला इव । तथा चित्र आलेख्ये, संस्था = स्थितिर्येषां ते चित्रसंस्थाश्चित्रलिखिता इव, अचला आश्चर्यवशान्निश्चलाः सन्तो विस्मयेन ददृशुः ॥ ३५ ॥

**हिन्दी**—शिवजी और अर्जुनके उस युद्धको प्रमथलोग चित्राकार पर्वतोंके

समान और आश्चर्यसे चित्रलिखित पर्वतोंके समान निश्चल होते हुए आश्चर्यसे देखने लगे। यह पद्य द्वितीय और चतुर्थ चरणमें समान वर्णन्यास होनेसे द्विचतुर्थयमक-का उदाहरण है ॥ ३५ ॥

परिमोह्यमाणेन शिक्षालाघवलीलया।
जैष्णवी विशिखश्रेणी परिजह्ने पिनाकिना ॥ ३६ ॥

मल्लि०—परीति। शिक्षालाघवलीलयाऽभ्यासपाटवातिशयेन हेतुना परिमोह्यमाणेन व्यामोहयता। 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति परस्मैपदे प्राप्ते 'न पादमी'त्यादिना तत्प्रतिषेधादात्मनेपदं शानच्। 'णेविभाषा' इति कृत्स्थस्य नस्य वा णत्वम्। पिनाकिना = हरेण जिष्णोरर्जुनस्येयं जैष्णवी विशिखश्रेणी बाणसंघातः परिजह्ने = निरस्ता ॥ ३६ ॥

हिन्दी—अधिक अभ्यासकी कुशलतासे परिमोहित करनेवाले शिवजीने अर्जुनके बाणसमूहको दूर कर डाला ॥ ३६ ॥

अवद्यन्पत्रिणः शंभोः सायकैरवसायकैः।
पाण्डवः परिचक्राम शिक्षया रणशिक्षया ॥ ३७ ॥

( आद्यन्तयमकम् )

मल्लि०—अवद्यन्निति। पाण्डवोऽर्जुनः। अवसायकैरवसानकरैः। स्यतेर्ण्यन्तात् ण्वुल्प्रत्ययः। सायकैर्बाणैः शंभोः पत्रिणः = शरान्। अवद्यन् = खण्डयन्। द्यतेः शतृप्रत्ययः। 'ओतः श्यनि' इत्योकारलोपः। शिक्षया शक्तुं प्रभवितुमिच्छया। उत्साहेनेत्यर्थः। रणे शिक्षयाऽभ्यासेन च परिचक्राम। उत्साहनैपुण्याभ्यां चचारेत्यर्थः ॥ ३७ ॥

हिन्दी—अर्जुनने अन्त करनेवाले बाणोंसे शिवजीने बाणोंको खण्डित कर दिया, उत्साहसे और युद्धके अभ्याससे भी वे घूमने लगे।

इस श्लोकमें चतुर्थ चरणमें 'शिक्षया रणशिक्षया' इस प्रकार आदि और अन्तमें 'शिक्षया' की आवृत्ति होनेसे आद्यन्तयमक अलंकार है ॥ ३७ ॥

चारचुञ्चुश्चिरारेची चञ्चच्चीररुचा रुचः।
चचार रुचिरश्चारु चारैराचारचञ्चुरः ॥ ३८ ॥

( द्व्यक्षरः )

**मल्लि०**—चारेति । चारैर्गतिविशेषैर्वित्त इति चारचुञ्चुः । 'तेन वित्तश्चुञ्चुप्चणपौ' इति चुञ्चुप्प्रत्ययः । चिरमारेचयति = रिक्तीकरोति शत्रूनिति चिरारेची । चञ्चतश्चलतश्चीरस्य = वल्कलस्य, रुचा = प्रभया । रोचत इति रुचः = शोभमानः । 'इगुपधे—'ति कः । रुचिरः = सुन्दरः । चञ्चूर्यते भृशं चरतीति चञ्चुरः । चरतेर्यङन्तात्पचाद्यच् । 'चरफलोश्च' इति नुमागमः । 'यङोऽचि च' इति यङो लुक् । आचारस्य = युद्धव्यवहारस्य, चञ्चुरो भृशमाचरितः स मुनिश्चारु यथा तथा चारैश्चक्रादिबन्धैर्गतिविशेषैः । चचार । 'चारःप्रियालवृक्षे स्याद् गतौ बन्धापसर्पयोः' इति विश्वः ॥ ३८ ॥

**हिन्दी**—गतिविशेषसे प्रसिद्ध, बहुत समय तक शत्रुओंको रिक्त करनेवाले, हिलते हुए वल्कलकी कान्तिसे शोभित, युद्ध व्यवहारका अतिशय आचरण किये हुए वे मुनि ( अर्जुन ) सुन्दर गतिभेदोंसे घूमने लगे ।

इस श्लोकमें च और र इन दो अक्षरोका अनुप्रास है ॥ ३८ ॥

स्फुरत्पिशङ्गमौर्वीकं धुनानः स बृहद्धनुः ।
धृतोल्कानलयोगेन तुल्यमंशुमता बभौ ॥ ३९ ॥

**मल्लि०**—स्फुरदिति । स मुनिरर्जुनः स्फुरन्ती पिशङ्गी=पिशङ्गवर्णा मौर्वी = ज्या यस्य तत्तथोक्तम् । 'नद्यृतश्च' इति कप्प्रत्ययः । बृहद्धनुर्गाण्डीवं, धुनानः = कम्पयन् । उल्कैवानलस्तेन धृतो योगो येन तेन । अंशुमताऽर्केण सूर्येण तुल्यं बभौ । उपमा ॥ ३९ ॥

**हिन्दी**--अर्जुन चमकती हुई पीली प्रत्यञ्चासे युक्त विशाल धनु ( गाण्डीव )-को कम्पित करते हुए उल्कारूप अग्निसे युक्त सूर्यके समान शोभित हुए ॥ ३९ ॥

पार्थबाणाः पशुपतेरावव्रुर्विशिखावलीम् ।
पयोमुच इवारन्ध्राः सावित्रीमंशुसंहतिम् ॥ ४० ॥

**मल्लि०**—पार्थेन । पार्थबाणा अर्जुनशराः पशुपतेर्विशिखावलीं=शरसंधानम् । सवितुरियं सावित्री ताम् । अंशुसंहतिं किरणसमूहम् । अरन्ध्रा निबिडाः पयोमुचो मेघा इव । आवव्रुस्तिरोदधुः ॥ ४० ॥

**हिन्दी**—अर्जुनके बाणने शिवजीकी बाणपङ्क्तिको जैसे घने मेघ सूर्यकी किरणपङ्क्तिका आच्छादित करते हैं उसी तरह आच्छादित कर दिया ॥ ४० ॥

शरवृष्टिं विधूयोर्वीमुदस्तां सव्यसाचिना।
रुरोध मार्गणैर्मार्गं तपनस्य त्रिलोचनः॥ ४१॥

मल्लि०---शरेति। त्रिलोचनः=शिवः। सव्येन सचते = समवैतीति तेन सव्यसाचिनाऽर्जुनेन। उदस्तां क्षिप्तामुर्वीं महतीं शरवृष्टिं मार्गणैः शरैर्विधूय = निरस्य तपनस्य रवेर्मार्गं रुरोधावव्रे॥ ४१॥

हिन्दी—शिवजीने अर्जुनसे छोड़ी गई घनी बाणवृष्टिको अपने बाणोंसे हटाकर सूर्यके मार्गको अवरुद्ध कर डाला॥ ४१॥

तेन व्यातेनिरे भीमा भीमार्जनफलाननाः।
न नानुकम्प्य विशिखाः शिखाधरजवाससः॥ ४२॥

( श्रृङ्खलायमकम् )

मल्लि०---तेनेति। तेन = शिवेन भीमा भयंकरास्तथा भियो भयस्य मार्जनं निरासस्तदेव फलं प्रयोजनं येषां तान्याननान्यग्राणि येषां ते भीमार्जनफलाननाः। तथा शिखाधरा मयूरास्तेषु जातानि शिखाधरजानि = बर्हाणि तानि वासांसीव पक्षा येषां ते शिखाधरजानि मयूरपक्षिण इत्यर्थः। विशिखा बाणा अनुकम्प्य=कृपां कृत्वा न व्यातेनिर इति न। किं त्वनुकम्प्यैवेत्यर्थः। अनुजिघृक्षुत्वादिति भावः। संभाव्यनिषेधने द्वौ प्रतिषेधावित्युक्तम्॥ ४२॥

हिन्दी—शिवजीने भयङ्कर भयनिवारणरूप प्रयोजनरूप अग्रभाव ( नोक )-वाले तथा मयूरके पंखरूप जिनके वस्त्र थे ऐसे बाणोंको दयासे नहीं छोड़ा था यह नहीं, किन्तु दयासे छोड़ा था।

इस श्लोकमें प्रथम चरणके अन्तमें और द्वितीय चरणके आरम्भमें भीमाः इन दो वर्णोंकी और तृतीय चरणके अन्त्यमें 'शिखा( : )' और चतुर्थ चरणके आरम्भमें 'शिखा—' इन दो वर्णोंकी आवृत्तिसे 'श्रृङ्खलायमक' नामक अलंकार है॥ ४२॥

द्युवियद्गामिनी तारसंरावविहतश्रुतिः।
हैमीषुमाला शुशुभे विद्युतामिव संहतिः॥ ४३॥

( गूढचतुर्थपादः )

मल्लि०—द्युवियदिति। द्यां = स्वर्गं वियदन्तरिक्षं च गामिनी व्यापिनी

द्युवियद्गामिनी । द्वितीयाप्रकरणे श्रितादिषु गम्यादीनामुपसंख्यानात्समासः ।
तारेणोच्चैस्तरेण संरावेण =नादेन विहता विद्धाः श्रुतयः कर्णा यया सा तथोक्ता ।
हैमी हेममयी इषुमाला शिवशरावलिर्विद्युतां संहतिरिवोक्तविशेषणा विद्युन्मालेव ।
शुशुभे चतुर्थपादवर्णानां त्रिपाद्यां संभवाद् गूढचतुर्थपादमाहुः ॥ ४३ ॥

हिन्दी—स्वर्ग और आकाशको व्याप्त करनेवाली और ऊँची आवाजसे कानों-को विद्ध करनेवाली ( फाड़नेवाली शिवजीकी सुनहली बाणपङ्क्ति बिजलीकी श्रेणीकी तरह शोभित हो गई ।

इस पद्यके चतुर्थ चरणके वर्णोंका पहलेके तीन चरणोंमें सम्भव होनेसे 'गूढ-चतुर्थपाद' कहते हैं ॥ ४३ ॥

विलङ्घ्य पत्त्रिणां पङ्क्तिं भिन्नः शिवशिलीमुखैः ।
ज्यायो वीर्यमुपाश्रित्य न चकम्पे कपिध्वजः ॥ ४४ ॥

मल्लि०—विलङ्घ्येति । शिवशिलीमुखैः पत्त्रिणा पङ्क्तिं निजशरावलिं विलङ्घ्यातिक्रम्य भिन्नो विद्धः कपिध्वजोऽर्जुनो ज्यायः=प्रशस्तम् । 'वृद्धप्रशस्ययो-र्ज्यायान्' । इत्यमरः । वीर्यं सत्त्वम् । उपाश्रित्यावस्थाय, न चकम्पे = न चचाल । किन्तु तान्सहन्नवतस्थावित्यर्थः ॥ ४४ ॥

हिन्दी—शिवजीके बाणोंसे अपने बाणोंकी पङ्क्तिको काटकर विद्ध होकर अर्जुन उत्तम बलका अवलम्बन करके युद्धस्थलसे विचलित नहीं हुए ॥ ४४ ॥

जगतीशरणे युक्तो हरिकान्तः सुधासितः ।
दानवर्षी कृताशंसो नागराज इवाबभौ ॥ ४५ ॥
( अर्थत्रयवाची )

मल्लि०—जगतीति । अर्थत्रयवाची श्लोकोऽयम् । तत्रादौ 'अगराज' इति पदच्छेदमाश्रित्य प्रथमोऽर्थोऽभिधीयते—( १ ) ईशस्य रणे युक्तः शक्तः । अन्यत्र, जगतीशरणे=भूरक्षणे, युक्तः=स्थितः । विधिनेति शेषः । हरिः=सिंह इव कान्तो मनोहरः । अन्यत्र, हरीणां = सिंहानां कान्त आवासदानात्प्रियः । सुष्ठु दधाति = पालयति प्रजा इति सुधाः । क्विबन्तः । असितः कृष्णवर्णः । ततो विशेषणसमासः । अन्यत्र—सुधालेपद्रव्यविशेषस्तद्वत् सितो=धवलः । दानवर्षी=बहुप्रदः, कृताशंसः= कृतजयाभिलाषः । अन्यत्र, दानवैर्दैत्यैर्ऋषिभिः इना कामेन न च कृताशंसा=नाना-फलाभिलाषी यस्मिन्स ना = नरोऽर्जुनः । अगराजो हिमवानिव जगत्यावभावित्ये-

कोऽर्थः ॥ ( २ ) अथ ऐरावतसाम्यमुच्यते—जगतीं=भुवं, श्यन्ति=तनुकुर्वन्तीति ते जगतीशा राक्षसास्तेषां रणस्तत्र युक्तो विहितसमर्थः । हरिकान्त इन्द्रप्रियः । उभयत्रापि समानमेतत् । सुधासितोऽमृतः स्वच्छः । एकत्र—शीलतः, अन्यत्र—वर्णत इति विवेकः । दानवर्षी = धनप्रदो मदस्रावी च । कृताशंस उभयत्र कृतजिगीषः । पार्थो नागराज इव=ऐरावत इव । आबभाविति द्वितीयोऽर्थः । ( ३ ) अथ शेषोपम्यमुच्यते—जगतीशरणे=भूरक्षणे युक्तो नियुक्तः । दैवेनेति शेषः । 'शरणं गृहरक्षित्रोः' इत्यमरः । हरिकान्तः = कृष्णप्रियः । उभयत्रापि तुल्यम् । सुष्ठु दधातीति सुधा । वसुधेति केचित् । एकदेशग्रहणात् समुदायग्रहणम् । तत्र सितो बद्धः । 'षिञ् बन्धने' क्तः । वन्यत्र—सुधयाऽमृतेन सितो बद्धः । अमृतप्रिय इत्यर्थः । दानवाश्च ऋषयश्च ( ईर्लक्ष्मीश्च ताभिः ) कृताशंसो = विहितप्रशंसः । उभयत्रापि तुल्यमेतत् । सोऽर्जुनो नागराजः=शेष इवाबभाविति तृतीयोऽर्थः ॥ ४५ ॥

**हिन्दी**—इस श्लोकमें अर्जुन की पर्वतमें, ऐरावत हाथी में और शेषनागमें समानता दिखलाई गई है । पहले पर्वत पक्षमें—

( १ )—जगति = लोकमें, ईशरणे = शिवजीके युद्धमें, युक्तः = समर्थ, हरिकान्तः=हरि ( सिंह ) के समान कान्त ( सुन्दर ), सुधासितः = सुधाः ( प्रजाओंके पालक ) असित ( कृष्ण वर्ण ), दानवर्षी = दानकी वृष्टि करनेवाले, कृताशंसः = जयकी आशंसा ( संभावना ) किये हुए अर्जुन, जगतीशरणे = जगती ( पृथ्वी ) की रक्षामें युक्तः = ब्रह्माजीसे नियुक्त, हरिकान्तः = हरि ( सिंह ) को आश्रय देनेसे, कान्तः ( प्रिय ) सुधासितः=सुधा ( चूने ) के समान सित ( शुक्लवर्ण ), दानवर्षी=अनेक प्रकारके रत्नोंके दानकी वृष्टि करनेवाला, ऐसा अगराजः=अगों ( पर्वतों ) के राजा हिमालयके समान । आबभौ=शोभित हुए ।

( २ )—नागराज ऐरावत हाथीके पक्षमें योजना—

जगतीशरणे=जगती=पृथ्वीको जो श्यन्ति =क्षीण करते हैं ऐसे राक्षसोंके रण ( युद्ध )में युक्त=समर्थ । हरिकान्तः = हरि ( इन्द्र )का कान्त=प्रिय, सुधासितः = सुधा (अमृत) के समान सितः =स्वच्छ । दानवर्षी=दान ( मदजल )की वृष्टि करनेवाला, कृताशंसः = जयकी संभावनावाला ऐसे ऐरावतके समान अर्जुन शोभित हुए । अबभौ = शोभित हुए ।

( ३ )—शेषनागके पक्षमें योजना—

जगतीशरणे=जगती ( पृथ्वी )के शरणे ( रक्षामें ) अर्थात् धारण करनेमें युक्तः=

ब्रह्माजीसे नियुक्त, हरिकान्तः = हरि ( भगवान् विष्णु ) के कान्तः = शयनका आधार होनेसे प्रिय । सुधासितः = सुधा ( अमृत )के पान करानेमें, सितः = बद्ध अर्थात् आसक्त । दानवर्षी कृताशंसः = दानव, ऋषि और ( ई ) लक्ष्मीसे आशंसा ( प्रशंसा )किये गये, ऐसे नागराज = नागोंके राजा शेषके समान, आत्रभौ=अर्जुन शोभित हुए । इस पद्यमें श्लेष और उपमाका सङ्कर अलङ्कार है ॥ ४५ ॥

विफलीकृतयत्नस्य क्षतबाणस्य शंभुना ।
गाण्डीवधन्वनः खेभ्यो निश्चक्राम हुताशनः ॥ ४६ ॥

**मल्लि०**—विफलीति । शंभुना क्षतबाणस्य अत एव विफलीकृतयत्नस्य निष्फलप्रयत्नस्य, गाण्डीवं धनुर्यस्य तस्य गाण्डीवधन्वनोऽर्जुनस्य । 'वा संज्ञायाम्' इत्यनङादेशः । खेभ्य इन्द्रियरन्ध्रेभ्यः । 'खमिन्द्रये सुखे स्वर्गे' इति विश्वः । हुताशनोऽग्निः । निश्चक्राम = निष्क्रान्तः । क्रोधादिति भावः ॥ ४६ ॥

**हिन्दी**—शिवजीसे क्षीण बाणोंवाले, निष्फल यत्नवाले, अर्जुनके इन्द्रियोंके छिद्रोंसे क्रोधके कारण आग निकल पड़ी ॥ ४६ ॥

स पिशङ्गजटावलिः किरन्नुरु तेजः परमेण मन्युना ।
ज्वलितौषधिजातवेदसा हिमशैलेन समं विदिद्युते ॥ ४७ ॥

**मल्लि०**—स इति । पिशङ्गजटावलिः पिशङ्गजटाजूटः परमेणोत्कृष्टेन मन्युना क्रोधेन । उरु = महत्तेजः किरन् = विक्षिपन् सोऽर्जुनो ज्वलिता ओषधयस्तृणज्योतींषि जातवेदा दवाग्निश्च यस्मिंस्तेनहिमशैलेन, समं=तुल्यं हिमाद्रिरिव विदिद्युते हिमाद्रिवच्छुशुभ इति बिम्बप्रतिबिम्बभावोपमा ॥ ४७ ॥

**हिन्दी**—पीली जटापङ्क्ति वाले बढ़े हुए क्रोधसे अधिक तेजको विकीर्ण करते हुए अर्जुन जलती हुई तृणज्योति और दवाग्निवाले हिमालयकी तरह शोभित हुए ॥ ४७ ॥

शतशो विशिखानवद्यते भृशमस्मै रणवेगशालिने ।
प्रथयन्ननिवार्यवीर्यतां प्रजिघायेषुमघातुकं शिवः ॥ ४८ ॥

**मल्लि०**—शतश इति । शिवः शतशो विशिखानवद्यते खण्डयते रणवेगशालिने रणसंरम्भशोभिनेऽस्मै पार्थाय भृशमत्यर्थम् । अनिवार्यवीर्यताम् । निजामिति शेषः । तस्मै प्रथयन् दर्शयन् । किं तु अघातुकममारकम् । 'लष पते'—त्यादिना

हन्तेरुत्वम् । इषुम् । जातावेकवचनम् । प्रजिघाय=प्रयुयुजे । 'हि गतौ' इति धातो-लिट् । 'हेरचङि' इति कुत्वम् ॥ ४८ ॥

हिन्दी--शिवजीने सैकड़ों बाणोंको खण्डित करते हुए, युद्ध-वेगसे शोभित होनेवाले अर्जुनको अपने अनिवार्य पराक्रमको दिखलाते हुए हत्या न करनेवाले बाणोंसे प्रहार किया ॥ ४८ ॥

शम्भोर्धनुर्मण्डलतः प्रवृत्तं तं मण्डलादंशुमिवांशुभर्तुः ।
निवारयिष्यन्विदधे सिताश्वः शिलीमुखच्छायवृतां धरित्रीम् ॥ ४९ ॥

**मल्लि०** – शम्भोरिति । सिताश्वोऽर्जुनः शम्भोर्धनुर्मण्डलतो धनुर्वलयात् प्रवृत्तं निष्क्रान्तं तमिषुम् । अंशुभर्तुरर्कस्य मण्डलात् प्रवृत्तं अंशुमिव । अत्रापीषुवज्जातावेक-वचनम् । निवारयिष्यन्=निवारयितुकामः । क्रियार्थक्रियायाम् लृटि तस्य शत्रादेशः । धरित्रीं = भुवं, शिलीमुखानां छाया शिलीमुखच्छायम् । 'छाया बाहुल्ये' इति नपुंसकत्वम् । तेन वृतां = व्याप्तां विदधे = कृतवान् । शरजालच्छायावृता धरित्री-मकरोदित्यर्थः । उपमालंकारः ॥ ४९ ॥

**हिन्दी**--अर्जुनने सूर्यमण्डलसे निकले हुए किरणके समान शिवजीके धनु-( पिनाक )से निकले हुए बाणको निवारण करनेकी इच्छा कर पृथिवीको बाणोंकी छायासे व्याप्त कर डाला ॥ ४९ ॥

**घनं विदार्यार्जुनबाणपूगं ससारबाणोऽयुगलोचनस्य ।**
**घनं विदार्यार्जुनबाणपूगं ससारबाणोऽयुगलोचनस्य ॥ ५० ॥**

**मल्लि०**--घनमिति । अयुगलोचनस्य=विषमनेत्रस्यालोचनस्य । लोच्यतेऽसौ लोचनः । कर्मणि ल्युट् । न लोचनोऽलोचनस्तस्य अलोचनस्याचाक्षुषज्ञानविषयस्य संबन्धी सारो बलं बाणः शब्दताभ्यां सारबाणाभ्यां सह वर्तत इति ससारबाणः । बवयोरभेद इत्युक्तम् । न युज्यते कुत्रापीत्यपीत्ययुक्=सङ्गरहितः । क्विप् । बाणः= शरः । जातावेकवचनम् । घनं सान्द्रम् अर्जुनस्य बाणपूगं=शरव्रातं, विदार्य=विभिद्य घनं = निबिडं विदार्यां भूमिकूष्माण्डयो लताविशेषा अर्जुनाः = ककुभवृक्षा बाणा नीलसैरेयकाः पूगाः क्रमुकास्तेषाम् । 'विभाषा वृक्षे—'त्यादिना द्वन्द्वैकवद्भावः । विदार्यार्जुनबाणपूगं ससार । विवेशेत्यर्थः । 'सृ गतौ' । यद्वा,—तदानीमेव युगलो-चनस्यार्जुनस्य ससारेत्यर्थः ॥ ५० ॥

**हिन्दी**—-अयुगलोचन ( विषम नेत्र ) अर्थात् शिवजीका अलोचनस्य = लोचन ( नेत्र ) उससे रहित अर्थात् नेत्रसे उत्पन्न ज्ञानसे रहित सार ( बल ) और बाण (शब्द )से युक्त और मङ्गसे रहित बाणने गाढ रूपसे अर्जुनके बाणसमूहको विदारण कर गाढ रूपसे भूमिकूष्माण्डो [ लतविशेष ] अर्जुनवृक्ष, बाणवृक्ष और सुपारीके पेड़ोंका विदारण कर अर्जुनके बाणसमूहके भीतर प्रवेश किया।

इस पद्यमें पूर्वार्द्ध और उत्तरार्द्धके वर्ण तुल्यरूप हैं ॥ ५० ॥

रुजन्महेषून्बहुधाशुपातिनो मुहुः शरौघैरपवारयन्दिशः।
चलाचलोऽनेक इव क्रियावशान्महर्षिसङ्घैर्बुबुधे धनञ्जयः ॥ ५१ ॥

**मल्लि०**—रुजन्नित्यादि। बहुधाशुपातिनः शीघ्रमापततो महेषून् मुहुः शरौघैः रुजन् = भञ्जयन्। तथा दिशश्चापवारयन्नाच्छादयन्। क्रियावशाद् युद्धकर्मायत्ततया। चलाचलोऽतिचञ्चलो धनंजयोऽर्जुनो महर्षिसङ्घैरनेको बहुविध इव बुबुधे = ददृशे ॥ ५१ ॥

**हिन्दी**—अनेक प्रकारसे शीघ्र आ पड़नेवाले विशाल बाणोंको बारंबार अपने बाणसमूहोंसे काटते हुए और दिशाओंको आच्छादित करते हुए युद्धकर्ममें लगे रहनेसे अति चञ्चल अकेले अर्जुनको महर्षिसमूहने अनेक अर्जुनके समान देखा ॥ ५१ ॥

विकाशमीयुर्जगतीशमार्गणा विकाशमीयुर्जगतीशमार्गणाः।
विकाशमीयुर्जगतीशमार्गणा विकाशमीयुर्जगतीशमार्गणाः ॥ ५२ ॥
( महायमकम्। )

**मल्लि०**—विकाशमिति। जगतीशस्य पृथिवीपतेरर्जुनस्य मार्गणा बाणा विकाशं=प्रसारम् ईयुः। तथा, जगति लोके ईशमार्गणाः=शंभुशरा विकाशं विषमगतिम्। ईयुः भङ्गमीयुरित्यर्थः। तथा जगतीं श्यन्ति = तनूकुर्वन्तीति जगतीशा दानवाः। 'आतोऽनुपसर्गे कः'। तान्मारयन्तीति जगतीशमाराः। म्रियतेऽण्यन्तात्क्विप्। ते च ते गणाः = प्रमथाः जगतीशमारगणा विकाशमुल्लासं हर्षम्। ईयुः। प्रापुरित्यर्थः। अहो देवेऽप्यस्य पराक्रमप्रसर इति विस्मयादिति भावः। तदानीं मार्गयन्तीति मार्गणा अन्वेषकाः। कर्तरि ल्युट्। जगतीशस्य त्रैलोक्यनाथस्य मार्गणा अन्वेषकाः शिवद्रष्टारो देवर्ष्यादयो वीनां = पक्षिणां काशो गतिरत्रेति विकाशमाकाशम्। ईयुः। दिदृक्षयेति भावः ॥ ५२ ॥

**हिन्दी**—जगतीश [ पृथिवीके स्वामी अर्जुन ] के मार्गणाः = बाण, चारों ओर फैल गये, तथा जगति=लोकमे, ईशमार्गणाः शिवजीके बाण विकाशम्= विषम गतिको ईयुः=प्राप्त हुए, अर्जुन खण्डित हुए। इसी प्रकार जगतीम्= पृथ्वीको श्यन्ति=तनूकुर्वन्ति इति जगतीशाः=अर्थात् पृथ्वीको क्षीण करनेवाले असुर, जगतीशान्=अर्थात् असुरोंको, मारयन्तीति जगतीशमारः=असुरोंको मारने वाले, ते च ते गणाः असुरोंको मारनेवाले गण, विकासम्=हर्षम् हर्षको ईयुः = प्राप्त हुए। एवम्जगतीशमार्गणाः = जगतीशस्य = शिवस्य मार्गणाः = अन्वेषकाः, अर्थात् शिवजीका अन्वेषण करनेवाले अर्थात् देवता और ऋषि आदि। विकाशं=वीनाम् [ पक्षिणाम् ] काशः [ गतिः ] अस्मिन् इति विकाशम् अर्थात् जहाँ पक्षियोंकी गति है अर्थात् आकाशको ईयुः = प्राप्त हुए, शिवजीको देखनेके लिए आकाशमें प्राप्त हुए॥

**भावार्थ**—अर्जुनके बाण चारों ओर फैल गये, लोकमें शिवजीके बाण विषम गतिको प्राप्त हुए। अर्जुनके बाण खण्डित हुए। असुरोंको मारनेवाले प्रमथ- गण आश्चर्यको प्राप्त हुए। शिवजीका अन्वेषण करनेवाले देवता और ऋषिगणोंके समूह आकाशमें प्राप्त हुए।

इस पद्यमें चारों चरणोंकी पदावली समान रूपमें रहनेसे महायमक नामक अलङ्कार है॥ ५२॥

संपश्यतामिति शिवेन वितायमानं
लक्ष्मीवतः क्षितिपतेस्तनयस्य वीर्यम्।
अङ्गान्यभिन्नमपि तत्त्वविदां मुनीनां
रोमाञ्चमञ्चिततरं बिभरांबभूवुः॥ ५३॥

इति भारविकृतौ किरातार्जुनीये महाकाव्ये पञ्चदशः सर्गः।

●

**मल्लि०**—संपश्यतामिति। इति=इत्थं शिवेन वितायमानं = विस्तार्यमाणम्। 'तनोतेर्यकि' इति वैकल्पिक आकारादेशः। लक्ष्मीवतो जयश्रीमतः। 'मादुपधाया-' इत्यादिना मतुपो मस्य वकारः। क्षितिपतेस्तनयस्यार्जुनस्य वीर्यं शौर्यं संपश्यतां तत्त्वविदामपि हरेरंशावतारोऽयमिति विदुषामपि। किमुतान्येषामिति भावः। मुनीनामङ्गानि गात्राणि। अभिन्नमविरलम्। अञ्चिततरमतिरुचिरतरं रोमाञ्चं

रोमहर्षं बिभरांबभूवुर्बभ्रुः । 'भीह्री—'त्यादिना विकल्पादाम्प्रत्ययः ॥ ५३ ॥

इति महाकविभारविकृतौ महाकाव्ये किरातार्जुनीये पञ्चदशः सर्गः ।

●

हिन्दी—इस प्रकार शिवजीसे विस्तीर्ण किये जाते हुए राजकुमार अर्जुनके पराक्रमको देखते हुए तत्त्ववेत्ता मुनियोंके भी शरीर लगातार अति रमणीय रोमाञ्चको धारण करने लगे अर्थात् तत्त्ववेत्ता मुनिलोग भी रोमाञ्चित हो गये ॥५३ ॥

किरातार्जुनीय महाकाव्यका पन्द्रहवां सर्ग समाप्त हुआ ।

●

## षोडशः सर्गः

ततः किराताधिपतेरलघ्वीमाजिक्रियां वीक्ष्य विवृद्धमन्युः ।
स तर्कयामास विविक्ततर्कश्चिरं विचिन्वन्निति कारणानि ॥ १ ॥

मल्लि०—तत इति । ततोऽनन्तरं किराताधिपतेः संबन्धिनीम् । अलघ्वीम् आजिगुर्वीम् क्रियां रणकर्म वीक्ष्य विवृद्धमन्युर्विवृद्धकोपो विविक्तो निष्कलङ्कस्तर्क ऊहो ज्ञानं वा यस्य सोऽर्जुनः कारणानि रणभराशक्तिकरणानि विचिन्वन् विमृशन् । इति इत्थं वक्ष्यमाणप्रकारेण तर्कयामासाभ्यूहितवान् ॥ १ ॥

हिन्दी—तब अर्जुन किरातराजका गौरवपूर्ण युद्ध कर्म देखकर बढ़े हुए क्रोधसे युक्त और निष्कलङ्क ज्ञानवाला होकर उनसे साथ अपने असामर्थ्यके कारणोंका विचार करते हुए इस प्रकार तर्कना करने लगे ॥ १ ॥

अथ त्रयोविंशतिश्लोकैर्वितर्कमेवाह—

मदस्रुतिश्यामितगण्डलेखाः क्रामन्ति विक्रान्तनराधिरूढाः ।
सहिष्णवो नेह युधामभिज्ञा नागा नगोच्छ्रायमिवाक्षिपन्तः ॥ २ ॥

मल्लि०—मदेत्यादि । इहास्मिन्युद्धे मदस्रुतिभिर्मदप्रवाहैः श्यामाः कृता इति श्यामिता गण्डलेखाः कपोलभागा येषां ते विक्रान्ताः पराक्रमं कुर्वन्तः । कर्तरि क्तः । 'शूरो वीरश्च विक्रान्तः' इत्यमरः । तैर्नरैरधिरूढाः सहिष्णवो रणभरक्षमा

युधां युद्धानामभिज्ञाः । शिक्षिता इत्यर्थः । कृद्योगात्कर्मणि षष्ठी । किंच, नगानां च्छ्रायं पर्वतानामौन्नत्यम् । घञन्तेनोपसर्गस्य समासो नोपसृष्टाद् घञ्प्रत्ययः। 'श्रि भुवोऽनुपसर्गे' इत्यत्रानुपसर्गे इति निषेधात् । आक्षिपन्तः प्रतिषेधयन्त इव स्थि तथोन्नता इत्यर्थः । नागा गजा इह संग्रामे न क्रामन्ति न चरन्ति । यदा युद्धा ष्विति शेषः । एवमुत्तरत्रापि सर्वत्र द्रष्टव्यम् । तथापि कथं मे शक्तिह्रासोऽभि सर्वत्र तात्पर्यार्थः ॥ २ ॥

**हिन्दी**—इस युद्ध में मदोंके प्रवाहसे काले किये गये कपोलभागोंसे यु वीर पुरुषोंसे अधिरूढ़, युद्धभार धारण करनेमें सहिष्णु, युद्ध करनेमें शिक्षि पर्वतको ऊँचाईको भी आक्षेप करते हुए, अर्थात् पर्वतके समान ऊंचे हाथी नहीं विरचण करते है ॥ २ ॥

विचित्रया चित्रयतेव भिन्नां रुचं रवेः केतनरत्नभासा ।
महारथौघेन न संनिरुद्धा पयोदमन्द्रध्वनिना धरित्री ॥ ३ ॥

**मल्लि०**—विचित्रेति । विचित्रया नानावर्णया केतनानां रत्नानि तेषां भा प्रभया भिन्नां संवलितां रवे रुचं कान्ति चित्रयता विचित्रवर्णा कुर्वता स्थितेनेति केतनौन्नत्यनिमित्तेयमुत्प्रेक्षा । पयोदमन्द्रध्वनिना मेघगम्भीरघो महतां रथानामोघेन समूहेन धरित्री न सन्निरुद्धा नावृता ॥ ३ ॥

**हिन्दी**—अनेक वर्णोंवाली पताकाओंकी कान्तिसे मिश्रित, सूर्यकी कान्ति विचित्र वर्णोंवाली करते हुएके समान स्थित मेघके समान गम्भीर शब्द करने विशाल रथोंके समूहसे पृथिवी भी आच्छादित नहीं है ॥ ३ ॥

समुल्लसत्प्रासमहोर्मिमालं परिस्फुरच्चामरफेनपङ्क्ति ।
विभिन्नमर्यादमिहातनोति नाश्वीयमाशा जलधेरिवाम्भः ॥ ४ ॥

**मल्लि०**—समुल्लसदिति । इह = युद्धे प्रासाः = कुन्ताः । 'प्रासस्तु कुन्त इत्यमरः । ते महोर्मय इव तेषां मालाः समुल्लसन्त्यो यत्र तत् समुल्लसत्प्रासमहोर्मि मालम् । चामराणि फेना इव चामरफेनास्तेषां पङ्क्तयः परिस्फुरन्त्यश्चामरफेना पङ्क्तयो यत्र तत्तथोक्तम् । अश्वीयमश्वसमूहः । 'वृन्दे त्वश्वीयमाश्ववत्' इत्यमरः जलधेरम्भ इव विभिन्नमर्यादमुन्मर्यादमुच्छृङ्खलं यथा तथा, आशा दिशो नातनोति = नावृणोति ॥ ४ ॥

**हिन्दी**—इस युद्धमें बड़ी तरङ्गोंके समान चमकती हुई भालोंकी पङ्क्तिवाले फेनोंके समान चामरोंकी पङ्क्तिवाले, घोड़ोंके समूह जलके समान मर्यादाका उल्लङ्घन नहीं करते हैं ॥ ४ ॥

हताहतेत्युद्धनभीष्मघोषैः समुज्झिता योद्‌धृभिरभ्यमित्रम् ।
न हेतयः प्राप्ततडित्त्विषः खे विवस्वदंशुज्वलिताः पतन्ति ॥ ५ ॥

**मल्लि०**—हतेति । हत = प्रहरत । आहत = विध्यत । हन्तेर्लोट् । मध्यमपुरुषबहुवचनम् । 'अनुदात्तोपदेशे—'त्यादिनाऽनुनासिकलोपः । आहतेत्यत्र कर्मणः प्रयोगासंभवेऽपि हन्तेः स्वाभाविकसकर्मकत्वस्यानपायात् । अकर्मकत्वस्य चात्राविवक्षितत्वेन कर्मनिवृत्त्यैव तन्निवृत्तेः 'आङो यमहनः' इति नात्मनेपदम् । इत्येवमुद्धताः = प्रगल्भा भीमाश्च घोषा येषां तैः । योद्‌धृभिर्योधैः । अभ्यमित्रम॰ मित्रानभि समुज्झिता मुक्ता विवस्वतोंऽशुभिः । प्रतिफलितैरिति भावः । ज्वलिता = दीपिता अत एव प्राप्तस्तडितां त्विष इव त्विषो याभिस्ता हेतयः शस्त्राणि । खे न पतन्ति । समुल्लसन्तो न दृश्यन्त इत्यर्थः । 'हेतिः स्यादायुधे' इति विश्वः ॥ ५ ॥

**हिन्दी**—इस युद्धमें 'मारो, वेध करो', इस प्रकार उद्धत और भयङ्कर शब्द करनेवाले योद्धाओंसे शत्रुओं पर छोड़े गये प्रतिबिम्बित सूर्यकिरणोंसे प्रदीपित, बिजलीकी समान कान्तिको प्राप्त करने वाले शस्त्र भी आकाशमें नहीं गिर रहे हैं ॥ ५ ॥

अभ्यायतः संततधूमधूम्रं व्यापि प्रभाजालमिवान्तकस्य ।
रजः प्रतूर्णाश्वरथाङ्गनुन्नं तनोति न व्योमनि मातरिश्वा ॥ ६ ॥

**मल्लि०**—अभीति । अभ्यायतो वीरान्हन्तुमभ्यागच्छतः । इणः शतृप्रत्ययः । अन्तकस्य = कालस्य संबन्धि संततं = सततं धूमवद्धूम्रं व्यापि व्यापकं प्रभाजालमिव स्थितं प्रतूर्णैः = वेगवद्भिरश्वै रथाङ्गैः = रथचक्रैश्च नुन्नं = प्रेरितं रजो मातरिश्वा मरुत् । व्योमन्यन्तरिक्षे न तनोति = न विस्तारयति ॥ ६ ॥

**हिन्दी**—इस युद्धमें वीरोंको मारनेके लिए सम्मुख आते हुए यमराजके निरन्तर धूमके समान धूम्रवर्णवाली व्यापक, कान्तिसमूहके समान स्थित, वेगवाले घोड़ों और रथोंके पहियोंसे प्रेरित धूलको हवा भी आकाशमें नहीं फैला रही है ॥ ६ ॥

भूरेणुना रासभधूसरेण तिरोहिते वर्त्मनि लोचनानाम्।
नास्त्यत्र तेजस्विभिरुत्सुकानामह्नि प्रदोषः सुरसुन्दरीणाम् ॥ ७ ॥

मल्लि०—भूरेणुनेति। अत्राहवे रासभो गर्दभस्तद्वद्धूसरेणेषत्पाण्डुना। 'रासभो गर्दभः खरः' इत्यमरः। 'ईषत्पाण्डुस्तु धूसरः' इति च। भूरेणुना = रजसा लोचनानां वर्त्मनि = चक्षुर्मार्गे तिरोहिते सति तेजस्विभिस्तेजस्विषु वीरेषु। उत्सुकानाम्। वीरवरणार्थमागतानामित्यर्थः। 'प्रसितोत्सुकाभ्यां तृतीया च' इति विकल्पात्तृतीया। सुरसुन्दरीणामह्नि दिवस एव प्रदोषो रात्रिमुखं नास्ति। अन्धकारवत्त्वात् दृष्टेस्तिरोधानाद्रात्रिभ्रमः स्यादिति भावः॥ ७ ॥

हिन्दी—इस युद्धमें गधेके समान धूसर जमीनकी धूलसे नेत्रमार्गके तिरोहित होनेपर तेजस्वियोंसे वीरोंके वरणमें उत्सुक देवसुन्दरियोंका दिनमें भी रात्रिका भ्रम भी नहीं देखा जा रहा है॥ ७ ॥

रथाङ्गसंक्रीडितमश्वहेषा बृहन्ति मत्तद्विपबृंहितानि।
संघर्षयोगादिव मूर्च्छितानि ह्रादं निगृह्णन्ति न दुन्दुभीनाम् ॥ ८ ॥

मल्लि०—रथाङ्गेति। रथाङ्गसंक्रीडितं = रथचक्रकूजितम्। अश्वानां हेषा-तानि = शब्दितानि। 'अश्वानां हेषा ह्रेषा च निःस्वनः' इत्यमरः। बृहन्ति = महान्ति। मत्तद्विपानां बृंहितानि। 'बृंहितं करिगर्जितम्' इत्यमरः। संघर्षयोगादिव=परस्परस्पर्धासंबन्धादिव मूर्च्छितानि वृद्धिं गतानि सन्ति। 'नपुंसकमनपुंसके'-त्यादिना नपुंसकैकशेषः। दुन्दुभीनां = भेरीणां, ह्रादं = निर्घोषम्। 'स्वाननिर्घोष-निर्ह्रादे-'त्यमरः। न निगृह्णन्ति = न तिरस्कुर्वन्ति॥ ८ ॥

हिन्दी—इस युद्धमें रथोंकी पहियोंकी आवाज, घोड़ोंकी हिनहिनाहट और मत्तहाथियोंकी भारी चिघाड़ भी संघर्षके सम्बन्धसे वृद्धिको प्राप्त करती हुई भेरीकी आवाजोंका भी तिरस्कार नहीं कर रही हैं॥ ८ ॥

अस्मिन् यशःपौरुषलोलुपानामरातिभिः प्रत्युरसं क्षतानाम्।
मूर्च्छान्तरायं मुहुरुच्छिनत्ति नासारशीतं करिशीकराम्भः॥ ९ ॥

मल्लि०—अस्मिन्निति। अस्मिन् रणे यशःपौरुषयोर्लोलुपानां गृध्नूनामत एव अरातिभिः प्रत्युरसमुरसि। 'प्रतेरुरसः सप्तमीस्थात्' इति समासान्तः। क्षतानां = विद्धानां सम्बन्धिनं मूर्च्छेवान्तरायो रणविघ्नस्तम्। आसारशीतं = वर्षधाराशीत-

लम्। 'धारासम्पात आसार' इत्यमरः। करिणां शीकर एव अम्भः कर्तृ मुहूर्तोच्छिनत्ति = न नाशयति ॥ ९ ॥

हिन्दी—इस युद्धमें कीर्ति और पुरुषार्थमें लोलुप अत एव शत्रुओंसे छातीमें विद्ध सैनिकोंके मूर्च्छास्वरूप युद्धके विघ्नको वर्षाऋतुके मूसलधार जलके समान शीतल हाथियोंके जलकण भी बारंबार नष्ट नहीं कर रहे हैं ॥ ९ ॥

असृङ्नदीनामुपचीयमानैर्विदारयद्भिः पदवीं ध्वजिन्याः।
उच्छ्रायमायान्ति न शोणितौघैः पङ्कैरिवाश्यानघनैस्तटानि ॥ १० ॥

मल्लि०—असृगिति। असृङ्नदीनां तटान्युपचीयमानैरुपचयं नीयमानैस्तथा ध्वजिन्याः पदवीं विदारयद्भिर्दुःसंचारां कुर्वद्भिः। 'विदूरयद्भिः' इति पाठे विदूरां दूरसंचारां कुर्वद्भिः। आश्यानाः=ईषच्छुष्काः। 'संयोगादेरातो धातोर्यण्वतः' इति श्यायतेर्निष्ठानत्वम्। घनाः = सान्द्रास्तैः। आश्यानघनैः = शोणितौघैः पङ्कैरिवोच्छ्रायं वृद्धिं नायान्ति = न प्राप्नुवन्ति ॥ १० ॥

हिन्दी—इस युद्धमें रुधिरोंकी नदियोंके तट भी वृद्धिको प्राप्त किये जाते हुए तथा सेना ( फौज )के मार्गको दुर्गम करते हुए कुछ सूखे हुए घने कीचड़ोंके समान रुधिर समूहसे नहीं बढ़ रहे हैं ॥ १० ॥

परिक्षते वक्षसि दन्तिदन्तैः प्रियाङ्कशीता नभसः पतन्ती।
नेह प्रमोहं प्रियसाहसानां मन्दारमाला विरलीकरोति ॥ ११ ॥

मल्लि०—परीति। इह=रणे, दन्तिदन्तैर्गजदन्तैः, परिक्षते = ताडिते, वक्षसि नभसः पतन्ती प्रियाया अङ्क इव शीता = शीतला सुखकरी मन्दारमाला। सुरैर्मुक्तेति शेषः। प्रियं साहसं येषां तेषां प्रियसाहसानाम्। यतो गजाभियायिनामिति भावः। प्रमोहं = प्रहारमूर्च्छां न विरलीकरोति = न मन्दीकरोति। नापनयतीति यावत् ॥ ११ ॥

हिन्दी—इस युद्धमें हाथियोंके दांतोंसे ताडित छातीपर आकाशसे गिरती हुई प्रियाकी गोदके समान शीतल मन्दार पुष्पोंकी माला साहसको प्रिय माननेवाले वीरोंकी प्रहारसे हुई मूर्च्छाको मन्द भी नहीं करती है ॥ ११ ॥

निषादिसंनाहमणिप्रभौघे परीयमाणे करिशीकरेण।
अर्कत्विषोन्मीलितमभ्युदेति न खण्डमाखण्डलकार्मुकस्य ॥ १२ ॥

मल्लि०—निषादीति । करिणां शीकरेण = पुष्करतुषारेण परीयमाणे व्याप्यमाने निषादिनो हस्त्यारोहाः । 'हस्त्यारोहा निषादिनः' इत्यमरः । तेषां संनाहाः = कवचानि, तेषां मणिप्रभौघे = रत्नांशुजाले । अर्कस्य त्विषा तेजसा । उन्मीलितमुत्पादितम् । आखण्डलकार्मुकस्य = इन्द्रधनुषः । 'आखण्डलः सहस्राक्षः' इत्यमरः। खण्डं नाभ्युदेति ।। १२ ।।

हिन्दी—हाथियोंके जल कणसे व्याप्त किये जाते हुए महावतोंके कवचोंमें स्थित रत्नोंके किरणसमूहमें उत्पादित इन्द्रधनुके खण्डका प्रकाश भी नहीं चमक रहा है ।। १२ ।।

महीभृता पक्षवतेव भिन्ना विगाह्य मध्यं परवारणेन ।
नावर्तमाना निनदन्ति भीममपां निधेराप इव ध्वजिन्यः ।। १३ ।।

मल्लि०—महीति । पक्षवता = सपक्षेण महीभृता = मैनाकेनेव परवारणेन = शत्रुगजेन मध्यं विगाह्य=प्रविश्य भिन्नाः = क्षोभिता ध्वजिन्यः = सेनाः । 'ध्वजिनी वाहिनी सेना' इत्यमरः । अपां निधेः = सागरस्य । आप इव । आवर्तमाना भ्रमन्त्यः सत्यः । 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः । भीमं न निनदन्ति ।। १३ ।।

हिन्दी—पङ्खवाला पर्वत ( मैनाक )के समान शत्रुके हाथीसे मध्यभागमें प्रवेश कर क्षुब्धकी गईं सेनाएँ भी समुद्रके जलके समान घूमती हुईं भयङ्कर आवाज भी नहीं कर रही हैं ।। १३ ।।

महारथानां प्रतिदन्त्यनीकमधिस्यदस्यन्दनमुत्थितानाम् ।
आमूललूनैरतिमन्युनेव मातङ्गहस्तैर्व्रियते न पन्थाः ।। १४ ।।

मल्लि०—महारथानामिति । प्रतिदन्त्यनीकं = दन्तिसैन्यं प्रति । 'अनीकं तु रणे सैन्ये' इति विश्वः । अधिस्यदा महारयाः स्यन्दना रथा यत्र तत्तथा । 'रंहस्तरसी तु रयः स्यदः' इत्यमरः । उत्थितानां = प्रस्थितानां महारथानां = रथिकविशेषाणाम् । 'आत्मानं सारथिं चाश्वान् रक्षन्युध्येत् यो नरः । स महारथसंज्ञः स्यादित्याहुर्नीतिकोविदाः ।।' इति लक्षणात् । पन्था = मार्ग आमूलात् = लूनैश्छिन्नैः । मातङ्गहस्तैर्नागकरैः । अतिमन्युनाऽतिक्रोधेनेव न व्रियते = न निरुध्यते ।। १३ ।।

हिन्दी—हाथियोंकी सेनाके प्रति बड़े वेगवाले रथोंसे युक्त प्रस्थान किये हुए,

महारथियोंका मार्ग भी मूलसे काटे गये हाथियोंके सूँड़से मानों अत्यन्त क्रोधसे नहीं रोका जा रहा है ॥ १४ ॥

धृतोत्पलापीड इव प्रियायाः शिरोरुहाणां शिथिलः कलापः ।
न बर्हभारः पतितस्य शङ्कोर्निषादिवक्षःस्थलमातनोति ॥ १५ ॥

**मल्लि०**—धृतेति । पतितस्य=वक्षसि भग्नस्य शङ्कोस्तोमरस्य संबन्धी । 'वा पुंसि शल्यं शङ्कुर्ना सर्वला तोमरोऽस्त्रियाम्' इत्यमरः । बर्हभारस्तन्मूलबद्धो लाञ्छनपिच्छकलापो धृत उत्पलापीडः कुवलयशेखरो यस्मिन् स प्रियायाः संबन्धी शिथिलः = स्रस्तः शिरोरुहाणां कलापः = केशपाश इव निषादिनो = हस्त्यारोहस्य वक्षःस्थलं नातनोति = न व्याप्नोति ॥ १५ ॥

**हिन्दी**—इस युद्धमें वक्षःस्थलपर पड़े हुए तोमर आयुधके मूलमें बाँधा गया चिह्नस्वरूप मयूरका पंख, कमलका फूल लगाये हुए प्रियाके शिथिल केशकलापके समान महावतके वक्षःस्थलपर आच्छादन भी नहीं कर रहा है ॥ १५ ॥

उज्झत्सु संहार इवास्तसंख्यमह्नाय तेजस्विषु जीवितानि ।
लोकत्रयास्वादनलोलजिह्वं न व्याददात्याननमत्र मृत्युः ॥ १६ ॥

**मल्लि०**—उज्झत्स्विति । अत्र = आहवे । संहारे = कल्पान्त इव, तेजस्विषु= वीरेषु । अस्तसंख्यमसंख्यं यथा तथा, अह्नाय = झटिति । 'द्राग्झटित्यञ्जसाह्नाय' इत्यमरः । जीवितान्युज्झत्सु = त्यजत्सु सत्सु मृत्युर्लोकत्रयस्यास्वादने = भक्षणे, लोला गृध्नुर्जिह्वा यस्मिंस्तत् । आननं न व्याददाति = न विवृणोति । 'आङो दोऽनास्यविहरणे' इत्यत्रानास्यविहरण इति निषेधात् परस्मैपदम् ॥ १६ ॥

**हिन्दी**—इस युद्धमें प्रलयसमयके समान वीरोंके असंख्यरूपमें झटपट जीवन छोड़नेपर मृत्यु भी तीनों लोकके भक्षणमें चञ्चल जिह्वावाला मुख नहीं खोल रहा है ॥ १६ ॥

सत्यमेवं, तथापि किमेतत्कुत्सितम, तत्राह—

इयञ्च दुर्वारमहारथानामाक्षिप्य वीर्यं महतां बलानाम् ।
शक्तिर्ममावस्यति हीनयुद्धे सौरीव ताराधिपधाम्नि दीप्तिः ॥ १७ ॥

**मल्लि०**—इयमिति । इयं मम शक्तिश्च दुर्वाराः पराक्रमिणो महारथा येषु तेषां महतां बलानां वीर्यमाक्षिप्य = निरस्य ताराधिपधाम्नि=चन्द्रतेजसि । सूर्यस्येयं

सौरी । 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' इति स्त्रियां ङीप् । यकारस्य लोपः । दीप्तिरिव हीनयुद्धे किरातरणे । अवस्यत्वसीदति । एतच्च विरुद्धमत्यद्भुतं चेति भावः । 'षोऽन्तकर्मणि' इति धातोर्लट् ॥ १७ ॥

हिन्दी—इस युद्धमें यह मेरी शक्ति दुःखसे निवारण किये जानेवाले महारथियों के पराक्रमको दूर कर चन्द्रमाकी कान्तिमें सूर्यकी दीप्ति (तेज)के समान किरातोंके साथ युद्धमें शिथिल हो रही है ॥ १७ ॥

माया स्विदेषा मतिविभ्रमो वा ध्वस्तं नु मे वीर्यमुताहमन्यः ।
गाण्डीवमुक्ता हि यथा पुरा मे पराक्रमन्ते न शराः किराते ॥ १८ ॥

मल्लि०—मायेति । एषा शक्तिह्रासरूपा, माया स्वित् देवताक्षोभणं नाम । मतिविभ्रमो=बुद्धिविपर्ययो वा । अथवा मे वीर्यं ध्वस्तं= नष्टं नु । उताहमन्योऽर्जुनो न वा । कुतः । हि यस्मात्, गाण्डीवमुक्ता मे शराः यथा पुरा = यथापूर्वं परिपन्थिष्विवेत्यर्थः । किराते न पराक्रमन्तेऽप्रतिबन्धेन प्रवर्तन्ते । 'उपपराभ्याम्' इति वृत्तावात्मनेपदम् । वृत्तिरप्रतिबन्धः ॥ १८ ॥

हिन्दी—यह ( मेरी शक्तिकी अवनति ) माया है वा मेरी बुद्धिका वैपरीत्य है, अथवा मेरा पराक्रम नष्ट हो गया है, यहा मैं अर्जुन ही नहीं हूँ, क्योंकि मेरे गाण्डीव धनुसे छोड़े गये बाण किरातमें, शत्रुमें पहलेकी तरह रुकावटके बिना प्रवृत्त नहीं हो रहे हैं ॥ १८ ॥

पुंसः पदं मध्यममुत्तमस्य द्विधेव कुर्वन्धनुषः प्रणादैः ।
नूनं तथा नैष यथाऽस्य वेषः प्रच्छन्नमप्यूहयते हि चेष्टा ॥ १९ ॥

मल्लि०—पुंस इति । किंच, उत्तमस्य पुंसः = पुरुषोत्तमस्य मध्यमं पदमाकाशं धनुषः प्रणादैः । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम् । द्विधा कुर्वन्निव= विदारयन्निव स्थितः स एषः=किरातो नूनं तथा तथा भूतो न । कीदृशस्तत्राह—अस्य पुरुषस्य यथा यथाभूतो वेषः । वर्तत इति शेषः । वेषत एवायं किरातो न स्वरूपत इत्यर्थः । कुतः । हि यस्मात्, चेष्टा = व्यापारः प्रच्छन्नमपि = निगूढमपि स्वरूपम् । ऊहयते = तर्कयते । तस्याः स्वभावादव्यभिचारादिति भावः ॥ १९ ॥

हिन्दी—एवम् भगवान् विष्णुके मध्यम पद विष्णु पद अर्थात् आकाश )को मानों विदारण कर स्थित यह किरात वैसा नहीं हैं अर्थात् साधारण किरात नहीं है, क्योंकि इसकी चेष्टा गूढस्वरूपकी भी तर्कना कर देती है ॥ १९ ॥

अथ चतुर्भिश्चेष्टामेवाचष्टे—

धनुः प्रबन्धध्वनितं रुषेव सकृद्विकृष्टा विततेव मौर्वी।
संधानमुत्कर्षमिव व्युदस्य मुष्टेरसंभेद इवापवर्गे ॥ २० ॥

मल्लि०—धनुरिति। धनू रुषेव, प्रबन्धेनाविच्छेदेन ध्वनितम्। ध्वनतेः कर्तरि क्तः। मौर्वी च सकृद्विकृष्टा विततेवैकवाराकर्षणादेव, विततेव स्थिता। संधानं = बाणसंधानमुत्कर्षं तूणादुद्धरणं=व्युदस्येव = वर्जयित्वा। किमु कृतमिति शेषः। अपवर्गे = बाणमोक्षेऽपि, मुष्टेरसंभेदोऽसंघटनमिव। मुष्टिबन्धं विनैव बाण-मोक्षः कृत इवेति हस्तलाघवोक्तिः ॥ २० ॥

हिन्दी—धनु मानों क्रोधसे लगातार शब्द कर रहा है, प्रत्यञ्चा भी एकबार खींचनेसे फैलाई गई-सी है। बाणसन्धान तरकशसे निकाले बिना ही किया गया-सा है। बाणमोक्षमें भी मुष्टिका असम्भेद-सा प्रतीत होता है ॥ २० ॥

अंसाववष्टब्धनतौ समाधिः शिरोधरायाः रहितप्रयासः।
धृता विकारांस्त्यजता मुखेन प्रसादलक्ष्मीः शशलाञ्छनस्य ॥ २१ ॥

मल्लि०—अंसाविति। किंच, अंसाववष्टब्धौ स्थिरावयवस्थापितौ च तौ नतौ चावष्टब्धनतौ, शिरोधरायाः = कंधरायाः समाधिः संस्थानविशेषैश्च रहितः प्रयासो यस्य स तथोक्तः। निःप्रयास इत्यर्थः। तथा विकारांस्त्यजता। अभूतत्वान्निर्वि-कारेणेत्यर्थः। मुखेन, शशलाञ्छनस्य = इन्दोः प्रसादलक्ष्मीर्धृता। असंभवत्संबन्धो निदर्शनालकारः ॥ २१ ॥

हिन्दी—इस किरातराजके कन्धे स्थिर और झुके हुए हैं, ग्रीवा भी स्थिति-विशेषोंसे अविचल है। निर्विकार मुखने चन्द्रमाकी निर्मलताकी शोभाका धारण किया है ॥ २१ ॥

प्रहीयते कार्यवशागतेषु स्थानेषु विष्टब्धतया न देहः।
स्थितप्रयातेषु ससौष्ठवश्च लक्ष्येषु पातः सदृशः शराणाम् ॥ २२ ॥

मल्लि०—प्रहीयत इति। तस्य देहः कार्यवशेन = प्रयोजनवशेन, आगतेषु = स्थानेष्वालीढादिस्थानकेषु विष्टब्धतया स्थिरतया कर्त्र्या न प्रहीयते = न त्यज्यते। किंतु स्थिर इव तिष्ठतीत्यर्थः। सुष्ठु भावः सौष्ठवं = लाघवम्। उद्गात्रादित्वादञ्-प्रत्ययः। तेन सह वर्तमानः ससौष्ठवः शराणां पातश्च, स्थितान्यचलानि =प्रयातानि = चलानि तेषु स्थितप्रयातेषु = चलाचलेषु लक्ष्येषु विषये सदृश एकरूपः ॥ २२ ॥

**हिन्दी**—इस ( किरातराज )के शरीरको प्रयोजनवश पैंतरा बदलनेपर आलीढ आदि स्थानोंमें स्थिरता नहीं छोड़ती है, लाघवसे रहता हुआ बाणोंका प्रहार भी अचल और चल लक्ष्योंपर एकरूप है ॥ २२ ॥

परस्य भूयान्विवरेऽभियोगः प्रसह्य संरक्षणमात्मरन्ध्रे ।
भीष्मेऽप्यसंभाव्यमिदं गुरौ वा न संभवत्येव वनेचरेषु ॥ २३ ॥

**मल्लि०**—परस्येति । किंच, परस्य विवरे =रन्ध्रे अल्पेऽपीति शेषः । भूयान्= भूयिष्ठः, प्रसह्य = झटिति अभियोगो ज्ञातृत्वम् । परस्य रन्ध्रज्ञातृत्वात्प्रहारोद्योग इत्यर्थः । आत्मनो रन्ध्रे = विवरे । अनल्पेऽपीति शेषः । प्रसह्य=झटिति संरक्षणं= गोपनं च । भूयिष्ठमिति शेषः । इदं द्वयं भीष्मेऽपि, गुरौ वा द्रोणे वापि असंभाव्यं दुर्वितर्क्यं वनेचरेषु न संभवत्येव । अतो नायं किरातः, किंत्वेष तिरोहितवेषः कोऽप्यमानुषः पुरुषः इति भावः ॥ २३ ॥

**हिन्दी**—शत्रुके थोड़े छिद्रमें भी उसके प्रचुर छिद्रोंको झटपट जान लेते है और अपने प्रचुर छिद्रोंको भी छिपाते हैं, ये दो विषय भीष्म पितामह और द्रोणाचार्य मे भी असंभाव्य है फिर वनेचरोंमे तो होना सम्भव नहीं है, इस लिए यह किरात नहीं है अतः यह देवयोनिमें उत्पन्न व्यक्ति है ॥ २३ ॥

अप्राकृतस्याहवदुर्मदस्य निवार्यमस्यास्त्रबलेन वीर्यम् ।
अल्पीयसोऽप्यामयतुल्यवृत्तेर्महापकाराय रिपोर्विवृद्धिः ॥ २४ ॥

**मल्लि०**—अप्राकृतस्येति । अप्राकृतस्योक्तरीत्याऽसाधारणस्य । आहवदुर्मदस्य= रणमत्तस्य । अस्य = किरातस्य वीर्यं = तेजोऽस्त्रबलेन = दिव्यशस्त्रमहिम्ना निवार्यं निवारणीयम् । अन्यथाऽनिवार्यत्वमस्येति भावः । तथा हि—अल्पीयसोऽप्यत्यल्पस्यापि । आमयतुल्यवृत्ते रोगसमानविक्रियस्य । 'रोगव्याधिगदामयाः' इत्यमरः' । रिपोर्विवृद्धिर्महापकाराय, किंत्वयं महानुभाव इति भावः । कुलकम् ॥ २४ ॥

**हिन्दी**—असाधारण, युद्धमें मत्त इस किरातका पराक्रमका दिव्यशस्त्रके बलसे निवारण करना चाहिए, जैसे कि अतिशय अल्प होकर भी रोगके समान विकारवाले शत्रुकी वृद्धि महान् अपकारके लिए हो जाती है ॥ २४ ॥

स संप्रधार्यैव महार्यसारः सारं विनेष्यन् सगणस्य शत्रोः ।
प्रस्वापनास्त्रं द्रुतमाजहार ध्वान्तं घनानद्ध इवार्धरात्रः ॥ २५ ॥

**मल्लि०**—स इति । अहार्यसारोऽनिवार्यवीर्यः सोऽर्जुन एवं संप्रधार्य=निश्चित्य

सगणस्य = सानुगस्य शत्रोः, सारं = सत्त्वं विनेष्यन् = अपनेष्यन्। प्रस्वाप्यते शाय्यतेऽनेनेति प्रस्वापनं तदेव अस्त्रम्। घनान्ह्नो = मेघव्याप्तोऽर्धरात्रो निशीथः। 'अर्धरात्रनिशीथौ द्वौ' इत्यमरः 'अर्धं नपुंसकम्' इति समासः। 'अहःसर्वैकदेशे—' त्यादिना समासान्तः। 'रात्राह्नाहाः पुंसि' इति पुंल्लिङ्गता। ध्वान्तमिव द्रुतमाजहाराचकर्ष ॥ २५ ॥

**हिन्दी**—अनिवार्य पराक्रमवाले अर्जुनने ऐसा निश्चय कर प्रमथगणोंके साथ शत्रुके पराक्रमको हटानेकी इच्छा करते हुए जैसे मेघसे व्याप्त आधीरात अन्धकारको आकृष्ट करती है उसी तरह प्रस्वापन अस्त्रको खींच लिया ॥ २५ ॥

प्रसक्तदावानलधूमधूम्रा निरुन्धती धाम सहस्ररश्मेः।
महावनानीव महातमिस्रा छाया ततानेशबलानि काली ॥ २६ ॥

**मल्लि०**—प्रसक्तेति। प्रसक्तः संततो यो दावानलधूमस्तद्वद्धूम्रा = धूसरा सहस्ररश्मेर्धाम तेजो निरुन्धती। आवृण्वती काली = कृष्णवर्णा। 'जानपद—' इत्यादिना ङीष्। छाया = कान्तिः, ईशबलानि महातमिस्रा = महती तमःसंततिः। 'तमिस्रा तु तमस्ततिः' इति विश्वः। महावनानीव ततान=व्यानशे। युग्मम् ।२६।

**हिन्दी**—व्याप्त दवाग्निके धूमके समान धूसरवर्णवाली और सूर्यके तेजको आच्छादित करती हुई कृष्णवर्णवाली कान्तिने शिवजीके सैन्योंको जैसे बड़ी अन्धकारकी पंक्ति बड़े-बड़े वनोंको व्याप्त करती है उसी तरह व्याप्त कर डाला ॥ २६ ॥

आसादिता तत्प्रथमं प्रसह्य प्रगल्भतायाः पदवीं हरन्ती।
सभेव भीमा विदधे गणानां निद्रा निरासं प्रतिभागुणस्य ॥ २७ ॥

**मल्लि०**—आसादितेति। तदेवासादनं प्रथमं तत्प्रथमं यथा तथा प्रसह्यासादिता कल्पिता प्रगल्भताया व्यवहारधाष्टर्यस्य पदवीं हरन्ती भीमा=भयंकरी, निद्रा उक्तविशेषणा सभा संसदिव। गणानां प्रतिभा प्रज्ञाशक्तिः सैव गुणस्तस्य निरासं = प्रतिभाक्षयं विदधे = चक्रे ॥ २७ ॥

**हिन्दी**—वही पहले-पहल हठात् कल्पित होकर व्यवहारकी क्षमताके मार्गको दूर करती हुई भयङ्कर निद्राने सभाके समान प्रमथगणोंकी बुद्धि शक्तिरूप गुणका क्षय कर दिया अर्थात् अर्जुनके प्रस्वापन अस्त्रने शिवजीके प्रमथगणोंको निद्रित कर दिया ॥ २७ ॥

गुरुस्थिराण्युत्तमवंशजत्वाद्विज्ञातसाराण्यनुशीलनेन ।
केचित्समाश्रित्य गुणान्वितानि सुहृत्कुलानीव धनूंषि तस्थुः ॥ २८॥

मल्लि०—गुर्विति । केचिदुत्तमवंशजत्वात् वंशो वेणुः कुलं च । 'वंशो वेणौ कुले च' इति विश्वः । गुरूणि = महान्ति, स्थिराणि = दृढानि च गुरुस्थिराणि । अनुशीलनेन = परिचयबलेन, विज्ञातः सारो बलं येषां तानि, गुणैर्मौर्वीभिः शौर्यादिभिश्च अन्वितानि धनूंषि, सुहृत्कुलानि = मित्रकुलानीव, समाश्रित्य तस्थुः । धनूंष्यवष्टभ्य निदध्युरित्यर्थः ॥ २८ ॥

हिन्दी—किरात सेनामें कुछलोग उत्तम जातिके बाँसमें उत्पन्न होनेसे बड़े और दृढ परिचयके बलसे जाने गये बलवाले प्रत्यञ्चासे युक्त धनुषका, उत्तम कुलमें उत्पन्न होनेसे बड़े और स्थिर तथा परिचयके भरोसेसे जानी गई शक्तिवाले और गुणोंसे युक्त मित्रकुलकी तरह अवलम्बन कर स्थित हुए ॥ २८ ॥

कृतान्तदुर्वृत्त इवापरेषां पुरः प्रतिद्वन्द्विनि पाण्डवास्त्रे ।
अतर्कितं पाणितलान्निपेतुः क्रियाफलानीव तदायुधानि ॥ २९ ॥

मल्लि०—कृतान्तेति । कृतान्तदुर्वृत्ते = दैवदुश्चेष्टित इव । 'कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु' इति विश्वः । पाण्डवास्त्रे पुरः प्रतिद्वन्द्विनि = प्रतिकूलवर्तिनि सति तदा तस्मिन्काले । अपरेषामायुधानि क्रियाफलानीव = कृष्यादिफलानीव अतर्कितमविचारितमेव पाणितलान्निपेतुः ॥ २९ ॥

हिन्दी—दैवकी दुश्चेष्टाके समान अर्जुनका अस्त्र सामने प्रतिकूल होकर रहनेवाले होनेपर उस समय अन्य लोगोंके हथियार क्रियाफलोंके समान अतर्कित रूपसे हाथसे गिर पड़े ॥ २९ ॥

अंसस्थलैः केचिदभिन्नधैर्याः स्कन्धेषु संश्लेषवतां तरूणाम् ।
मदेन मीलन्नयनाः सलीलं नागा इव स्रस्तकरा निषेदुः ॥ ३० ॥

मल्लि०—अंसेति । अभिन्नधैर्यास्तदानीमप्यक्षतधैर्याः, केचिदंसस्थलैरंसभागैः सह संश्लेषवतां = संगच्छतां, तरूणां स्कन्धेषु = प्रकाण्डेषु मदेन मीलन्ती नयनानि येषां ते नागा गजा इव स्रस्तकराः=स्रस्तहस्ताः सन्तः सलीलं निषेदुर्निषण्णाः ।३०।

हिन्दी—उस समय भी अक्षत धैर्यवाले कुछ लोग कन्धेसे संलग्न होनेवाले कुछ लोग कन्धेसे संलग्न होनेवाले वृक्षोंके प्रकाण्डों पर मदसे मूँदे गये नेत्रोंवाले हाथीके समान शिथिल कर ( सूँड़ )वा हाथवाले होकर लीलापूर्वक बैठ गये ॥३०॥

तिरोहितेन्दोरथ शंभुमूर्ध्नः प्रणम्यमानं तपसां निवासैः।
सुमेरुशृङ्गादिव बिम्बमार्कं पिशङ्गमुच्चैरुदियाय तेजः॥ ३१॥

मल्लि०—तिरोहितेति। अथ तिरोहितेन्दोः = किरातमायया छन्नचन्द्रात्, शंभुमूर्ध्नः सकाशात्। सुमेरुशृङ्गात् अर्कसम्बन्धि बिम्बमिव। तपसां निवासैः स्तापसैः प्रणम्यमानमभिवन्द्यमानं पिशङ्गं = तेजं उच्चैरूर्ध्वम्। उदियाय=प्रकटीबभूव। तच्च न चान्द्रमिति भावः॥ ३१॥

हिन्दी—तब किरातकी मायासे अदृष्ट चन्द्रवाले शिवजीके मस्तकसे सुमेरु पर्वतकी चोटीसे सूर्यमण्डलके समान, तपस्वियोंसे प्रणाम किया जाता हुआ पीला तेज ऊपर प्रकट हुआ॥ ३१॥

छायां विनिर्धूय तमोमयीं तां तत्त्वस्य संवित्तिरिवापविद्याम्।
ययौ विकासं द्युतिरिन्दुमौलेरालोकमत्यादिशती गणेभ्यः॥ ३२॥

मल्लि०-छायामिति। इन्दुमौलेर्द्युतिः=कान्तिः। तत्त्वस्य संवित्तिस्तत्त्वज्ञानम्। =अपविद्यामविद्यामिव तां तमोमयीं छायां=निद्रां, विनिर्धूय=निरस्य, गणेभ्य आलोकं वस्तुप्रकाशं चिरम् अत्यादिशती=वितरन्ती विकासं=विस्तारं ययौ॥ ३२॥

हिन्दी—शिवजीकी कान्ति जैसे तत्वज्ञान अविद्याको नष्ट करता है, उसी तरह प्रस्वापन अस्त्रकी उस निद्राको नष्ट करके प्रमथगणोंको वस्तुप्रकाशको बहुत समय तक देती हुई विस्तारको प्राप्त करने लगी॥ ३२॥

त्विषां ततिः पाटलिताम्बुवाहा सा सर्वतः पूर्वसरीव संध्या।
निनाय तेषां द्रुतमुल्लसन्ती विनिद्रतां लोचनपङ्कजानि॥ ३३॥

म०—त्विषामिति। सर्वतः पाटलिताः=पाटलीकृता अम्बुवाहा यया सा, तथोक्ता त्विषां=तेजसां ततिः। पूर्वा सरतीति पूर्वसरी। 'पूर्वे कर्तरि' इति टप्रत्यये ङीप्, 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति 'पूर्वा' शब्दस्य पुंवद्भावः। संध्या = प्रातःसंध्येव, उल्लसन्ती = प्रसरन्ती, तेषां = गणानां, लोचनपङ्कजानि, द्रुतं विनिद्रतां = विकासं निनाय॥ ३३॥

हिन्दी—सभी ओरसे मेघोंको गुलाबी वर्णवाले बनानेवाली तेजोंकी पङ्क्तिने पूर्व की ओर चलनेवाली प्रातः-सन्ध्याके समान फैलती हुई गणोंके नेत्रकमलोंको विकासको प्राप्त करा दिया अर्थात् गणलोग जग गये॥ ३३॥

पृथग्विधान्यस्त्रविरामबुद्धाः शस्त्राणि भूयः प्रतिपेदिरे ते।
मुक्ता वितानेन बलाहकानां ज्योतींषि रम्या इव दिग्विभागाः ॥ ३४ ॥

मल्लि०—पृथगिति । अस्त्रविरामेण = प्रस्वापनास्त्रोपरमेण, बुद्धा विनिद्राः गणा बलाहकानां वितानेन = मेघपटलेन, मुक्ता अत एव रम्या दिग्विभागाः = दिगन्ता ज्योतींषि=नक्षत्राणीव । 'ज्योतिस्ताराग्निभाज्वालादृक्प्रकाशरमात्मसु' इति वैजयन्ती । पृथग्विधानि = नानाविधानि शस्त्राणि भूयः प्रतिपेदिरे = जगृहुरित्यर्थः ॥ ३४ ॥

हिन्दी—प्रस्वापन अस्त्रके दूर होनेसे जगे हुए प्रमथगण जैसे मेघसमूहसे मुक्त दिशाएँ नक्षत्रकान्तियोंको धारण करती हैं वैसे ही अपने-अपने शस्त्रोंका धारण करने लगे ॥ ३४ ॥

द्यौरुन्ननामेव, दिशः प्रसेदुः, स्फुटं विसस्रे सवितुर्मयूखैः।
क्षयं गतायामिव यामवत्य पुनः समीयाय दिनं दिनश्रीः ॥ ३५ ॥

मल्लि०—द्यौरिति । तदा यामवत्यां = रात्रौ, क्षयं गतायां = विभातायामिव द्यौरन्तरिक्षम् । उन्ननामेव = ऊर्ध्वमुत्पपातेवेत्युत्प्रेक्षा । दिशः प्रसेदुः । सवितुर्मयूखैः, स्फुटं विसस्रे = विसृतम् । भावे लिट् । दिनश्रीर्घर्मकान्तिः पुन दिनं समीयाय = संजगाम । अत्र वैयधिकरण्येन गुणक्रिययोः समुच्चयेन समुच्चयोऽलंकारः । तस्य च समुन्नमनोत्प्रेक्षया 'इव' शब्दवाच्ययानुप्रवेशलक्षणः संकरः । दिक्प्रसादो गुणः। शेषाः क्रियाः ॥ ३५ ॥

हिन्दी—उस समय रातके बीतनेपर आकाश मानों ऊपर उन्नत हुआ, दिशाएँ निर्मल हो गईं, सूर्यकी किरणें स्पष्टरूपमें फैल गईं और दिनकी शोभाने दिनका आश्रय लिया ॥ ३५ ॥

महास्त्रदुर्गे शिथिलप्रयत्नं दिग्वारणेनेव परेण रुग्णे।
भुजङ्गपाशान्भुजवीर्यशाली प्रबन्धनाय प्रजिघाय जिष्णुः ॥ ३६ ॥

मल्लि०—महास्त्रेति । भुजवीर्यशाली जिष्णुरर्जुनो महास्त्रं = प्रस्वापनास्त्रं तद्दुर्गमिव तस्मिन् महास्त्रदुर्गे, दिग्वारणेनेव=दिग्गजेनेव, परेण = शत्रुणा, शिथिलप्रयत्नमल्पप्रयासं यथा तथा, रुग्णे=भग्ने सति 'रुजो भङ्गे' कर्मणि क्तः । 'ओदितश्च' इति निष्ठातकारस्य नत्वम् । प्रबन्धनाय = प्रकर्षेण बन्धनाय, भुजङ्गा एव पाशास्तान् । प्रजिघाय = प्रहितवान् ॥ ३६ ॥

**हिन्दी**—बाहुपराक्रमसे शोभित होनेवाले अर्जुनने किलेके समान प्रस्वापन अस्त्रके दिग्गजके समान शत्रुसे थोड़े ही प्रयाससे भग्न करनेपर प्रमथगणोंको बाँधनेके लिए सर्परूप पाशोंको छोड़ दिया ॥ ३६ ॥

जिह्वाशतान्युल्लसयन्त्यजस्रं लसत्तडिल्लोलविषानलानि ।
त्रासान्निरस्ता भुजगेन्द्रसेना नभश्चरैस्तत्पदवीं विवव्रे ॥ ३७ ॥

**मल्लि०**—जिह्वेति । लसन्तस्तडिल्लोला विद्युच्चञ्चला विषानला विषाग्नयो येषु तानि, जिह्वाशतान्यजस्रमुल्लसयन्ती=चलयन्ती, भुजगेन्द्रसेना, त्रासाद्भयात् ।, नभश्चरैर्निरस्ता = त्यक्ता, तेषां = नभश्चराणां, पदवीं = मार्गं, विवव्रे विशेषेण रुरोध ॥ ३७ ॥

**हिन्दी**—चमकती हुई बिजलीके समान चञ्चल विषाग्नलोंको फैलाती हुई सैकड़ों जिह्वाओंको सञ्चालित करती हुई सर्पसेना, भयसे आकाशचारियोंसे छोड़ी गई और आकाशचारियोंके मार्गको उसने अवरुद्ध कर दिया ॥ ३७ ॥

दिङ्नागहस्ताकृतिमुद्वहद्भिर्भोगैः प्रशस्तासितरत्ननीलैः ।
रराज सर्पावलिरुल्लसन्ती तरङ्गमालेव नभोर्णवस्य ॥ ३८ ॥

**मल्लि०**—दिङ्नागेति । दिङ्नागहस्ताकृतिमुद्वहद्भिर्दिक्करिकराकारैस्तथा प्रशस्तानि=समीचीनानि, असितरत्नानीन्द्रनीलमणयस्तद्वन्नीलैर्भोगैः=कायैरुपलक्षिता सर्पावलिरुल्लसन्ती = प्रक्षुभ्यन्ती नभ एव अर्णवस्तस्य तरङ्गमालेव रराज । रूपकोत्थापितेयमुत्प्रेक्षा ॥ ३८ ॥

**हिन्दी**--दिग्गजके सूँड़के आकारको धारण करते हुए उत्तम इन्द्रनील मणिके समान नीलवर्णवाले शरीरोंसे उपलक्षित सर्पपङ्क्ति प्रक्षुब्ध होती हुई आकाशरूप समुद्रकी तरङ्गमालाके समान शोभित होने लगी ॥ ३८ ॥

निःश्वासधूमैः स्थगितांशुजालं फणावतामुत्फणमण्डलानाम् ।
गच्छन्निवास्तं वपुरभ्युवाह विलोचनानां सुखमुष्णरश्मिः ॥ ३९ ॥

**मल्लि०**—निःश्वासेति । उष्णरश्मिरस्तं गच्छन्निवोन्नमितानि फणामण्डलानि येषां तेषां, फणावतां = सर्पाणां निःश्वासेषु ये धूमास्तैः स्थगितमाच्छादितमंशुजालं यस्य तत्तथोक्तम् । अत एव विलोचनानां, सुखं = सुखकर वपुरभ्युवाह ॥ ३९ ॥

**हिन्दी**—मानों अस्त पर्वतको जाते हुए सूर्यने ऊँचा फणामण्डलवाले सर्पोंके

निःश्वासोंमें धूओंसे आच्छादित किरणसमूहवाले अत एव नेत्रोंको सुख देने वाले शरीरका धारण किया ॥ ३९ ॥

प्रतप्तचामीकरभासुरेण दिशः प्रकाशेन पिशङ्गयन्त्यः।
निश्चक्रमुः प्राणहरेक्षणानां ज्वाला महोल्का इव लोचनेभ्यः॥ ४०॥

मल्लि०—प्रतप्तेति। प्राणहराणीक्षणानि येषां तेषां प्राणहरेक्षणानां = दृष्टिविषाणां सर्पविशेषाणां, लोचनेभ्यो नेत्रेभ्यः। 'लोचनं नयनं नेत्रम्' इत्यमरः। प्रतप्तं = यच्चामीकरं=सुवर्णं तद्वद्भासुरेण। 'भञ्जभासमिदो घुरच्' इति घुरच्प्रत्ययः। प्रकाशेन = तेजसा, दिशः पिशङ्गयन्त्यो ज्वाला = महोल्का इव निश्चक्रमुर्निर्जग्मुः॥ ४०॥

हिन्दी—प्राणहरण करनेवाले नेत्रोंसे युक्त सर्पोंके नेत्रोंसे प्रतप्त सुवर्णके समान उज्ज्वल प्रकाशसे दिशाओंको पीली करती हुई ज्वालाएँ महती उल्काओंके समान निकल गईं ॥ ४० ॥

आक्षिप्तसंपातमपेतशोभमुद्वह्नि धूमाकुलदिग्विभागम्।
वृतं नभो भोगिकुलैरवस्थां परोपरुद्धस्य पुरस्य भेजे॥ ४१॥

मल्लि०—आक्षिप्तेति। आक्षिप्तः प्रतिषिद्धः=संपातः = संचारो यस्मिस्तत्। सिद्धानां = पक्षिणां चेति शेषः। अपेता = गता शोभा यस्मात्तत् अपेतशोभं = गतश्रीकम्। उद्गतः प्रदीप्तो वह्निर्यस्मिस्तत् उद्वह्नि सर्वत उद्भूतदहनम्। धूमैराकुला व्याप्ता दिग्विभागा दिगन्ता यस्मिंस्तत्। भोगिकुलैः = सर्पकुलैर्वृतमावृतं नभः, परोपरुद्धस्य=शत्रुवेष्टितस्य, पुरस्यावस्थामिव, अवस्थां=दशां, भेजे। उक्तरीत्या तत्साधर्म्यं प्राप्तमित्यर्थः। निदर्शनालङ्कारः॥ ४१ ॥

हिन्दी—रुकी हुई गतिवाले, शोभासे रहित, प्रदीप्त अग्निवाले, धूओंसे व्याप्त दिग्विभागसे युक्त सर्प समूहसे आच्छादित आकाशने शत्रुसे घिरे हुए नगरकी अवस्थाकी समान दशाको प्राप्त किया ॥ ४१ ॥

तमाशु चक्षुःश्रवसां समूहं मन्त्रेण तार्क्ष्योदयकारणेन।
नेता नयेनेव परोपजापं निवारयामास पतिः पशूनाम्॥ ४२॥

मल्लि०—तमिति। पशूनां = पतिः शिवस्तां चक्षुःश्रवसां सर्पाणां समूहं तार्क्ष्योदयकारणेन = गरुडाविर्भावहेतुना, मन्त्रेण, नेता = नायको, नयेन = नीत्या

परेषामुपजापं परोपजापं परकृतं स्वमण्डलभेदमिव । 'भेदोपजापावुपधा' इत्यमरः । आशु = निवारयामास ॥ ४२ ॥

हिन्दी—शिवजीने उस सर्पसमूहको गरुडजीके प्रादुर्भावके कारण मन्त्रसे जैसे नायक शत्रुके भेदका निवारण करता है उसी तरह शीघ्र निवारण कर दिया ॥ ४२ ॥

प्रतीघ्नतीभिः कृतमीलितानि द्युलोकभाजामपि लोचनानि ।
गरुत्मतां संहतिभिर्विहायः क्षणप्रकाशाभिरिवावतेने ॥ ४३ ॥

मल्लि०—प्रतीति । द्युलोकभाजामपि = अनिमेषाणामपि कृतं मीलनं निमेषो येषां तानि लोचनानि=दृष्टीः प्रतीघ्नतीभिः प्रतिबध्नतीभिः । हन्तेः शतरि ङीप् । गरुत्मतां = तार्क्ष्याणां संहतिभिः = समूहैः क्षणप्रकाशाभिर्विद्युद्भिरिव । तासां सौवर्णत्वादिति भावः । विहायोऽन्तरिक्षम् । अवतेने=व्यानशे ॥ ४३ ॥

हिन्दी—देवताओंके भी निमीलित नेत्रोंको प्रतिबद्ध करनेवाले गरुडोंके समूहने बिजलियोंकी तरह आकाशको व्याप्त कर डाला ॥ ४३ ॥

ततः सुपर्णव्रजपक्षजन्मा नानागतिर्मण्डलयञ्जवेन ।
जरत्तृणानीव वियन्निनाय वनस्पतीनां गहनानि वायुः ॥ ४४ ॥

मल्लि०—तत इति । ततः सुपर्णव्रजानां = तार्क्ष्यकुलानां पक्षेभ्यो जन्म यस्य स नानागतिर्विचित्रगतिर्वायुः । वनस्पतीनां वृक्षाणां गहनानि जीर्णतृणानीव जवेन मण्डलयन्=भ्रमयन् वियदन्तरिक्षं निनाय ॥ ४४ ॥

हिन्दी—तब गरुडसमूहके पक्षोंसे उत्पन्न विचित्रगतिसे युक्त वायुने वृक्षसमूहोंको जीर्ण तृणोंके समान वेगसे घुमाकर आकाशमें पहुँचा दिया ॥ ४४ ॥

मनःशिलाभङ्गनिभेन पश्चान्निरुध्यमानं निकरेण भासाम् ।
व्यूढैरुरोभिश्च विनुद्यमानं नभः ससर्पेव पुरः खगानाम् ॥ ४५ ॥

मल्लि०—मनःशिलेति । मनःशिला = धातुविशेषस्तस्या भङ्गश्छेदस्तन्निभेन तत्सदृशेन भासां निकरेण = कान्तिपुञ्जेन पश्चाद्भागे निरुध्यमानमाव्रियमाणं व्यूढैर्विशालैः उरोभिर्वक्षोभिश्च । 'उरो वत्सं च वक्षश्च' इत्यमरः । विनुद्यमानं= प्रेर्यमाणं, नभः खगानां = गरुडानां, पुरः ससर्पेव = ससारेव । उत्तरोत्तरदेशविरोधानेन गच्छतां खगानामपूर्वोऽपि पुरोभागः सादृश्यात्पूर्ववदुपलभ्यमानतया नभस एव छेदनात्पुरः ससर्पेवेत्युत्प्रेक्षा ॥ ४५ ॥

हिन्दी—मैनशिलके टुकड़ेके समान कान्तिसमूहसे पिछले भागमें आरक्षित किया गया विशाल वक्षःस्थलोंसे भी प्रेरणा किया जाता हुआ आकाश पक्षी आगे मानों चल पड़ा ॥ ४५ ॥

दरीमुखैरासवरागताम्रं विकासि रुक्मच्छदधाम पीत्वा।
जवानिलाघूर्णितसानुजालो हिमाचलः क्षीव इवाचकम्पे ॥ ४६ ॥

मल्लि०—दरीति । जवानिलेनाघूर्णितानि=भ्रमितानि सानुजालानि यस्य स हिमाचलः । आसवस्य रागो रक्तता तद्वत् ताम्रम् । गुणयोरेवोपमानोपमेयभावः। विकासि विकस्वरं रुक्मच्छदाः सुवर्णपक्षास्ताक्ष्यास्तेषां धाम तेजो दरीभिर्मुखैरिव दरीमुखैः पीत्वा क्षीवो मत्त इवाचकम्पे=आचचाल । उपमालङ्कारोऽयमुत्प्रेक्षा ॥४६॥

हिन्दी—वेगशाली वायुसे जिसके प्रस्थसमूह हिल रहे थे ऐसा हिमालय पर्वत मदिराके रागके समान लाल विकसित गरुडोंके तेजको मुखके समान गुफाओंसे पीकर मतवालेके समान कम्पित हुआ ॥ ४६ ॥

प्रवृत्तनक्तंदिवसंधिदीप्तैर्नभस्तलं गां च पिशङ्गयद्भिः।
अन्तर्हितार्कैः परितः पतद्भिश्छायाः समाचिक्षिपिरे वनानाम् ॥ ४७ ॥

मल्लि०—प्रवृत्तेति । नक्तं च दिवा च नक्तन्दिवम् । 'अचतुरे-'त्यादिना सप्तम्यर्थवृत्त्योरव्यययोर्द्वन्द्वैकवद्भावनिपाते समासान्तः । लक्षणया स्वहोरात्र- मात्रवाची । प्रवृत्तः प्रादुर्भूतो यो नक्तंदिवस्य संधिः संध्या तद्वद्दीप्तैः = शोभितैः। नभस्तलं गां=भुवं च पिशङ्गयद्भिः = पिशङ्गीकुर्वद्भिः । अन्तर्हित आच्छादितोऽर्को यैस्तैः पतद्भिः पक्षिभिः परितः = सर्वतो वनानां छायाः समाचिक्षिपिरे= समाक्षिप्ताः । अन्तर्बहिश्च तेजःप्रवेशात्क्वाप्यन्तर्हिता इत्यर्थः ॥ ४७ ॥

हिन्दी—प्रादुर्भूत रात और दिनकी संध्याके समान शोभित आकाशमण्डल और पृथ्वीको पीले वर्णसे युक्त करते हुए तथा सूर्यको आच्छादित किये हुए पक्षियोंने सभी तरफ मेघोंकी छायाओंको अन्तर्हित कर दिया ॥ ४७ ॥

स भोगिसङ्घः शमयुग्रधाम्नां सैन्येन निन्ये विनतासुतानाम् ।
महाध्वरे विध्यपचारदोषः कर्मान्तरेणेव महोदयेन ॥ ४८ ॥

मल्लि०—स इति । स भोगिसङ्घः=सर्पसमूह उग्रधाम्नां=तेजस्विनां विनता- सुतानां=तार्क्ष्यपक्षिणां सैन्येन महाध्वरे = महाक्रतौ विध्यपचारदोषः । कर्मान्तर-

दोषो महोदयेन = महासामर्थ्येन, अथवा महता फलेन । तन्मूलेन प्रकृतक्रिया-सिद्धेरिति । कर्मान्तरेण= प्रायश्चित्तेनेव शमं= शान्ति निन्ये= प्रापितः ॥ ४८ ॥

**हिन्दी**—उस सर्पसमूहको तीव्र तेजवाले गरुड पक्षियोंकी सेनाने जैसे महायज्ञ-में विधानके त्रुटिदोषको महाफलवाला प्रायश्चित्त शमन करता है उसी तरह शान्त कर दिया ॥ ४८ ॥

साफल्यमस्त्रे रिपुपौरुषस्य कृत्वा गते भाग्य इवापवर्गम् ।
अनिन्धनस्य प्रसभं समन्युः समाददेऽस्त्रं ज्वलनस्य जिष्णुः ॥ ४९ ॥

**मल्लि०**—साफल्यमिति । अस्त्रे=सर्पास्त्रे । भाग्ये प्राग्भवीये शुभे कर्मणीव । रिपुपौरुषस्य रिपुपराक्रमस्य साफल्यं कृत्वा, अपवर्गमवसानं= समाप्ति गते सति । स्वनिवृत्त्या परसाफल्यात्सफलीकरणोपचारः । समन्युः= सक्रोधो जिष्णुरर्जुनोऽनि-न्धनस्येन्धनं विनैवोत्पादितस्य ज्वलनस्य ज्वलनप्रदीपकम् अस्त्रमाग्नेयास्त्रं प्रसभं= शीघ्रं समाददे= जग्राह ॥ ४९ ॥

**हिन्दी**—पूर्वजन्मके शुभ कर्मके समान सर्पास्त्रके शत्रु पराक्रमके सफलता कर समाप्त होनेपर क्रुद्ध होकर अर्जुनने काष्ठरहित अग्निके अस्त्र अर्थात् आग्नेय अस्त्रको शीघ्रतापूर्वक ग्रहण किया ॥ ४९ ॥

ऊर्ध्वं तिरश्चीनमधश्च कीर्णैर्ज्वालासटैर्लङ्घितमेघपङ्क्तिः ।
आयस्तसिंहाकृतिरुत्पपात प्राण्यन्तमिच्छन्निव जातवेदाः ॥ ५० ॥

**मल्लि०**—ऊर्ध्वमिति । ऊर्ध्वं तिरश्चीनं = तिर्यक् । 'विभाषाञ्चेरदिक्स्त्रियाम्' इति खप्रत्ययः । अधश्च कीर्णैर्विस्तृतैर्ज्वाला एव सटाः = केसराः । 'सटा जटा-केसरयोः' इति विश्वः । तैः, लङ्घितमेघपङ्क्तिरतिक्रान्तजलदावलिः । आयस्तस्य लङ्घनोद्यतस्य सिंहस्येवाकृतिर्यस्य स जातवेदाः = अग्निः प्राण्यन्तं प्राणिनां संहार-मिच्छन्निवोत्पपात ॥ ५० ॥

**हिन्दी**—ऊपर, तिर्यक् ( तिरछा भाग ) और नीचे विस्तृत ज्वालारूप केसरोंसे मेघपङ्क्तिको लङ्घित कर लङ्घनके लिए तत्पर सिंहकी समान आकृतिसे युक्त अग्नि मानों प्राणियोंके संहारको इच्छा करता हुआ प्रकट हो गया ॥ ५० ॥

भित्त्वेव भाभिः सवितुर्मयूखाञ्जज्वाल विष्वग्विसृतस्फुलिङ्गः ।
विशीर्यमाणाश्मनिनादघोरं ध्वानं वितन्वन्नकृशः कृशानुः ॥ ५१ ॥

मल्लि०—भित्त्वेति । भाभिस्तेजोभिः सवितुर्मयूखान् = किरणान् । 'किरणोस्रमयूखांशु—'त्यमरः । भित्त्वेवाभिहत्येव विष्वक् = समन्ताद्विसृताः स्फुलिङ्गा यस्य सः । स्फुलिङ्गोदयस्य मयूखाभिघातहेतुकत्वमुत्प्रेक्षते । 'त्रिषु स्फुलिङ्गोऽग्निकणः' इत्यमरः । अकृशोऽतनुः, कृशानुर्वह्निः । विशीर्यमाणस्य विदलतोऽश्मनो निनादमिव धीरमुद्धतं ध्वनिं वितन्वन् जज्वाल ॥ ५१ ॥

हिन्दी—तेजों से सूर्यकी किरणोंको मानों भेदन कर चारों ओरसे फैले हुए स्फुलिङ्गोंवाला विशाल अग्नि विदीर्ण होते हुए पत्थरकी ध्वनिकी सदृश गम्भीर ध्वनिको फैलाता हुआ प्रज्वलित हो उठा ॥ ५१ ॥

चयानिवाद्रीनिव तुङ्गशृङ्गान् क्वचित्पुराणीव हिरण्मयानि ।
महावनानीव च किंशुकानां ततान वह्निः पवनानुवृत्त्या ॥ ५२ ॥

मल्लि०—चयानिति । वह्निः पवनानुवृत्त्या = वायुवशेन, चयानिव हिरण्मयान्प्राकारानिव । 'चयः समूहे प्राकारे' इति विश्वः । तुङ्गशृङ्गानद्रीनिव क्वचिद्धिरण्मयानीति 'पाण्डिनायने—'त्यादिना निपातनात्साधुः । पुराणि = नगराणीव तथा किंशुकानां = पलाशतरूणाम् । 'पलाशे किंशुकः पर्णः' इत्यमरः । महावनानीव । पुष्पितानीति शेषः । ततान = वितस्तार । तदाकारेण जज्वालेत्यर्थः ॥ ५२ ॥

हिन्दी—अग्नि, वायु के अनुसारसे सुवर्णमय प्राकारोंके समान, सुवर्णमय प्रकाशोंके समान, ऊँची चोटी वाले पर्वतोंके समान, शहरोंकी तथा पलाश वृक्षोंके महावनोंके समान हो कर फैल उठा ॥ ५२ ॥

मुहुश्चलत्पल्लवलोहिनीभिरुच्चैः शिखाभिः शिखिनोऽवलीढाः ।
तलेषु मुक्ताविशदा बभूवुः सान्द्राञ्जनश्यामरुचः पयोदाः ॥ ५३ ॥

मल्लि०—मुहुरिति । सान्द्राञ्जनश्यामरुचो = घनकज्जलश्यामरुचः । पयोदा मुहुश्चलन्त्यश्च ताः पल्लवलोहिन्यो लोहितवर्णाश्च ताभिश्चलत्पल्लवलोहिनीभिः । 'वर्णादनुदात्तात्तोपधात्तो नः' इति ङीप् । तकारस्य नकारः । शिखिनोऽग्नेः । उच्चैस्तराभिः शिखाभिर्ज्वालाभिः । अवलीढाः । दग्धा इत्यर्थः । अत एव तलेषु = अधोभागेषु मुक्ताविशदा = मौक्तिकधवला बभूवुः । जलसंशोषणादिति भावः । "अधः स्वरूपयोरस्त्री तलम्' इत्यमरः ॥ ५३ ॥

हिन्दी—गाढ कज्जलके समान कृष्णवर्ण वाले मेघ बारंबार चलती हुई

पल्लवके समान लाल वर्णवाली अग्निकी उन्नत ज्वालाओंसे जलते हुए अत एव निम्न भागोंमें मोतीके समान उज्वल हो गये ॥ ५३ ॥

लिलिक्षतीव क्षयकालरौद्रे लोकं विलोलार्चिषि रोहिताश्वे ।
पिनाकिना हूतमहाम्बुवाहमस्त्रं पुनः पाशभृतः प्रणिन्ये ॥ ५४ ॥

मल्लि०—लिलिक्षतीवेति। क्षयकालरौद्रे = कल्पान्तकालवद्भयावहे विलोलार्चिषि = चलज्वाले, रोहिताश्वे = ज्वलने । 'रोहिताश्वो वायुसखः' इत्यमरः । लोकं लिलिक्षति लेढुमिच्छति जिघत्सति सतीव । लिहः सन्नन्ताच्छतृप्रत्ययः । पिनाकिना पुनर्हूता आहूता आकारिता महाम्बुवाहा येन तत् । पाशभृतो=वरुणस्य । अस्त्रं प्रणिन्ये प्रयुक्तम् ॥ ५४ ॥

हिन्दी—प्रलय कालके समान भयङ्कर, चञ्चल ज्वालावाले अग्निके मानों लोकको खानेकी इच्छा करनेपर शिवजीने फिर विशाल मेघोंको बुलानेवाले वारुणाऽस्त्रका प्रयोग किया ॥ ५४ ॥

ततो धरित्रीधरतुल्यरोधसस्तडिल्लतालिङ्गितनीलमूर्तयः ।
अधोमुखाकाशसरिन्निपातिनीरपः प्रसक्तं मुमुचुः पयोमुचः ॥ ५५ ॥

मल्लि०—तत इति । ततो वरुणास्त्रप्रयोगानन्तरं धरित्रीधरतुल्यरोधसः = पर्वतसमप्रान्ताः । 'रोधः स्यात्प्रान्तकूलयोः' इति विश्वः । तडिल्लताभिरालिङ्गिता नीलमूर्तयो = नीलाङ्गानि येषां ते पयोमुचो मेघा अधोमुखा आकाशसरिदिव निपतन्तीति प्रसक्तमनुबन्धमविच्छिन्नं यथा तथा मुमुचुः । इतः प्रभृति वंशस्थवृत्तम् ॥ ५५ ॥

हिन्दी—तब पर्वतके तुल्य प्रान्त भाग वाले, बिजलियोंसे आलिङ्गित नील अङ्गों वाले मेघ, अधोमुख आकाश गङ्गाके समान गिरने वाले जलको लगातार बरसाने लगे ॥५५ ॥

पराहतध्वस्तशिखे शिखावतो वपुष्यधिक्षिप्तसमिद्धतेजसि ।
कृतास्पदास्तप्त इवायसि ध्वनिं पयोनिपाताः प्रथमे वितेनिरे ॥ ५६ ॥

मल्लि०—पराहतेति । पराहता = अभिहता अतो = ध्वस्ता निर्वापिताः शिखा ज्वाला यस्य तस्मिन् पराहतध्वस्तशिखे । अधिक्षिप्तं प्रहारितं नाशितम् । ताडितमिति यावत् । अतः समिद्धं झटिति प्रदीप्तं तेजो यस्य तस्मिन् । शिखावतोऽग्ने-

र्वपुषि स्वरूपे। तप्तेऽयसि लोह इव कृतास्पदाः कृतस्थितयः। 'आस्पदं प्रतिष्ठायाम्' इति निपातः। प्रथमे पयोनिपाता जलपाता ध्वनिं वितेनिरे = विस्तारयामासुः ॥ ५६ ॥

हिंदी— जलसे ताडित होकर अतः बुझी हुई ज्वालावाले पर्याप्त तेजके नाश होनेपर पर्याप्त तेजवाले अग्निके स्वरूपमें मानों सन्तप्त लोहमें स्थिति किये हुए प्रथम जलपात आवाज करने लगे ॥ ५६ ॥

महानले भिन्नसिताभ्रपातिभिः समेत्य सद्यः क्वथनेन फेनताम्।
व्रजद्भिरार्द्रेन्धनवत्परिक्षयं जलैर्वितेने दिवि धूमसंततिः ॥ ५७ ॥

मल्लि०— महानल इति। महानलेऽग्नौ भिन्नानि खण्डितानि सिताभ्राणीव पतन्तीति भिन्नसिताभ्रपातिभिः। 'कर्तर्युपमाने' इति णिनिप्रत्ययः। अत एव सद्यः क्वथनेन पाकेन फेनतां समेत्य = प्राप्य, परिक्षयं = नाशं व्रजद्भिर्जलैरार्द्रेन्धनवत् = आर्द्रकाष्टैस्तुल्यम्। 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः। दिवि = गगने, धूमसंततिर्वितेने विस्तारिता। फेनादिकमार्द्रेन्धनेऽपि तुल्यम् ॥ ५७ ॥

हिन्दी—प्रदीप्त अग्निमें खण्डित सफेद बादलोंके समान पड़ने वाले अतएव उसी क्षण पाकसे फेनके रूपमें परिणत होकर नष्ट होने वाले जलोंने गीले काष्ठोंके समान आकाशमें धूम्रसमूहको फैला दिया ॥ ५७ ॥

स्वकेतुभिः पाण्डुरनीलपाटलैः समागताः शक्रधनुःप्रभाभिदः।
असंस्थितामादधिरे विभावसोर्विचित्रचीनांशुकचारुतां त्विषः ॥ ५८ ॥

मल्लि०— स्वकेतुभिरिति। पाण्डुरैर्नीलैः पाटलैश्च पाण्डुरनीलपाटलैर्विचित्रैः स्वकेतुभिर्धूमैः समागताः = संगताः। अत एव शक्रधनुषः प्रभाभिद इन्द्रधनुर्द्युतिभाजो विभावसोरग्नेस्त्विषोऽसंस्थितामस्थिरां विचित्रस्य चीनांशुकस्य = पट्टवस्त्रविशेषस्य चारुतामादधिरे = दधुः ॥ ५८ ॥

हिन्दी—कपिश, कृष्ण वर्ण और लाल विभिन्न धूमों से मिले हुए अत एव इन्द्रधनुकी कान्तिवाले अग्निकी कान्तिने अस्थिर विचित्र रेशमी वस्त्रकी सुन्दरताका धारण कर लिया ॥ ५८ ॥

जलौघसंमूर्च्छनमूर्च्छितस्वनः प्रसक्तविद्युल्लसितैधितद्युतिः।
प्रशान्तिमेष्यन्धृतधूममण्डलो बभूव भूयानिव तत्र पावकः ॥ ५९ ॥

मल्लि०— जलौघेति । जलौघानामुदकप्रवाहाणां संमूर्च्छनेन = मेलनेन मूर्च्छित स्वनः = प्रवृद्धघोषः । 'मूर्च्छनं मेलने प्रोक्तं वृद्धौ मूर्च्छितमेव वा' । इति सज्जनः । प्रसक्तैः = संगतैर्विद्युतां = तडिल्लतानां लसितैः स्फुरणैरेधिता = वर्धिता द्युतिर्यस्य स धृतधूममण्डलो = जलाघातसंभृतधूमपटलः पावकः प्रशान्तिमेष्यन्, तत्र देशे भूयानिव बभूव । भूयस्तया स्थापित इवेत्युत्प्रेक्षा ॥ ५९ ॥

हिन्दी—जलप्रवाहके मिलनेसे बढ़े हुए शब्द वाला, मिली हुई बिजलीके स्फुरणोंसे बढ़ी हुई कान्तिसे युक्त, धूममण्डलका धारण किया हुआ अग्नि बुझनेके समयमें युद्धस्थलमें अधिकके समान प्रतीत होने लगा ॥ ५९ ॥

प्रवृद्धसिन्धूर्मिचयस्थवीयसां चयैर्विभिन्नाः पयसां प्रपेदिरे ।
उपात्तसंध्यारुचिभिः सरूपतां पयोदविच्छेदलवैः कृशानवः ॥ ६० ॥

मल्लि०— प्रवृद्धेति । प्रवृद्धानां सिन्धोः = समुद्रस्य ऊर्मीणां चया राशय इव स्थवीयसां स्थूलतराणां पयसां चयैः पूरैर्विभिन्ना विश्लेषिताः कृशानवोऽग्नय उपात्तसंध्यारुचिभिः प्राप्तसंध्यारागैः पयोदानां विच्छिद्यन्त इति विच्छेदा विच्छिन्नाः विक्षिप्ता ये लवाः शकलास्तैः सरूपतां = समानरूपतां प्रपेदिर इत्युपमा ॥ ६० ॥

हिन्दी—समुद्रकी बढ़ी हुई तरङ्गोंके समूहके समान बड़े बड़े जलसमूहके प्रवाहोंसे विश्लेषित अग्निसमूहने सन्ध्याकी लालीको प्राप्त मेघोंके विच्छिन्न खण्डोंके समान रूपको प्राप्त किया ॥ ६० ॥

उपैत्यनन्तद्युतिरप्यसंशयं विभिन्नमूलोऽनुदयाय संक्षयम् ।
तथा हि तोयौघविभिन्नसंहतिः स हव्यवाहः प्रययौ पराभवम् ॥६१॥

मल्लि०—उपैतीति । अनन्तद्युतिर्महातेजा अपि विभिन्नमूलो = नष्टमूलोऽसंशयं यथा तथाऽनुदयाय = पुनरनुत्थानाय संक्षयं = नाशम् । उपैति । तथा हि— तोयौघैर्विभिन्ना संहतिः संघातो यस्य स तथोक्तः हव्यवाहोऽग्निः पराभवं = नाशं प्रययौ । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६१ ॥

हिन्दी—जैसे तेजस्वी पुरुष भी मूलके नष्ट होनेपर निश्चय ही फिर उत्थान न होनेके लिए नाशको प्राप्त होता है वैसे ही जलसमूहसे विश्लिष्ट समूहवाला अग्नि नष्ट हो गया ( अर्थात् बुझ गया ) ॥ ६१ ॥

अथ विहितविधेयैराशु मुक्ता वितानै-
रसितनगनितम्बश्यामभासां घनानाम् ।

विकसदमलधाम्नां प्राप नीलोत्पलानां
श्रियमधिकविशुद्धां वह्निदाहादिव द्यौः ॥ ६२ ॥

मल्लि०—अथेति । अथ अग्निनिवारणानन्तरम् । विहितविधेयैः =कृतकृत्यैः। क्षितिनगस्याञ्जनाद्रेर्नितम्बः । कटकस्तद्वत् श्यामभासां = वितानैः = पटलैर्मुक्ता द्यौराकाशो वह्निदाहादिवेत्युत्प्रेक्षा । विकसन्ति च तानि अमलधामानि स्वच्छकान्तीनि च तेषां नीलोत्पलानामधिकविशुद्धामत्युज्ज्वलां श्रियं प्राप । निदर्शनालङ्कारः ॥ ६२ ॥

हिन्दी—आग्नेय अस्त्रके निवारणके बाद कार्यको किये हुए अञ्जन पर्वतके मध्यभागके समान श्याम कान्तिवाले मेघोंके समूहसे उन्मुक्त आकाशने मानों अग्निदाहसे विकसित निर्मल कान्ति वाले नीलकमलोंके अतिशय उज्वल कान्तिको प्राप्त कर लिया ॥ ६२ ॥

इति विविधमुदासे सव्यसाची यदस्त्रं
बहुसमरनयज्ञः सादयिष्यन्नरातिम् ।
विधिरिव विपरीतः पौरुषंन्यायवृत्तेः
सपदि तदुपनिन्ये रिक्ततां नीलकण्ठः ॥ ६३ ॥

मल्लि०—इतीति । बहुसमरनयाननेकरणोपायान् जानातीति बहुसमरनयज्ञः। 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । न तु 'इगुपधे—'त्यादिनाऽकारान्तात् 'अनुपपदात्कर्मोपपदो भवति विप्रतिषेधेन' इति वार्तिकव्याख्याने भाष्यकारेण 'अर्थज्ञ'शब्दमुदाहृत्यास्य 'अर्थज्ञशब्दस्य कर्मोपपदत्वं दर्शितम् । सव्यसाची = अर्जुनः। अराति = किरातपतिं सादयिष्यन् । अवसादयितुकामः सन्नित्यर्थः । क्रियार्थक्रियायां लृटि तस्य शत्रादेशः । इति पूर्वोक्तप्रकारेण विविधं यदस्त्रमुदासे । प्रयुक्तवानित्यर्थः । 'उपसर्गादस्यत्यूह्योर्वेति वाच्यम्' इत्यात्मनेपदम् । विपरीतो विधिः= प्रतिकूलं दैवम् । 'विधिर्विधाने दैवेऽपि' इत्यमरः । न्यायेन = नीत्या वृत्तिर्वर्तनं यस्य तस्य नीतिनिष्ठस्य पौरुषमिव नीलकण्ठः शिवः सपदि तद् अस्त्रं रिक्ततां = व्यर्थताम् । उपनिन्ये संहृतवानित्यर्थः । मालिनी वृत्तम् ॥ ६३ ॥

हिन्दी—युद्धके अनेक उपायोंके जानकार अर्जुनने शत्रु किरातपतिको नष्ट करनेकी इच्छा करते हुए इस प्रकार जो अनेक अस्त्रोंको छोड़ा विपरीत भाग्य जैसे नीतिनिष्ठ पुरुषके पौरुषको नष्ट करता है उसी तरह शिवजीने उन अस्त्रोंको उसी क्षण व्यर्थ कर डाला ॥ ६३ ॥

वीतप्रभावतनुरप्यतनुप्रभावः
प्रत्याचकाङ्क्ष जयिनीं भुजवीर्यलक्ष्मीम् ।
अस्त्रेषु भूतपतिनापहृतेषु जिष्णु-
र्वर्षिष्यता दिनकृतेव जलेषु लोकः ॥ ६४ ॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये षोडशः सर्गः ।

●

मल्लि०—वीतेति । भूतपतिना = शंभुना । अनुग्रहीष्यतेति शेषः । अस्त्रेष्वप-हृतेषु सत्सु वर्षिष्यता उत्तरत्र—सहस्रगुणं वितरिष्यता दिनकृता = सूर्येण जलेष्वपहृतेषु सत्सु लोक इव वीतप्रभावो = गतास्त्रमहिमा । अन्यत्र—, गतशक्तिः । अत एव तनुः क्षीणो वीतप्रभावतनुः तथाऽप्ययतनुप्रभावो निसर्गतः सामर्थ्यादधिकः । अन्यत्र—उद्योगवान् । ततो जिष्णुरर्जुनो जयिनीं = जयशीलाम् । 'जिदृक्षी—'त्यादिनेनिप्रत्ययः । भुजवीर्यलक्ष्मीं=भुजपराक्रमसंपदम् । उभयत्रापि पुरुषकारमिति यावत् । तत्कालकुण्ठितामिति शेषः । प्रत्याचकाङ्क्ष=प्रत्याहर्तुमियेषेत्यर्थः । यथा लोको नद्यादिजलापहारेऽप्युपायान्तरेण कूपादिना जीवितुमिच्छति तद्वदस्त्रबलापहारेऽपि भुजबलेनैव जेतुमियेषेति भावः । वसन्ततिलका वृत्तम् ॥६४॥

●

हिन्दी—शिवजीके अस्त्रोंको व्यर्थ कर देनेपर जैसे सहस्रगुण जल देते हुए सूर्यके जलके आहरण करनेपर नष्ट प्रभाववाला, लोक वर्षा करनेवाले सूर्यसे जल पानेकी इच्छा करता है उसी तरह अस्त्रमहिमासे रहित क्षीण होकर भी अक्षीण प्रभाव अर्जुनने बाहुपराक्रमसंपत्तिकी आकाङ्क्षा की ॥ ६४ ॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये षोडशः सर्गः

●

# सप्तदशः सर्गः

अथ पञ्चभिः पार्थं विशेषयन् षड्भिः कुलकमाह—अथेत्यादिभिः—

अथापदा मुद्धरणक्षमेषु मित्रेष्विवास्त्रेषु तिरोहितेषु।
धृतिं गुरुश्रीर्गुरुणाभिपुष्यन् स्वपौरुषेणेव शरासनेन॥ १ ॥

मल्लि०—अथ जयलक्ष्मीप्रत्याकाङ्क्षानन्तरम्। आपदामुद्धरणक्षमेषु = आपन्निवारणसमर्थेषु। अस्त्रेषु प्रस्वापनादिषु तादृशेषु मित्रेष्विव तिरोहितेष्वन्तर्हितेषु सत्सु, गुरुणा महता स्वपौरुषेणेव तादृशेन शरासनेन धृतिं = धैर्यम्। अभिपुष्यन् = वर्धयन्। अद्यापि धनुषि पौरुषे च सति कियानयं किरात इति धैर्यमवलम्बमान इत्यर्थः। अत एव गुरुश्रीः = प्रवृद्धशोभासम्पत्तिः। 'पद्मा मा लक्ष्मीः श्रीर्निगद्यते' इति शाश्वतः॥ १ ॥

हिन्दी—अनन्तर आपत्तियोंके निवारणमें समर्थ मित्रोंके समान प्रस्वापन आदि अस्त्रोंके निष्कल होनेपर महान् अपने पौरुषके समान महान् गाण्डीव धनुसे धैर्यको बढ़ाते हुए अर्जुन बढ़ी हुई शोभासम्पत्तिवाले हुए॥ १॥

भूरिप्रभावेण रणाभियोगात्प्रीतो विजिह्मश्च तदीयवृद्धया।
स्पष्टोऽप्यविस्पष्टवपुःप्रकाशः सर्पन्महाधूम इवाद्रिवह्निः॥ २॥

मल्लि०—भूरीति। पुनश्च, भूरिप्रभावेण = महानुभावेन सह रणाभियोगात् = युद्धलाभात् प्रीतः तदीयवृद्धया = शत्रुवृद्धया विजिह्मो = विश्लथश्च तथा स्पष्टो दीप्त्या प्रज्वलन्नप्यविस्पष्टो वपुःप्रकाशो यस्य सः। कुतः। सर्पन् = प्रसरन् महान्धूमो यस्य स सर्पन्महाधूमोऽद्रिवह्निरिव स्थितः॥ २॥

हिन्दी—प्रचुर प्रभावके साथ युद्धके लाभसे प्रसन्न परन्तु शत्रुकी वृद्धिसे शिथिल होकर अर्जुन दीप्तिसे प्रज्वलित होकर भी फैले हुए प्रचुर धूमवाले पर्वतके अग्निके समान अस्त्र शरीर प्रकाशवाले हो गये॥ २॥

तेजः समाश्रित्य परैरहार्यं निजं महन्मित्रमिवोरुधैर्यम्।
आसादयन्नस्खलितस्वभावं भीमे भुजालम्बमिवारिदुर्गे॥ ३॥

मल्लि०—तेज इति। पुनश्च, परैररिभिरहार्यमभेद्यं निजं = स्वकीयं महत्तेजो = वीर्यं मित्रमिव समाश्रित्य। अत एव भीमे = भयानकेऽरिरेव दुर्गं तस्मिन्

अरिदुर्गे शत्रुसङ्कटे । अस्खलितस्वभावमचलशीलगुरु = महत् धैर्यं भुजालम्बमिव = हस्तावष्टम्भमिव, आसादयन् = प्राप्नुवन् । ईदृशे संकटेऽपि महावीर्यत्वाद्धैर्यमत्यज-न्नित्यर्थः ॥ ३ ॥

हिन्दी—शत्रुओंसे अहार्य और मित्रके समान अपने प्रचुर तेजका आश्रय कर अर्जुन भयानक शत्रुरूप सङ्कटमें अविचलित स्वभाववाले होकर प्रचुर धैर्यको हाथके अवलम्बनके समान प्राप्त कर रहे थे ॥ ३ ॥

वंशोचितत्वादभिमानवत्या संप्राप्तया संप्रियतामसुभ्यः ।
समक्षमादित्सितया परेण वध्वेव कीर्त्या परितप्यमानः ॥ ४ ॥

मल्लि०—वंशेति । पुनश्च, अभिमानो ममताबुद्धिस्तद्वत्या । विषयतया कर्मणि कर्तृत्वोपचारः । अभिमानास्पदेनेत्यर्थः । अन्यत्र—, कुलशीलाद्यभिमानवत्या । वंशोचितत्वात् = स्वकुलानुरूपत्वात् । असुभ्यः = प्राणेभ्योपि संप्रियतां = संप्राप्तया परेण शत्रुणाऽक्ष्णोः समीपे समक्षमक्ष्यग्रतः । 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्तष्टच्प्रत्ययः । आदातुं = ग्रहीतुमिष्टयाऽऽदित्सितया । आजिहीर्षितये-त्यर्थः । आङ्पूर्वाद्ददातेः सन्नन्तात्कर्मणि क्तः । वध्वेव कीर्त्या हेतुना परितप्यमानः, कर्तरि शानच् 'हेतौ' इति तृतीया । कन्यया शोक इति वत् ॥ ४ ॥

हिन्दी—अर्जुनवंशके उचित होनेसे अभिमानसे युक्त बुद्धिसे प्राणसे भी प्रिय भावको प्राप्त, पत्नीकी तुल्य कीर्तिके शत्रुसे सामने ही ग्रहण करनेकी इच्छासे आँखोंके सामने ही सन्तप्त हो रहे थे ॥ ४ ॥

पतिं नगानामिव बद्धमूलमुन्मूलयिष्यंस्तरसा विपक्षम् ।
लघुप्रयत्नं निगृहीतवीर्यस्त्रिमार्गगावेग इवेश्वरेण ॥ ५ ॥

मल्लि०—पतिमिति । पुनश्च, नगानां पतिं हिमवन्तमिव बद्धमूलं = विपक्षं शत्रुं तरसा = बलेन । उन्मूलयिष्यन् = उत्पाटयिष्यन् । किंच, त्रिभिर्मार्गैर्गच्छतीति त्रिमार्गगा गङ्गा । उत्तरपदसमासः । तस्या वेग इव । ईश्वरेण लघुप्रयत्नमल्पप्रयासं यथा तथा, निगृहीतवीर्यः = प्रतिबद्धशक्तिः, हतास्त्रशक्तिरिति यावत् । पुरा किल हिमाद्रिविदलनाय गगनात्पतन्तं गङ्गाप्रवाहं गङ्गाधरोनि जजटाजूटेन जग्राहेति पौराणी कथा तद्वदित्यर्थः ॥ ५ ॥

हिन्दी—पर्वतपति हिमालयके समान बद्धमूल शत्रुको वेगसे उन्मूलित करनेकी

इच्छा करते हुए अर्जुन गङ्गाके वेगके समान शिवजीसे [थोड़ेसे प्रयाससे नष्ट अस्त्रशक्तिवाले हो गये ॥ ५ ॥

संस्कारवत्त्वाद्रमयत्सु चेतः प्रयोगशिक्षागुणभूषणेषु ।
अयं यथार्थेषु शरेषु पार्थः शब्देषु भावार्थमिवाशशंसे ॥ ६ ॥

मल्लि०—संस्कारेति । एवंभूतः पार्थः संस्कारवत्त्वात् संस्कारश्चित्तवासना। अन्यत्र, साधुत्वम् । असाधूनां प्रयोगनिषेधादिति भावः । अथवा संस्कारो व्युत्पत्तिस्तद्वत्त्वात् चेतो रमयत्सु। प्रयोगः संधानमोक्षादिः, शिक्षाऽभ्यासो गुणस्तदाहितोऽतिशयो मौर्वी वा, अन्यत्र तु—, प्रयोगोऽभियुक्तव्यवहारः शिक्षाभ्यासो गुणाः स्वस्वस्थानकरणादयः श्लेषप्रसादादयो वा ते भूषणं येषां तेषु । यथा यथाभूता अर्था येषां तेषु यथार्थेषु । अन्यत्र—, नियततार्थेषु । शृणन्ति हिंसन्तीति शरास्तेषु जयम् । तन्निर्वाहकत्वात्तदाधारत्वविवक्षायां सप्तमी । शब्देषु पदेषु भावः प्रवृत्तिनिमित्तं सामान्यादिः स एव अर्थस्तमिव । आशशंसे=आचकाङ्क्षे । शास्तिशंसत्योराङ्पूर्वयोरिच्छायामात्मनेपदमुपसंख्यानात् । यथा शाब्दिकाः शब्दैरर्थं साधयन्ति तद्वदयं शरैर्जयं साधयितुमियेषेत्यर्थः ॥ ६ ॥

**हिन्दी**—ऐसे अर्जुनने व्युत्पत्ति वा साधुत्व होनेसे चित्तका रमण करनेवाले प्रयोग, अभ्यास गुण अपने-अपने स्थानकरण आदि वा श्लेष प्रसादरूप भूषणवाले यथार्थ वा नियत अर्थवाले बाणोंसे जयकी और शब्दोंसे प्रवृत्तिनिमित्त रूप अर्थोंके समान आकाङ्क्षा की ॥ ६ ॥

भूयः समाधानविवृद्धतेजा नैवं पुरा युद्धमिति व्यथावान् ।
स निर्ववामास्त्रममर्षनुन्नं विषं महानाग इवेक्षणाभ्याम् ॥ ७ ॥

मल्लि०—भूय इति भूयः=पुनरपि समाधानेन युद्धाय मनोव्यवस्थापनेन विवृद्धतेजाः=प्रवृद्धप्रतापः पुरा पुरातनं युद्धमेवमित्थं शक्तिसादकरं नाभवत्, इति हेतोः व्यथावन् = परितापवान् सोऽर्जुन ईक्षणाभ्यां = दृष्टिभ्यां महानागो = महासर्पो विषमिवामर्षनुन्नं क्रोधोत्थापितम् । अस्त्रमश्रु निर्ववाम = निर्जगाम । सात्त्विकानां रससाधारण्याद्रौद्रेऽश्रूदयोचितः । 'स्तंभः स्वेदोऽथ रोमाञ्चः स्वरभेदोऽथ वेपथुः । वैवर्ण्यमश्रुप्रलयं इत्यष्टौ सात्त्विका मताः' ॥ ७ ॥

**हिन्दी**—फिर भी युद्धके लिए मनको व्यवस्थित करनेसे बढ़े हुए प्रतापवाले अर्जुनने 'पहले इस प्रकारका युद्ध नहीं हुआ था, ऐसा सोचकर परितप्त होकर

नेत्रोंसे जैसे महान् नाग विश्वमन करता है इसी तरह क्रोधसे उत्थापित आँसू गिराने लगे ॥ ७ ॥

तस्याहवायासविलोलमौलेः संरम्भताम्रायतलोचनस्य ।
निर्वापयिष्यन्निव रोषतप्तं प्रस्नापयामास मुखं निदाघः ॥ ८ ॥

मल्लि०—तस्येति । आहवायासेन =युद्धायासेन विलोलमौलेः स्रस्तकेशबन्धस्य । 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः' इत्यमरः । संरम्भताम्रे = कोपारुणे आयते विस्तृते लोचने यस्य । 'संरम्भः संभ्रमे कोपे' इति विश्वः । तस्याऽर्जुनस्य । रोषतप्तं मुखं निदाघो घर्मो निर्वापयिष्यन् शिशिरीकरिष्यन्निवेत्युत्प्रेक्षा । प्रस्नापयामास = सिषेच । स्वेदं जनयामासेत्यर्थः । स्नातेर्मित्त्वविकल्पाद्ध्रस्वविकल्पः ॥ ८ ॥

हिन्दी—युद्धके आयाससे शिथिल केश बन्धवाले, क्रोधसे लाल और विशाल नेत्रोंवाले अर्जुनके क्रोधसे सन्तप्त मुखको स्वेदबिन्दुने मानों ठण्डा करनेके लिए सेचन किया ॥ ८ ॥

क्रोधान्धकारान्तरितो रणाय भ्रूभेदरेखाः स बभार तिस्रः ।
घनोपरुद्धः प्रभवाय वृष्टेरूर्ध्वांशुराजीरिव तिग्मरश्मिः ॥ ९ ॥

मल्लि०—क्रोधेति । क्रोधोऽन्धकार इव तेनान्तरित आवृतः सोऽर्जुनो घनोपरुद्धो मेघावृतस्तिग्मरश्मी रविर्वृष्टेः प्रभवाय=वर्षणाय तिस्र ऊर्ध्वांशूनां राजीरिव । अर्कस्योर्ध्वांशुरेखोदये वृष्टिलिङ्गमित्यागमः । रणाय = रणप्रवृत्तये तिस्रस्त्रिसंख्या भ्रूभेदो भ्रूभङ्गस्तस्य रेखा बभार ॥ ९ ॥

हिन्दी—अन्धकारके समान क्रोधसे आच्छादित अर्जुनने जैसे मेघसे आच्छादित सूर्य वृष्टि करनेके लिए तीन ऊर्ध्वकिरणोंको धारण करते हैं उसी तरह युद्धकी प्रवृत्तिके लिए तीन भ्रूभङ्गोंकी रेखाओंका धारण किया ॥ ९ ॥

स प्रध्वनय्याम्बुदनादि चापं हस्तेन दिङ्नाग इवाद्रिशृङ्गम् ।
बलानि शंभोरिषुभिस्तताप चेतांसि चिन्ताभिरिवाशरीरः ॥ १० ॥

मल्लि०—स इति । सोऽर्जुनोऽम्बुदवन्नदतीति अम्बुदनादि । 'कर्तर्युपमाने' इति णिनिः । चापं दिङ्नागो दिग्गजोऽद्रिशृङ्गमिव हस्तेन = करेण प्रध्वनय्य = ध्वनयित्वा शंभोर्बलानि = सैन्यानि । अशरीरोऽनङ्गः कामश्चेतांसि = युवमनांसि

चिन्ताभिः प्रयोजनध्यानैरिव । इषुभिस्तताप = तापयामास । तपतिः सकर्मकः। अत्र 'इषु' शब्दः स्त्रीलिङ्गः । अन्यथोपमानोपमेययोर्भिन्नलिङ्गतादोषः स्यात्। 'पत्री रोप इषुर्द्वयोः' इत्यमरः ॥ १० ॥

हिन्दी—अर्जुनजाने मेघके समान आवाज करनेवाले धनुको जैसे कि गज अपने सूँड़से पहाड़की चोटीको ध्वनित करता है उसी तरह ध्वनित करके शिवजीके सैन्योंको जैसे कामदेव युवकोंके मनको चित्ताओंसे सन्तप्त करता है उसी तरह बाणोंसे सन्तप्त करने लगे ॥ १० ॥

सद्वादितेवाभिनिविष्टबुद्धौ गुणाभ्यसूयेव विपक्षपाते ।
अगोचरे वागिव चोपरेमे शक्तिः शराणां शितिकण्ठकाये ॥ ११ ॥

मल्लि०—सद्वादितेति । अभिनिविष्टा शास्त्रनिश्चिता बुद्धिर्यस्य स तस्मिन् अभिनिविष्टबुद्धौ = शास्त्रनिष्ठितमतौ विषये सद्वादिता प्रामाणिकार्थसमर्थकतेव । न हि सम्यगभ्यस्तशास्त्रं प्रति सद्वाद्यपि शक्नोतीति व्याचक्षते केचित् । अन्ये त्वभिनिविष्टबुद्धावाग्रहाविष्टचित्ते विषये सद्वादिता हितोपदेष्टृत्वमिव । न ह्याग्रही हितं गृह्णातीति भावः विपक्षपाते = वीतरागे विषये गुणाभ्यसूया = गुणासहिष्णुतेव । स हि समदर्शी द्विषन्तमपि न द्वेष्टीति भावः । अगोचरेऽवाङ्मनसगोचरे ब्रह्मणि वागिव । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेरिति भावः । शराणां शक्तिः शितिकण्ठकाये = शिवशरीरे विषये उपरेमे उपरता । तस्याक्षोभ्यमहिमत्वादिति भावः । 'विभाषाकर्मकात्' इत्यस्य वैकल्पिकत्वात्पक्षे आत्मनेपदम्। अत्र मालोपमा ॥ ११ ॥

हिन्दी—बुद्धिवाले पुरुषके विषयमें प्रामाणिक अर्थकी समर्थकताके समान रागरहित पुरुषके विषयमें गुणोंकी असहिष्णुताके समान वचन और मनसे अग्राह्य ब्रह्ममें बाणीके समान अर्जुनके बाणोंकी शक्ति शिवजीके शरीरमें निष्फल होने लगी ॥ ११ ॥

उमापतिं पाण्डुसुतप्रणुन्नाः शिलीमुखा न व्यथयांबभूवुः ।
अभ्युत्थितस्याद्रिपतेर्नितम्बमर्कस्य पादा इव हैमनस्य ॥ १२ ॥

मल्लि०—उमेति । पाण्डुसुतेन प्रणुन्नाः प्रक्षिप्ताः शिली शल्यं मुखे येषां ते शिलीमुखाः = बाणा उमापतिं = शिवम् । अभ्युत्थितस्याभ्युन्नतस्य । अद्रिपतेः नितम्ब=कटकम् । हेमन्ते भवस्य हैमनस्य ।' सर्वत्राण्च तलोपश्च' इत्यण्प्रत्ययस्तकार-

लोपश्च । अर्कस्य पादा रश्मय इव । 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः । न व्यथयांबभूवुः ! 'मध्ये स्थितस्यासुमतां समूहमर्कस्य' इति पाठान्तरे मध्ये स्थितस्य हैमनस्यार्कस्य पादाः किरणा असुमतां = प्राणिनां समूहमिवेति न दुःखमुत्पादयामासुरिति योजना ॥ १२ ॥

**हिन्दी**—जैसे हेमन्त ऋतुमें सूर्यकी किरणें ऊँचे हिमालयके नितम्बको व्यथित नहीं करती हैं उसी तरह अर्जुनसे प्रेरित बाण शिवजीको व्यथित नहीं कर सके ॥

संप्रीयमाणोऽनुबभूव तीव्रं पराक्रमं तस्य पतिर्गणानाम् ।
विषाणभेदं हिमवानसह्यं वप्रानतस्येव सुरद्विपस्य ॥ १३ ॥

**मल्लि०**—समिति । गणानां पतिः शिवः । तीव्रं तस्यार्जुनस्य पराक्रमं वप्रे = रोधसि आनतस्य = परिणतस्य । तटप्रहारिण इत्यर्थः । सुरद्विपस्यासह्यं विषाणभेदं = दन्तप्रहारं हिमवानिव संप्रीयमाणः = संहृष्यन् अनुबभूवानुभवति स्म । तस्याक्षोभ्यत्वादनुजिघृक्षुत्वाच्चेति भावः ॥ १३ ॥

**हिन्दी**—तटमें प्रहार करनेवाले ऐरावत हाथीके असह्य दन्तप्रहारको हिमालय पर्वत तकी तरह प्रमथपति शिवजो प्रसन्न होते हुए अर्जुनके तीव्र पराक्रमका अनुभव करने लगे ॥ १३ ॥

तस्मै हि भारोद्धरणे समर्थं प्रदास्यता बाहुमिव प्रतापम् ।
चिरं विषेहेऽभिभवस्तदानीं स कारणानामपि कारणेन ॥ १४ ॥

**मल्लि०**—तस्मै हीति । तस्मै = पार्थाय भारस्य = भूभारस्य उद्धरणे = उद्वहने समर्थं प्रतापं बाहुमिव । अवष्टम्भतयेति शेषः । अन्यथा भारोद्वहनस्य दुष्करत्वादिति भावः । 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्' इत्यमरः । प्रदास्यता वितरिष्यता कारणानां ब्रह्मादीनामपि कारणेन जनकेन = देवेन सोऽभिभवोर्जुनपरिभवः । तदानीं चिरं विषेहे सोढः । वात्सल्यादिति भावः ॥ १४ ॥

**हिन्दी**—उन अर्जुनको भूभारके उद्धार करनेमें समर्थ प्रतापको बाहुके समान देते हुए ब्रह्मा आदि कारणों के भी कारण भगवान् शिवजीने अर्जुनसे किये गये पराभवका बहुत समयतक सहन किया ॥ १४ ॥

अथ त्रिभिर्भगवदभिप्रायमाविष्कुर्वंश्चतुर्भिः कलापकमाह—

प्रत्याहतौजाः कृतसत्त्ववेगः पराक्रमं ज्यायसि यस्तनोति ।
तेजांसि भानोरिव निष्पतन्ति यशांसि वीर्यज्वलितानि तस्य ॥ १५ ॥

मल्लि०—प्रत्याहतेति । प्रत्याहतौजः परेण प्रतिहतबलाः सन्नपि कृतवत्स- वेगः = कृतोत्साहातिशयः सन् यः पुमान् ज्यायसि स्वरमादध्यधिके पराक्रमं तनोति तस्य पुंसो भानोरर्कस्य तेजांसीव वीर्येण = शौर्येण ज्वलितानि = प्रकाशितानि यशांसि निष्पतन्ति । उद्भवन्तीत्यर्थः । हीनस्याधिकाभियोगो यशस्कर इति भावः ॥ १५ ॥

हिन्दी—शत्रुसे खींचा गया बलवाला होकर भी अतिशय उत्साह करने वाला होकर जो पुरुष अपनेसे जबर्दस्त पुरुषमें पराक्रम करता है उस पुरुषके शौर्यसे प्रकाशित यश सूर्यके तेजके समान प्रकट होते हैं ॥ १५ ॥

ततः किमित्यत आह—

दृष्टावदानाद्व्यथतेऽरिलोकः प्रध्वंसमेति व्यथिताच्च तेजः ।
तेजोविहीनं विजहाति दर्पः शान्तार्चिषं दीपमिव प्रकाशः ॥ १६ ॥

मल्लि०—दृष्टेति । दृष्टमवदानं महत्कर्म यस्य तस्मात् दृष्टावदानाद् = दृष्टपौरुषात् । अरिलोकः = शत्रुजनो व्यथते = बिभेति । व्यथिताद्भीतात् तेजः प्रध्वंसं नाशम् । एति । तेजोविहीनं दर्प उत्साहः शान्तार्चिषं निर्वाणज्वालं दीपं प्रकाश इव विजहाति = त्यजति ॥ १६ ॥

हिन्दी—पौरुष देखे गये पुरुषसे शत्रु डरता है, डरे हुए पुरुषसे तेज नष्ट होता है; तेजोहीन पुरुषको उत्साह ज्वालाहीन दीपको प्रकाशके समान त्याग कर देता है ॥ १६ ॥

ततः प्रयात्यस्तमदावलेपः स जय्यतायाः पदवीं जिगीषोः ।
गन्धेन जेतुः प्रमुखागतस्य प्रतिद्विपस्येव मतङ्गजौघः ॥ १७ ॥

मल्लि०—तत इति । ततो = दर्पहान्यनन्तरम् । अस्तं क्षयं गतौ मदावलेपौ= मदगर्वौ यस्य सोऽरिलोको गन्धेन मदगन्धेनेव जेतुर्जयनशीलस्य । शीलार्थे तृन्प्रत्ययः । प्रमुखागतस्याभिमुखागतस्य प्रतिद्विपस्यान्यो मतङ्गजौघो मत्तगजसमूह इव जिगीषोर्नायकस्य जय्यतायाः पदवीं प्रयाति = प्राप्नोति । विजिगीषुणा जेतुं शक्यो भवतीत्यर्थः । 'क्षय्यजय्यौ शक्यार्थे' इति निपातः । अत्र श्लोकद्वये ज्यायसि पराक्रमकरणादीनां पूर्वपूर्वस्योत्तरोत्तरं प्रति कारणत्वकथनात् कारणमालाख्योऽलंकारः । लक्षणं तूक्तम् ॥ १७ ॥

हिन्दी—तब मद और गर्वसे क्षीण शत्रुसमूह मानों मदगन्धके समान जयशील और सम्मुख आये हुए प्रतिद्वन्द्वी अन्य मत्त हाथियोंकी तरह नायककी जयशक्यता की पदवीको प्राप्त करता है ॥ १७ ॥

एवं प्रतिद्वन्द्विषु तस्य कीर्तिं मौलीन्दुलेखाविशदां विवास्यन् ।
इयेष पर्यायजयावसादां रणक्रियां शंभुरनुक्रमेण ॥ १८ ॥

मल्लि०—एवमीति । एवमुक्तरीत्या, प्रतिद्वन्द्विषु = प्रत्यर्थिषु मध्ये तस्यार्जुनस्य मौलीन्दुलेखाविशदां कीर्तिं विवास्यन् करिष्यन् अनुक्रमेणाविपर्यासेन = पर्यायेण जयोऽवसादो भङ्गश्च तौ जयावसादौ यस्यां तां पर्यायजयावसादां रणक्रियाम् । इयेषेच्छति स्म । जयानन्तरं भङ्गो भङ्गानन्तरं जय इति पर्यायार्थः । तस्य विपर्यासोऽन्यतरनैरन्तर्यं तदभावोऽनुक्रम इत्यपौनरुक्त्यम् ॥ १८ ॥

हिन्दी—इस प्रकारसे शिवजीने प्रतिद्वन्द्वियोंके मध्यमें अर्जुनकी अपने शिरमें स्थित चन्द्ररेखाकी समान उज्ज्वल कीर्ति करते हुए अनुक्रमसे पारी पारीसे जय और पराजय रूप युद्ध क्रियाकी इच्छा की ॥ १८ ॥

मुनेर्विचित्रैरिषुभिः स भूयान्निन्ये वशं भूतपतेर्बलौघः ।
सहात्मलाभेन समुत्पतद्भिर्जातिस्वभावैरिव जीवलोकः ॥ १९ ॥

मल्लि०—मुनेरिति । मुनेर्विचित्रैरिषुभिः स भूयान् असंख्यो भूतपतेर्बलौघ आत्मलाभेन जन्मना सह समुत्पतद्भिराविर्भवद्भिः । आजन्मसिद्धैरित्यर्थः । जातयो गोत्वमनुष्यत्वादयः, स्वभावा = जातिनियता धर्मास्तैः जातिस्वभावैर्जीवलोकः प्राणिजातमिव वशं निन्ये = नीतः । कर्मणि लिट् । प्राणिनो जातिधर्मानिव गणा मुनिशरान्नातिक्रमितुं शेकुरित्यर्थः । कलापकम् ॥ १९ ॥

हिन्दी—मुनिके विभिन्न बाणोंसे वह अगणित शिवजीका सैन्यसमूह जन्मके साथ अविर्भूत होता हुआ गोत्व-मनुष्यत्व आदि जातियों और उनमें नियत धर्मोंसे मनुष्यसमूहके सज्ञान वशमें हो गया ॥ १९ ॥

वितन्वतस्तस्य शरान्धकारं त्रस्तानि सैन्यानि रवं निशेमुः ।
प्रवर्षतः संततवेपथूनि क्षपाघनस्येव गवां कुलानि ॥ २० ॥

मल्लि०—वितन्वत इति । त्रस्तानि सैन्यानि संततवेपथूनि निरन्तरकम्पानि गवां कुलानि वृन्दानि वृष्टिं कुर्वतः क्षपाघनस्य = रात्रिमेघस्येव शरैर्योऽन्धकारस्तं

वितन्वतो विस्तारयतः तस्य मुनेः संबन्धिनं रवं = शरवर्षघोषं निशेमुः = शुश्रुवुः । न तु किंचिद्ददृशुः । चेष्टा तु दूरापास्तेति भावः ॥ २० ॥

हिन्दी—शिवजीके त्रस्त सैन्य निरन्तर कम्पित होनेवाला गायोंका समूह वृष्टि करनेवाले रात्रिके मेघका शब्द जैसे सुनता है उसी तरह बाणोंसे अन्धकारको फैलानेवाले तपस्वी अर्जुनके बाण वृष्टिके शब्दको सुनने लगे परन्तु कुछ भी नहीं देखा ॥ २० ॥

स सायकान्साध्वसविप्लुतानां क्षिपन्परेषामतिसौष्ठवेन ।
शशीव दोषावृतलोचनानां बिभिद्यमानः पृथगाबभासे ॥ २१ ॥

मल्लि०—स इति । अतिसौष्ठवेनातिलाघवेन सायकान् = शरान् क्षिपन् सोऽर्जुनः साध्वसेन विप्लुतानां = भ्रान्तानां परेषां द्विषां दोषेण काचकामलादि-रोगेण आवृतलोचनानां = दुष्टचक्षुषां शशीव पृथग्विभिद्यमान आबभासे । यथा सदोषचक्षुर्भिरेकश्चन्द्रो नानेव लक्ष्यते तद्वदेकोऽप्यनेक इव दृष्ट इति भावः ॥ २१ ॥

हिन्दी—बहुत शीघ्रतासे बाणोंको छोड़ते हुए एक ही अर्जुन भयसे भ्रान्त शत्रुओंको काच कामल आदि रोगसे दोषयुक्त नेत्रोंको जैसे एक ही चन्द्र अनेकके समान दृष्टिगोचर होते हैं उसी तरह अनेक रूपमें दृष्टिगोचर हो गये ॥ २१ ॥

क्षोभेण तेनाऽथ गणाधिपानां भेदं ययावाकृतिरीश्वरस्य ।
तरङ्गकम्पेन महाह्रदानां छायामयस्येव दिनस्य कर्तुः ॥ २२ ॥

मल्लि०—क्षोभेणेति । अथ गणाधिपानां संबन्धिना तेन क्षोभेण = कम्पेन । ईश्वरस्याकृतिराकारो मूर्तिः । महाह्रदानां तरङ्गकम्पेन छायामयस्य प्रतिबिम्बरूप-स्य दिनस्य कर्तुर्दिवाकरस्याकृतिरिव भेदं विकारं ययौ = प्राप । स्वयं निर्विका-रोऽपि प्रतिमासूर्यवत् परसंसर्गात्तथा प्रतीयत इत्यर्थः ॥ २२ ॥

हिन्दी—तब गणस्वामियोंके उस क्षोभसे शिवजीकी मूर्ति विशाल तालाबोंके तरङ्गमें कामके कारण प्रतिबिम्बरूप सूर्यकी मूर्तिकी तरह विकारको प्राप्त हुई ॥

यदि देवोऽपि विकृतस्तर्हि कोपः किं न कृतः, तत्राह—

प्रसेदिवासं न तमाप कोपः कुतः परस्मिन्पुरुषे विकारः ।
आकारवैषम्यमिदं च भेजे दुर्लक्ष्यचिह्ना महतां हि वृत्तिः ॥ २३ ॥

मल्लि०—प्रसेदिवांसमिति । प्रसेदिवांसमर्जुनं प्रति प्रसन्नचित्तं तं देवं कोपो नाप न प्राप । तत्राप्यनुग्रहं ययाविति भावः । तत्र हेतुः—परस्मिन् पुरुषे परात्मनि

देवे । स्वतो निर्विकार इत्यर्थः । विकारः कोपरूपः कुतः । न कुतश्चिदित्यर्थः । ननु तस्य निर्विकारस्य कथं बहिराकारभेदः कारणाभावादिति चेन्न विद्म इत्याह—इदं पूर्वोक्तम् । आकारवैषम्यं च भेजे । किंतु केनापि कारणेन न कुप्यतीत्यर्थः । ननु निर्विकारे कुत आकारभेदस्तत्राह—महतां वृत्तिश्चेष्टा दुर्लक्ष्यचिह्ना दुर्ग्रहहेतुका हि ॥ २३ ॥

हिन्दी—अर्जुनके प्रति प्रसन्नचित्त शिवजीको क्रोध नहीं हुआ, परमात्माको क्रोध रूप विकार कैसे होगा ? उन पर केवल आकार वैषम्य लिया क्योंकि महापुरुषोंकी चेष्टा का कारण नहीं जाना जाता है ॥ २३ ॥

वैषम्यमेवाह—

विस्फार्यमाणस्य ततो भुजाभ्यां भूतानि भर्त्रा धनुरन्तकस्य ।
भिन्नाकृतिं ज्यां ददृशुः स्फुरन्तीं क्रुद्धस्य जिह्वामिव तक्षकस्य ॥ २४ ॥

मल्लि०—विस्फार्यमाणस्येति । ततोऽनन्तरं भूतानि भर्त्रा भूतपतिना । भृञस्तृच्प्रत्ययः । अत एव 'न लोके—'त्यादिना षष्ठीप्रतिषेधः । भुजाभ्याम् । कर्तृकरणयोस्तृतीया । विस्फार्यमाणस्याकृष्यमाणस्य धनुरन्तक इव तस्य धनुरन्तकस्य संबन्धिनी स्फुरन्तीं चलन्तीमत एव भिन्ना द्विधेव दृश्यमानाऽऽकृतिर्यस्यास्तां ज्यां धनुर्गुणं क्रुद्धस्य तक्षकस्य नागविशेषस्य जिह्वामिव । ददृशुः द्विधाभावाद्भयंकरत्वाच्चेति भावः ॥ २४ ॥

हिन्दी—तब प्राणियोंको धारण और पोषण करनेवाले शिवजीने भुजाओंसे आकृष्ट किये जाते हुए यमराजके समान धनुसे चलती हुई अत एव भिन्न आकृतिवाली प्रत्यञ्चाको क्रुद्ध तक्षक नामक नागकी जीभके समान लोगोंने देख लिया ॥ २४ ॥

सव्यापसव्यध्वनितोग्रचापं पार्थः किराताधिपमाशशङ्के ।
पर्यायसंपादितकर्णतालं यन्ता गजं व्यालमिवापराद्धः ॥ २५ ॥

मल्लि०—सव्येति । पार्थः सव्यापसव्याभ्यां वामदक्षिणगतिभ्यां ध्वनितं नादितमुग्रचापं येन तं किराताधिपम् । अपराद्धः प्रमत्तो यन्ता पर्यायेणायोपगद्येन संपादितः कर्णयोस्ताल आस्फालनं येन तं व्यालं दुष्टम् । 'भेद्यलिङ्गः शठे व्यालः' इत्यमरः । गजमिवाशशङ्के । तच्चापचातुर्यदर्शनाद् दुर्जयः कोप्ययमनर्थकरश्चेति शङ्कितवानित्यर्थः ॥ २५ ॥

हिन्दी—अर्जुनने वाम और दक्षिण गतियोंसे उग्र धनुको ध्वनित करनेवाले शिवजीके प्रति जैसे-जैसे मत्त फीलवान पारी-पारीसे कर्णतालको संपादित करनेवाले दुष्ट हाथीके प्रति आशङ्का करता है उसी तरह आशङ्का की ॥ २५ ॥

निजघ्निरे तस्य हरेषुजालैः पतन्ति वृन्दानि शिलीमुखानाम् ।
ऊर्जस्विभिः सिन्धुमुखागतानि यादांसि यादोभिरिवाम्बुराशेः ॥ २६ ॥

मल्लि०—निजघ्निर इति । हरेषुजालैस्तस्यार्जुनस्य पतन्ति आगच्छन्ति शिलीमुखानां शराणां वृन्दानि । ऊर्जस्विभिः प्रबलैः । अम्बुराशेर्यादोभिर्जलग्राहैः सिन्धुमुखेन नदीमुखेन आगतानि यादांसीव निजघ्निरे हतानि ॥ २६ ॥

हिन्दी—शिवजीके बाणोंने आते हुए अर्जुनके बाणोंको समुद्रके जबर्दस्त जलग्राहोंसे नदीमुखसे आये हुए जल जन्तुओंकी तरह नष्ट कर दिया ॥ २६ ॥

विभेदमन्तः पदवीनिरोधं विध्वंसनं चाविदितप्रयोगः ।
नेताऽरिलोकेषु करोति यद्यत्तत्तच्चकारास्य शरेषु शंभुः ॥ २७ ॥

मल्लि०—विभेदमिति । अन्तर्विभेदं व्यूहविश्लेषणमुपजापं च पदवीनिरोधं मार्ग एव प्रतिबन्धनम्, अन्यत्र तु—आसारप्रसारप्रतिबन्धं विध्वंसनं खण्डनं दुर्गलुण्ठनदाहादिकं चेत्यादि यद्यन्नेता नायको जिगीषुः । अविदितप्रयोगः संवृतमन्त्रत्वाद्‌विज्ञातोपायप्रयोगः सन् अरिलोकेषु शत्रुकुलेषु करोति तत्तच्छंभुरविदितप्रयोगोऽज्ञातबाणसंधानमोक्षादिकः सन्, अस्यार्जुनस्य शरेषु चकार कृतवान् । कर्तरि लिट् । श्लेषालङ्कारः ॥ २७ ॥

हिन्दी—जैसे सेनापति शत्रुओंमें अविदित उपायका प्रयोग कर व्यूहभेद मार्गप्रतिबन्ध और किलेका विध्वंस कर देता हैं उसी तरह शिवजीने बाणोंका सन्धान और प्रयोगको अविदित कर अर्जुनके बाणोंका विध्वंस कर डाला ॥ २७ ॥

सोढावगीतप्रथमायुधस्य क्रोधोज्झितैर्वेगितया पतद्भिः ।
छिन्नैरपि त्रासितवाहिनीकैः पेते कृतार्थैरिव तस्य बाणैः ॥ २८ ॥

मल्लि०—सोढेति । सोढानि परैरवगीतानि गर्हितानि प्रथमायुधानि सर्वोत्सृष्टबाणा यस्य तस्यार्जुनस्य संबन्धिभिः क्रोधोज्झितैः पूर्वबाणवैफल्यात्कोपेन त्यक्तैः अत एव वेगितया वेगेन पतद्भिर्गतिं कुर्वद्भिः अत एव छिन्नैरपि त्रासिता वाहिन्यो यैस्तैरत एव कृतार्थैरिव बाणैः पेते । भावे लिट् । वस्तुतस्त्वकृतार्था एवेत्यर्थः ॥ २८ ॥

**हिन्दी**—शत्रुओंसे निन्दित और उत्कृष्ट बाणोंको सहन करनेवाले अर्जुनके क्रोधसे छोड़े गये अतएव वेगसे गिरते हुए छिन्न होकर भी सेनाओंको त्रस्त करानेवाले अत एव कृतार्थ-से होकर बाण गिरने लगे ॥ २८ ॥

अलंकृतानामृजुतागुणेन गुरूपदिष्टां गतिमास्थितानाम् ।
सतामिवापर्वणि मार्गणानां भङ्गः स जिष्णोर्धृतिमुन्ममाथ ॥ २९ ॥

**मल्लि०**—अलमिति । ऋजुताऽवक्राकारत्वमवक्रशीलत्वं च सैव गुणस्तेन अलंकृतानां गुरुभिर्धनुर्विद्यागुरुभिर्धर्मशास्त्रगुरुभिश्च उपदिष्टां दर्शितां गतिं गमनमाचारं च आस्थितानां प्राप्तानां मार्गणानां शराणां सतां साधूनामिव । अपर्वण्यग्रन्थौ अन्यत्र—अप्रस्तावे । अकाण्ड इत्यर्थः । 'पर्व स्यादुत्सवे ग्रन्थौ प्रस्तावे लक्षणान्तरे' इति विश्वः । स ईश्वरकृतो भङ्गश्छेदो व्यसनं च जिष्णोरर्जुनस्य कस्यचिज्जित्वरस्य च । 'जिष्णुः शक्रे धनंजये । जित्वरे' इति विश्वः । धृतिं धैर्यम् । उन्ममाथ । जहारेत्यर्थः । अकाण्डे साधुविपत्तिदर्शनादिव शरभङ्गदर्शनाद्धैर्यभङ्गोऽभूदित्यर्थः ॥

**हिन्दी**—सरलतारूप गुणसे अलंकृत धनुर्विद्याके गुरुओंसे और धर्मशास्त्रके गुरुओंसे उपदिष्ट आचारका अवलम्बन करनेवाले बाणोंके सज्जनोंके समान अग्रंथि और अनवसरमें शिवजीसे किया गया पराजय और व्यसनने अर्जुनके धैर्यका अपहरण कर लिया ॥ २९ ॥

बाणच्छिदस्ते विशिखाः स्मरारेरवाङ्मुखीभूतफलाः पतन्तः ।
अखण्डितं पाण्डवसायकेभ्यः कृतस्य सद्यः प्रतिकारमापुः ॥ ३० ॥

**मल्लि०**—बाणेति । बाणच्छिदः पार्थशरच्छेदिनस्ते स्मरारेर्विशिखा अवाङ्मुखीभूतफला विमुखाग्रा विफलाश्च सन्तः पतन्तः पाण्डवसायकेभ्यः । क्रियाग्रहणाच्चतुर्थी । पाण्डवसायकानां कृतस्य फलभङ्गरूपस्य स्वकर्मणः सद्योऽखण्डितं प्रतिकारमापुः । अत्युत्कटं कर्म सद्यो दर्शयतीति भावः ॥ ३० ॥

**हिन्दी**—अर्जुनके बाणोंको छिन्न करनेवाले शिवजीके उन बाणोंने विमुख नोकवाले और विफल होकर गिरते हुए फलभङ्गरूप अपने कर्मका उसी क्षण अखण्डित प्रतिकार पा लिया ॥ ३० ॥

पुनरर्जुनस्य जयमाह—

चित्रीयमाणानतिलाघवेन प्रमाथिनस्तान्भवमार्गणानाम् ।
समाकुलाया निचखान दूरं बाणान्ध्वजिन्या हृदयेष्वरातिः ॥ ३१ ॥

मल्लि०—चित्रीयमाणानिति । अरातिरर्जुनः । अतिलाघवेनातिशीघ्रत्वा चित्रीयमाणांश्चित्रमाश्चर्यं कुर्वाणान् । 'नमोवरिवश्चित्रङः क्यच्' । भवमार्गणप्र प्रमाथिनः खण्डयतः तान् बाणान् । समाकुलायाः संक्षुभितायाः ध्वजिन्याः सेना हृदयेषु दूरं गाढं निचखान निखातवान् ॥ ३१ ॥

**हिन्दी**—शत्रु अर्जुनने अति शीघ्र होनेसे आश्चर्य करानेवाले शिवबाणों खण्डित करते हुए उन बाणोंको आकुल शिवसेनाके हृदयोंमें दूरतक गाड़ दिया।३

तस्यातियत्नादतिरिच्यमाने पराक्रमेऽन्योन्यविशेषणेन ।
हन्ता पुरां भूरि पृषत्कवर्षं निरास नैदाघ इवाम्बु मेघः ॥ ३२ ॥

मल्लि०—तस्येति । तस्यार्जुनस्य पराक्रमेऽतियत्नाद्धेतोः । अन्योन्यस्य विशे षणेनातिशयकरणेन । अतिरिच्यमाने उत्कृष्यमाणे सति पुरां हन्ता त्रिपुरविजयी हरः भूरि प्रभूतं पृषत्कवर्षं बाणवर्षम् । 'पृषत्कबाणविशिखाः' इत्यमरः । निदाघे भवो नैदाघो मेघोऽम्बुवाहोऽम्बु जलमिव निरास मुमोच । अस्यतेर्लिट् । 'निदाघ' ग्रहणं वर्षणस्यातितीव्रत्वद्योतनार्थम् ॥ ३२ ॥

**हिन्दी**—अर्जुनके पराक्रमके अत्यन्त यत्न होनेसे परस्परमें अतिशयतासे उत्कर्ष किये जानेपर त्रिपुरविजयी शिवजीने प्रचुर बाणवृष्टिको जैसे ग्रीष्म-ऋतुमें होनेवाला मेघ जलकी वृष्टि करता है उसी तरह शरवृष्टि कर दी ॥ ३२ ॥

अनामृशन्तः क्वचिदेव मर्म प्रियैषिणाऽनुप्रहिताः शिवेन ।
सुहृत्प्रयुक्ता इव नर्मवादाः शरा मुनेः प्रीतिकरा बभूवुः ॥ ३३ ॥

मल्लि०—अनामृशन्त इति । प्रियैषिणा प्रियचिकीर्षुणा शिवेनानुप्रहिताः प्रयुक्ता अतएव क्वचिदेव मर्मानामृशन्तोऽस्पृशन्तः शराः सुहृन्मित्रं सोऽपि प्रियैषी तेन प्रयुक्ता उच्चारिता नर्मवादाः प्रियवादा इव मुनेरर्जुनस्य प्रीतिकराः प्रीति जनका बभूवुः ॥ ३३ ॥

**हिन्दी**—प्रियकी इच्छा करनेवाले शिवजीसे प्रेरित अत एव कहीं भी मर्म-स्थलका स्पर्श न करते हुए बाण प्रिय चाहनेवाले मित्रसे कहे गये परिहास वचनोंके समान मुनि ( अर्जुन ) को प्रीति करनेवाले हुए ॥ ३३ ॥

अस्त्रैः समानामतिरेकिणीं वा पश्यन्निषूणामपि तस्य शक्तिम् ।
विषादवक्तव्यबलः प्रमाथी स्वमाललम्बे बलमिन्दुमौलिः ॥ ३४ ॥

मल्लि०—अस्त्रैरिति । अस्त्रैः स्वायुधैः समानां तुल्याम् । अतिरेकिणीं ततोऽधिकां वा यस्य मुनेः । इषुणामपि शक्तिं पश्यन् विषादेनोत्साहभङ्गेन वक्तव्यानि विच्यानि बलानि सैन्यानि तस्य स प्रमाथी शत्रुमर्दन इन्दुमौलिर्महादेवः स्वं बलमात्मीयं महिमानम् । आललम्बे स्वसामर्थ्यमवलम्बितवान् ॥ ३४ ॥

हिन्दी—अपने अस्त्रोंके समान वा उससे अधिक उन ( मुनि )के बाणोंकी भी शक्तिको देखते हुए उत्साहभङ्गके कारण निन्दनीय सैन्यवाले तथा शत्रुओंका मर्दन करनेवाले शिवजीने अपने सामर्थ्यका अवलम्बन किया ॥ ३४ ॥

ततस्तपोवीर्यसमुद्धतस्य पारं यियासोः समरार्णवस्य ।
महेषुजालान्यखिलानि जिष्णोरर्कः पयांसीव समाचचाम ॥ ३५ ॥

मल्लि०—तत इति । ततो महिमप्रादुर्भावानन्तरम् देवस्तपोवीर्याभ्यां समुद्धतस्य प्रगल्भस्य समर एवार्णवस्तस्य पारमन्तं यियासोर्जिगमिषोर्जिष्णोरर्जुनस्य अखिलानि महेषुजालानि समग्रबाणसमूहान् । अर्कः सूर्यः पयांसीव जलानीव समाचचाम संजहार ॥ ३५ ॥

हिन्दी—तब शिवजीने तप और वीर्यसे समुद्धत युद्धरूप समुद्रको पार जानेकी इच्छा करनेवाले अर्जुनके समस्त बाणसमूहको जैसे सूर्य समस्त जलसमूहका शोषण करता है उसी तरह संहार कर डाला ॥ ३५ ॥

रिक्ते सविस्रम्भमथार्जुनस्य निषङ्गवक्त्रे निपपात पाणिः ।
अन्यद्विपापीतजले सतर्षं मतङ्गजस्येव नगाश्मरन्ध्रे ॥ ३६ ॥

मल्लि०—रिक्त इति । अथ बाणान्तर्धानानन्तरम् । अर्जुनस्य पाणिः करः रिक्ते बाणशून्ये निषङ्गवक्त्रे तूणीरमुखेऽन्यद्विपेन गजान्तरेण आपीतजले पीततोये नगस्याचलस्याश्मरन्ध्रे शिलागर्ते । प्रदर इत्यर्थः । सतर्षं सतृष्णं यथा स्यात्तथा मतङ्गजस्य पाणिर्लक्षणया कर इव सविस्रम्भं सन्त्येव बाणा इति सविश्वासं निपपात ॥ ३६ ॥

हिन्दी—तब अर्जुनका हाथ रीते ( बाणशून्य ) तरकशके मुखमें जैसे एक हाथीसे समस्त जलके पीये जानेसे रीते ( जलशून्य ) पर्वतके शिलागर्तमें तृष्णाके साथ दूसरे हाथीका सूँड़ जाता है उसी तरह पड़ गया ॥ ३६ ॥

च्युते स तस्मिन्निषुधौ शरार्थाद्ध्वस्तार्थसारे सहसेव बन्धौ ।
तत्कालमोघप्रणयः प्रपेदे निर्वाच्यताकाम इवाभिमुख्यम् ॥ ३७ ॥

मल्लि०—च्युत इति । शरा एव अर्थो धनं तस्मात् । च्युते भ्रष्टे तस्मिन्निषुधौ निषङ्गे सहसा झटिति । अवस्तार्थसारेऽकाण्डे नष्टधनसारे बन्धाविव तत्काले मोघो वितथः प्रणयः प्रीतिर्यस्य सः । तत्कालकृतव्यर्थप्रार्थनः । पूर्वं कृतार्थ एवेति भावः। स पाणिः । निर्वाच्यतां कृतज्ञत्वापवादराहित्यं कामयत इति निर्वाच्यताकामः। 'शीलिकामिभक्ष्याचरिभ्यो णः' स इवेत्युत्प्रेक्षा । 'आभिमुख्यं प्रपेदे । यथा कश्चिरकृतज्ञस्तत्कालेऽकृतोपकारमपि बन्धुं पूर्वोपकारस्मरणात्पुनः पुनरनुबध्नाति तद्वदित्यर्थः ॥ ३७ ॥

हिन्दी—बाणरूप धनवाले परन्तु बाणशून्य उस तरकशमें जैसे धनरूप सारसे शून्य बन्धुमें पहले कृतार्थ होकर उस समय व्यर्थ प्रार्थना वाला बन्धुकी तरह होकर भी अवचनीयता चाहनेवाले पुरुषके समान तरकशके सम्मुख बढ़ गया ॥ ३७ ॥

आघट्टयामास गतागताभ्यां सावेगमग्राङ्गुलिरस्य तूणी।
विधेयमार्गे मतिरुत्सुकस्य नयप्रयोगाविव गां जिगीषोः ॥ ३८ ॥

मल्लि०—आघट्टयामासेति । अस्य मुनेः । अग्रं चासावङ्गुलिश्चेत्यग्रांगुलिः 'हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदाभेदात्' इति वामनः । विधेयमार्गे कर्तव्यान्वेषण उत्सुकस्य प्रवृत्तस्य गां भुवं जिगीषोर्नायकस्य मतिर्बुद्धिर्नयः षाड्गुण्यं प्रयोग उपायस्तौ नयप्रयोगाविव तूणी निषङ्गौ सावेगं ससंभ्रमम् । 'इष्टानिष्टागमाज्ञाने आवेगश्चितसंभ्रमः' । इति शाश्वतः । गतागताभ्यां यातायाताभ्यामावापोद्वापाभ्यां चाऽऽघट्टयामास । अन्यत्र तु–वितर्कयामास । शरग्रहणाय पुनःपुनस्तूणयोः पाणि व्यापारयामासेत्यर्थः ।

हिन्दी—इस मुनि ( अर्जुन )का अंगुलिका अग्रभाग कर्तव्यके अन्वेषणमें उत्सुक पृथिवीको जीतनेकी इच्छा करनेवाले नायककी बुद्धि जैसे नीति और प्रयोग बारंबार वितर्क करती है उसी तरह तरकशमें वेगके साथ बारम्बार पड़ने लगा ॥ ३८ ॥

बभार शून्याकृतिरर्जुनस्तौ महेषुधी वीतमहेषुजालौ।
युगान्तसंशुष्कजलौ विजिह्मः पूर्वापरौ लोक इवाम्बुराशी ॥ ३९ ॥

मल्लि०—बभारेति । शून्याकृतिरिष्टनाशान्निस्तेजस्करूपोऽर्जुनः । तौ वीतमहेषुजालौ वीतानि गतानि महेषुजालानि ययोस्तौ महेषुधी महानिषङ्गौ

विजिह्मः शून्यो लोको युगान्ते संशुष्कजलौ ! 'शुषः कः' इति निष्ठातकारस्य ककारः । पूर्वापराम्बुराशी समुद्राविव बभार ।। ३९ ।।

हिन्दी—बाणनाशके कारण तेजसे शून्य आकारवाले अर्जुनने विशाल बाण-समूह से शून्य दोनों तरकशोंको जैसे शून्य लोक प्रलयकालमें सूखे जलवाले पूर्व समुद्र और पश्चिम समुद्रको धारण करता है उसी तरह धारण किया ।। ३९ ।।

**तेनानिमित्तेन तथा न पार्थस्तयोर्यथा रिक्ततयाऽनुतेपे ।**
**स्वमापदं प्रोज्झ्य विपत्तिमग्नं शोचन्ति सन्तो ह्युपकारिपक्षम् ।। ४० ।।**

मल्लि०—तेनेति । पार्थस्तयोस्तूणयो रिक्ततया हेतुना यथाऽनुतेपे शुशोच तथा तेनानिमित्तेन बाणक्षयरूपेण दुर्निमित्तेन न शुशोच । तथा हि—सन्तः स्वमापदं प्रोज्झ्य विसृज्य विपत्तिमग्नमुपकारिणां पक्षं वर्गं शोचन्ति । स्वव्यसनापेक्षया परकीयव्यसनमेव सतामनुतापकमित्यर्थः ।। ४० ।।

हिन्दी—अर्जुन बन तरकशोंके बाणशून्य होनेसे जिस तरह शोक किया उस तरह बाणोंके क्षयरूप अपशकुनसे शोक नहीं किया, क्योंकि सज्जनलोग अपनी आपत्तिका परवाह न कर उपकारियोंके पक्षका शोक करते हैं ।। ४० ।।

**प्रतिक्रियायै विधुरः स तस्मात्कृच्छ्रेण विश्लेषमियाय हस्तः ।**
**पराङ्मुखत्वेपि कृतोपकारात्तूणीमुखान्मित्रकुलादिवार्यः ।। ४१ ।।**

मल्लि०—प्रतीति । प्रतिक्रियायै विधुरः प्रतिकर्तुमसमर्थः 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । अर्जुनस्य स हस्तः पाणिः । पराङ्मुखत्वेऽपि तत्काल-वैमुख्येऽपि कृतोपकारात्तस्मात्तूणीमुखान्मित्रकुलादार्यः साधुः कृतज्ञ इव । 'आर्यः साधुकुलीनयोः' इति विश्वः । कृच्छ्रेण महाकष्टेन विश्लेषमियाय । गौरादित्वात् 'तूण' शब्दान्ङीप् ।। ४१ ।।

हिन्दी—प्रतिकार करनेमें असमर्थ अर्जुनका वह हाथ पराङ्मुख होनेपर भी पहलेके उपकारी तरकशके मुखसे कृतज्ञ सज्जन पहलेके उपकारी मित्रसे जैसे कष्टसे वियोगको प्राप्त करता है उसी तरह कष्टसे वियुक्त हो गया ।। ४१ ।।

अथ युग्मेनाह—

**पश्चात्क्रिया तूणयुगस्य भर्तुर्जज्ञे तदानीमुपकारिणीव ।**
**संभावनायामधरीकृतायां पत्युः पुरः साहसमासितव्यम् ।। ४२ ।।**

मल्लि०—पश्चादिति । तदानीं भर्तुः स्वामिनः । कर्तरि षष्ठी । पश्चात्क्रिया पृष्ठतः करणं तूणयुगस्योपकारिणीव उपकारिकेव जज्ञे । जाता । तथा हि— संभावनायां स्वयोग्यतायाम् । अवरीकृतायामफलीकृतायां पत्युः स्वामिनः पुरोऽग्र आसितव्यमासितं स्थितिः । बहुलग्रहणाद्भावे तव्यप्रत्ययः । साहसं न क्षमं न योग्यम् भर्त्रा संभावितस्यावसरेऽनुपवक्तुरनुजीविनस्तत्सांमुख्यमनुचितमित्यर्थः ॥ ४२ ॥

हिन्दी—उस समय स्वामी ( अर्जुन )को पीछे रखना तरकशोंके लिए उपकारके समान हो गया क्योंकि अपनी योग्यताके निष्फल होनेपर स्वामीके आगे रहना ऐसा साहसयोग्य नहीं होता है ॥ ४२ ॥

तं शंभुराक्षिप्तमहेषुजालं लोहैः शरैर्मर्मसु निस्तुतोद ।
हृतोत्तरं तत्त्वविचारमध्ये वक्तेव दोषैर्गुरुभिर्विपक्षम् ॥ ४३ ॥

मल्लि०—तमिति । शंभुराक्षिप्तानि आहृतानि महेषुजालानि यस्य तं मुनि तत्त्वविचारमध्ये वादमध्ये हृतोत्तरं निरुत्तरीकृतं विपक्षं प्रतिवादिनं वक्ता वादी गुरुभिर्दोषैर्निग्रहस्थानैरिव लोहैर्लोहमयैः शरैर्मर्मसु निस्तुतोद व्यथयामास ॥ ४३ ॥

हिन्दी—शिवजीने महान् बाणसमूहसे ताडित अर्जुनको तत्त्व विचारके बीचमें प्रतिवादीको निग्रह-स्थानरूप दोषोंसे निरुत्तर कर देता है, उसी तरह लोहमय बाणोंसे मर्मस्थानोंमें पीड़ित कर दिया ॥ ४३ ॥

जहार चास्मादचिरेण वर्म ज्वलन्मणिद्योतितहैमलेखम् ।
चण्डः पतङ्गान्मरुदेकनीलं तडित्वतः खण्डमिवाम्बुदस्य ॥ ४४ ॥

मल्लि०—जहारेति । किंच, अस्मान्मुनेः । अचिरेण शीघ्रं ज्वलद्भिर्मणिभिर्द्योतिता हैम्यः सौवर्ण्यो लेखा यस्य तत्तथोक्तं वर्म कवचम् । चण्डो मरुत् पवनः पतङ्गात् सूर्यात् । एकनीलं केवलकृष्णवर्णम् । 'एके मुख्यान्यकेवलाः' इत्यमरः । तडित्वतस्तडिद्युक्तस्याम्बुदस्य खण्डमिव जहार । तदा भगवन्मायया मुक्तकञ्चुको मुनिर्मेघनिर्मुक्तः सूर्य इव दिदीपे इति भावः ॥ ४४ ॥

हिन्दी—फिर शिवजीने उस मुनि ( अर्जुन )के सुप्रदीप्त रत्नोंकी कान्तिसे चमकती हुई सुवर्ण रेखावाले कवचको जैसे प्रचण्ड वायु सूर्यसे बिजलीसे युक्त केवल कृष्णवर्णवाले मेघके खण्डको दूर कर देता है उसी तरह दूर कर दिया ॥ ४४ ॥

विकोशनिर्धौततनोर्महासेः फणावतश्च त्वचि विच्युतायाम् ।
प्रतिद्विपाबद्धरुषः समक्षं नागस्य चाक्षिप्तमुखच्छदस्य ॥ ४५ ॥

मल्लि०—विकोशेति । सोऽर्जुनः । तनुं त्रायत इति तनुत्रं वर्म । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । तेन विना विकोशः । कोशादुद्धृतो निर्धौततनुः शाणोल्लीढमूर्तिः । ततो विशेषणसमासः । तस्य विकोशनिर्धौततनोर्महासेर्महाखड्गस्य तथा त्वचि विच्युतायां सत्यां फणावतश्च मुक्तकञ्चुकस्याहेश्च प्रतिद्विपे प्रतिगज आबद्धरुषो बद्धकोपस्य समक्षं प्रतिगजस्याग्रे आक्षिप्तमुखच्छदस्य निरस्तमुखावरणस्य नागस्य गजस्य च ॥ ४५ ॥

विबोधितस्य ध्वनिना घनानां हरेरपेतस्य च शैलरन्ध्रात् ।
निरस्तधूमस्य च रात्रिवह्नेर्विना तनुत्रेण रुचिं स भेजे ॥ ४६ ॥

मल्लि०—विबोधितस्येति । घनानां ध्वनिना गर्जितेन विबोधितस्य । शैलरंध्रात् कंदरात् । अपेतस्य निष्क्रान्तस्य हरेः सिंहस्य च । तथा, निरस्तधूमस्य गतधूमस्य रात्रिवह्नेश्च रुचिं शोभां भेजे । एतेनास्य तीक्ष्णत्ववैरनिर्यातनत्वरणदुर्मदत्वमनस्वित्वतेजस्वित्वान्युक्तानि । अत्र रुचिमिव रुचिमिति सादृश्याक्षेपादसंभवद्वस्तुसम्बन्धी निदर्शनालंकारो मालया संसृष्टः ॥ ४६ ॥

हिन्दी—वे अर्जुन कवचके बिना कोष ( मियान )से निकाले गये और शाणसे विशुद्धरूप वाले विशाल खड्गकी और कँचुली च्युत होनेपर सर्पकी और प्रतिद्वन्द्वी हाथीमें क्रुद्ध मुखके आवरणसे रहित हाथीकी, मेघोंके गर्जनसे जगाये गये पहाड़की गुफासे निकले हुए सिंहकी एवम् धूएँसे रहित अग्निकी शोभासे युक्त हो गये ॥ ४५–४६ ॥

अचित्ततायामपि नाम युक्तामनूर्ध्वतां प्राप्त तदीयकृच्छ्रे ।
महीं गतौ ताविषुधी तदानीं विवव्रतुश्चेतनयेव योगम् ॥ ४७ ॥

मल्लि०—अचित्ततायामिति । तदानीं कवचपतनसमये महीं गताविषुधी निषङ्गौ अचित्ततायामप्यचेतनत्वेऽपि तदीयकृच्छ्रे स्वामिव्यसने युक्तां योग्याम् । नाम किल । अकिंचित्करत्वादिति भावः अनूर्ध्वतामवाङ्मुखत्वं प्राप्य चेतनया प्राणिसाधारणज्ञानेनेव योगं संबन्धं विवव्रतुरिवेत्युत्प्रेक्षा । अचेतनत्वेऽप्यवाङ्मुखत्वाद्विचेतनधर्मयोगादिति भावः ॥ ४७ ॥

हिन्दी—उस समय जमीनपर पड़े हुए ( युग्म ) तरकशोंने अचेतन होनेपर

भी अपने स्वामी अर्जुनको विपत्तिमें योग्य नीचे मुखवाले होकर चेतनासे सम्बंध-का विवरण किया ॥ ४७ ॥

स्थितं विशुद्धे नभसीव सत्त्वे धाम्ना तपोवीर्यमयेन युक्तम् ।
शस्त्राभिघातैस्तमजस्रमीशस्त्वष्टा विवस्वन्तमिवोल्लिलेख ॥ ४८ ॥

मल्लि०—स्थितमिति । विशुद्धे निर्मले नभसि सत्त्वे सत्त्वगुणे स्थितं तपोवीर्यमयेन तपोवीर्याभ्यामायतेन धाम्ना तेजसा युक्तं तमर्जुनम् । ईशस्त्वष्टा विश्वकर्मा विवस्वन्तं सूर्यमिवाजस्रं निरन्तरं शस्त्राभिघातैः शस्त्रकर्षणैः, उल्लिलेख ततक्ष ॥ ४८ ॥

हिन्दी—निर्मल आकाशमें स्थित तपस्या और पराक्रमसे आये हुए तेजसे युक्त सूर्यको जैसे विश्वकर्माने छील दिया था वैसे ही निर्मल, सत्त्वगुणमें स्थित, तपस्या और पराक्रमसे प्राप्त तेजसे युक्त अर्जुनको शिवजीने शस्त्रोंके प्रहारोंसे छील डाला ॥ ४८ ॥

संरम्भवेगोज्झितवेदनेषु गात्रेषु बाधिर्यमुपागतेषु ।
मुनेर्बभूवागणितेषुराशेर्लौहस्तिरस्कार इवात्ममन्युः ॥ ४९ ॥

मल्लि०—संरम्भेति । संरम्भवेगेन संभ्रमातिशयेन उज्झितवेदनेषु त्यक्तदुःखेषु गात्रेषु बाधिर्यं स्तैमित्यमुपागतेषु सत्सु न गणिता इषुराशयो येन तस्य अगणितेषु राशेर्मुनेरर्जुनस्य आत्ममन्युः स्वकोपो लोहस्य विकारो लौहः कार्ष्णायसः तिर-स्क्रियत आच्छाद्यतेऽनेनेति तिरस्कारः कञ्चुक इव बभूव । रोषवशान्न किंचित्प्रहार-दुःखमज्ञासीदित्यर्थः । क्रोधैकवर्मणां वीराणां किमन्यैर्लौहभारैरिति भावः ॥ ४९ ॥

हिन्दी—अतिशय शीघ्रताके कारण दुःखके अनुभवसे रहित अंगोंके बधिरता और निश्चलताको प्राप्त करनेपर भी बाणसमूहका परवाह न करनेवाले मुनि (अर्जुन)का अपना क्रोध लोहमय कवचके समान हो गया ॥ ४९ ॥

अथ युग्मेनाह—

ततोऽनुपूर्वायतवृत्तबाहुः श्रीमान्क्षरल्लोहितदिग्धदेहः ।
आस्कन्द्य वेगेन विमुक्तनादः क्षितिं विधुन्वन्निव पार्ष्णिघातैः ॥ ५० ॥

मल्लि०—तत इति । ततोऽनन्तरम् । अनुपूर्वौ पूर्वमनुगतौ गोपुच्छाकारौ आयतौ दीर्घौ वृत्तौ वर्तुलौ च बाहू यस्य स श्रीमान् शोभावान् क्षरल्लोहितदिग्धदेहः स्रवद्रुधिरलिप्तगात्रः । पार्ष्णिघातैश्चरणतलाघातैः । 'तद्ग्रन्थी घुटिके गुल्फौ स्त्रियां

पार्ष्णिरघस्तयोः' इत्यमरः । 'क्षिति विधुन्वन् प्रकम्पयन्निव वेगेनास्कन्द्याभिद्रुत्य विमुक्तनादः सोऽर्जुनः ॥ ५० ॥

हिन्दी—तब पूर्वाऽनुगत गोपुच्छके आकारवाले दीर्घ और गोल बाहुओंसे युक्त, शोभासम्पन्न, गिरते हुए रुधिरसे लिप्त शरीरवाले और चरणतलोंके आघातोंसे पृथिवीको मानों कम्पित करते हुए वेगसे दौड़कर गर्जन करते हुए ॥ ५० ॥

साम्यं गतेनाशनिना मघोनः शशाङ्कखण्डाकृतिपाण्डुरेण ।
शंभुं विभित्सुर्धनुषा जघान स्तम्बं विषाणेन महानिबेभः ॥ ५१ ॥

मल्लि०—साम्यमिति । मघोन इन्द्रस्य अशनिना वज्रेण सह साम्यं गतेन वज्रकल्पेन शशाङ्कस्य खण्डं शकलं तस्येवाकृतिर्यस्य । तद्वद्वमित्यर्थः पाण्डुरं च । तद्वदेवेति भावः । तेन शशाङ्कखण्डाकृतिपाण्डुररेण धनुषा शंभुं विभित्सुर्भेत्तुमिच्छुः सन् । महानिभो गजो विषाणेन दन्तेन स्तम्बमिव जघान ॥ ५१ ॥

हिन्दी—इन्द्रके वज्रकी समानताको प्राप्त, चन्द्रखण्डको आकृतिवाले ( टेढ़े ) और सफेद धनुसे शिवजीको भेदन करनेकी इच्छा करते हुए अर्जुनने जैसे विशाल हाथी दाँतसे खम्भेपर प्रहार करता है उसी तरह प्रहार किया ॥५१॥

रयेण सा संनिदधे पतन्ती भावोद्भवेनात्मनि चापयष्टिः ।
समुद्धता सिन्धुरनेकमार्गा परे स्थितेनौजसि जह्नुनेव ॥ ५२ ॥

मल्लि०—रयेणेति । रयेण वेगेन पतन्ती सा चापयष्टिर्भवस्य संसारस्योद्भव उत्पत्तिर्यास्मात्तेन भवोद्भवेन ईश्वरेण पर ओजसि परमे ज्योतिषि स्थितेन जह्नुना राजर्षिणा समुद्धताऽत्युत्कटाऽनेकमार्गा त्रिस्रोताः सिन्धुर्गङ्गेवात्मनि सनिदधे सम्यङ् निहिता । अन्तर्निलायितेत्यर्थः ॥ ५२ ॥

हिन्दी—वेगसे पड़ती हुई अर्जुनकी उस धनुयष्टिको शिवजीने अपनी परम ज्योतिमें स्थित राजर्षि जह्नुने जैसे गङ्गाजीको अपनेमें विलीन किया था उसीतरह अपने आपमें विलीन कर दिया ॥ ५२ ॥

विकार्मुकः कर्मसु शोचनीयः परिच्युतौदार्य इवोपचारः ।
विचिक्षिपे शूलभृता सलीलं स पत्रिभिर्दूरमदूरपातैः ॥ ५३ ॥

मल्लि०—विकार्मुक इति । विकार्मुको भग्नचापोऽत एव परिच्युतौदार्यो दानवर्जित उपचारः सत्कार इव कर्मसु रणक्रियासु कृत्येषु च शोचनीयः शोच्योऽपूज्यश्च सत्त्वावष्टम्भेनाभग्नचित्तत्वाच्च सोऽर्जुनः शूलभृता शिवेन सहेलं

यथा तथाऽदूरपातैरतिगाढप्रहारैः पत्रिभिः शरैर्दूरमत्यन्तं विचिक्षिपे नुन्नः ॥५३॥

**हिन्दी**—नष्ट धनुवाले अत एव दानसे रहित सत्कार कर्मके समान युद्धकर्ममें और अन्य कर्ममें शोचनीय और अपूज्य अर्जुनको शिवजीने अनायास ही अत्यन्त गाढ प्रहारवाले बाणोंसे दूर फेंक दिया ॥ ५३ ॥

उपोढकल्याणफलोऽभिरक्षन् वीरव्रतं पुण्यरणाश्रमस्थः ।
जपोपवासैरिव संयतात्मा तेपे मुनिस्तैरिषुभिः शिवस्य ॥ ५४ ॥

**मल्लि०**—उपोढेति । उपोढमासन्नं कल्याणफलमस्त्रलाभरूपं स्वर्गादिकं च यस्य स वीरव्रतमाहवादनिवृत्तिरूपं तीव्रं तपश्च अभिरक्षन् पालयन् पुण्यो यो रण एवाश्रमस्तत्र तिष्ठतीति पुण्यरणाश्रमस्थः संयतात्मा नियमितचित्तो मुनिरर्जुनः कश्चित्तपस्वी च तैः शिवस्य महादेवस्य । इषुभिः शरैः । जपोपवासैरिव तेपे तप्तः । तपतेः कर्मणि लिट् ॥ ५४ ॥

**हिन्दी**—अस्त्रलाभरूप कल्याणफल और स्वर्ग आदि जिनका निकट ही था; वीरव्रतरूप तीव्र तपस्याको रक्षा करते हुए पुण्य युद्धरूपआश्रममें स्थित इन्द्रियको वशमें किये हुए अर्जुन कोई तपस्वीकी तरह शिवजीके बाणोंसे मानों जप-उपवास से संतप्त हुए ॥ ५४ ॥

ततोऽग्रभूमिं व्यवसायसिद्धेः सीमानमन्यैरतिदुस्तरं सः ।
तेजःश्रियामाश्रयमुत्तमासिं साक्षादहंकारमिवाललम्बे ॥ ५५ ॥

**मल्लि०**—तत इति । ततश्चापान्तर्धानानन्तरम् । सोऽर्जुनोऽग्रभूमिं विपदि गन्तव्यस्थानम् । शरण्यमित्यर्थः । अन्यैः परैः । अतिदुस्तरं दुरतिक्रमं तेजः श्रियां प्रतापसंपदामाश्रयम् । हेतुमित्यर्थः । उत्तमासिं महाखड्गम् । 'सन्महत्–' इत्यादिना समासः । साक्षादहंकारं सविग्रहमभिमानमिवाललम्बे जग्राह ॥ ५५ ॥

**हिन्दी**—तब अर्जुनने विपत्तिमें गन्तव्य स्थानके समान शरण देनेमें उपयुक्त, औरोंसे अतिशय दुस्तर प्रतापसम्पत्तियोंके आश्रयरूप विशाल तलवारको प्रत्यक्ष अहङ्कारके समान अवलम्बन किया ॥ ५५ ॥

शरानवद्यन्ननवद्यकर्मा चचार चित्रं प्रविचारमार्गैः ।
हस्तेन निस्त्रिंशभृता स दीप्तः सार्कांशुना वारिधिरूर्मिणेव ॥ ५६ ॥

**मल्लि०**—शरानिति । अनवद्यकर्माऽगर्ह्यकर्मा । 'अवद्यपण्य—'इत्यादिना

निपातः । शरानवचन् खण्डयन् वीरो निस्त्रिंशभृता खड्गयुक्तेन हस्तेन साकांशुना आकांशुसहितेन ऊर्मिणा तरङ्गेण वारिधिरिव दीप्तो दीपितः सोऽर्जुनः प्रविचारमार्गैः शृङ्गिणां गतिभेदैश्चित्रं यथा तथा चचार ॥ ५६ ॥

**हिन्दी**—अनिन्द्य कर्मवाले शिवजीके कर्मवाले शिवजीके बाणोंको खण्डित करते हुए वीर अर्जुन खड्ग लिये हुये हाथसे सूर्य किरणायुक्त तरङ्गसे समुद्रके समान प्रदीप्त होकर अनेक प्रकारके गति भेदोंसे निम्नरूपसे विचरण करने लगे ॥ ५६ ॥

यथा निजे वर्त्मनि भाति भाभिश्छायामयश्चाप्सु सहस्ररश्मिः ।
तथा नभस्याशु रणस्थलीषु स्पष्टद्विमूर्तिर्ददृशे स भूतैः ॥ ५७ ॥

**मल्लि०**—यथेति । भाभिर्दीप्तिभिरुपलक्षितः । 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः' इत्यमरः । सहस्ररश्मिरर्को यथा निजे वर्त्मनि नभसि छायामयः प्रतिबिम्बरूपः सन्, अप्सु स्पष्टद्विमूर्तिर्भाति तथा सोऽर्जुनो नमसि आकाशे रणस्थलीषु च स्पष्टे द्वे मूर्ती यस्य स स्पष्टद्विमूर्तिः सन् भूतैर्गणैर्ददृशे दृष्टः । यथैकोऽर्को नभस्यप्सु चानेक इव दृश्यते तथा सोऽपि दिवि भुवि चाशुसंचाराद्यौगपद्यभ्रमादेकोऽप्यनेक इव गणैर्दृष्ट इत्युत्प्रेक्षा ॥ ५७ ॥

**हिन्दी**—दीप्तियोंसे उपलक्षित जैसे सूर्य अपने मार्ग आकाशमें प्रतिबिम्बरूप होकर जलमें स्पष्ट दो मूर्तियोंसे युक्त होते हैं उसी तरह युद्धस्थलमें दो मूर्तियोंसे युक्त अर्जुनको प्रमथगणोंने देखा ॥ ५७ ॥

शिवप्रणुन्नेन शिलीमुखेन त्सरुप्रदेशादपवर्जिताङ्गः ।
ज्वलन्नसिस्तस्य पपात पाणेर्घनस्य वप्रादिव वैद्युतोऽग्निः ॥ ५८ ॥

**मल्लि०**—शिवेति । शिवेन प्रणुन्नः क्षिप्तस्तेन शिलीमुखेन त्सरुप्रदेशात् मुष्टिप्रदेशमवधि कृत्वा । 'त्सरुः खड्गादिमुष्टौ स्यात्' इत्यमरः । अपवर्जिताङ्गो लूनविग्रहोऽसिः खड्गः । तस्यार्जुनस्य पाणेः करात् । घनस्य मेघस्य वप्रात्तटात् । वैद्युतसंबन्ध्यग्निरिव ज्वलन् पपात ॥ ५८ ॥

**हिन्दी**—शिवजीसे प्रक्षिप्त उस बाणसे खंगमूंठको लेकर कटे हुए अवयववाला वह खंग अर्जुनके हाथसे मेघतटसे बिजलीकी आगकी तरह चमकता हुआ गिर पड़ा ॥ ५८ ॥

आक्षिप्तचापावरणेषुजालश्छिन्नोत्तमासिः स मृधेप धूतः ।
रिक्तः प्रकाशश्च बभू भूमेरुत्सादितोद्यान इव प्रदेशः ॥ ५९ ॥

मल्लि०—आक्षिप्तेति । आक्षिप्तान्यपहृतानि चापावरणेषुजालानि धनुर्वर्म-वाणसमूहा यस्य स छिन्नत्तोमासिलूनमहाखड्गो मृधे रणे । 'मृधमास्कन्दनं सख्यम्' इत्यमरः । अवधूतो निरस्तः सोऽर्जुन उत्सादितमुत्पाटितमुद्यानं यस्य स भूमेः प्रदेशो भूमिभाग इव रिक्तः शून्यः प्रकाशो निःसंबाधश्च । दृश्य इति यावत् । बभूव ॥ ५९ ॥

हिन्दी—अर्जुनके धनु; कवच और बाणसमूह अपहृत होनेसे छिन्न विशाल तलवार छिन्न होनेसे अर्जुन शस्त्र-शून्य होकर उद्यानके काटे जानेपर पृथ्वीके प्रदेशके समान शून्य तथा भीड़से रहित हो गया ॥ ५९ ॥

स खण्डनं प्राप्य परादमर्षवान् भुजाद्वितीलोऽपि विजेतुमिच्छया ।
ससर्ज वृष्टिं परिरुग्णपादपां द्रवेतरेषां पयसामिवाश्मनाद् ॥ ६० ॥

मल्लि०—स इति' । परात् परस्माच्छत्रोः । 'पूर्वादिभ्यो नवभ्यो वा' इति विकल्पान्न स्मादादेशः । खण्डनं भङ्गं प्राप्य, अमर्षवान् सोऽर्जुनो भुजद्वितीयो भुजमात्रसहायः सन्नपि विजेतुमिच्छया द्रवेभ्य इतराणि तेषां कठिनानां पयसामिव करकाणामिवेत्यर्थः । अश्मनां संबन्धिनीं परिरुग्णा भग्ना पादपा सा तां वृष्टिं ससर्ज । अश्मभिर्जघानेत्यर्थः ॥ ६० ॥

हिन्दी—शत्रुसे पराजय पाकर क्रुद्ध होकर अर्जुन बाहुमात्रका सहारा लेकर भी जीतनेकी इच्छासे ओलोंको समान पेड़ोंको तोड़नेवाली पत्थरोंकी वृष्टि करने लगे ॥ ६० ॥

नीरन्ध्रं परिगमिते क्षयं पृषत्कैर्भूतानामधिपतिना शिलावितानै ।
उच्छ्रायस्थगितनभोदिगन्तरालं चिक्षेप क्षितिरुहजालमिन्द्रसूनुः ॥ ६१ ॥

मल्लि०—नीरन्ध्रमिति । शिलाविताने शिलाजाले भूतानामधिपतिना शिवेन पृषत्कैर्बाणैः क्षयं परिगमिते नीते सति । इन्द्रसूनुरर्जुन उच्छ्रायेणोत्सेधेन स्थगित-माच्छादितं नभो दिशामन्तरालं च येन तन्नीरन्ध्रं सान्द्रम् । रोहन्तीति रुहाः । इगुपधलक्षणः कप्रत्ययः । क्षितौ रुहा वृक्षास्तेषां जालं चिक्षेप प्रेरयामास । 'उच्छ्रायं गमितवति' इति प्रामादिकः पाठः ॥ ६१ ॥

**हिन्दी**—पत्थरोंके समूहके शिवजीके बाणोंसे क्षय किये जानेपर अर्जुन ऊँचाई-से आकाश और दिङ्मण्डलोंको आच्छादित करनेवाले गाढ वृक्षसमूहको फेंकने लगे ॥ ६१ ॥

निःशेषं शकलितवल्कलाङ्गसारैः
कुर्वद्भिर्भुवमभितः कषायचित्राम् ।
ईशानः सकुसुमपल्लवैर्नगैस्तै-
रातेने बलिमिव रङ्गदेवताभ्यः ॥ ६२ ॥

**मल्लि०**—निःशेषमिति । ईशानः शिवः । शानच्प्रत्ययः । निःशेषं यथा तथा शकलितानि वल्कलानि त्वचोऽङ्गानि शाखाः सारो मज्जा च येषां तैर्भुवमभितः कषायो यो रागः । स्वरसेन रञ्जनमिति यावत् । 'रागे क्वाये कषायोऽस्त्री' इति वैजयन्ती । तेन चित्रां विचित्रवर्णां कुर्वद्भिः सकुसुमपल्लवैस्तैर्वृक्षैरङ्गे रणरङ्गे या देवतास्ताभ्यो बलिं पूजामिव । आतेने ॥ ६२ ॥

**हिन्दी**—शिवजीने निःशेषरूपसे वल्कल, शाखाएँ और मज्जाको खण्डित करनेवाले और पृथिवीको चारों ओरसे रागसे विचित्र करनेवाले फूलों और पल्लवों-से युक्त वृक्षोंसे युद्धरूप रङ्गस्थलमें मानों देवताओंकी पूजा कर दिया ॥ ६२ ॥

उन्मज्जन्मकर इवामरापगाया
वेगेन प्रतिमुखमेत्य बाणनद्याः ।
गाण्डीवी कनकशिलानिभं भुजाभ्या-
माजघ्ने विषमविलोचनस्य वक्षः ॥ ६३ ॥

**मल्लि०**—उन्मज्जन्निति । गाण्डीवी अर्जुनः । उन्मज्जन्नुत्तरन् मकरो जलग्राह विशेषोऽमरापगाया गङ्गाया इव बाणनद्या बाणप्रवाहाद्वेगेन प्रतिमुखमभिमुखम् । एत्यागत्य कनकशिलानिभम् । 'कनक' ग्रहणं काठिन्यातिशयद्योतनार्थम् । विषम-विलोचनस्य त्र्यम्बकस्य वक्षो हृदयं भुजाभ्यामाजघ्ने ताडितवान् । अत्रात्मनेपदं विचार्यम् । 'आङो यमहनः' इत्यत्राकर्मकाधिकारात् । 'स्वाङ्गकर्मकाच्च' इति वक्तव्यत्वात् । न च शिवस्य प्रतिमुखमित्यन्वयात् कनकशिलानिभं कनकनिकषतुल्यं श्यामं स्ववक्ष आजघ्न इत्यर्थं इति वाच्यम्, अनौचित्याचरणात् । न हि युद्धाय संनद्धा निपुणा अपि मल्लाः स्ववक्षस्ताडनमाचरन्ति, किं तु स्वभुजास्फालनम् । किंच,

अनन्तरं वक्ष्यमाणभक्तकर्तृकाविनयसहनरोधाद्वक्ष एवेत्यन्वयस्याव्यवधानाच्च पूर्वेण दूषितत्वात् । अतो व्याकरणान्तराद् द्रष्टव्यम् । केचित्तु 'त्र्यम्बकस्य वक्षः प्राप' इत्यध्याहारं स्वीकृत्यात्मकर्मकत्वादात्मनेपदमाहुः ॥ ६३ ॥

हिन्दी—अर्जुनने गङ्गाके वेगसे पार करते हुए घड़ियालके समान बाणरूप नदीके प्रवाहसे वेगसे सम्मुख आकर सुवर्ण शिलाके सदृश शिवजीके वक्षःस्थलमें अपनी भुजाओंसे ताडन किया ॥ ६३ ॥

अभिलषत उपायं विक्रमं कीर्तिलक्ष्म्यो-
रसुगममरिसैन्यैरङ्कमभ्यागतस्य ।
जनक इव शिशुत्वे सुप्रियस्यैकसूनो-
रविनयमपि सेहे पाण्डवस्य स्मरारिः ॥ ६४ ॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये सप्तदशः सर्गः ।

मल्लि०—अभिलषत इति । कीर्तिलक्ष्म्योरुपायं साधनभूतम् । अरिसैन्यैरसुगमं दुरासदं विक्रममभिलषतः । सूनुपक्षे—यत्किञ्चिमहत्फलं प्रार्थयमानस्येत्यर्थः । अत एव, अङ्कमन्तिकमभ्यागतस्योत्सङ्गमारूढस्य च पाण्डवस्याविनयं स्मरारिः । अनेन भक्तवात्सल्यमेव सहनकारणमिति सूच्यते । शिशुत्वे शैशवे सुप्रियस्य परमप्रेमास्पदस्य । कुतः । एक एक सूनुस्तस्य एकसूनोरविनयं जनक इव सेहे सोढवान् ॥ ६४ ॥

इति किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां सप्तदशः सर्गः समाप्तः ।

हिन्दी—कीर्ति और लक्ष्मीके साधनभूत शत्रुसैन्यसे दुष्प्राप्य पराक्रमका अभिलाष करते हुए अत एव सम्मुख आये हुए अर्जुनकी ढिठाईको शिवजीने जैसे गोदमें बैठे हुए किसी उत्तमवस्तुकी प्रार्थना करनेवाले शैशवमें अतिशय प्रिय एकमात्र पुत्रके अविनय ( ढिठाई )को पिता सहन करता है उसी तरह सहन कर लिया ॥ ६४ ॥

किरातार्जुनीयकाव्यके अनुवादमें सत्रहवाँ सर्ग पूरा हुआ ।

## अष्टादशः सर्गः

तत उदग्र इव द्विरदे मुनौ रणमुपेयुषि भीमभुजायुधे।
धनुरपास्य सबाणधि शंकरः प्रतिजघान घनैरिव मुष्टिभिः ॥ १ ॥

**मल्लि०**—तत इति। ततो मुष्टिनियुद्धानन्तरम्। उदग्रे महति द्विरदे गज इव भीमे भुजावेव आयुधे यस्य तथाभूते रणमुपेयुषि मुनौ शंकरः स्वयमपि सबाणधि सतूणं धनुरपास्य त्यक्त्वा मुष्टिभिर्घनैर्लोहमुद्गरैरिव प्रतिजघान। प्राङ्मुनिकृताघातस्य प्रतिघातं कृतवानित्यर्थः। 'घनाः कठिनसंघातमेघकाठिन्यमुद्गराः'। इति वैजयन्ती। 'घनस्तु लोहमुद्गरे' इति विश्वः! यद्यपि 'मुष्टि' शब्दः 'मुष्ट्या तु बद्धया। सरत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना'। इत्यमरः। इत्युभयथा प्रयोगाद् द्विलिङ्गस्तथाप्यत्रोपमानसारूप्यात् पुंलिङ्गो ग्राह्यः। द्रुतविलम्बितं वृत्तम्।

**हिन्दी**—तब ऊँचे हाथीके समान भयंकर हस्तरूप आयुधवाले तथा युद्धभूमिमें प्राप्त तपस्वी ( अर्जुन )को शिवजीने तरकशके साथ धनुको छोड़कर लोहमुद्गरके समान मुष्टियोंसे प्रत्याघात किया ॥ १ ॥

हरपृथासुतयोर्ध्वनिरुत्पतन्नमृदुसंवलिताङ्गुलिपाणिजः।
स्फुटदनल्पशिलारवदारुणः प्रतिननाद दरीषु दरीभृतः ॥ २ ॥

**मल्लि०**—हरेति। हरपृथासुतयोः शिवार्जुनयोरमृदु निबिडं यथा तथा संवलिताः संघटिता अङ्गुलयो येषां ते। मुष्टिकृता इत्यर्थः। तेषु पाणिषु जातस्तथोक्तः। स्फुटन्तीनां विदलन्तीनामनल्पशिलानामारव इव दारुणो भीषणो ध्वनिरुत्पतन् उद्गच्छन् दरीभृतो गिरेर्दरीषु गुहासु प्रतिननाद प्रतिदध्वान ॥ २ ॥

**हिन्दी**—शिवजी और अर्जुनके दृढतापूर्वक संघटित अंगुलियोंसे युक्त हाथोंमें उत्पन्न, विदलित होते हुए बड़े पत्थरोंकी आवाजके समान भयङ्कर ध्वनि प्रकट होती हुई पर्वतकी गुफाओंमें प्रतिध्वनित होने लगी ॥ २ ॥

शिवभुजाहतिभिन्नपृथुक्षतीः सुखमिवानुबभूव कपिध्वजः।
क इव नाम बृहन्मनसां भवेदनुकृतेरपि सत्त्ववतां क्षमः ॥ ३ ॥

मल्लि०—शिवेति । कपिध्वजः शिवस्य भुजाहतिभिर्मुष्टिघातैर्भिन्ना विदीर्णा याः पृथवो महत्यः क्षतयः प्रहारा व्रणास्ताः सुखमिवानुबभूव । दुःखकरीरपीति भावः । क्षतिदुःखं नाजीगणादित्यर्थः । ननु दुःसहदुःखवेगेषु कथमगणनेत्यत्राह—क इति । क इव नाम को नु खलु सत्त्ववतां सत्त्वाधिकानां बृहन्मनसां तेजस्विनाम् । अनुकृतेरनुकरणस्यापि क्षमो भवेत् । मनस्विनां चरितं नटवदनुकर्तुमपि कश्चिदीष्टे, तस्याचरणं तु दूरापास्तमिति भावः । रौद्ररसाविष्टमनसां मनस्विनां कुतः सुखदुःखगणनेति भावः ॥ ३ ॥

हिन्दी—अर्जुनने शिवजीके मुष्टिप्रहारोंसे विदीर्ण विशाल व्रणोंको सुखके समान अनुभव किया, बलसे अधिक, तेजस्वियोंका कौन अनुकरण मात्र करनेमें भी समर्थ है ? ॥ ३ ॥

व्रणमुखच्युतशोणितशीकरस्थगितशैलतटाभभुजान्तरः ।
अभिनवौषसरागभृता बभौ जलधरेण समानमुमापतिः ॥ ४ ॥

मल्लि०—व्रणेति । व्रणमुखेभ्यश्च्युतस्य क्षरितस्य शोणितस्य शीकरैः स्थगितमावृतं शैलतटाभं शिलासदृशं भुजान्तरं वक्षो यस्य स तथोक्त उमापतिरभिनवमौषसरागं संध्यारागं बिभर्तीति तयोक्तेन जलधरेण समानं तुल्यं यथा तथा बभौ इत्युपमा ॥ ४ ॥

हिन्दी—व्रणके मुखोंसे गिरे हुए रुधिरके कणोंसे व्याप्त पर्वतके तटके समान वक्षःस्थलवाले शिवजी नये सन्ध्यारागको धारण करनेवाले मेघके समान शोभित हो गये ॥ ४ ॥

उरसि शूलभृतः प्रहिता मुहुः प्रतिहतिं ययुरर्जुनमुष्टयः ।
भृशरया इव सह्यमहीभृतः पृथुनि रोधसि सिन्धुमहोर्मयः ॥ ५ ॥

मल्लि०—उरसीति । शूलभृतः शिवस्य । उरसि प्रहिताः प्रयुक्ता अर्जुनस्य मुष्टयः पृथुनि विशाले सह्यमहीभृतः सह्याद्रेः रोधसि तटे भृशरयास्तीव्रवेगाः सिन्धोः समुद्रस्य महोर्मय इव मुहुः प्रतिहतिं ययुः ॥ ५ ॥

हिन्दी—शिवजीके वक्षःस्थलमें अताडित अर्जुनकी मुष्टियाँ सह्यपर्वतके विशाल तटमें तीव्र वेगवाली समुद्रकी बड़ी-बड़ी तरंगोंके समान प्रत्याघातको प्राप्त हुईं ॥ ५ ॥

निपतितेऽधिशिरोधरमायते सममरत्नियुगेऽयुगचक्षुषः ।
त्रिचतुरेषु पदेषु किरीटिना लुलितदृष्टि मदादिव चस्खले ॥ ६ ॥

मल्लि०—निपतित इति। अयुगानि चक्षूंषि यस्य तस्य अयुगचक्षुषस्त्रिलोचनस्य। आयते दीर्घे अरत्नियुगे अरत्न्यो अरत्न्योर्बद्धमुष्टयोर्हस्तयोर्युगे युग्मे। 'मुष्टया तु बद्धया। सरत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना' इत्यमरः। प्रकृते तु मुष्टिमात्रविवक्षया प्रयोगः। शिरोधरायामिति अधिशिरोधरमविकंधरं समं युगपन्निपतिते सति। किरीटिनाऽर्जुनेन मदादिव त्रीणि चत्वारि वा त्रिचतुराणि। 'संख्ययाऽव्ययासन्न—' इत्यादिना बहुव्रीहिः। चतुरोऽचप्रकरणे, 'त्र्युपाभ्यामुपसंख्यानम्' इति समासान्तोऽच्प्रत्ययः। तेषु त्रिचतुरेषु पदेषु लुलितदृष्टि घूर्णितनेत्रं यथा तथा चस्खले स्खलितम्। भावे लिट्॥ ६॥

हिन्दी—शिवजीके दीर्घ दो बद्धमुष्टियोंवाले हाथोंके गर्दनपर पड़नेपर अर्जुन मानों मदसे तीन चार पगोंमें घूर्णित नेत्रोंसे युक्त होकर स्खलित हो गये॥ ६॥

अभिभवोदितमन्युविदीपितः समभिसृत्य भृशं जवमोजसा।
भुजयुगेन विभज्य समाददे शशिकलाभरणस्य भुजद्वयम्॥ ७॥

मल्लि०—अभिभवेति। अभिभवेनोक्तरूपेण परिभवेन उदित उत्पन्नो यो मन्युः क्रोधस्तेन विदीपितः प्रज्वलितः सोऽर्जुनो भृशं जवं समभिसृत्य समभिद्रुत्य ओजसा बलेन शशिकलाभरणस्येन्दुमौलेः शिवस्य भुजद्वयं भुजयुगेन विभज्य वियोज्य समाददे जग्राह॥ ७॥

हिन्दी—नये परिभवसे उत्पन्न क्रोधसे प्रदीप्त किये गये अर्जुनने वेगके बलसे शिवजीके पास जाकर उनके दोनों हाथोंको अपने दोनों हाथोंसे वियुक्त कर पकड़ लिया॥ ७॥

प्रववृतेऽथ महाहवमल्लयोरचलसंचलनाहरणो रणः।
करणशृङ्खलसंकलनागुरुर्गुरुभुजायुधगर्वितयोस्तयोः॥ ८॥

मल्लि०—प्रववृत इति। अथ महाहवे महारणे मल्लयोर्बलीयसोः। 'मल्लः पात्रे कपोले च मत्स्यभेदे बलीयसि' इति विश्वः। गुरू भुजावेव आयुधं तेन गर्वितयोस्तयोः शिवार्जुनयोः करणानि करचरणबन्धनान्येव शृङ्खलानि तेषां संकलना संघटना तया गुरुर्दुस्तरस्तथाऽचलस्य हिमाद्रेः संचलनं कम्पस्तस्याहरण आरोपकः। कर्तरि ल्युट्। रणः प्रववृते प्रवृत्तः॥ ८॥

हिन्दी—तब महायुद्धमें अधिक बलशाली, विशाल बाहुरूप आयुधसे गर्वित शिवजी और अर्जुनके कर चरणरूप शृङ्खलाओंके संघटनासे दुस्तर हिमालयको कम्प और आरोपण करनेवाला युद्ध होने लगा॥ ८॥

अयमसौ भगवानुत पाण्डवः स्थितमवाङ्मुनिना शशिमौलिना
समबिरूढमजेन नु जिष्णुना स्विदिति वेगवशान्मुमुहे गणैः ॥९॥

मल्लि०—अयमिति । अयं पुरोवर्ती पुमान् । असौ भगवान् प्रसिद्धो हरः । तदुक्तम्—'इदमः समक्षरूपं समीपतरवर्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्' इति । उत पाण्डवः । अयं हि तिष्ठदवस्थायां प्रश्नो वेदितव्यम् । अथ पतनावस्थायामाह—मुनिनाऽवाक् अधः स्थितमुत शशिमौलिना अजेन देवेन नु समधिरूढमुपरि स्थितमथ जिष्णुना स्विदर्जुनेन वा समधिरूढम् इत्येवं गणैः प्रमथैर्वेगवशान्मुमुहे भ्रान्तम् । 'मुह वैचित्त्ये' । भावे लिट् ॥९॥

हिन्दी—ये भगवान् ( शिवजी ) हैं अथवा वह तपस्वी ( अर्जुन ) है। तपस्वी ( अर्जुन ) नीचे रहा अथवा भगवान् शिवजी नीचे रहे। शिवजी ऊपर रहे वा तपस्वी ऊपर रहा, इस प्रकार वेगके कारण प्रमथगणोंको मोह ( भ्रम ) हुआ ॥ ९ ॥

प्रचलिते चलितं स्थितमास्थिते विनमिते नतमुन्नतमुन्नतौ।
वृषकपिध्वजयोरसहिष्णुना मुहुरभावभयादिव भूभृता ॥१०॥

मल्लि०—प्रचलित इति । असहिष्णुना तयोर्भारमसहमानेन भूभृता शैलेन अभावभयाद्विनाशभयादिव मुहुर्वृषश्च कपिश्च ध्वजे ययोस्तयोर्वृषकपिध्वजयोः प्रचलिते चलने सति चलितं प्रचेले । आस्थिते तूष्णीमवस्थाने स्थितं तथैव तस्थे । विनमिते सम्यगाक्रमणे सति नतं नम्रीभूतम् । अनामीति यावत् उन्नतावुन्नमने सति उन्नतमुदनामि । सर्वत्र भावे क्तः ॥ १० ॥

हिन्दी—शिवजी और अर्जुनको भार सहनेमें असमर्थ होता हुआ पर्वत मानों विनाशके भयसे दोनोंके चलनेपर स्वयम् चलता था, उनके स्थिर होनेपर वह भी स्थिर हो जाता था, उनके झुक जानेपर वह भी झुक जाता था, उनके उठ जानेपर वह भी उठ जाता था ॥ १० ॥

करणशृङ्खलनिःसृतयोस्तयोः कृतभुजध्वनि वल्गु विवल्गतोः।
चरणपातनिपातितरोधसः प्रससृपुः सरितः परितः स्थलीः ॥ ११॥

मल्लि०—करणेति । करणानि करचरणबन्धविशेषास्तान्येव शृङ्खलानि तेभ्यो निःसृतयोः । मुहुस्त्यक्तबन्धयोरित्यर्थः । कृतो भुजध्वनिर्भुजास्फोटनशब्दो यस्मिन्कर्मणि तत्तथा वल्गु सुन्दरं च यथा तथा विवल्गतोरुल्लवमानयोस्तयोः

पार्थयोश्चरणपातैः पादक्षेपैर्निपातितानि रोधांसि यासां ताः सरितो नद्यः स्थलीः परितः स्थलीषु प्रससृपुः प्रसृताः। 'अभितः परितः—' इत्यादिना द्वितीया। जानपद-' इत्यादिनाऽकृत्रिमार्थे ङीप्। कूलपातक्षोभादुद्वेलसलिलाः सरितः स्थलानि प्रभञ्जयन्नित्यर्थः। एतेन तयोर्भार उक्तः॥ ११॥

**हिन्दी**—हाथों और पैरोंके बन्धनसे छूटे हुए, ताल ठोककर सुन्दर रूपसे उछलते हुए उन शिवजी और अर्जुनके चरणोंसे आहत तटवाली नदियाँ उस स्थानके चारों ओर बहने लगीं॥ ११॥

वियति वेगपरिप्लुतमन्तरा समभिसृत्य रयेण कपिध्वजः।
चरणयोश्चरणानमितक्षितिर्निजगृहे तिसृणां जयिनं पुराम्॥ १२॥

**मल्लि०**—वियतीति। वियत्यन्तरिक्षे वेगेन परिप्लुतमुत्पतितं तिसृणां पुरां जयिनं त्रिपुरान्तकम्। 'जिदृक्षी—'त्यादिनेनिप्रत्ययः। कपिध्वजोऽर्जुनश्चरणाभ्यां पादाभ्यामानमितक्षितिः सन्। रयेण वेगेन समभिसृत्याभिद्रुत्य, अन्तरा मध्येमार्गं चरणयोः पदयोर्निजगृहे निगृहीतवान्। उत्पतितस्य भगवतश्चरणौ स्वकराभ्यां जग्राहेत्यर्थः॥ १२॥

**हिन्दी**—अन्तरिक्षमें वेगसे उछले हुए त्रिपुरविजयी शिवजीके दोनों पैरोंको जमीनको झुकाते हुए अर्जुनने वेगसे सम्मुख जाकर मार्गके बीचमें पकड़ लिया॥ १२॥

विस्मितः सपदि तेन कर्मणा कर्मणां क्षयकरः परः पुमान्।
क्षेप्तुकाममवनौ तमक्लमं निष्पिपेष परिरभ्य वक्षसा॥ १३॥

**मल्लि०**—विस्मित इति। तेन कर्मणा चरणग्रहणरूपेण सपदि विस्मितः सविस्मयः कर्मणां क्षयकरः। मोक्षप्रदः इत्यर्थः। परः पुमान् हरोऽवनौ क्षितौ क्षेप्तुं कामो यस्य तम्। 'तुं काममनसोरपि' इति मकारलोपः। अक्लममक्लान्तं तं पार्थं वक्षसा परिरभ्य निष्पिपेष। गाढमालिलिङ्गेत्यर्थः। रथोद्धता वृत्तम्॥१३॥

**हिन्दी**—अर्जुनके चरणग्रहणरूप उस कर्मसे उस क्षणमें आश्चर्ययुक्त होकर कर्मोंका क्षय करनेवाले अर्थात् मोक्ष देनेवाले परमपुरुष शिवजीने अर्जुनको जमीनपर पटकनेकी इच्छा करने और ग्लानिरहित उनको छातीसे आलिङ्गन कर पीस डाला॥ १३॥

तपसा तथा न मुदमस्य ययौ भगवान्यथा विपुलसत्त्वतया।
गुणसंहतेः समतिरिक्तमहो ! निजमेव सत्त्वमुपकारि सताम् ॥ १४॥

मल्लि०—तपसेति । भगवान् देवः । अस्यार्जुनस्य विपुलसत्त्वतया बहुसत्त्वसंपदा धैर्यसंपत्त्येति यावत् । यथा मुदं ययौ तथा तपसा मुदं न ययौ । तथा हि—सतां गुणसंहतेस्तपःसेवादिगुणसंघातात् समतिरिक्तमतिशयितं निजं सत्त्वमेवोपकार्युपकारकमहो ! प्रमिताक्षरा वृत्तम् ॥ १४ ॥

हिन्दी--भगवान् ( शिवजी ) अर्जुनके प्रचुर बल सम्पत्ति होनेसे जिस तरह प्रसन्न हुए उस तरह उनकी तपस्यासे प्रसन्न नहीं हुए, जैसे कि सज्जनोंका तपस्या और सेवा आदि गुणसमूहसे अतिरिक्त अपना बल ही उपकार करनेवाला होता है ॥ १४ ॥

अथ हिमशुचिभस्मभूषितं शिरसि विराजितमिन्दुलेखया।
स्ववपुरतिमनोहरं हरं दधतमुदीक्ष्य ननाम पाण्डवः ॥ १५॥

मल्लि०—अथेति । अथ हिमशुचिना हिमशुभ्रेण भस्मना भूषितं शिरसीन्दुलेखया विराजितं शोभितम् अतिमनोहरं सुन्दरं स्ववपुर्दधतं किरातरूपं विहाय निजविग्रहं दधानं हरमुदीक्ष्य पाण्डवो ननाम प्रणतवान् । अपरवक्त्रं वृत्तम्—'अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ' । इति लक्षणात् ॥ १५॥

हिन्दी--तब बर्फके समान सफेद भस्मसे भूषित, शिरपर चन्द्रकलासे शोभित अतिशय सुन्दर अपने शरीरको धारण करते हुए शिवजीका दर्शन कर पाण्डव ( अर्जुन )ने प्रणाम किया ॥ १५ ॥

सहशरधि निजं तथा कार्मुकं वपुरतनु तथैव संवर्मितम्।
निहितमपि तथैव पश्यन्नसि वृषभगतिरुपाययौ विस्मयम् ॥ १६॥

मल्लि०—सहेति । वृषभस्येव गतिर्यस्य सोऽर्जुनस्तस्मिन्समये सहशरधिभ्यां वर्तत इति सहशरधि सनिषङ्गम् । 'वोपसर्जनस्य' इति विकल्पात् 'सह' शब्दस्य न सभावः । निजं कार्मुकं गाण्डीवं तथैव पूर्ववदेव संवर्मितं सम्यक्कवचितमतनु महन्निजं वपुस्तथैव निहितं यथापूर्वं स्थापितमपि खड्गं च तथैव पश्यन् विस्मयमुपाययौ । क्वचित्तु 'वृषभगतिम्' इति पाठः । तत्र वृषभगतिं शिवं च पश्यन् विस्मयमुपाययावित्यर्थः । प्रमुदितवदना वृत्तम्—'प्रमुदितवदना भवेन्नौ ररौ' । इति लक्षणात् ॥ १६ ॥

**हिन्दी**—वृषभके समान गतिवाले अर्जुन उस समय तरकशोंसे युक्त अपने धनु ( गाण्डीव )को तथा पहलेकी तरह कवचधारी विशाल अपने शरीरको और पहलेके समान स्थापित अपने खड्गको देखते हुए आश्चर्ययुक्त हो गये ॥ १६ ॥

सिषिचुरवनिमम्बुवाहाः शनैः सुरकुसुममियाय चित्रं दिवः ।
विमलरुचिभृशं नभो दुन्दुभेर्ध्वनिरखिलमनाहतस्यानशे ॥ १७ ॥

**मल्लि०**—सिषिचुरिति । अम्बुवाहाः शनैरवनिं सिषिचुरुक्षांचक्रुः । दिवोऽन्तरिक्षाच्चित्रं विचित्रं सुरकुसुमं मन्दारकुसुमानि । जातावेकवचनम् । इयायाजगाम । अनाहतस्याताडितस्य दुन्दुभेः । जातावेकवचनम् । ध्वनिः विमलरुचि प्रसन्नमखिलं नभो भृशमानशे व्याप । अताडिता एव दुन्दुभयो नेदुरित्यर्थः । सर्वमिदमस्य सर्वलोकहितार्थित्वादिति वेदितव्यम् ॥ १७ ॥

**हिन्दी**—मेघ धीरे-धीरे पृथिवीको सेचन करने लगे, अन्तरिक्षसे विचित्र मन्दारपुष्प गिरने लगे, ताडन किये विना भेरीकी आवाजने निर्मल कान्तिवाले समूचे आकाशको व्याप्त कर डाला ॥ १७ ॥

आसेदुषां गोत्रभिदोऽनुवृत्त्या गोपायकानां भुवनत्रयस्य ।
रोचिष्णुरत्नावलिभिर्विमानैर्द्यौराचिता तारकितेव रेजे ॥ १८ ॥

**मल्लि०**—आसेदुषामिति । गोत्रभिद इन्द्रस्य । अनुवृत्त्याऽनुसरणेन । आसेदुषामासन्नानां भुवनत्रयस्य गोपायकानां रक्षकाणां लोकपालादीनाम् । 'गुपूधूपे—' त्यादिनाऽऽयप्रत्ययः । तदन्ताण्ण्वुल् । रोचिष्णवः प्रकाशनशीला रत्नावलयो येषां तैः । 'अलंकृञि—'त्यादिनेष्णुच्प्रत्ययः । विमानैः पुष्पकैराचिता व्याप्ता द्यौस्तारकिता संजाततारकेव रेजे । उत्प्रेक्षालंकारः ॥ १८ ॥

**हिन्दी**—इन्द्रका अनुसरण कर रहनेवाले, तीनों लोकोंको रक्षा करनेवाले लोकपाल आदियोंके चमकनेवाली रत्न पंक्तियोंसे युक्त विमानोंसे व्याप्त आकाश उदित ताराओंसे युक्तके समान शोभित हुआ ॥ १८ ॥

हंसा बृहन्तः सुरसद्मवाहाः संह्रादिकण्ठाभरणाः पतन्तः ।
चक्रुः प्रयत्नेन विकीर्यमाणैर्व्योम्नः परिष्वङ्गमिवाग्रपक्षैः ॥ १९ ॥

**मल्लि०**—हंसा इति । बृहन्तो महान्तः सुरसद्मानि विमानानि वहन्तीति सुरसद्मवाहाः । कर्मण्यण् । संह्रादीनि निह्लादीनि मुखराणि कण्ठाभरणानि

किङ्किण्यो येषां ते । पतन्तो धावन्तो हंसाः प्रयत्नेन विकीर्यमाणैर्विक्षिप्यमाणैः। अग्रपक्षैः पक्षाग्रैः । व्योम्नः परिष्वङ्गमालिङ्गनं चक्रुरिवेत्युत्प्रेक्षा ॥ १९ ॥

**हिन्दी**—विमानोंको ढोनेवाले, आवाज करनेवाली किङ्किणियोंसे युक्त बड़े-बड़े हंस उड़ते हुए हंस प्रयत्नसे फैलाये जानेवाले पंखोंके अग्रभागोंसे आकाशका आलिङ्गन कर रहे हैं क्या ? ऐसी प्रतीति हो रही थी ॥ १९ ॥

मुदितमधुलिहो वितानीकृताः स्रज उपरि वितत्य संतानिकीः ।
जलद इव निषेदिवांसं वृषे मरुदुपसुखयांबभूवेश्वरम् ॥ २० ॥

**मल्लि०**—मुदितेति । अथ मरुद्वायुः जलदे मेघ इव वृषे निषेदिवांसमुपविष्टमीश्वरं मुदिता मधुलिहो भृङ्गा याभिस्ता वितानीकृता उल्लोचाकाराः कृताः । 'अस्त्री वितानमुल्लोचः' इत्यमरः । सांतानिकीः संतानकुसुमविकाराः स्रजः मन्दारमाला इत्यर्थः । 'संतान' शब्दाद्विकारार्थे ठक् । 'संतानः कल्पवृक्षश्च' इत्यमरः । उपरि वितत्य विस्तार्य । उपसुखयांबभूव प्रह्लादयामास ॥ २० ॥

**हिन्दी**—तब वायुने मेघके समान बैलपर चढ़े हुए शिवजीको भौंरोंको प्रसन्न करनेवाली, चँदवाके समान की गई, सन्तान वृक्षके फूलोंकी मालाओंको फैलाकर प्रसन्न किया ॥ २० ॥

कृतधृति परिवन्दितेनोच्चकैर्गणपतिभिरभिन्नरोमोद्गमैः ।
तपसि कृतफले फलज्यायसी स्तुतिरिति जगदे हरेः सूनुना ॥ २१ ॥

**मल्लि०**—कृतधृतीति । अभिन्नरोमोद्गमैरविरलरोमाञ्चैर्गणपतिभिः प्रमथमुख्यैरुच्चकैः परिवन्दितेन साधु साधु इति संस्तुतेन । 'वदि अभिवादनस्तुत्योः' । कर्मणि क्तः । हरेः सूनुनाऽर्जुनेन तपसि कृतं फलं भगवत्साक्षात्कारलक्षणं येन तस्मिन् । कृतफले सतीत्यर्थः । कृतधृति कृतसंतोषं यथा तथा फलज्यायसी फलाधिकेति वक्ष्यमाणा स्तुतिर्जगदे कथिता ॥ २१ ॥

**हिन्दी**—अविरल रोमाञ्चोंसे युक्त मुख्य प्रमथोंसे उच्च स्वरसे स्तुति किये गये अर्जुन तपस्यामें फलके उत्पन्न होनेपर सन्तोषकर फलसे अधिक स्तुति करने लगे ॥ २१ ॥

शरणं भवन्तमतिकारुणिकं भव भक्तिगम्यमधिगम्य जनाः ।
जितमृत्यवोऽजित ! भवन्ति भये ससुरासुरस्य जगतः शरणम् ॥२२॥

मल्लि०—शरणमिति । हे अजित अपराजित ! हे भव ! अतिकारुणिकमति· दयालुम् । 'तदस्य प्रयोजनम्' इति ठक् । भक्तिगम्यं भक्तिमात्रसुलभं भवन्तं शरणं रक्षकमधिगम्य जितमृत्यवो विगतमरणाः । अमरा भूत्वेत्यर्थः । जनाः ससुरासुरस्य जगतो भय आपदि स्वयं रक्षितारो भवन्ति । 'शरणं गृहरक्षित्रोः' इति विश्वः । प्रमिताक्षरा वृत्तम् ॥ २२ ॥

**हिन्दी**—किसीसे पराजित न होनेवाले हे शिवजी ! अत्यन्त दयालु भक्तिसे सुलभ आपको रक्षक पाकर मृत्युको जीतकर भयके समयमें देवताओं और दैत्योंसे युक्त लोकको शरण देनेवाले हो जाते हैं ॥ २२ ॥

विपदेति तावदवसादकरी न च कामसंपदभिकामयते ।
न नमन्ति चैकपुरुषं पुरुषास्तव यावदीश ! न नतिः क्रियते ॥ २३ ॥

मल्लि०—विपदिति । हे ईश ! यावत्तव नतिः प्रणामो न क्रियते । पुरुषेणेति शेषः । तावदेव एकं पुरुषमेकाकिनं सन्तमवसादकरी क्षयकरी विपदेति प्राप्नोति । कामसंपत् मनोरथसंपच्च नाभिकामयते नेच्छति पुरुषाश्चान्ये लोकास्तमेकं पुरुषं तव स्तुतिमकुर्वाणं न नमन्ति न वशे वर्तन्ते । नानिष्टनिवृत्तिर्नापीष्टप्राप्तिरित्यर्थः । यदा तु त्वां प्रणमन्ति तदैव सर्वं लभ्यते इति भावः ॥ २३ ॥

**हिन्दी**—हे ईश्वर ! पुरुष जबतक आपको प्रणाम नहीं करता है तबतक सहायहीन उसको क्षय करनेवाली विपत्ति प्राप्त हो जाती है । मनोरथसम्पत्ति भी उस पुरुषको नहीं चाहती है । अन्यपुरुष भी अपनी स्तुति न करनेवालेके वशमें नहीं रहते हैं ॥ २३ ॥

संसेवन्ते दानशीला विमुक्त्यै संपश्यन्तो जन्मदुःखं पुमांसः ।
यन्निःसङ्गस्त्वं फलस्यानतेभ्यस्तत्कारुण्यं केवलं न स्वकार्यम् ॥२४॥

मल्लि०—संसेवन्त इति । दानं शीलं स्वभावो निजधर्मो येषां ते दानशीलाः । त्वामेवोद्दिश्य दानं कुर्वन्त इत्यर्थः । 'तस्माद्दानं परमं वदन्ति' इति श्रुतेरिति भावः । कुतः । यतो जन्मदुःखं संपश्यन्तोऽनुभवन्तः पुमांसो विमुक्त्यै मोक्षाय संसेवन्ते । भवन्तमिति शेषः । न च तच्चित्रम्, किंतु आनतेभ्यः प्रणतेभ्यो निःसङ्गो निःस्पृहस्त्वं यत् फलसि फलं ददासि । तेषां फलार्थित्वादिति भावः । तत् केवलं निरुपाधिकं कारुण्यं करुणा । स्वार्थे ष्यञ् । 'कारुण्यं करुणा घृणा'

इत्यमरः । न स्वकार्यम् । एतदेव चित्रम् । केवलं परार्थत्वादिति भावः । शालिनी-वृत्तम् ॥ २४ ॥

**हिन्दी**—दान करनेके स्वभाववाले पुरुष और जन्मके दुःको देखते हुए मोक्ष पानेके लिए आपकी सेवा करते हैं । प्रणाम करनेवालोंको निःस्पृह होकर जो आप फल देते हैं वह केवल आपकी करुणा है, अपना कार्य नहीं है ॥ २४ ॥

**प्राप्यते यदिह दूरमगत्वा यत्फलत्यपरलोकगताय ।**
**तीर्थमस्ति न भवार्णवबाह्यं सार्वकामिकमृते भवतस्तत् ॥ २५ ॥**

**मल्लि०**—प्राप्यत इति । यत् तीर्थम् । इहाऽस्मिल्लोके दूरमगत्वा प्राप्यते । स्मृतिमात्रसुलभमित्यर्थः । गङ्गादिकं तु न तथेति भावः । यत्तीर्थमपरलोकगताय फलति फलं प्रयच्छति । अत्रापि स्मरणमात्रादेवेति भावः । भवः संसारः स एव अर्णवस्ततो बाह्यं बहिर्भवं संसारातीतम् । मोक्षपदमित्यर्थः । 'बहिर्देवपञ्चजनेभ्य-श्चेति वक्तव्यन्' इति व्यप्रत्ययः । सर्वे कामाः प्रयोजनमस्येति सार्वकामिकम् । 'तदस्य प्रयोजनम्' इति ठक् । तत् तादृक् । तरन्त्यनेनेति तीर्थं तारकं भवत-स्त्वदृते । 'अन्यारात्–' इत्यादिना पञ्चमी । अन्यन्नास्ति । औपच्छन्दसिकं वृत्तम् ॥ २५ ॥

**हिन्दी**—जिस तीर्थको मनुष्य इस लोकमें दुर न जाकर पाता है जो तीर्थ परलोकमें गये हुए पुरुषको फल देता है, संसाररूप समुद्रसे बाह्य अर्थात् मोक्षपद जो कि सकल अभिलाषरूप प्रयोजनवाला तीर्थ है वह आपसे अतिरिक्त नहीं है ॥ २५ ॥

**व्रजति शुचि पदं त्वयि प्रीतिमान्प्रतिहतमतिरेति घोरां गतिम् ।**
**इयमनघ ! निमित्तशक्तिः परा तव वरद ! न चित्तभेदः क्वचित् ॥२६॥**

**मल्लि०**—व्रजतीति । हे वरद ! त्वयि प्रीतिमान् नरः शुचि निर्मलं पदं कैवल्यं मुक्तिं व्रजति । 'मुक्तिः कैवल्यनिर्वाण–' इत्यमरः । प्रतिहतमतिरुपहत-बुद्धिः । त्वद्द्वेषीत्यर्थः । घोरां गतिं तीव्रं नरकम् । एति प्राप्नोति । न चैतावता तव रागद्वेषकलङ्कपङ्क इत्याह—इयमिति । हे अनघ निष्कलङ्क ! इयम् । भक्ताभक्तयोरिति शेषः । विधेयप्राधान्यात्स्त्रीलिङ्गता । परा दुस्तरा निमित्त-शक्तिर्निमित्तभूता शक्तिः स्वचेष्टितमहिमा । तव क्वचिदभक्ते द्वेषिणि वा कुत्रापि

चित्तभेदो बुद्धिवैषम्यं नास्ति। स्वकर्मणैव जन्तुस्तरति पतति वा। त्वं साक्षितया सर्वत्र सम इत्यर्थः॥ २६॥

**हिन्दी**—हे वरद! आपमें प्रीति करनेवाला पुरुष निर्मल पद (मोक्ष) को प्राप्त करता है। इसके विपरीत आपसे द्वेष करनेवाला पुरुष तीव्र नरकको प्राप्त करता है। हे निष्कलङ्क! यह दुस्तर निमित्तशक्ति आपकी कहीं (अपने भक्तमें वा अपने द्वेषी जनमें) भी बुद्धिकी विषमता नहीं है॥ २६॥

दक्षिणां प्रणतदक्षिणमूर्त्तिं तत्त्वतः शिवकरीमविदित्वा।
रागिणापि विहिता तव भक्त्या संस्मृतिर्भव भवत्यभवाय॥ २७॥

**मल्लि०**—दक्षिणामिति। हे भव! प्रणतदक्षिण! प्रणतेषु दाक्षिण्यसंपन्न! दाक्षिण्यं परच्छन्दानुवर्तित्वम्। 'दक्षिणः सरलावामपरच्छन्दानुवर्तिषु'। इति विश्वः। शिवकरीं श्रेयस्करीम्। 'कृञो हेतु–' इत्यादिना टप्रत्यये ङीप्। तव दक्षिणां मूर्तिं तत्त्वतो याथार्थ्येन अविदित्वापि रागिणा रागद्वेषवतापि भक्त्या विहिता तव संस्मृतिः सम्यक्स्मरणमभवाय संसारनिवृत्तये। प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते। भवति। तत्त्वज्ञानं विनापि भक्तिपूर्विका तव संस्मृतिरेव मुक्तिनिदानमित्यर्थः। स्वागता वृत्तम्॥ २७॥

**हिन्दी**—हे भक्तोंमें उदार! हे शिवजी! कल्याण करनेवाली आपकी दक्षिणामूर्तिको यथार्थरूपसे न जानकर भी रागद्वेष करनेवाले पुरुषसे भी भक्तिसे किया गया आपका संस्मरण संसारकी निवृत्तिके लिए (मोक्ष प्राप्तिके लिए) हो जाता है॥ २७॥

दृष्ट्वा दृश्यान्याचरणीयानि विधाय प्रेक्षाकारी याति पदं मुक्तमपायैः।
सम्यग्दृष्टिस्तस्य परं पश्यति यस्त्वां यश्चोपास्ते साधु विधेयं स विधत्ते॥

**मल्लि०**—दृष्ट्वेति। प्रेक्षया बुद्ध्या करोतीति प्रेक्षाकारी विमृश्यकारी दृश्यानि द्रष्टव्यानि दृष्ट्वा ज्ञात्वा आचरणीयानि कर्तव्यानि च विधाय कृत्वा, अपायैर्मुक्तं नाशवर्जितं पदं याति। 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते'। इति श्रुतेः। ज्ञानकर्मभ्यां मुक्तिरित्यर्थः। किन्तु ते अपि ज्ञानकर्मणी त्वद्विषय एव मुक्तिसाधनं नान्यविषय इत्याशयेनाह—सम्यगिति। यः पुमान् परं पुरुषोत्तमत्वेन सर्वोत्कृष्टं त्वां पश्यति तस्य सम्यग्दृष्टिः सम्यग्ज्ञानम्। यश्च त्वामुपास्ते सेवते स एव साधु विधेयं विधत्ते। साधुकारीत्यर्थः। मत्तमयूरं वृत्तम्। लक्षणं तूक्तम्।२८।

हिन्दी—विचारपूर्वक कार्य करनेवाला द्रष्टव्य तत्त्वोंको जानकर कर्तव्योंको भी करके नाशरहित पद ( मोक्ष )को प्राप्त करता है। जो पुरुष परमपुरुष आपको जान लेता है उसका उत्तम ज्ञान है और जो आपकी उपासना करता है वह उत्तम कर्म करता है ॥ २८ ॥

युक्ताः स्वशक्त्या मुनयः प्रजानां हितोपदेशैरुपकारवन्तः।
समुच्छिनत्सि त्वमचिन्त्यधामा कर्माण्युपेतस्य दुरुत्तराणि ॥ २९ ॥

मल्लि०—युक्ता इति। मुनयो व्यासादयः स्वशक्त्या निजयोगमहिम्ना युक्ताः। तथा हितोपदेशैर्विधिनिषेधवाक्यैः स्मृतीतिहासपुराणमुखेन प्रजानामुपकारवन्तः कृतोपकाराश्च। मोक्षप्रदस्तु तेषामन्येषां च त्वमेवेत्याह—समिति। अचिन्त्यधामाऽचिन्त्यमहिमा त्वमेव उपेतस्य शरणं प्राप्तस्य प्रपन्नस्य संबन्धीनि दुरुत्तराणि कर्माणि बन्धकानि पुण्यपापानि समुच्छिनत्सि नाशयसि। ते त्वत्राऽसमर्था एवेति भावः॥ २९ ॥

हिन्दी—व्यास आदि मुनि अपने योगकी महिमासे युक्त होकर हितके उपदेशोंसे ( धर्मशास्त्र, पुराण और इतिहास आदि शास्त्रोंसे प्रजाओंका उपकार करते हैं। परन्तु अचिन्तनीय महिमावाले आप ही शरणमें प्राप्त पुरुषके दुस्तर बन्धक पुण्य और पाप कर्मोंका नाश कर देते हैं॥ २९ ॥

संनिबद्धमपहर्तुमहार्यं भूरि दुर्गतिभयं भुवनानाम्।
अद्भुताकृतिमिमामतिमायस्त्वं बिभर्षि करुणामय! मायाम् ॥ ३० ॥

मल्लि०—संनिबद्धमिति। अतिक्रान्तो मायां बन्धरूपामतिमायः। 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः। हे करुणामय! हे कृपालो! संनिबद्धं स्वकर्मणा दृढबद्धमत एव, अहार्यमन्यैरनुच्छेद्यं भूरि प्रभूतं भुवनानां दुर्गतिभयं नरकभयम्। 'स्यान्नारकं तु नरको निरयो दुर्गतिः स्त्रियाम्' इत्यमरः। अपहर्तुमद्भुताकृतिं विचित्ररूपामिमां मायां दृश्यमानां लीलाविग्रहरूपां बिभर्षि। अन्येषां कर्मानुबन्धी विग्रहपरिग्रहः। भवतस्तु परोपकारार्थ इत्यर्थः॥ ३० ॥

हिन्दी—बन्धरूप मायाका लंघन करनेवाले हे दयालो! अपने कर्मसे दृढ़रूपसे बद्ध औरोंसे अनुच्छेदनीय लोकोंका प्रचुर नरकभयको हटानेके लिए आपही विचित्ररूपवाली दृश्यमान लीलाविग्रहरूप इस मायाको धारण कर लेते हैं। ३०।

न रागि चेतः परमा विलासिता वधूः शरीरेऽस्ति न चास्ति मन्मथः।
नमस्क्रिया चोषसि धातुरित्यहोनिसर्गदुर्बोधमिदं तवेहितम् ॥ ३१ ॥

मल्लि०—न रागीति। देव ! चेतस्तव चित्तं रागि रागयुक्तं न। परमयोगित्वादिति भावः। तथापि परमा निरतिशया विलासिता श्रृङ्गारादिचेष्टाशीलता। भिक्षाटनादिषु विहरणेन तौर्यत्रिकव्यसनितया चेति भावः। किंच, शरीरेऽर्धाङ्गे वधूरस्ति। प्रसिद्धं चैतदिति भावः तथापि मन्मथः कामश्च नास्ति। तस्य भस्मीकरणादिति भावः। किंच, उषसि प्रातःसंध्यायां धातुर्ब्रह्मणो नमस्क्रिया वन्दनम्। स्वयं जगद्वन्द्यस्यापीत्यर्थः। इतीत्थं विरुद्धमिदमुक्तं तवेहितं चेष्टितं निसर्गतो दुर्बोधं दुराकलनीयम्। दुर्ग्रहमित्यर्थः। अदृष्टपूर्वत्वादिति भावः। वंशस्थं वृत्तम् ॥ ३१ ॥

हिन्दी—हे भगवन् ! आपका चित्त रागद्वेषवाला नहीं है। तो भी आपकी अनुपम श्रृङ्गार आदि चेष्टाशीलता है तथा आपके अर्धाङ्गमें पत्नी ( पार्वती ) हैं, तथापि आपमें कामविकार नहीं है; परन्तु प्रातःकालकी सन्ध्यामें आप ब्रह्माजीको नमस्कार करते हैं, आश्चर्य है कि आपकी यह चेष्टा स्वभावतः दुर्बोध है ॥ ३१ ॥

तवोत्तरीयं करिचर्म साङ्गजं ज्वलन्मणिः सारसनं महानहिः।
स्रगास्यपङ्क्तिः शवभस्म चन्दनं कला हिमांशोश्च समं चकासति ॥

मल्लि०—तवेति। हे देव ! तव साङ्गजं सलोमकं करिचर्मोत्तरीयं संव्यानम्। दुःस्पर्शमिति भावः। 'संव्यानमुत्तरीयं च' इत्यमरः। ज्वलन्मणिर्ज्वलद्रत्नो महानहिः सारसनं कटिभूषाविशेषः। योऽन्येषां प्राणहर इत्यर्थः। 'क्लीबे सारसनं चाथ पुंस्कट्यां श्रृङ्खलं त्रिषु' इत्यमरः। आस्यपंक्तिः कपालमाला स्रक् माल्यम्। शवभस्म चन्दनम्। उभयत्राप्यस्पृश्यममङ्गलं चेति भावः। किंच, एतानि वस्तूनि हिमांशोः कला च समं तुल्यतया चकासति दीप्यन्ते। त्वदाश्रयवशादरम्यस्यापि रम्यतेति किमशक्यं तवेति भावः ॥ ३२ ॥

हिन्दी—हे भगवन् ! रोमसे युक्त गजचर्म आपका उत्तरीय है, चमकती मणिवाला विशाल सर्प आपका कटिभूषण है, नरकपालोंकी पङ्क्ति आपकी माला है, शवभस्म आपका चन्दन है और ( आपके शिरमें स्थित ) चन्द्रकला भी ये सब पदार्थ आपमें तुल्यरूपसे प्रकाशित हो रहे हैं ॥ ३२ ॥

अविग्रहस्याप्यतुलेन हेतुना समेतभिन्नद्वयमूर्ति तिष्ठतः।
तवैव नान्यस्य जगत्सु दृश्यते विरुद्धवेषाभरणस्य कान्तता ॥३३॥

मल्लि०—अविग्रहस्येति । अविग्रहस्य वस्तुतोऽशरीरस्यापि सतोऽतुलेन दुर्बोधत्वादसदृशेन हेतुना । केनापि कारणेनेत्यर्थः । समेता संगता भिन्ना विलक्षणा च द्वयी द्विविधा स्त्रीपुमात्मिका मूर्तिर्यस्मिन्कर्मणि तत् समेतभिन्नद्वयमूर्ति यथा तथा तिष्ठतः । अशरीरस्य शरीरमेव विरुद्धम्, तदपि नारीनरात्मकमिति किमतश्चित्रमस्तीति भावः । एवंविधस्य तवैव जगत्सु विरुद्धे वेषाभरणे पूर्वोक्ते यस्य तस्य विरुद्धवेषाभरणस्यापि सतः कान्ता रमणीयता दृश्यते । अन्यस्य न दृश्यते । तस्मादचिन्त्योऽसौ तव महिमेति भावः ।। ३३ ।।

हिन्दी—वस्तुतः शरीरसे रहित होकर भी अनुपम कारणसे संगत विलक्षण स्त्री और पुरुषरूप दो मूर्तियोंसे रहनेवाले इस प्रकार लोकोंमें विरुद्ध वेष और आभरणवाले आपकी ही रमणीयता देखी जा रही है ।। ३३ ।।

आत्मलाभपरिणामनिरोधैर्भूतसङ्घ इव न त्वमुपेतः।
तेन सर्वभुवनातिग लोके नोपमानमसि नाप्युपमेयः॥ ३४॥

मल्लि०—आत्मेति । हे देव ! त्वं भूतसङ्घ इव शरीरादिसंघात इव आत्मलाभपरिणामनिरोधैर्जन्मजरामरणैः । उपेतो युक्तो नासि । तेन कारणेन हे सर्वभुवनातिग सर्वलोकोत्तर ! उपमीयतेऽनेनेत्युपमानं नासि । उपमीयते यत्तदुपमेयमपि नासि । न कश्चित्त्वादृशोऽस्ति । त्वमपि नान्यसदृशः । अनन्यसाधारणत्वादित्यर्थः । वृत्तमुक्तम् ॥ ३४ ॥

हिन्दी—हे भगवन् ! आप शरीर आदिके समूहके समान जन्म, जरा ( बुढापा ) और मृत्युसे युक्त नहीं हैं, इस कारणसे सकल लोकोंका अतिक्रमण करनेवाले हे भगवन् ! आप लोकमें न उपमान-स्वरूप हैं और न तो उपमेयस्वरूप ही हैं ।। ३४ ।।

त्वमन्तकः स्थावरजङ्गमानां, त्वया जगत्प्राणिति देव ! विश्वम् ।
त्वं योगिनां हेतुफले रुणत्सि त्वं कारणं कारणकारणानाम् ॥ ३५ ॥

मल्लि०—त्वमिति । हे देव ! त्वंस्थावरजङ्गमानामन्तकः संहर्ता । त्वया हेतुना विश्वं सर्वं जगत् प्राणिति जीवति । त्वं योगिनां हेतुः प्रवर्तकं कर्म फलं भोगश्च ते हेतुफले रुणत्सि निवर्तयसि । तेषां त्वमेव बन्धविमोचक इत्यर्थः । किंच,

त्वं कारणानि भूतानि, तेषां कारणानि भूतसूक्ष्माणि परमाणवो वा तेषां कारण-कारणानां कारणं प्रकृत्यादिद्वारोत्पत्तिस्थानम्। अत्र सर्वत्र 'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति' इति श्रुतिः प्रमाणमिति भावः ॥ ३५ ॥

**हिन्दी**—हे भगवन्! आप स्थावर (अचर) और जङ्गम (चर) प्राणियों-के संहारक हैं। आपसे समस्त लोक प्राणधारण करता है। आप योगियोंके प्रवर्तक कर्म और उसके भोगका निवारण करते हैं, अर्थात् उनके बन्धको छुड़ाते हैं। आप पञ्चमहाभूत और उनके कारण भूतसूक्ष्म (शब्द स्पर्श) आदिके कारण हैं ॥ ३५ ॥

रक्षोभिः सुरमनुजैर्दितेः सुतैर्वा यल्लोकेष्वविकलमाप्तमाधिपत्यम्।
पाविन्याः शरणगतार्तिहारिणे तन्माहात्म्यं भव भवते नमस्क्रियायाः ॥

**मल्लि०**—रक्षोभिरिति। रक्षोभी राक्षसैः सुरमनुजैः सुराश्च मनुजाश्च तैर्देवमनुष्यैर्दितेः सुतैर्दैत्यैर्वा लोकेषु यदविकलं संपूर्णमाधिपत्यमाप्तं प्राप्तं, तत् हे भव! शरणागतानामार्तिहारिणे दुःखनाशकाय भवते तुभ्यं नमस्क्रियायाः। 'नमःस्वस्ती–'त्यादिना चतुर्थी। पाविन्याः पापहारिण्या माहात्म्यं सामर्थ्यम्। 'न कस्याप्युन्नत्यै भवति शिरसस्त्वय्यवनतिः' इति भावः। प्रहर्षिणीवृत्तम् ॥ ३६॥

**हिन्दी**—हे भव (शिवजी)! राक्षस, देवता, मनुष्य अथवा दैत्य इन सभीने लोकमें जो सम्पूर्ण आधिपत्य पा लिया वह शरणागतोंके दुःखनाशक आपको किये गये पापनाशक नमस्कार कर्मका सामर्थ्य है ॥ ३६ ॥

अथाष्टमूर्तिषु काश्चित्स्तुवन् वायुमूर्ति तावदाह—

तरसा भुवनानि यो बिभर्ति ध्वनति ब्रह्म यतः परं पवित्रम्।
परितो दुरितानि यः पुनीते शिव तस्मै पवनात्मने नमस्ते ॥ ३७ ॥

**मल्लि०**—तरसेति। यः पवनः। तरसा बलेन। 'तरसी बलरंहसी' इति विश्वः। भुवनानि बिभर्ति प्राणात्मना धारयति। यतो यत्प्रेरणात् पवित्रं परं परमं ब्रह्म वर्णात्मकं ध्वनति नदति। 'सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः। वर्णाञ्जनयते' इति वचनात्। यः पवनः परितो दुरितानि पातकानि पुनीते शोधयति। नाशयतीति यावत्। हे शिव! तस्मै पावयतीति पवनो वायुः स एवात्मा यस्य तस्मै पवनात्मने ते तुभ्यं नमः। वृत्तमुक्तम् ॥ ३७ ॥

हिन्दी—हे शिवजी ! जो वायुदेव बलसे लोकोंका धारण करते हैं, जिसकी प्रेरणासे पवित्र परम ब्रह्म ध्वनित होता है जो वायुदेव चारों ओरसे पातकोंको नष्ट करते हैं, ऐसे पवित्र करनेवाले वायुस्वरूप आपको नमस्कार है ॥ ३७ ॥

भवतः स्मरतां सदासने जयिनि ब्रह्ममये निषेदुषाम् ।
दहते भवबीजसंततिं शिखिनेऽनेकशिखाय ते नमः ॥ ३८ ॥

मल्लि०—भवत इति। जयिनि जयशीले सर्वोत्कृष्टे ब्रह्ममये ब्रह्मप्रदाने। तत्प्राप्त्युपायत्वात् । सदासने सम्यगासने । योगासन इत्यर्थः । निषेदुषामुपविष्टानां भवतः स्मरतां भवन्तं ध्यायताम् । 'अधीगर्थे—'त्यादिना शेषे कर्मणि षष्ठी । भवबीजसंततिं संसारनिदानकर्मसंघातं दहते भस्मीकुर्वतेऽनेकशिखाय बहुज्वालाय शिखिने वह्निमूर्तये ते तुभ्यं नमः ॥ ३८ ॥

हिन्दी—जयशील ब्रह्म प्रदानमें योगासनमें बैठे हुए आपका स्मरण करते हुए योगियोंका संसारके हेतु कर्मसमूहका दाह करते हुए अनेक ज्वालाओंसे युक्त अग्निस्वरूप आपको नकस्कार है ॥ ३८ ॥

अथ जलमूर्तिं स्तौति—

आबाधामरणभयार्चिषा चिराय प्लुष्टेभ्यो भव महता भवानलेन ।
निर्वाणं समुपगमेन यच्छते ते बीजानां प्रभव नमोऽस्तु जीवनाय ॥३९॥

मल्लि०—आबाधेति । भव ! बीजानां प्रभव ! कारणभूत । 'जीवानाम्' इति पाठे तेषां तत्प्रतिबिम्बत्वादिति भावः । आबाधाऽध्यात्मिकादिदुःखं मरणं पञ्चत्वं ताभ्यां भयं तदेवार्चिर्यस्य तेन महता भवानलेन संसाराग्निना चिराय चिरं प्लुष्टेभ्यो दग्धेभ्यः समुपगमेन संसेवया निर्वाणं संतापशान्ति यच्छते ददते जीवयतीति जीवनं तस्मै जीवनाय जलात्मने ते तुभ्यं नमः ॥ ३९ ॥

हिन्दी—हे शिवजी ! हे बीजोंके कारणस्वरूप ! आध्यात्मिक आदि दुःख और मरणसे भयरूप ज्वालासे युक्त, महान् संसाररूप अग्निसे बहुत समय तक जले हुए लोगोंको सेवासे निर्वाण ( सन्तापकी शान्ति ) देते हुए और जीवित करते हुए जलस्वरूप आपको नमस्कार है ॥ ३९ ॥

इदानीं नभोमूर्तिं स्तौति—

यः सर्वेषामावरीता वरीयान् सर्वैर्भावैर्नावृतोऽनादिनिष्ठः ।
मार्गातीतायेन्द्रियाणां नमस्तेऽविज्ञेयाय व्योमरूपाय तस्मै ॥४०॥

मल्लि०—य इति । भवेत्यनुवर्तते । भवत्यस्मादयं प्रपञ्च इति भवस्तत्संबुद्धौ सकलजगज्जनकेति यावत् । वरीयानुरुतरः विभुरित्यर्थः । 'प्रियस्थिरे—'त्यादिना 'उरु' शब्दस्य वरादेशः । यस्त्वं सर्वेषां वस्तूनां आवरीताऽऽच्छादयिता । वृणोतेस्तृच्प्रत्ययः । सर्वैर्भावैः पदार्थैर्नावृतः केनापि कदाचिदप्यनावृतः, स्वयं व्यापकत्वादिति भावः । अविद्यमाने आदिनिष्ठे उत्पत्तिनाशौ यस्यासावनादिनिष्ठो नित्यः 'निष्ठानिष्पत्तिनाशान्ताः' इत्यमरः । इन्द्रियाणां चक्षुरादीनां मार्गातीतायातीन्द्रियाय । अत एव अविज्ञेयायापरिच्छेद्याय तस्मै व्योमरूपाय ते तुभ्यं नमः ॥ ४० ॥

हिन्दी—प्रपञ्चोंको उत्पन्न करनेवाले हे भव ( शिवजी ) ! विभु आप जो सकल पदार्थोंका आच्छादन करनेवाले हैं परन्तु किसीसे भी स्वयम् आच्छादित नहीं होते हैं, उत्पत्ति और नाशसे रहित नित्य हैं, नेत्र आदि इन्द्रियोंके मार्गका अतिक्रमण किये हुए अत एव अविज्ञेय ऐसे आकाशस्वरूप आपको नमस्कार है ॥ ४० ॥

अणीयसे विश्वविधारिणे नमो नमोऽन्तिकस्थाय नमो दवीयसे ।
अतीत्य वाचां मनसां च गोचरं स्थिताय ते तत्पतये नमो नमः ॥

मल्लि०—अणीयस इति । भवेत्यनुवर्तते हे भव ! अणीयसे सूक्ष्मतराय तथापि विश्वधारिणे जगद्धारकाय ते तुभ्यं नमः । अन्तिकस्थायान्तर्यामितया संनिकृष्टाय सते । तथापि दवीयसे दुर्ग्रहत्वाद् दूरतराय ते तुभ्यं नमः । वाचां मनसां च गोचरं विषयम् अतीत्य स्थितायावाङ्मनसगोचराय । तत्पतये तेषां वाङ्मनसानामध्यक्षाय । तदध्यक्षस्तैरेव न दृश्यत विरोधः । ते तुभ्यं नमो नमः । 'चापले द्वे भवत इति वक्तव्यम्' इति द्विरुक्तिः । सम्भ्रमेण, प्रवृत्तिश्चापलम्' इति काशिका । भक्त्युद्रेकाच्च संभ्रमः । विरोधाभासोऽलंकारः ॥ ४१ ॥

हिन्दी—हे शिवजी ! अतिशय सूक्ष्म होकर भी विश्वका धारण करनेवाले आपको नमस्कार है, अन्तर्यामी होनेसे निकटमें रहे हुए परन्तु दुर्ग्रह होनेसे अति दूर रहे हुए आपको नमस्कार है, वचन और मनसे अग्राह्य होकर भी उनके अध्यक्ष ऐसे आपको नमस्कार है, नमस्कार है ॥ ४१ ॥

असंविदानस्य ममेश संविदां तितिक्षितुं दुश्चरितं त्वमर्हसि ।
विरोध्य मोहात्पुनरभ्युपेयुषां गतिर्भवानेन दुरात्मनापि ॥ ४२ ॥

मल्लि०—असंविदानस्येति । संविदां ज्ञानानामीश । 'ईशानः सर्वविद्यानाम्'

इति श्रुतेरिति भावः। 'प्रेक्षोपलब्धिश्चित्संवित्' इत्यमरः। असंविदानस्याजानतः। 'समो गम्यृच्छीत्यादिना विदेः संपूर्वादकर्मकाच्छानच्प्रत्ययः। मम दुश्चरितं शस्त्रप्रयोगरूपं दुश्चेष्टितं तितिक्षितुं सोढुम्। तिजेः सन्नन्तात्तुमुन्प्रत्ययः। त्वमर्हसि योग्योऽसि। ननु तव महानपराधः कथं सोढव्यस्तत्राह–विरोध्येति। मोहादज्ञानात् विरोध्य वैरमुत्पाद्य पुनरभ्युपेयुषां पश्चाच्छरणागतानां दुरात्मनामपि भवानेव गतिः। त्वं हि शरणागतानामपराधं न गणयसीत्यर्थः॥ ४२॥

हिन्दी––हे ज्ञानोंके स्वामिन्! ज्ञानसे रहित मेरे शस्त्रप्रहाररूप दुश्चरित्रको सहन करनेके लिए आप योग्य हैं, अज्ञानसे विरोधको उत्पन्न करके फिर शरणमें आनेवाले दुरात्माओंके भी आप ही गति है॥ ४२॥

संप्रति वरं याचते—

**आस्तिक्यशुद्धमवतः प्रियधर्म! धर्मं धर्मात्मजस्य विहितागसि शत्रुवर्गे।**
**संप्राप्नुयां विजयमीश यया समृद्धया तां भूतनाथ विभुतां वितराहवेषु॥**

**मल्लि०**––आस्तिक्येति। प्रियो धर्मो यस्येति प्रियधर्मः 'समासान्तो विधिरनित्यः' इति न समासान्तोऽनिच्प्रत्ययः। परलोके मतिरस्तीत्यास्तिकः पारलौकिकः। 'अस्ति नास्तिदिष्टमि–'ति ठक्। तस्य भाव आस्तिक्यं विश्वासस्तेन शुद्धं विमलं धर्मं वैदिकाचारम्। अवतः पालयतो धर्मात्मजस्य युधिष्ठिरस्य विहितागसि कृतापराधे शत्रुवर्गे शत्रुवर्गविषये हे ईश! यया समृद्धयाऽस्त्रवैभवेन विजयं संप्राप्नुयां भजेयम्। हे भूतनाथ! आहवेषु तां विभुतां विभूतिमस्त्रविद्यां वितर देहि॥ ४३॥

**हिन्दी**––हे स्वामिन्! हे भूतनाथ! हे धर्मको प्रिय माननेवाले! आस्तिकतासे शुद्ध धर्मकी रक्षा कराते हुए युधिष्ठिरपर अपराध किये हुए शत्रुसमूहपर जिस अस्त्रवैभवसे विजयको प्राप्त करूंगा, युद्धमें उस विभुता (अस्त्र-विद्या) का प्रदान कीजिए॥ ४३॥

**इति निगदितवन्तं सूनुमुच्चैर्मघोनः प्रणतशिरसमीशः सादरं सान्त्वयित्वा।**
**ज्वलदनलपरीतं रौद्रमस्त्रं दधानं धनुरुपपदमस्मै वेदमभ्यादिदेश॥ ४४॥**

**मल्लि०**––इतीति। इत्युच्चैर्निगदितवन्तं प्रणतशिरसं मघोन इन्द्रस्य सूनुमर्जुनम्। ईशो महादेवः सादरं यथा तथा सान्त्वयित्वोपसान्त्व्य, अस्मै अर्जुनाय ज्वलताऽनलेन तेजसा परीतं व्याप्तं रौद्रं रुद्रदेवताकं पाशुपतमस्त्रं दधानं धनुरुपपदं

'धनुःशब्दोपपदं वेदम्' । 'धनुर्वेदमित्यर्थः । अभ्यादिदेश ददौ । अध्यापयामासेत्यर्थः । 'धनुरुपपदवेदम्' इत्यत्र धनुरुपपदत्वं 'वेद' शब्दस्य न तु संज्ञिनस्तदर्थस्येति संज्ञायाः संज्ञिगतत्वाभावादवाच्यवचनदोषमाहुरालंकारिकाः । तदुक्तम्—'यदेवावाच्यवचनमवाच्यवचनं हि तत्' । इति । समाधानं तु धनुः'शब्दविशेषितेन 'वेद' शब्देन शब्दान्तरेणेत्यर्थः । परोपदेशयोग्यो धनुर्वेदो लक्ष्यत इति कथंचित्संपाद्यम् ॥

**हिन्दी**—ऊंचे स्वरसे ऐसा कहते हुए प्रणाम करनेवाले इन्द्रपुत्र अर्जुनको शिवजीने आदरपूर्वक सान्त्वना देकर उनको जलते हुए तेजसे व्याप्त रुद्र देवतावाले पाशुपत अस्त्रको धारण करते हुए धनुर्वेदको पढ़ाया ॥ ४४ ॥

स पिङ्गाक्षः श्रीमान् भुवनमहनीयेन महसा
तनुं भीमां बिभ्रत्त्रिगुणपरिवारप्रहरणः ।
परीत्येशानं त्रिः स्तुतिभिरुपगीतः सुरगणैः
सुतं पाण्डोर्वीरं जलदमिव भास्वानभिययौ ॥ ४५ ॥

**मल्लि०**—स इति । पिङ्गाक्षः पिङ्गलाक्षः श्रीमान् शोभावान् भुवनमहनीयेन लोकपूज्येन महसा तेजसा भीमां तनुं बिभ्रत् । त्रिगुणस्त्रिशिखः परिवारः आकारो यस्य तत् त्रिगुणपरिवारं त्रिशूलं तदेव प्रहरणमायुधं यस्य स तथोक्तः । 'सूर्यपक्षे तु—गुणत्रयपरिवारस्त्रय्यात्मक इति योज्यम् । स धनुर्वेदः सुरगणैः स्तुतिभिरुपगीतः सन् । ईशानं शिवं त्रिस्त्रिवारम । 'द्वित्रिचतुर्भ्यः सुच्' इति सुच्प्रत्ययः । परीत्य प्रदक्षिणीकृत्य वीरं पाण्डोः सुतमर्जुनम् । भास्वान् सूर्यो जलदमिव । अभिययौ । शिखरिणी वृत्तम् ॥ ४५ ॥

**हिन्दी**—पीले नेत्रोंवाले, शोभासम्पन्न, लोकमें पूजनीय तेजसे भयङ्कर शरीर को धारण करते हुए, त्रिशूलरूप आयुध लिए हुए, ( सूर्य पक्षमें वेदत्रयीरूप ), वह धनुर्वेद देवसमूहसे स्तुतिसे गाया जाता हुआ शिवजीको तीन बार प्रदक्षिणा कर वीर पाण्डुपुत्र अर्जुनके जैसे सूर्य मेघके पास जाते हैं उसी तरह सम्मुख गया ॥ ४५ ॥

अथ शशधरमौलेरभ्यनुज्ञामवाप्य
त्रिदशपतिपुरोगाः पूर्णकामाय तस्मै ।
अवितथफलमाशीर्वादमारोपयन्तो
विजयि विविधमस्त्रं लोकपाला वितेरुः ॥ ४६ ॥

मल्लि०—अथेति। अथ शशधरमौलिवरप्रदानानन्तरं त्रिदशपतिपुरोगा इन्द्रादयो लोकपालाः शशधरमौलेः शंभोः अभ्यनुज्ञामवाप्य पूर्णकामाय तस्मै पाण्डवाय अवितथफलममोघफलम् आशीर्वादमारोपयन्तः प्रयुञ्जाना विजयि जयशीलं विविधं नानाविधम् अस्त्रमैन्द्रादिकं वितेरुर्ददुः। मालिनीवृत्तम् ॥ ४६॥

हिन्दी—तब शिवजीके अर्जुनको वर देनेके अनन्तर इन्द्र आदि लोकपालोंने शिवजीकी आज्ञा पाकर पूर्ण कामनासे युक्त अर्जुनको अमोघ फलवाला आशीर्वाद देकर जयशील और अनेक प्रकारके इन्द्रास्त्र आदिका वितरण किया ॥ ४६॥

असंहार्योत्साहं जयिनमुदयं प्राप्य तरसा
धुरं गुर्वीं वोढुं स्थितमनवसादाय जगतः।
स्वधाम्ना लोकानां तमुपरि कृतस्थानममरा-
स्तपोलक्ष्म्या दीप्तं दिनकृतमिवोच्चैरुपजगुः॥ ४७॥

मल्लि०—असंहार्योत्साहमिति। तरसा बलेन वेगेन च जयिनं जयशीलमुदय-मस्त्रलाभरूपमभ्युदयम्। अन्यत्र,—उदयाद्रिं च प्राप्य, असंहार्योत्साहं संहर्तुमशक्य-मुद्योगं जगतोऽनवसादाय क्षेमाय गुर्वीं धुरं दुष्टनिग्रहभरं तमोपसंहाररूपं च भारं वोढुं स्थितम्। स्वधाम्ना स्वतेजसा लोकानामुपरि कृतस्थानं कृतपदम्। अन्यत्र, उपरि वर्तमानम्। तपोलक्ष्म्या दीप्तं तं पाण्डवम्। अमरा इन्द्रादयो दिनकृतं सूर्यमिवोच्चैरुपजगुः साधु महाभाग्योऽसीति तुष्टुवुः। शिखरिणी वृत्तम् ॥ ४७॥

हिन्दी—बलसे और वेगसे भी जयशील उदय अस्त्र-लाभरूप अभ्युदय, ( सूर्यपक्षमें उदयपर्वत )को प्राप्त कर संहार करनेके लिए अशक्य उद्योगको लोक-के कल्याणके लिए गौरवपूर्ण ( सूर्यपक्षमें अन्धकार निवारणरूप गौरवपूर्ण ) भार-को वहन करनेके लिए स्थित, अपने तेजसे लोकोंके ऊपर स्थान किये हुए ( सूर्य-पक्षमें ऊपर रहे हुए ) तपस्या सम्पत्तिसे प्रदीप्त अर्जुनकी इन्द्र आदि देवताओंने सूर्यके समान स्तुति की ॥ ४७॥

व्रज जय रिपुलोकं पादपद्मानतः सन्
गदित इति शिवेन श्लाघितो देवसंघैः।
निजगृहमथ गत्वा सादरं पाण्डुपुत्रो
धृतगुरुजयलक्ष्मीर्धर्मसूनुं ननाम ॥ ४८॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीयेऽष्टादशः सर्गः।

**मल्लि०**—व्रजेति । शिवेन व्रज स्वपुरं गच्छ, रिपुलोकं जयेति गदित उक्तः । यतः पादप्रणानतः शिवपादपङ्कजानतः सन्, तथा देवसंघैः श्लाघितः स्तुतोऽत एव धृता गुर्वी जयलक्ष्मीर्येन स पाण्डुपुत्रोऽर्जुनो निजगृहं स्वाश्रमं गत्वा प्राप्य, अथ सादरं यथा तथा धर्मसूनुं युधिष्ठिरं ननाम नमश्चक्रे ॥ ४८ ॥

इति मल्लिनाथकृतव्याख्यायां घण्टापथसमाख्यायामष्टादशः सर्गः समाप्तः ।

●

**हिन्दी**—शिवजीसे—'जाओ और शत्रुसमूहको जीत लो' ऐसा कहे गये तथा शिवजीके चरणकमलोंमें प्रणाम करते हुए और देवसमूहसे स्तुतिके विषय होकर एवम् महती जयलक्ष्मीका धारण किये हुए अर्जुनने अपने आश्रममें पहुँचकर धर्म-पुत्र युधिष्ठिरको आदरपूर्वक प्रणाम किया ॥ ४८ ॥

किरातार्जुनीय महाकाव्यमें अठारहवें सर्गका अनुवाद
समाप्त हुआ ।

नमो भगवते सूर्यनारायणाय नमो नमः ।

●

# पञ्चदशसर्गे स्थितानां चित्रबन्धानामुद्धारः

## गोमूत्रिकाबन्ध. ( १२ श्लोक: )

ना सु रो यं न वा ना गो ध र सं स्थो न रा क्ष सः

ना सु खो यं न वा भो गो ध र णि स्थो हि रा ज सः

## सर्वतोभद्रः ( २५ श्लोकः )

| दे | वा | का | नि | नि | का | वा | दे |
|---|---|---|---|---|---|---|---|
| वा | हि | का | स्व | स्व | वा | हि | का |
| का | का | रे | भ | भ | रे | का | का |
| नि | स्व | भ | व्य | व्य | भ | स्व | नि |
| नि | स्व | भ | व्य | व्य | भ | स्व | नि |
| का | का | रे | भ | भ | रे | का | का |
| वा | हि | का | स्व | स्व | का | हि | वा |
| दे | वा | का | नि | नि | का | वा | दे |

## अर्धभ्रमकः ( २७ श्लोकः )

| स | स | त्य | र | ति | दे | नि | यं |
|---|---|---|---|---|---|---|---|
| स | द | रा | म | षं | ना | शि | नी |
| त्व | रा | धि | क | क | सं | ना | दे |
| र | म | क | त्व | म | क | षं | ति |

# परिशिष्ट

## किरातार्जुनीय में अलङ्कार-स्थापना

१ अतिशयोक्ति—द्वि० सर्ग २४, ३१, तृ० २१, पं० २, १९, ४३, प० ४२, स० ११, १२, १६, अष्ट० २०, ४६, नव० ४, दश० १, २४, ३४, द्वाद० ७, त्रयो० १६, २१, २३।

२ अनुप्रास—अष्ट० २ लोकानुप्रास और वृत्त्यनुप्रास।

३ अनुमान—त्रयो० ३७।

४ अपह्नुति—द्वाद० १५।

५ अर्थत्रयवाचिन्—पञ्च० ४५।

६ अर्थान्तरन्यास—प्र० २, ५, ८, २३, २५, ३०, ४५, द्वि० १५, १८, २०, २१, ३०, तृ० १३, ३१, ५३, चतु० ४, २०, २३, पं० ४९, ५१, ष० ३७, ४१, ४०, ४५, सप्त० १३, १५, अष्ट० ४, ७, नव० ३३, ३५, ४९, ५८, ६४, दश० २५, ३५, ३७, ५८, ६२, एका० ५५, ७६, द्वाद० २९, त्रयो० ८, ६६, चतु० १, ११, २२, षो० ६१।

७ अर्थापत्ति—सप्त० २७।

८ अर्थभ्रमक—पञ्चद० २७।

९ उत्प्रेक्षा—द्वि० ५४, तृ० १, ३, ४३, ४७, ४८, ४९, चतु० ७, ११, १३, २६, २७, ३०, ३१, पं० १, ३, ७, ८, १५, १७, ३०, ३२, ३४, ३५, ४८, ष० १०, ११, १२, १७, २५, २६, २७, ३३, ४१; स० ६, १४, २३, ३१; अष्ट० १०, ११, २१; २६, २७, २८, ३२, ३३, ३४, ३८, ५०, ५१; न० १, ३, ५, १०, १२, १४, २१, २३, २६, ३२, ५३, ५५, ६९, ७२, ७४, ७५, ७६; द० ३, ११, २१, ३२, ३३, ४३; द्वा० १३, १४, २४, ४५; त्र० ५, ८, २२, ३३, ३४; चतु० २९, ३०, ३२, ३३, ३४, ४८, ५०, ५३, ५४; पञ्चद० ९; षो० ३, ३५, ३८, ४५, ४६, ६२, सप्तद० ८, ३७, ४९, अष्टा० १८, १९ हेतूत्प्रेक्षा।

१० उदात्त—प्र० १६; त्रयो० ५१।

११ उपमा—प्र० २१; द्वि० ५०; तृ० ३२, ३६, ४३, ४६; च० १, ६, १५, १७, १९, २८, ३६, प० १८, २६, ४१, ४६, ष० २, २३, ४०, ४९, न० ८, १०, १२, १४, १[illegible] १८, २७, २९, ३२, ६३, ६[illegible]

## पञ्चदशसर्गे स्थितानां चित्रबन्धानामुद्धारः

### गोमूत्रिकाबन्ध. ( १२ श्लोकः )

ना सु रो यं न वा ना गो ध र सं स्थो न रा क्ष सः

ना सु खो यं न वा भो गो ध र णि स्थो हि रा ज सः

### सर्वतोभद्रः ( २५ श्लोकः )

| दे | वा | का | नि | नि | का | वा | दे |
|---|---|---|---|---|---|---|---|
| वा | हि | का | स्व | स्व | वा | हि | का |
| का | का | रे | भ | भ | रे | का | का |
| नि | स्व | भ | व्य | व्य | भ | स्व | नि |
| नि | स्व | भ | व्य | व्य | भ | स्व | नि |
| का | का | रे | भ | भ | रे | का | का |
| वा | हि | का | स्व | स्व | का | हि | वा |
| दे | वा | का | नि | नि | का | वा | दे |

### अर्धभ्रमकः ( २७ श्लोकः )

| स | स | त्य | र | ति | दे | नि | यं |
|---|---|---|---|---|---|---|---|
| स | द | रा | म | षं | ना | शि | नी |
| त्व | रा | धि | क | क | सं | ना | दे |
| र | म | क | त्व | म | क | षं | ति |

# परिशिष्ट

## किरातार्जुनीय में अलङ्कार-स्थापना

१ अतिशयोक्ति—द्वि० सर्ग २४, ३१, तृ० २१, पं० २, १९, ४३, ष० ४२, स० ११, १२, १६, अष्ट० २०, ४६, नव० ४, दश० १, २४, ३४, द्वाद० ७, त्रयो० १६, २१, २३।

२ अनुप्रास—अष्ट० २ लोकानुप्रास और वृत्त्यनुप्रास।

३ अनुमान—त्रयो० ३७।

४ अपह्नुति—द्वाद० १५।

५ अर्थत्रयवाचिन्—पञ्च० ४५।

६ अर्थान्तरन्यास—प्र० २, ५, ८, २३, २५, ३०, ४५, द्वि० १५, १८, २०, २१, ३०, तृ० १३, ३१, ५३, चतु० ४, २०, २३, पं० ४९, ५१, ष० ३७, ४३, ४८, ४५, सप्त० १३, १५, अष्ट० ४, ७, नव० ३३, ३५, ४९, ५८, ६४, दश० २५, ३५, ३७, ५८, ६२, एका० ५५, ७६, द्वाद० २९, त्रयो० ८, ६६, चतु० १, ११, २२, षो० ६१।

७ अर्थापत्ति—सप्त० २७।

८ अर्थभ्रमक—पञ्चद० २७।

९ उत्प्रेक्षा—द्वि० ५४, तृ० १, ३, ४३ ४७, ४८, ४९, चतु० ७, ११, १३, २६, २७, ३०, ३१, पं० १, ३, ७, ८, १५, १७, ३०, ३२, ३४, ३५, ४८, ष० १०, ११, १२, १७, २५, २६, २७, ३३, ४१; स० ६, १४, २३, ३१; अष्ट० १०, ११, २१; २६, २७, २८, ३२, ३३, ३४, ३८, ५०, ५९; न० १, ३, ५, १०, १२, १४, २१, २३, २६, ३२, ५३, ५५, ६९, ७२, ७४, ७५, ७६; द० ३, ११, २१, ३२, ३३, ४३; द्वा० १३, १४, २४, ४५; त्र० ५, ८, २२, ३३, ३४; चतु० २९, ३०, ३२, ३३, ३४, ४८, ५०, ५३, ५४; पञ्चद० ९; षो० ३, ३५, ३८, ४५, ४६, ६२, सप्तद० ८, ३७, ४९, अष्टा० १८, १९ हेतूत्प्रेक्षा।

१० उदात्त—प्र० १६; त्रयो० ५९।

११ उपमा—प्र० २१; द्वि० ५०; तृ० ३२, ३६, ४३, ४६; च० १, ६, १५, १७, १९, २८, ३६, प० १८, २६, ४१, ४६, ष० २, २३, ४०, ४९, न० ८, १०, १२, १४, १७, १८, २७, २९, ३२, ६३, ६७,

